# मिश्र-निबन्धावली

## [ शास्त्रीय-शोध-निबन्ध-रत्नावली ]

लेखकः
डॉ० रामनारायण मिश्रः

प्रवाचकः (उपाचार्यः)
गंगानाथ झा केन्द्रिय संस्कृत विद्यापीठम्
चन्द्रशेखर आजाद उद्यानम्
प्रयाग

प्रकाशकः
रंगेश प्रकाशन
गायत्रीपुरम्, पिड़रा, देवरिया (उ० प्र०)

208 1405



॥ श्रीमते रामानुजाय नमः ॥



डॉ० रामनारायण मिश्रः
(व्याकरण) रीडर (उपाचार्यः)
गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ,
आजाद पार्क, प्रयाग २
(Established by Rastriya Sanskrit Sansthan,
Ministry of Education & Culture,
Govt. of India)
फोन नं० 600957

( रामनगर कालोनी, रामगुलाम टोला )
पिड़रा, देवरिया
(उ० प्र०) वर्तमान स्थायी
संकेत:
गायत्रीपुरम्
देवरिया (उ०प्र०)

सेवा में,

श्रीमान् निदेशक महोदय,
संस्कृत अकादमी,
संस्कृत भवन,
न्यू हैदराबाद, लखनऊ।

विषय- सन् 1992 तथा 1993 में प्रकाशित ग्रन्थ द्वयसारस्वतमुपायनम् (प्रकीर्णम्) व मिश्र. निबन्धावली के पाँच-पाँच 5-5 प्रति पुरस्कार योजना निमित्त प्रस्तुत करने के संबंध में।

महोदय,

निवेदन है कि प्रार्थी उक्त दोनों ग्रन्थों की पाँच-पाँच प्रति पुरस्कार योजना हेतु प्रस्तुत कर रहा है कृपया स्वीकार कर अनुगृहीत करें, तथा प्रार्थी अपनी योग्यता व अध्यापनानुभव तथा संस्कृत सेवा व प्रकाशनादि सम्बन्धी बायोडाटा विवरण भी इस 10 (दश) प्रति प्रार्थना-पत्र के साथ प्रस्तुत कर रहा है उक्त प्रकाशित ग्रन्थों में संलग्न कराया जाय तथा प्रार्थी के 30 तीस वर्ष के लगभग संस्कृत की विशिष्ट सेवाओं पर विचार कर अनुगृहीत किया जाय।

भवदीय,
रामनारायणमिश्र
उपाचार्यः
गंगानाथ झा केन्द्रीय
संस्कृत विद्यापीठम्
इलाहाबाद।

# मिश्र-निबन्धावली

## [ शास्त्रीय-शोध-निबन्ध-रत्नावली ]



लेखक:
डॉ० रामनारायण मिश्रः
प्रवाचक: (उपाचार्यः)
गंगानाथ झा केन्द्रिय संस्कृत विद्यापीठम्
चन्द्रशेखर आजाद उद्यानम्
प्रयाग

प्रकाशकः
**रंगेश प्रकाशन**
गायत्रीपुरम्, पिड़रा, देवरिया (उ० प्र०)

# MISHRA-NIBANDHAVALI

[ Śāstrīya-Śodha-Nibandha-Ratnāvalī ]






**Dr. Ram Narayan Mishra**

Published with the Financial Assistance from
the Rashtriya Sanskrit Sansthan, New Delhi

# MISHRA-NIBANDHAVALI

( Śāstrīya-Śodha-Nibandha-Ratnāvalī )

*By*

**Dr. Ram Narayan Mishra**

*Reader*

GANGANATH JHA KENDRIYA SANSKRIT
VIDYAPITH
CHANDRASEKHAR AZAD PARK
ALLAHABAD—211002
1993

*Printers :*

**Arvind Printers**

20-D, Beli Road

Allahabad

*Phone* : 640782 and 640113



# "मंगलाचरणं किंचिन्निवेदनंच"



लक्ष्मीनाथ समारम्भां नाथ यामुन मध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।१।।

अखिल भुवनजन्मस्थेमभंगादिलीले
विनत विविधभूतव्रातरक्षैकदीक्षे
श्रुतिशिरशि विदिप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ।।२।।

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृति
माधारं सर्वं विद्यानां हयग्रीवमुपास्महे ।।३।।

'श्रेयस्कामो मङ्गलमाचरेत्' इति श्रुत्यनुरोधतः सादरं प्रणतिश्शब्द ब्रह्मणे,

प्रकाश्यमानं शुभदं समन्तात् .
प्रगल्भशास्त्रीयनिबन्धरत्नम्
सुबन्धु लोकस्य मनोहरन्तं
समष्टि शब्दाह्वयदेवमीडे ।।१।।

निखिल निगमवेद्यं ब्रह्मविद्यावतंशं
सहजसरसशब्देष्वाद्यवन्द्यं परेशम्
नियति नियमवश्यं शास्त्रसिद्धान्तगम्यं
जगति सदयदृश्यं शब्दतत्त्वं नतोऽस्मि ।।२।।

कलितकरुणदृष्टिश्शब्दसृष्टिरपूर्वा
विधि हरिहर भाषाभाष्यमाणाऽभिरामा
तरुणतिमिरमालाभञ्जिनीवाद्यधामा
सुरमुनिगणगम्या गीयते कापि वामा ।।३।।

नरहरिवरलीलालीनदृष्टिर्नवीना
सुरुचिर रचनाया भासिनी भारतीया ।
सुगतिरमरवाणी प्रार्थिनीव प्रबन्धा
घटितसहजबन्धा भास्यतां शास्त्रगन्धा ॥४॥

चरणशरणयोगं ब्रह्मविद्यानवद्यं
विरत विविधभोगं लब्धशास्त्रप्रबोधम् ।
विदितविबुधबन्धं विष्णुभक्त्योघ देहं
प्रणमति गुरुदेवं रामकृष्णप्रपन्नम् ॥५॥

रहसि परमगोप्यं मन्त्रसारार्थकानां
सदसि परमवाचां सर्वविद्या गुरूणाम् ।
गलितकलुषकोषा मुक्त दोषाऽपगेव
जयति विबुधगीता शास्त्रविद्यानवद्या ॥६॥

रचित नव निबन्धा शास्त्रसारार्थं गन्धा
प्रबुधवरणवीथी शास्त्ररीतिरुपास्या
सुरमुनिवरनीता कृष्ण गीतेव गीता
भवतु भुवि भवान्याश्शारदायास्सपर्या ॥७॥

स्वमतिविहितविद्यामन्त्रणेवातिधन्या
सुरुचि तुलसिमाला कण्ठलग्नेव विष्णोः
सुचिरसुगतिनेया शास्त्रविज्ञैरुपेया
दिशतु निगमगन्धा सन्निबन्धावली नः ॥८॥

निबन्धरत्नावलि पुस्तकेऽस्मिन्
शोधप्रबन्धा विविधा विमृष्टाः ।
शोधार्थि लोकस्य यथाप्रयासै-
र्भवन्तु सिद्धान्तपरप्रयासाः ॥९॥




शास्त्रीय पन्थानमवेक्ष्यबुद्धया
वेदान्तवेदाङ्गमीमांस्यमानाः ।
सिद्धान्त सन्दर्शन शास्त्रसाराः
सच्छास्त्र विज्ञैरनुमोदिताः स्युः ॥१०॥

शास्त्रार्थबुद्धया हि विमर्शितानां
विद्याहितानां प्रणिधानतानाम् ।
शास्त्रोदधेः सद्विषयाः सुरत्नाः
समीहमाना विनिवेदितास्स्युः ॥११॥

येषां प्रबोधेन सुस्वाद्यमानाः
सञ्जायमानाः सुमनोऽभिरामाः ।
काव्यात्मभावा इव भास्यमानाः
शास्त्रार्थसेवेव सदा विभान्तु ॥१२॥

मोहान्धकारो यदार्थबोधे
शास्त्रस्य गम्भीरपथस्य पारे ।
जातो मदीयः सहसानुबन्धे
निबन्धरत्नस्य विमृश्यमार्गे ॥१३॥

निबन्धरत्नः सुनिरीक्ष्यमाणः
विभिन्नशास्त्राभरणार्थिभिश्च ।
हारायमाणो विनयाप्लुतानां
भूयाद् भवान्याः कृपयैव मान्यः ॥१४॥

कृत प्रयासा विबुधावलीसु
सर्वात्मनाभासितशोधपूर्णाः ।
अध्यात्मवादानुगता महान्तः
सिद्धान्तपक्षा विबुधैर्वृतास्स्युः ॥१५॥

रहस्यमाख्यायनखण्डनार्हाः
शास्त्रार्थविद्या भुवि मण्डनार्हाः ।
विमृश्यमाणा विषयाः प्रबन्धे
भवन्तु शोधार्थिजनाय हृद्याः ॥१६॥

शास्त्रावबोधेऽमरवाणि नीताः
विद्यावतां दर्शितमार्गगीताः ।
सन्दर्भसत्तथ्य मया विमृश्याः
भवन्ति केषान्न प्रबोधवादाः (प्रबोधगम्याः) ॥१७॥

तथापि सत्तन्त्र समानधाराः
गाङ्गेयधारेव पवित्रताभाः ।
प्रज्ञापराधानपसारणाय
सत्तीर्थरूपाः प्रभवन्तु किं वा ॥१८॥

तीर्थीभवन्तश्श्रुति सङ्गमेन
स्वतः प्रबन्धार्थमयास्तरङ्गाः ।
सच्छास्त्रधामाश्रित देवतेव
सदर्थबोधाय कथं प्रथन्ताम् ? ॥१९॥

तीर्थेऽवतीर्णा श्रुति सारवत्यो
देव्यो यथा लोकजनावनाय
वाचः समानां शुभदाः प्रसिद्धाः
(वाचो यदासां शुभदाः प्रसिद्धाः)
शास्त्रावने सन्तु समीहितार्थाः ॥२०॥

सदैक्य भावा न भवन्ति शास्त्रे
समीक्षकानां नवनीतकल्पाः
प्रबन्धभाषाविषयाश्रितावा
प्रमाणमन्तःकरणं बुधानाम् ॥२१॥

सम्प्रार्थ्यते विज्ञगणः प्रणम्यः
प्रबन्ध सारार्थविशोधनाय ।
प्रतीक्षमाणेन निवेदयित्वा
येन प्रयासः सफलः कृतः स्यात् ॥२२॥

क्षम्यो जनोऽयं विबुधैरवश्यं
नैवास्ति सच्छास्त्रपथप्रबोधः ।
तेनैव सत्यस्खलनं निबन्धे
स्वाभाविकं वीक्ष्य सुधारवद्भिः ॥२३॥

---

# अनुक्रमणिका:

पृष्ठानि



———

# संस्तुतिः

यदाकदा दैवानुग्रहेण कश्चन दुर्लभोऽवसरो लभ्यते मानवजीवने, जननीकृतार्था वसुन्धरापुण्यवती च तेन, स्वर्गस्थितास्ते पितरोऽपि धन्या यस्मिन् कुले वैष्णवनामधेयमिति स्मृति सूक्ति वचनमनुरुद्ध्यैव कस्यचिद् विलक्षणविप्रवंशावतंशस्य कामपि कृतिमभिस्तोतुं समयो लब्ध इति स्वं धन्यम्मन्ये ।

बह्वोः कालादेव नैक राज्य परिवारगुरोराचार्यवर्यस्य श्रीविट्ठलदासादेः सत्कुलीनत्वन्नतिरोहितं विद्यते यस्मिन्नन्वये नैका मातरः स्वपति पावनतनुभिस्सह स्वस्व मुखादेवाग्निदेवं प्रकटीकृत्य पातिव्रतधर्मं तपश्चर्याञ्च सफलीकृतवत्यः मुखादग्निरजायत इति वेदवचनं समर्यादमभिरक्ष्य नैकान् धुरन्धरान् विविधशास्त्रज्ञान् जनयामासुरिति श्रुतिगोचरीकृतमति सान्निध्येन । वेदव्याकरण-न्याय-मीमांसा-पुराणाभिज्ञा विद्याव्रतिनो वभूवुः तदन्वये ।

एवं विधस्यैव विप्रवशावतंशा भगवद्विभूत्यंशरूप किरणाश्चत्वारो भ्रातरो विविधक्षेत्रे लब्धकीर्तयो राजन्तेऽद्यापीति विनिवेदने न संकोचः न वातिशयोक्तिः, भगवद्नुग्रहेणैकः शिष्यताङ्गतोहि सम्प्रति श्री धाम्निवृदावने गृहीत संन्यासाश्रमो जगद्गुरुरामानुजजीयरस्वामी त्यागी देवनारायणाचार्यो विराजते भगवद् भागवत सेवापरायणो धर्म प्रचार प्रसारमहानव्रती च । तस्याग्रजस्तस्य गुरुश्च श्रीरामनारायणाचार्यमिश्रः श्री वैकुण्ठनाथ पवहारि संस्कृत महाविद्यालये प्राचार्यपदे सेवा रतस्तस्य महाविद्यालयस्य सर्वाङ्गीण प्रगति विधाय ततस्सेवानिरतः सम्प्रति जम्मू नगरस्थे श्रीरणवीर केन्द्रीय संस्कृतविद्यापीठे प्रवाचकपदे सेवारतो व्याकरणन्यायादि शास्त्रमर्मज्ञः शताधिक छात्रानाचार्योपाधिप्रदाने विविधशास्त्रज्ञानप्रदानेच कृतभूरिश्रमः सत्यमेवाचार्यत्वं स्वस्मिन् समुपस्थाप्याध्ययनेन सह शास्त्रीयशोधनिबन्धलेखने प्रबोधने च लब्धप्रतिष्ठो विद्यत एव। श्री राम-

नारायणमिश्रस्य सम्पूर्णानन्द संस्कृतविश्वविद्यालयीय सारस्वती सुषमायां प्रकाशितानानेकान् निबन्धरत्नानवलोक्य विचार्यच महान् सन्तोषोऽभवत्। मिश्र महाभागस्यान्यशोधपत्रिकायामपि शोध-निबन्धानधिगम्याप्रकाशितांश्चानेकान् निबन्धानपि विलोक्य महती प्रसन्नता जाता यदेते सर्वेशोधनिबन्धाः शास्त्रीयशोध निबन्ध रत्न-वलिनामके प्रकाश्यमाने ग्रन्थे संग्रहीता भविष्यन्तीति विविधशास्त्र-तत्त्वानामुपयोगिता संस्कृतज्ञानांकृते शोधच्छात्रणाङ्कृते प्रत्यक्ष गोचरीभूता मिश्र महोदयस्य वैदुष्यं वैशिष्ट्यञ्च प्रकाशयिष्यति, मिश्र महोदयोऽनुदिनमेवं संस्कृतजगत्सेवायां सोत्साहस्सफल प्रयासो भवत्विति भगवन्तं प्रार्थये तन्मङ्गलाय सततमिति संस्तौति ।

कालिका प्रसाद शुक्ल
आचार्यः व्याकरणविभागे
विभागाध्यक्षः
सम्पूर्णानन्द संस्कृत विश्वविद्यालयीयः

---

# सम्मतिः

रोहणं सूक्तिरत्नानां, वन्दे वृन्दं विपश्चिताम् ।
यन्मध्यपतितो नीचः, काचोऽप्युच्चैर्मणीयते ।।

धन्येयं पुण्यतमा भारतवसुन्धरा, यत्र पुरा संस्कृतवाङ्मये नदीष्णैः महर्षिकल्पैः परमप्रामाणिकैराचार्यैः वेदव्याकरणन्यायवेदान्त-साहित्यादिविषयेषु सूक्ष्मेक्षिकयाऽसङ्ख्यानि, लोकोत्तराणि ग्रन्थ-रत्नानि प्रणीतानि । अतएव—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।

इत्युक्तिः जगत्प्रसिद्धाऽन्वर्थाच सञ्जाता । संस्कृतभाषायामुपनिबद्धेषु ग्रन्थरत्नेषु ये वैज्ञानिकाः विचाराः सूक्ष्मातिसूक्ष्मचिन्तनपुरस्सरं महनीयाः सिद्धान्ताश्च समुपबृंहिताः विद्यन्ते तेषाञ्चाध्ययना-ध्यापनं याथातथ्येन गवेषणामयं विश्लेषणं तदनुगुणञ्च ग्रन्थलेखनं नितान्तमपरिहार्यं परमोपादेयत्वञ्च भजते । परञ्च साम्प्रतं प्राचीन-संस्कृतशास्त्राणामध्ययनाध्यापनम् शोधमयं विश्लेषणं वैज्ञानिक-दृशा ग्रन्थलेखनञ्च ह्रासोन्मुखं दृश्यत इति चिन्तावहोऽयं विषयः ।

तत्र एवम्विधायाः शास्त्रसंरक्षणचिन्ताया दूरीकरणाय प्रयागस्थ डॉ० गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठस्योपाचार्यपदं विभ्राज-माना व्याकरणसाहित्यवेदान्तादि विविधशास्त्रेषु पारङ्गताः लब्ध-यशस्का तत्रभवन्तः डॉ० रामनारायण मिश्र महाभागाः यावन्तमा-यासं कृतवन्तः । तदर्थमेते श्रद्धाधिया सर्वात्मना समुल्लेखनीयाः सन्तीत्यत्र नास्ति सन्देहकणिकावकाशलेशः । एते च यथा संस्कृत-शास्त्राणामध्ययनाध्यापनेशक्तिसामर्थ्यसम्पन्नाः तथैव च शोधनिबन्ध-लेखनेऽपि लोकोत्तरक्षमतासम्पन्नाः समर्पितजीवनाश्च सन्तीति निर्विवादम् । किञ्चैभिर्महोदयैः उत्तरप्रदेशे, बम्बईनगरे, जम्बूनगरे च नैकासूच्चस्तरीयसंस्कृतशिक्षणसंस्थासु प्राचार्याद्यनेकपदेषु कार्यं कुर्वद्भिः व्याकरणसाहित्यन्यायवेदान्तमीमांसादिविषयाणामार्ष-ग्रन्थानां पाण्डित्यपूर्णमध्यापनमकारि ।

किम्बहुना शास्त्रीयविषयाणामध्ययनाध्यापनपुरःसरं डॉ० मिश्र-महाभागैः विलक्षणज्ञानविज्ञानसम्पन्नाः संस्कृतभाषायाः माध्यमे

संख्याका उत्कृष्टशोधनिबन्धाः समुल्लिखिताः नयनपथमवतरन्ति। साम्प्रतमेवम्विधा अध्ययनाध्यापनदक्षाः शोधनिबन्धलेखने च शेमुषी-सम्पन्नाः संस्कृतपण्डिताः सुलभाः न सन्ति।

प्राचीनभारतीयशास्त्रावगाहनचणैः डॉ० रामनारायण मिश्र महाभागैः प्रणीतः 'मिश्रनिबन्धावली' (शास्त्रीयशोध निबन्धरत्नावली) इत्याख्यो ग्रन्थो मया पर्यालोचन दृशाऽवलोकितः। ग्रन्थेऽस्मिन् यद्यपि नानाविधाःशस्त्रीयनिबन्धाः विद्यन्ते किन्तु धात्वर्थस्फोटशक्तितत्व-कर्मप्रवचनीयसंज्ञा वृत्तिविमर्शादि व्याकरणविषयाणां निबन्धाः शब्दब्रह्म पाण्डित्यपूर्णाः लोकोत्तरविचारोपस्थापनपुरःसरं उपन्यस्ताः दरीदृश्यन्ते किञ्चाद्वैततत्व पुरुषार्थसिद्धिपरब्रह्मव्याप्ति सन्निकर्षमोक्ष जीवात्मपरात्मस्वरूपादिदार्शनिकविषयाणां निबन्धा अपि पूर्वपक्षो-त्तरपक्षोपस्थापनपुरःसरं वैशद्येनास्यां शोधनिबन्धरत्नमञ्जूषायां सुप्रतिष्ठापिताः विद्यन्ते। अथ च व्यञ्जनाध्वनिरसभावकाव्य-स्वरूपादिविषयाणां प्रतिपादिताः शोधनिबन्धा अपि अभिनव-विचारसम्पन्नाः अध्येतृणांकृते ज्ञानदीपशलाकेव शास्त्रीयविचा-राणामध्ययनाय सर्वात्मना हितसाधकाः पथप्रदर्शकाश्च सन्तीति द्रढीयान् मे प्रत्ययः। अत्र सर्वेऽपि शोधनिबन्धाः प्राचीनाचार्याणां विचारपरम्परानुगुणं शास्त्रीयविषयाणामद्यतनचिन्तनधारायाः सुस्प-ष्टतया गम्भीरविमर्शपूर्णाः विद्यन्ते। इयञ्च मिश्र निबन्धावली (शास्त्रीयशोध निबन्धरत्नावली) पारम्परिक प्राचीनशास्त्राणामध्या-पनपद्धत्याऽध्यापनेऽहर्निशं संलग्नानामध्यापकानां शोधकार्ये तत्पराणां शोधछात्राणाञ्च कृते परमोपादेयत्वं हितसाधकत्वं नितान्तमभिनवत्व-माहवतीत्यत्र नास्ति कश्चन संदेहः। एतदर्थं डॉ० मिश्र महाभागाः भूयोभूयः धन्यवादार्हाः सम्मानार्हाः इति सर्वसम्मतः पक्षः। अथ चायं ग्रन्थः शोधछात्राणामथच व्याकरणसाहित्यदर्शनोपाधिकक्षासु अध्ये-तृणां कृते महानुपकारकः वैशिष्ट्येन सहायकश्च भविष्यतीति दृढ़तरो मे विश्वासः।

शरत्पूर्णिमा ११ अक्टूबर, १९९२ डॉ० उमाशंकर मिश्र (पी०ई०एस०)
शिक्षा निदेशालय उपशिक्षा निदेशक (संस्कृत)
उत्तर प्रदेश, इलाहाबाद

# सम्मतिः

अस्मत्स्नेहभाजनस्य पण्डितप्रवर श्रीरामनारायणमिश्रमहोदयस्य सकलशास्त्रावगाहनस्यफलभूतोऽयमेका कृतिः 'मिश्रनिबन्धावली' पदाभिधेया मया बहुषु स्थलेषु दृष्टिपथमानीता। अस्यां कृतौ विषयवैविध्यं शास्त्रवैविध्यं च दरीदृश्यते। केचन निबन्धा अत्र शोधपराः, केचन विवेचन पराः, केचन च गहनतराः, यथा अद्वैततत्त्वालोकः, शब्दब्रह्मैव जगन्निदानम्, स्फोटवाद इत्यादयः।

'नामूलं लिख्यते क्वापि नानपेक्षितमुच्यते, इति श्रीमल्लिनाथोक्तिं चरितार्थयन्त्यामस्यां कृतौ सारग्राहित्वं, समुच्छलति, अनपेक्षितो ग्रन्थविस्तरश्च न दृश्यते।

भाषा चापि प्रसन्नार्थगम्भीरा, अपरं चेदं वैशिष्ट्यम् यदत्र सन्दर्भशुद्धिः, सन्दर्भाणां संकलनं च मूलग्रन्थत एव कृतमस्ति, अतश्च संस्कृतविद्यायां दृढोऽभिनिवेशः प्रतीयते, कृतेश्चास्याः प्रेरणास्रोतः मिश्रमहोदयस्यैकान्तिकात्यन्तिकः शास्त्राभ्यास एव, एकतः सोऽभ्यासः परम्परागतां पङ्क्तिप्रौढिमभिव्यनक्ति, अपरतश्च 'मानवतासन्देश' ग्रन्थप्रणयनमाध्यमेन आधुनिकानां विदुषामैतिहासिक पद्धतिं चाश्रयति।

ईदृश आदर्शभूतः समन्वयः शास्त्रे प्रवेशार्थिनां कृते मार्गनिर्देशनाय कल्पयिष्यते, विदुषांकृते च महते मोदाय।

शास्त्राणां सूक्ष्मेक्षिकया ईदृशीं समालोचनासन्ततिं भूयो भूयो विदध्याद् मिश्रमहानुभावइत्याशासे।

भगवन्तौ भवानीविश्वनाथौ प्रार्थये यदयं मेधावी विद्वान् संस्कृतवाङ्मयानुशीलनार्पितमनाः स्वस्थः चिरायुश्चभूयादिति।

राम प्रसाद त्रिपाठी
सं० सं० वि० विद्यालये
आचार्यः, प्राचीनव्याकरणविभागाध्यक्ष्च
वाराणस्याम्

# सम्मतिः

न्यायव्याकरणसाहित्याद्यनेकशास्त्रेष्वप्रतिहतगतिमतिना पण्डितप्रवर श्रीरामनारायणमिश्रेण ग्रन्थितो मिश्रनिबन्धावलिनामको ग्रन्थोऽवलोकितः। अस्मिन् वेदान्तव्याकरणयोगतन्त्रादिविषयका अनेकाविधा निबन्धा विविधवर्णरससौरभसम्पन्नकुसुमपरागा इव संकलिताः सन्ति। मिश्रनिबन्धावलीतिनामधेयं संज्ञातोऽर्थतोऽपि सार्थयति। कतिपयानां व्याकरणवेदान्तादिशास्त्रमुखानां स्फोटसमासशक्तिशब्दब्रह्मात्मेश्वरशिवशक्त्यादीनां सिद्धान्तानामेकत्राल्पायासेन जिज्ञासूनां कृतेऽयं ग्रन्थो महानुपकारी। अत्र प्रचुरप्रमेय संकलनं प्रमाणसंकलनं प्रतिपादवनरीतिश्च शास्त्रविदां मनोहारिणी। अतोऽयं ग्रन्थो विद्वज्जनानुमोदितोऽवश्यं भविष्यतीति शुभाशंसनैः संयोजयन् प्रमोदमनुभवामि।

मुरलीधर पाण्डेयः
प्राचार्यचरः
श्री रणवीर केन्द्रीय संस्कृत-
विद्यापीठीयः जम्मूनगरस्य

२०२५ वि० सं० भ्रातृद्वितीयायां सोमे
(१५-११-६३)

# शुभाशीराशयः

श्रीरामनारायण मिश्रो व्याकरणन्यायवेदान्तसाहित्यशास्त्रेषु कृतश्रमः सफलाध्येताऽध्यायकश्च न संशयः, मत्सन्निधावेवाचार्यं कक्षान्त मुक्तविषयानधीत्याचार्यकक्षान्तं छात्रांश्च पाठयित्वा लब्ध-यशा रामनारायणाचार्यः सर्वानधिकारिणश्छात्रांश्च सन्तोष्य क्रमशो व्याकरण विभागाध्यक्षप्राचार्यादि पदमलङ्कुर्वन्नद्य शास्त्रीयान् शोधनिबन्धान् विलिख्य शास्त्रीय शोध निबन्धरत्नावलिनामकं (मिश्रनिबन्धावली) ग्रन्थं प्रकाशयति यस्मिन्नैके शास्त्रीयाश्शोध निबन्धाव्याकरणन्यायवेदान्तधर्मशास्त्र साहित्यादि शास्त्र विषयक सिद्धान्ततत्त्व गवेषणा प्रधानास्तस्य वैदुष्यं विभिन्नशास्त्रेषु प्रखर गतिं प्रमाणयन्तीति विचार्यं तन्मङ्गलाय निरन्तरं संस्कृतसमुत्थानाय प्राचीनशैली माध्यमेन नवीनपद्धत्याच सम्यक्तयाशास्त्रसंरक्षण संवर्धन सेवाव्रते सफलो महायशस्कश्च भवतु भगवन्तं श्री मन्नारायणं प्रार्थयन् सदाशीर्वचोभिश्च विभूषयनेनं शोधनिबन्धग्रन्थं सत्कीर्ति मन्नं सम्भावयन् संस्तौमि ।

शुभाशंसी<br>
रामवदन शुक्ल<br>
भूतपूर्वः प्राचार्यः<br>
श्री रामदेशिक संस्कृत महाविद्यालयस्य<br>
दारागंजस्थस्य प्रयागस्य

# आमुखम्

मिश्र निबन्धावली (शास्त्रीयशोधनिबन्धरत्नावली) नाम्नाऽभिहितोऽयं ग्रन्थः कमपि विशेषं रुचितत्त्वं भजत्विति धिया विचार-विमर्श पथमानीय संस्कृतसमाजस्य कापि सहजसेवा भवेदिति विनिर्णीय यथा मति स्वाभिप्रायप्रकाशने शास्त्रानुसारंप्रवृत्तोऽभवदयञ्जनो भगवत्प्रेरणया निसर्गतः। तथाविधनामकरणमस्य ग्रन्थस्य न कयापि विशेष दृष्ट्याव्युत्पत्त्यावा विहितम्। ईश्वरः सर्वभूतानांहृद्देशेऽर्जुन तिष्ठति, भ्रामयन्सर्वभूतानियन्त्रारूढानिमाययेति भगवता श्रीकृष्णेन सर्वविधकार्यनियामकतयासमर्यादं लोकाभ्युदयाय सम्यगुपपादितम्। तदनुसारं यत्किमप्यत्रनिबन्धरत्नावल्यां विषयवस्तुजातमभ्युपगम्यं तत्सर्वन्तदनुग्रहप्रसाद रूपमेव मन्ये। अन्यथाऽस्य वराकस्य सर्वथा विषयासक्तस्य शमदमादिनियमविमुखस्य कः प्रयासः? साधीयानस्य ग्रन्थप्रतिपाद्यविषयस्य प्रकाशने सफलतामेतु? न कश्चिदपि। मादृशस्यानन्तशास्त्रतत्त्वानभिज्ञस्य सामर्थ्यं कुतः? तदुपपादने—

आचार्यः स हरिः साक्षात्कृत्वा मर्त्यमयीं तनुं।
मग्नादुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना॥

इति शास्त्रवचनानुसारतः परमाराध्यानां पदवाक्यप्रमाणपारावारीणानां प्रधानाचार्यचराणामृषिकल्पानां श्रीरामदेशिक संस्कृतमहाविद्यालयस्य दारागंज प्रयागनगरस्थस्य, पूर्णस्नेहनिर्भरकृपादृष्ट्या यथामतितच्चरणशरणागतः कथञ्चिद् यथारुचि यथाबुद्धि शास्त्रं यथा शक्यमधीत्य संस्कृत महाविद्यालयेषु केन्द्रीय संस्कृतविद्यापीठेषु च लब्धाऽध्यापनसेवावसरस्तेषां गुरुवराणां प्रसादादेव यथाकालं यत्र तत्र विद्यालयेषु क्रमशः प्रोन्नतिञ्चाधिगम्योत्तरोत्तरं विकासपथं प्राप्य कृतार्थोऽभवत्संस्कृतसेवी। अतोऽत्र शास्त्रीयशोधनिबन्धग्रन्थे निबन्धलेखने च तेषां कृपालव एव प्रमुखं कारणम्। तादृशकृपामन्तरा संस्कृत सेवानुरूपतोलब्धिः कथं स्यात्?

गुरुसुश्रूषया विद्येति सूक्ति जानन्नपि न निसर्गतस्सान्निध्येनाचार्यं कक्षाध्ययनानन्तरमपि सेवावसरोलब्ध इति दौर्भाग्यमेवासीद् यद् वृत्ति पराधीनतया दूरस्थाने प्राप्ताध्यापनवृत्तिः केवलं मनसैव स्मरणं दर्शनञ्च गुरुचरणानां विधाय तदीयाध्यापनवेलायां लब्धज्ञानलवेन तेषु श्रद्धाविश्वासाऽदरभावनया च कथंकथमपि कार्यनिर्वाहे स्वं-समर्प्यंकृतार्थोऽभूवम् ।

निबन्ध ग्रन्थगतविषयपरिप्रेक्ष्ये तावत् किञ्चिदवश्यं विनिवेद्यते, तथाहि—शास्त्रीयशोधनिबन्धरत्नावली नामकेग्रन्थेऽस्मिन् तद् घटक शास्त्रपदेनात्र न केवलं षड्दर्शनानि बोध्यानीति मे तात्पर्यम्, न वा षड्दर्शनानां तत्त्वान्येवात्रपूर्णतया विमर्शपथमानेयानीति ? प्रत्युत वेद-व्याकरण-वेदान्त-साहित्य-धर्मशास्त्रप्रभृतिसर्वशास्त्र प्रसादीकृत तत्तद् विषयान् यथामति यथाशास्त्रं विचार्यैव शोधनिबन्ध रत्नावली नामाऽयं ग्रन्थो लेखनीलीलाविषयीकृतः । शास्त्रगाम्भीर्य्य-मगाधञ्चानुभूय कथङ्कारं पारं गन्तुं समर्थः स्वल्पबुद्धिरयञ्जनः शास्त्रोदधिरत्नलाभे रत्नावधारणे च रत्नज्ञाने चापि कथमपि न सत्पात्रतां योग्यताञ्च धारयति । अपि च बहुविधा निबन्धग्रन्थाः प्रकाशनतां नीताश्चाक्षुष विषयताङ्गताश्च तेषां समक्षमस्यकियन्मूल्यं किं वैशिष्ट्यम्वा ? सर्वमेतत्सहजमेवावधारणीयं यद्यपि सामान्यत-या वक्तुं शक्यते, नास्ति विषयेऽस्मिन् विसंवादस्तथापि शोधनिबन्धाः तत्तच्छास्त्रानुरोधतोंऽशविशेषे गतार्थाः सन्तोऽपि विविधविषय-प्रक्रियाभिर्विलक्षणविचक्षणपरम्पराभिश्चागतार्थासन्तोऽपि केचन-निबन्धाः निबन्धांशा वा वैलक्षण्यं वैशिष्टचञ्च भजन्तः कैश्चिद् विद्वद्भिश्शोधच्छात्रैश्चावश्यमेवानतिचिरं प्रसादिता उपयोगिनश्चैते संस्कृत वाङ्मय इति समुद्बोधयिष्यन्त इत्यपि विश्वासः ।

ग्रन्थेऽस्मिन्शास्त्रीयशोध निबन्ध विषया यथाशक्यं यथाशास्त्र-मेव यथाप्रकरणं यथारुचि विषयनिबन्धनघटनया प्रक्रिया प्रदर्शन-रीत्या च परिपोषिताः परिवर्द्धिताः सरलतया सरसतया समास्वाद्यतां नीताः व्युत्पत्तिशालिनां सहृदयानां सेवोपकारतयाऽनुसन्धातृणाञ्चोप-योगिपथप्रदर्शनाय सम्यगन्वर्थतां प्रकाशयिष्यन्ति श्रमञ्चसार्थकतां-नयिष्यन्तीत्यपि विश्वासः । शास्त्राणामनन्तत्वात्तदीय विषयगाम्भी-

यच्चायं जनः सर्वथा सविधिशास्त्रीय शोधतत्त्वप्रकाश्यतां नेतुं कथं प्रभवेदिति सुधियो विचार्य सदाऽऽशीर्वचोभिरवश्यं ग्रन्थरत्नं प्रसादीकृत्य शुभमंगलवचोभिश्चानाथोऽयंसनाथीकरिष्यत इत्यपि दृढोविश्वासः। सस्नेहं साधुभावाभिभावगम्याः विविधशास्त्रसत्त्वासत्त्वावगाहन निपुणाः स्वक्षादक्षा दलित विपक्षा गुरुवरकल्पा मनीषिणश्शास्त्रादधिप्रसूत कतिपय सुधाविन्दुरिवप्रबन्धसुरभिसमीरेण सहृदयानाह्लादयितुं यथा स्थलं रत्नरक्षणरचना नयदर्शने संशोधन परिवर्धनवचोमन्त्रान् प्रापयिष्यन्तीत्यभिवादनपूर्वकं विनिवेदयन्नेव प्रार्थयति विदुषां वशंवदः। 'शास्त्रीयशोधनिबन्धरत्नावली' ति संज्ञापि नार्थतोमन्ये पूर्णतांभजति शास्त्राणां तत्रत्य विषयाणाञ्च वाहुल्यादस्मिन्नल्पबुद्धिप्रणीते ग्रन्थे सन्निवेशासम्भवाच्च। तथा समग्रशास्त्रतत्त्वावगाहनबुद्धेरभावादपि।

अयञ्च ग्रन्थः सहजतयांऽशतोऽर्थतश्च साक्षात्परम्परयाच शास्त्रीयशोध विषयबाहुल्येऽपि तदीयतत्त्वांशसंस्पर्शीति नातिशयोक्तिः। ग्रन्थेऽस्मिन्नवश्यं केनचिद् रत्नपरीक्षकेन न वा भवतु-सार्वभौम महत्त्वाधायिनी गवेषणा, रुचिवैचित्र्यात् प्रकृतिविशेषाच्च परमंशतोहि शास्त्रीयशोधनिबन्धोरत्नवत् परीक्ष्यमाणः कैश्चिद् विद्वद्धौरेयैरवश्वयमनुग्रहीष्यत इत्यपि सम्भावये। अत्र निबन्धाः प्रायश्शास्त्रीयाः परमतत्त्वावधानपरा भवेयुरिति विचार्य सम्बन्धितान् ग्रन्थान् यथामति समधीत्य प्राकाश्यतां नीता येनशोधच्छात्राणां कश्चनुपकारो यथाऽवसरंस्यादिति येनमेऽकिंचित्करः प्रयासः साधीयान् मनस्तोषाय कथंचित्कल्प्येत्। निबन्धाः शास्त्रीया एव येषु कस्य प्रामुख्यमप्रामुख्यम्वाविशेषाऽविशेषो वा स्वयं निर्धारयितुंनायञ्जनः शक्नोति, परमत्र सुधिय एव विचार्य समनुग्रहीष्यत्येनं जनम्।

शास्त्रन्नाम शासनमिति सुनिश्चितम्यावन्ति शास्त्राणि प्रख्यातानि तावतामत्राद्यन्तं विषय प्रस्तुतिपूर्वकं समग्रतथ्यजातं न कथमपि निबन्धेषु स्थानं भोक्तुमलम्। काणादं पाणिनीयञ्च सर्वं शास्त्रोपकारक मित्यादिवचनं यथार्थतो वेदान्तविद्येव ब्रह्मविद्येव महत्त्वं भजति, 'सा विद्या या विमुक्तये' इतिवचनं वेदान्तवदुपनिषदवच्चव्याकरणागमेऽपिसामञ्जस्यं प्रतिष्ठापयति। एवं साहित्यसंगीत-

कलाविहीन:, वेदान्त विद्या विद्यैव, पश्य देवस्य काव्यम् न जीर्यति न ममार, विधिनिषेधात्मकवचनप्रयोजकानि धर्मशास्त्राणि, पुराणानि, ततोऽन्यान्यपि भगवद्भक्तिपराणि शास्त्राणि, भगवद्भक्तिर्गरीयसीति, धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते अजागलस्तनस्येव-तस्य जन्म निरर्थकम्, मन्त्राणां परमोमन्त्र: सर्ववेदार्थबोधक:, नास्ति नारायणात्परम्, परोपकारसमोनास्तिकोऽपिधर्म: समादृत: । नारायणसमोदेवो न भूतो न भविष्यति, एवमेव भारतस्य प्रतिष्ठे द्वेसंस्कृति: संस्कृतन्तथा, नास्ति सत्यात्परं तप:, एवमेव सा विद्या या विमुक्तये प्रभृति सूक्तय: प्रबन्धेषु निबन्धरत्नविषयतया कथञ्चिद-वश्यमेव स्मर्तव्या: स्युरिति, निबन्धलेखनप्रवृत्तिप्रयोजकहेतुषु महान्तो विद्वान्सो वाचस्पतय आशुकवयोलब्धप्रतिष्ठा: पण्डितप्रवरा: आचार्यवरा: प्राचार्यपदमलंकुर्वाणा: श्रीरणवीर केन्द्रीय संस्कृत विद्यापीठस्य जम्मू नगरस्थस्य सम्प्रति प्रयागस्थ गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठीया: प्राचार्यवरा: डॉ० श्री जगन्नाथ पाठक महोदया यदा जम्मू विद्यापीठेऽयमपिजन: तदधीनस्थ: तत्रैव सेवारत आसीत्तदैव महती सोत्साहां प्रेरणां प्रदाय समुत्साहित: येन मिश्रनिबन्धावली (शास्त्रीय शोधनिबन्ध रत्नावली) ग्रन्थलेखनं भगवत्प्रेरणयाचापि प्रसादितमात्मानमनुभूय शास्त्रीयतत्त्वविचार विमर्शेदत्तावधानोऽभूत् संस्कृतसेवी । जम्मू विद्यापीठे वर्षत्रयं यावत्तेषां सविधे विदुषां समक्ष-मेव विद्यापीठीयैर्जम्मूविश्वविद्यालयीयै: विद्वद्भि: सह च नैकवारं-शास्त्रचर्चाप्रसंगे लब्धावसर: किञ्चिन्निवेदनाय वादे वादे जायते तत्त्वबोध इतिवचनेन परस्परमादानप्रदानेनोपकृत: सञ्जात एव न सन्देह: । विभिन्नशास्त्रगोष्ठिषु गृहीतभागा: कृतविलक्षण विविध-विषयभाषणा: श्रीपाठक महोदया: सत्यमेव सत्प्रेरणा स्रोतसोधारा प्रवाहयितार: समभवन् । येनाद्य (शास्त्रीयशोधनिबन्धरत्नावली) नामा ग्रन्थोदय: समभवत् । विशेषतो जम्मू विद्यापीठीया: समेविद्वा-न्सोऽपि निमित्तभूता: सन्त्येव यतस्ते यथाऽत्रसरं शास्त्रगोष्ठिचर्चाभाग ग्रहीतृत्वेन विभिन्नशास्त्रीय विषयानधिकृत्य भाषणप्रदानेन भूयो भूयो वादविवादमाध्यमेनापि यथाकालं प्रेरणाप्रदा अभवन्नेव । येनाधि-क्येनोत्साहेन यथामति शास्त्रीय विषयान् विचार्य सोत्साहं शास्त्र-चर्चासु गृहीतभागो यथा कथाञ्चिद् भाषण सेवयाऽऽत्मानं शास्त्रीय

निबन्धलेखकेषु कनिष्ठतमत्वेनानुभूयैव यथाशास्त्रपथमानीय कमपि मनस्तोषमन्वभवदयञ्जनः।

परमत्रावश्यं सहर्षं सगर्वंन्निःसंशयं वक्तुमीहे यदेतत्सर्वं शास्त्रज्ञानमन्तरा भगवत्प्रसाद विना नैव सम्भवम्, शास्त्रज्ञानं भगवदनुग्रहश्चापि गुरुकृपामन्तरा न सिद्ध्यतः। सौभाग्येनैव पर श्रद्धेयाः प्रातःस्मरणीयाः पदवाक्यप्रमाणपारावारीणो महर्षिकल्पाः सहस्राधिक सत्पात्रशिष्येभ्यो दत्तविविधशास्त्रशिक्षाः भगवद् विभूतिभूषणाः यद् यद् विभूतिमत्सत्वं श्रीमदूर्जितमेव वा तत्तदेवावगच्छध्वं ममतेजोंशसम्भवमिति भगवद्वचनं चरितार्थयन्तः पण्डितप्रवराः स्वनामधन्याः पुण्यश्लोकाः श्रीराम वदन शुक्ल महोदया प्रारम्भत एव शास्त्रि कक्षात आरभ्याचार्यं कक्षान्तं यावत् सत्स्नेहेन दासानुदासमेनमपि सम्यक् सुशिक्षणे कृत भूरिपरिश्रमाः परमयं जनः प्रारब्धानुसारमल्प सत्संस्कारवशगः कथमपि तेषामुपदेश लेशानेव स्मृतिपटले स्थापयितुं समर्थः सञ्जातः नाध्यापित शास्त्रतत्त्वसारग्रहीता तथ ऽभवद् यथाऽध्यापितस्तैः। परमस्मिन् शास्त्रीयशोधनिबन्धलेखने विचारे सर्वत्र गुरुवराणान्तेषां प्रसादाल्लब्धज्ञानलवेन स्वमुपस्थापयितुं क्षमः।

शब्दशास्त्रेऽलंकारशास्त्रे वेदान्ते न्यायेचापि यः कोऽपि विषयो निबन्धनाय निबन्धोकृतः स सर्वोपि तदुपज्ञतां नीत एवाध्ययनाध्यापनानुसन्धानादिष्वपि। तदैव मनोमोदः सन्तोषश्च यत् कृपालेशतः प्राप्तबोधानुसारेण निबन्धलेखनसारस्वतसेवेयं सार्थकताङ्कञ्चिदवश्यं भजिष्यतीति विश्वासोऽपि वरीवर्ति। प्रथमातः पूर्वं मध्यमाप्रथमं खण्डं यावद् स्वर्गीया गुरुवरपादा महावैयाकरणाः पण्डित प्रवरा श्रीजटाशंकर ओझा महोदयाः सदा सादरं स्मर्यन्ते यैरयं जनः पाठितः संस्कृत विद्याबीजं प्रतिष्ठापितं मयि। ततः परं परमादरणायीयाः पदवाक्यप्रमाण पारदृश्वानो महामनिषिणो वैकुण्ठग्रामस्थाः श्री सूर्यलाल मिश्र महोदयाः; प्रत्यहं सादरं प्रणम्यन्ते ध्यायन्ते यैर्वैयाकरणसिद्धान्तकौमुद्यां न्यायसिद्धान्तमुक्तावल्यांच जडमतिमप्येनंजनं संयोज्य शास्त्रप्रवेशद्वाराणि कथञ्चित् सरलीकृतानि साध्वध्यगाय नेन विषय भाषा प्रवेश प्रसादेन च। शास्त्रीयाः पक्षाः सारभूताः पक्षविपक्ष मतपथ मानीय चर्चितास्तत्तन्निबन्धेषूपस्थापयिष्यन्त एवातोऽत्र न प्रतन्यंते।

नियतिपरवशश्चायञ्जन: जम्मूविद्यापीठतो हि प्रयागस्थ श्री गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठे स्थानान्तरितोलब्धसेवोऽत्रत्य पूर्वं प्राचार्यवर्यैर्विद्वद् धौरेयै: डॉ० श्री गयाचरण त्रिपाठि महानुभावै-श्चापि प्रयागविद्यापीठीय शोधगोष्ठीक्रमे शोधगोष्ठी संयोजकत्वेन नियतोऽभवत्। तदनुसारमत्रापि शोधच्छात्रैर्विद्यापीठीय विद्वद्भिर्वि-विधशास्त्रावगाहन निपुणै: प्राचार्यवरै सह परस्परं शास्त्रचर्चा प्रसंगे-लब्धावसर: शास्त्रतत्त्वावधारितुं श्रोतुञ्च सत्प्रेरणाप्राप्तैव । ते च त्रिपाठिवरा प्राचार्या: शास्त्रीयविषयेषु प्रदत्त महत्त्वपूर्णभाषणा: सर्वान्निपि मुग्धतां नेतुं कृतार्था: शोधकार्येषु विभिन्न विशिष्ट शास्त्रीय प्रक्रियाभि: शोधकार्यक्रमे भाषणे च सम्प्रेरितास्तान् प्रति कृतज्ञतां प्रकाशयामि । यत्कृपात: मिश्रनिबन्धरत्नावली नामायं ग्रन्थोऽत्रैव पूर्णतां नीत:। भाग्यवशादेव पुन: जम्मूविद्यापीठतो ह्यत्र प्रयागविद्यापीठेप्राचार्यपदे समायाता: श्री पाठक महोदया:, तेषां परम-प्रेरणयाऽवश्यमेव पूर्णतांगतोऽयन्निबन्धरत्नग्रन्थ: साम्प्रतिके वातावरणे संस्कृते जगति कामपि उपयोगितां प्रकाशयिष्यति। शास्त्रीयदृशा लोकहिताय जम्मूनगरे संस्कृतमाध्यमेन हिन्दीभाषामाध्यमेन च तत्रत्या नागरिका: पुरुषा नार्यश्च श्रद्धातिशयेन गृहीतभागा शास्त्र-धर्म प्रचारे भवन्ति स्मेति तेन महती प्रेरणाधिगताऽऽसीदेव ।

परमत्र प्राय: कृतेऽपि प्रयासे संस्कृतानुरागिणो जना नागरिका न सोत्साहमपेक्षितकाले सम्मिलन्तीति विचार्यं भवत्येव मनसि विषादस्तथापि प्रयासोऽधुनात्रापि प्रचलत्येवेति विचार्यं संस्कृतसाहित्ये वेदवेदांगे निखिलेऽपिशास्त्रे भारतीयसंस्कृति-संस्कृत-सभ्यतादि संरक्षणसंवर्धनपरायणैरेव भाव्यमिति मनस्यवधार्याद्यापि भाषणे लेखने सोत्साहप्रकृति: प्रवृत्तिश्च सम्पद्येतामिति भगवान्नारायण: भूयोभूय: संप्रार्थ्यंते। तदेव दिनं धन्यंमन्ये यस्मिन् हरि: संकीर्त्यंते "इतिवत्तद्दिनं मंगलमयं सार्थकञ्च मन्ये यस्मिन् दिने शास्त्र सेवाऽव-श्यंप्रवंतमानातिष्ठेत्" इत्येतदर्थं सर्वे विद्वान्स: संस्थासेवारता धन्य-वादार्हा: यैरवश्यं शास्त्रीय: प्रसंगो यथावसरमुपस्थाप्यत एव येनो-त्साह:प्रवर्धमान: प्रवर्तते। शास्त्रीयशोधनिबन्धरत्नावली नामायं ग्रन्थो भारतशासनान्तर्गतमानवसंसाधनमन्त्रालयाधीनशिक्षा मन्त्रा-लयेन प्रकाशयितुं स्वीकृत: नियमानुसारं प्रकाशनभारं वोढुञ्च

संसूचितं स्वाधीनराष्ट्रियसंस्कृतसंस्थानं दिल्लीस्थम्। तत्रत्याधिकारिभिश्चायञ्जनः शोधनिबन्धरत्नप्रकाशनाय संसूचितस्तान् प्रत्याभारी वर्ते। राष्ट्रीय संस्कृतसंस्थानस्योपनिदेशक महोदयाः प्रकाशन-शोधविभागीया धन्यवादार्हास्तेषां कार्तज्ञ्यं वहामि। सर्वेषां शिक्षाधिकारिणां मन्त्रालयाधीनानां राष्ट्रियसंस्कृत संस्थानगतानाञ्चापि हृदयेन सदाऽऽभारी वर्ते। सभ्रान्तनागरिकाणां प्रयागस्थारविन्द प्रेस सञ्चालक महोदयानां श्री गोविन्दशरण दास महोदयानाञ्चातीवाभारी यैरयं ग्रन्थः स्व मुद्रणालये प्रकाशनाय गृहीतः यथाकालं प्रकाशितश्च। तत्रत्य कर्मचारिणामपि सहयोगस्तेन तेभ्यो धन्यवादं वितरामि। प्रकाशनावसरे प्रूफसंशोधन विधौयथाकालं यदाकदा साहाय्यप्रदाने डॉ० श्री वनमाली विश्वाल महोदयोऽपि धन्यवादेन पुरस्कारीक्रियते। नित्यं सामीप्यंभजतां यथावसरं साहाय्यप्रदाने प्रीतिञ्च विदधतां डॉ० श्री शिवकुमार मिश्रमहोदयानां प्रोफेसर पदमलङ्कुर्वतामपि कृतज्ञो वर्ते तान्प्रत्यपि सदाऽऽभारञ्च प्रकटयामि।

मन्येऽत्र ग्रन्थे स्खलनं विषयभाषाप्रसंगे च क्षन्तव्यमेवेति विद्वद्भिरिति स्वीयसमुचितपरामर्श प्रदानेनापि यथाकालं समनुग्रहीष्यत इति। प्रकाशनवेलायां प्रूफसंशोधनेऽपि त्रुटयः सन्त्येवेत्यपि अशुद्ध पाठः शुद्ध पाठश्च द्रष्टव्यः।

—विदुषां वशंवदः
रामनारायणमिश्रः

# १

# योगतन्त्र विमर्शः

अनादिकालतः प्रारब्ध परवशाज्जीवा ब्रह्मसम्बन्धविच्युता यदा-भगवदनुग्रहाल्लब्धयोगिकृपाबलसामर्थ्या अलब्धपरब्रह्म साक्षात्कारा-स्तदर्थंमात्रैक यत्नपरायणा जायन्ते तदैव "अलब्धलाभो योग" इति योगपदार्थं चरितार्थं-चरिताः सुविदितार्थक्रियाः सोद्देश्य फलसिद्धौ प्रयत्नवन्तो युञ्जानयोगिनः (अपरिपक्वरूढावस्थाकाः) मन्यन्ते योगिभिर्महर्षिभिर्यथाशास्त्रम् ।

अतएव योगतन्त्रदृष्ट्या योगो नाम-शक्तिशक्तिमतोः राधा-माधवयोः (शिव-शक्त्योः) वा सामरस्यमेवानुमनुते विद्वत्सम्प्रदायः । इदमेव शिवशक्ति संघट्टनाम्नाऽपि प्रख्यायते । शिवो नाम चिदभिन्न प्रकाशात्मकत्वम् । विमर्शो नाम "इच्छाऽपरपर्याया सर्वाकारा चिन्मयी योगिनीशक्तिरभिमता । तथा चोक्तमपि संकेतपद्धतौ यथा—

अकारः सर्वं वर्णाग्र्यः प्रकाशः परमः शिवः
हकारोऽन्त्य कलारूपो विमर्शाख्यः प्रकीर्तितः ।

तात्पर्यार्थोऽस्य = अकार-हकारयोरनयोः (शिवशक्त्योः) सामरस्यम् अर्थात् समाहारः "अन्योन्यमवस्थानम्वाऽभिधीयते । समरसतेय शिवयोगिभिः प्राप्यं परधामाधिगम्यते । तादृश एव शिवशक्त्यात्मकः संविद्विशेशेषो योगः तन्यते = विस्तार्यते (तनु विस्तारे) तनुश्रद्धोप-करणयोः" इति धात्वोः प्रकृति भूतत्वात्, उत् तनोतीति तन् त्रायत इति, तंश्चासौ त्रः तन्त्रः विस्तारो नाम वैशिष्ट्यापन्नो रक्षकः, तानयति श्रद्धामिष्टे समाराध्ये वा उत्पादयति, उपकरोति, कल्याण-लीलाँसमुल्लासयति, अयत्नसम्पन्नसमीहितार्थं करोतीति तन्त्रम् अथवा तननाज्जगद् विस्तारान्मायाप्रपञ्चात् त्रायते = रक्ष्यतीति तन्त्रम् ।

विद्या-योग-क्रिया-चर्यादि प्रक्रियापरकैः शास्त्रैरनेनेति योगतन्त्रमिति साधुत्वान्वाख्यानम् । सनक-सनन्दन-सनत्कुमार-वशिष्ठ-शुकादिभिः पञ्चयोगिभिर्ब्रह्मनिष्ठैर्नैष्ठिक ब्रह्मचारिभिश्चीर्णमवगतञ्च प्रचारितञ्च ज्ञानक्रिया सामरस्यमपि योगतन्त्रनाम्ना लोकेऽपि प्रसिद्धिमवाप ।

अत्र विचिकित्स्यते यत् किन्तावत् योगस्वरूपमिति ? कुण्डलिनी-अपरपर्याया सा योगरूपाशक्तिः युक्त योगिभिर्गम्या (परिपक्वावस्था रूढयोगभिः प्राप्या) सर्वेषां योगतन्त्राणामाधारभूमिरिति निश्चयः । एवं हि यत्र तत्र तन्त्रागमेषु साधनप्रक्रियाप्रकरणात्मना योगवर्णनं प्रथते कुण्डलिनीमधिकृत्य तत्सर्वमखिलमेव योगतन्त्रं सम्परिपुष्टं भाषते । यथा हठयोगप्रदोपिकायाम्—

सशैलवनधातॄणां यथाऽऽधारोऽहिनायकः
सर्वेषां योगतन्त्राणां तथाऽऽधारो हि कुण्डली ।

प्राप्तसाक्षिभास्यदीक्षाः परमयोगिनः—शिवस्येशान-तत्पुरुष-अघोर-वामदेव-सद्योजात-पञ्चमुखैर्निर्गतं योगक्रिया-संसाधकं ज्ञानं गुरुशिष्य परम्परयाऽद्य यावदागच्छतीत्यागम शब्दस्य पारम्परिक एवार्थो निर्णीयते । अतएव—"आगमो ज्ञानमित्युक्तमनन्ताज्ञानकोटयः" इति स्वच्छन्दतंत्र वचनात् आगमस्य ज्ञानमिति पर्यायः तज्ज्ञानं योगादृतं नहि—यथा कूर्म पुराणे भणितिः—

योगात्सञ्जायते ज्ञानं ज्ञानाद् योगः प्रवर्तते
योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ।

निःश्रेयसाधिगम एवैतस्यापि फलमुक्तं मनीषिभिः योगशास्त्रानुसारं कौलोपनिषन्मतेन सर्वात्मतासिद्धिरेव मोक्षः । सर्वात्मेत्यत्र सर्वं एवात्मायस्य तद्भावः, तस्य च सिद्धिरित्यर्थः कृतः । तेनेदं व्याख्यातुं शक्यते यत् सर्वस्य स्वात्माभेदेन ज्ञानमेवमोक्षपदार्थः समभिलयते । देवीभागवतेऽपि—

सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् इति व्याहृतम् । तत्र समानार्थकज्ञानस्य मोक्षजनकत्वं ध्वन्यते सुतराम् ।

पञ्चविषयाणां प्रपञ्च स्वरूपं विविधप्रक्रियाभिरित्थं विवृण्वन् तेषामपि ज्ञानस्वरूपमेव निर्धारितमाप्तैः। योगवाशिष्ठेऽपि विषयेऽस्मिन् प्रकाशितम्। "सर्वत्र पञ्चभूतानि षष्ठं किञ्चिन्न विद्यते" इति। ज्ञानशब्दस्यापि विशिष्टार्थो दर्शितः यथा—सश्चासावनश्च ज्ञानमिति, तेनैव प्राणवन्तोऽपि जीवा विषयानजानन्तस्तिष्ठन्तीति तेषां ज्ञानस्वरूपत्वं विवृतं सम्यक्-योगो मोक्ष इत्यादिना। स च मोक्षः श्रीतन्त्रालोकानुसारम्—

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः
स्वरूपञ्चात्मनः सवित् इत्यादि रूपेणवर्णितः।

**तन्त्रस्वरूपञ्च**—

आत्मनः संविदेव सर्वत्र तन्त्रागमेषु योग इत्युदीर्य्यते। इमौ तन्त्रागमशब्दौ च भारतीय वाङ्मये शाक्त-शैवदर्शनयोर्निरूढिगतावनादिकालादेव प्रसिद्धौ।

सत्यपि भेद आगमतन्त्रयोः (तात्त्विक षट्त्रिंशत् तत्त्वस्वीकारे) किमपि पार्थक्यं सिद्धयत्येव नहि। दर्शनस्यास्य स्वच्छन्दमालिनी विजयोत्तरादि—तन्त्राम्भोधः सम्यगालोडनं विधाय काश्मीरशैवाचार्यैर्महामाहेश्वरैरीश्वराद्वयवादरूपस्य देदीप्यमान ग्रन्थमालाऽविष्कृता। एवंविधस्य दर्शनस्योद्धारपरायणेनकैलाशशिखरे भ्रमणं विदधता श्रीकंठाभिधेन शिवेनैतद्दर्शनसिद्धान्तानां शैवसम्प्रदायनिष्ठः कश्चन मनीषीदुर्वासाज्ञानोपदेशेनानुगृहीतः, दुर्वाससा च मानवभूमावतारणपूर्वकं शिवसूत्रं शिवोपलगुहातः प्राप्य शिवप्रेरणयैव काश्मीराभिजनस्य वसुगुप्तस्य कृपयानुगृहीतस्य स्वप्नावस्थायां ज्ञानशक्ति समुद्दीप्य समुपदिष्टम्। यथा शिवदृष्टिः प्रमाणयति—

कैलासाद्रौ भ्रमन् देवो मूर्त्या श्रीकण्ठरूपया।
मुनिं दुर्वाससं नाम भगवानूर्ध्वरेतसम्॥

अथ च—

लब्धं महादेवगिरौ महेश स्वप्नोपदिष्यत् शिवसूत्र सिन्धौ।
स्पन्दामृतं यद् वसुगुप्तपादैः श्रीकल्लटस्तत्प्रकटीचकार॥

ज्ञानमिदं दिव्यौघ सिद्धौघ मानवौघत्रयपरम्परया तन्त्रागमशब्दवाच्यम् । महामाहेश्वरेण जयरथेनापि प्रोक्तं स्मृतिपथमायाति विपश्चिताम् यथा—

इत्यागमं सकलशास्त्रमहानिधानात्
श्रीशम्भुनाथवदनादधिगम्यसम्यक् ।
शास्त्रे रहस्यरससन्तति सुन्दरेऽस्मिन्

इत्यादि । एतेन स्फुटं प्रतीयते यद् गुरुमुखोद्गतं ज्ञानमेव तन्त्रागमपदेन संकेतितमत्र श्लोके यथाऽग्रेऽपि तेनैव भाषितम्—

सतन्त्रं यज्ञे रुद्र–शिव–भैरवाख्यमिदं त्रिधा ।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते ।
भेदेन भेदाभेदेन तथवाभेदभागिना ।

इत्यादि वचनानि तन्त्रालोकस्य १।३२, १।४५ उद्धृतानि प्रमाणपदवीमारोहन्ति । इत्थमुक्तप्रकारेण भेद–भेदाभेद–अभेद प्रतिपादकक्रमेण त्रिप्रकार–कमिदं ज्ञानयज्ञात्मकं शास्त्रमुद्भूतमिति सिद्धान्त मुद्रा । एवमेव नेत्रतन्त्रे षोडशाधिकारे षडविंश कारिकायां प्रतिपादितं स्मृतिप्रयोजकत्वेनोपायतयाऽभिमण्यते यथा—

आगमस्य प्रवक्ष्यामि क्रियते तु यथेच्छया

एवं रीत्याऽऽगमस्य वचनकर्मत्वं सुनिर्धारितं सुसंगच्छते तेनाप्यागमस्य तन्त्राऽपरपर्यायस्य ज्ञानमेवार्थो वाचिप्रयुक्तो निर्धार्यमाणकोटौ प्रकाश्यते अमुनाप्रकारेणैवाधिकृत्येव लक्ष्यीकृत्य च तदर्थं तत्त्ववैशारद्यां वाचस्पतिमिश्रमहाभागैरपि प्रत्यपादि— "आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिश्श्रेयसोपाया स आगमः तन्मते भाविजगतः सूक्ष्मं रूपं यत्र तत् तन्त्रमिति शब्दसाधुत्वविधया सूक्ष्माकृतिसम्पन्नाभेदतत्त्वात्मकज्ञानस्यैवतन्त्रत्वं वक्तुं शक्यमिति निश्चप्रचम् । एतदेव सूक्ष्मं वस्तुतत्त्वं किञ्चिदुन्मिषितं गृह्णाति । प्रकटस्फुरणरूपेण सम्प्रकाशे हि देशकालाकारादिभेदप्राकट्ये भेदरूपतामप्येकस्यैव ज्ञानस्याभेदापन्नस्य देशकालाकाराद्युन्मेषक्रमेणोक्तयोजना सम्पद्यते ।

एतद्धि—श्रीनेत्र तन्त्रे ८५

तस्मात्सर्वं प्रयत्नेन शिवज्ञानं समभ्यसेत्।
तदासिध्यन्त्यशेषाणि कर्माण्येवान्यथा नहि॥ इति

शिवशक्तित्त्वम्। प्रमाणेनैतेनैव सर्वकर्मसम्पादनैकनिदानं शिवप्रोक्तं योगतन्त्रात्मकं ज्ञानमेव सदाऽभ्यस्तत्त्वेन साधकतया महोपकारकमधिगम्यते। अतएव शिवशक्त्योरन्योन्यावस्थानं सामरस्यात्मकात्मनः संविद् रूपयोगार्थं यतनीयमेव योगतन्त्रोपासकैशिवशक्तिनिष्ठैः, शैववैष्णव-दौर्गार्कबौद्धजैनगाणपत्त्याद्यागमेषु प्रक्रिया प्रकरणरूपेण समवस्थितं शास्त्रं योगतन्त्रम्। तत्रहि शैव शाक्तागमयोः क्रमशः शिवतत्त्वस्य तच्छक्तेर्वाप्राधान्यमधिगम्यैव तत्तत्त्ववर्णनं दृश्यते। "योगस्त्वमसिदेवेशि" इत्यादिना शक्तेर्जगद्रूपत्वं शिवस्य तत्स्वामित्वेन शक्तिमत्त्वेन वा योगाधिष्ठातृत्वं, योगित्वं स्फुटरूपेण प्रतिपदोक्ततयाऽनुमन्यते इत्येव प्रतिपाद्यते। अतः प्रोक्तमपि शाम्भवैक्यदीपिकायाम्। यथा—

विश्वमिदं मन्मयं मत्कार्यत्वात्, यदित्थं तत्तथा, यथाशरीरम्, एतच्च मत्कार्यम्, तस्मात् मन्मयमिति। अत्रानुमानाकारे कार्यकारणयोरभेदोपचारेण मत् कार्यत्वाद् विश्वस्य शिवमयत्वमेवोक्तम्भवति। पूर्ववचनेन च शक्तिमयत्वमिति, इत्थं पूर्वोत्तर सन्दर्भेण शक्तिशक्तिमतोश्शक्तिशिवतत्त्वयोरभेदत्वसिद्धान्तः सम्यक्तया सुरक्षितोऽनुभवपथमायाति। एवं प्रकारेणापि योगशास्त्रस्य तदाभ्यन्तरवर्तिशाखाप्रशाखादेश्शिवसम्बन्धिसिद्धौ न सन्देहः अत्र पक्षौ दौ वाह्याऽभ्यन्तररूपौ दृष्टिपथायेते सुतराम्। अन्तर्गता हि प्रकाशव्याप्तिस्तस्यैव प्रकाशस्य वहिर्भावे सति "अहमित्यभिधानव्यपदेशः प्रकाशश्च स्वतः शाश्वतरूपतया परिपूर्णो मन्यते तस्यान्तर्गतत्वं बहिर्गतत्वम्वाभवेत्, केवलमन्तर्गतत्वेन बहिर्गतत्वमात्रेण वा एकस्यैव वस्तुनः तथोक्तस्थान परिवर्तनेन भेदो भवितुमर्हतीति निर्णीयते। अस्माद्धेतोः पूर्वोक्त व्यवहारद्वयं सर्वजन प्रसिद्धमनपह्नवनीयम्। अन्तर्गतं प्रकाशतत्त्वं चिन्मयानन्दमयं च स्वात्मपरमेश्वरेणाभिन्नम् उक्तञ्चापि-ईश्वरप्रत्यभिज्ञायाम् ४/२ यथा—

सन्तानान्तर वहिर्ज्ञाता व्यावृत्तभासनः क्रमिकः
विश्वरूपोऽहमिदमित्यखण्डानन्द वृंहितः। इति

एतस्य प्रत्यभिज्ञानवचनस्याशयः–नील संकल्पविकल्पाद्यनेकसन्तानसमनन्तरं पीत संकल्पविकल्पादौ सन्ताने वहति सति व्यावृत्तभासमानो ज्ञाता क्रमिको नीलस्यावभासकोऽस्मि, पीतस्यावभासकोऽस्मि इति परस्परपरिहारात्मनाऽवस्थितग्रहणत्वाद् ग्राहकः पूर्वोक्तो ज्ञाता क्रमवान्। यदा हीत्थ क्रमिकता, तदैव चासौ परमेश्वरोजीवाख्यां लभते। परमेश्वर योगात् पारमेश्वरे या क्रमिकतोपलभ्यते सा वेद्योपाधिक्येव।

वस्तुस्थित्यागत्या वा नीलपीतयोरनुवृत्तोऽवभासोऽनुवृत्तप्रवाहस्यानुकरणमात्रमेव प्रशस्यते, न तत्र क्रमस्य कापि सत्ता, मूलतत्त्वस्याक्रमिकत्वात्। नहि तस्मिन् प्रकाशे क्रमिकता काप्यपेक्षिता भवति, यतस्तस्याक्रमिकत्वात्। तयैवरीत्याज्ञातरि चापि तत्तज्ज्ञान बोधोपरक्तस्य भेदस्य न ग्राहकाभेदः। वेद्यज्ञानस्याकतस्मकत्वान्मध्यपातित्वात् क्षणिकत्वाच्च नीलपीतादि ग्रहणदशायामपि प्रकाशैकात्मतया प्रकाशात्मकं वस्तुक्रममेवावतिष्ठते नैयत्येन। अतएव प्रबुद्धस्य यदा विश्वप्रतियोगित्वं स्वीक्रियते तदैव शिवत्वमभ्युपगम्यते, यदा तु प्रतिनियतार्थंप्रतियोगियोगित्वम्, तदा ग्राहकत्वमिति द्वैरूप्यानतिक्रमाज्जीवत्वसंस्कारः सदानुवृत्तौ ममैवाक्रमपरिपूर्णैकघनप्रकाशात्मक स्वात्म शिवत्वस्वभावत्वक्रमाज्जीवत्वसंस्कारः सदानुवृत्तौ ममैवाक्रमपरिपूर्णैकघनप्रकाशात्मक स्वात्म शिवत्वस्वभावत्वप्रबोध उक्त दृष्टान्तेन नीलपीतादिज्ञानदशायामपि पूर्वोक्त भेदज्ञानं दूरमेवोत्सारितम्। अतएवोक्तं "प्रबुद्धेन इति = प्रबुद्धः सदातिष्ठेत" इति स्पन्दकारिकोक्तसिद्धान्तो निर्विवाद एव। शक्तिशक्तिमतोरभेदज्ञानग्रहिला मनीषिणः सततमेव वाह्याभ्यन्तरोपाधिभेदग्रहं समुत्सार्यं सदा निराभासत्वमेवानुभवगोचरीकुर्वन्ति। तत्र शक्तिसूत्रापरपर्याय प्रत्यभिज्ञाऽपरनाम्निग्रन्थे शक्तेः स्रजनसंहारयोर्हेतुत्वं निर्धारितमुपलभ्यते। यथोक्तमपि प्रत्यभिज्ञाहृदये सम्यक्–"चितिः स्वतन्त्रा विश्वसिद्धि हेतुः" इति। अनेन सूत्रेणाचिदेव भगवती स्वच्छस्वतन्त्ररूपा तत्तदनन्त जगदात्मना स्फुरणशीलाऽभिव्यक्ता नु सम्प्रकाश्यमाना विराजते।
—मार्कंण्डेय पुराणेऽपि

"चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्" इति प्रोक्तं वचनं प्रामाण्यमभ्युपगच्छतीति। अन्यच्चापि प्रमाणं योगिनीहृदये यथा—

यदा सा परमाशक्तिः स्वेच्छयाविश्वरूपिणी।
स्फुरत्तामात्मनः पश्येत् तदा चक्रस्य सम्भवः॥

अतो यस्मिन् काले प्राणिनामदृष्टवशात् स्वान्तः संहृतविश्वसिसृक्षया उक्तैव पराशक्तिर्विवमर्शरूपिणो स्वेच्छया विश्वरूपिणी विश्वं सृजति तदा हि षट्त्रिंशत्तत्वात्मक विश्वसृष्टिकाले चक्रस्य विश्वमयस्य परदेवता चक्रस्य सम्भव उच्यते। यथा चाभिभाषतेऽपि महामाहेश्वराभिनवगुप्तपादाचार्यः चक्रशब्दस्य प्रवृत्तौ किन्निमित्तमिति प्रसङ्गे—

विकासात्तृप्तितः पाशोत्कर्तनात्कृतिशक्तितः।
चक्रं कसेश्चक्रेः कृत्या करोतेश्च किलोदितम्॥

इत्थं श्री तन्त्रालोक प्रमाणवशादेव धातुचतुर्थान्वियादत्र चक्रशब्दः। तेन विकसति, चक्रास्ति, कृन्तति, करोतीतिचक्रम्। एवमेव आज्ञावतारेप्युक्तम्—स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपीति। वस्तुतो विश्वसृजनमेव पराशक्तेः स्फुरत्ता तस्याः सृष्टिरूपत्वात्। जगतः शक्तेश्च कार्यकारणभावे एतावानेव परमार्थः। यथा चितिशक्तिः स्वप्रकाशा, स्वतन्त्रा, व्यापकनित्योदित परिपूर्णरूपा, तथैव जगदपि विभिन्नं नैव किञ्चित्, अर्थात् विश्वमपि चिद्रूपमेव तदुद्भूतत्वात्। यथाहि श्रुतौ तत्सृष्ट्वा तदेवानुप्राविशत्, इति प्रतिपादितमेव। केवलमेतदेव वक्तुं पार्यते यत् विश्वं ग्राह्यं शक्तिर्ग्राहिका, तेन सर्वप्राणिसुलभग्राह्यग्राहकादिभाव सम्बन्धो दत्तावधानतया व्यवस्थापनीय एवात्र इति समनुभूयते, अनोऽनयोस्सम्बन्धोऽभेद एव निर्धार्यते। यद्युच्यते भेदविभास इति तन्न समीचीनं यत आपाततोऽभेदाज्ञानवशादेव तथा प्रतीयते।

जगद् भासने किं कारणम्? किञ्चात्राधिष्ठानम्? किञ्च प्रयोजनमिति? विषये प्रत्यभिज्ञाहृदये सुस्पष्टमेव प्रोक्तं यथा—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति। एतनैवेदं सुनिश्चितं यत्—

स्वातन्त्र्यस्वभावशक्तिर्विश्वाविर्भावे=सृष्टौ न किमपि निमित्तोपादानादिकं कारणमपेक्षते किन्तु स्वेच्छयैव स्वभित्तौ स्थितं दर्पणे नगरवदभिन्नमपि (निखिलं विश्वमादर्शेदृश्यमाननगरीवत्स्वान्तर्गतं) भिन्नमिव पूर्वावस्थितस्य प्रकटीकरणमेवोन्मीलनम् प्रतिभासते। एतद्धि विश्वं स्वरूपेणावस्थाभेदेनौचित्यविचारेणाधिकारिभेदेन चानेकविधयाभिद्यमानं गोचरीभवति।

शिवोऽपि विश्वात्मक एव चिति सङ्कोचात्। स्वमायाशक्त्या स्वस्य सदाभासितमपि विश्वमखिलं भिन्नतया संकोचेन संकुचितमिवावभासयति। उक्तञ्चापि स्पन्दकारिकायाम्।

तेन शब्दार्थचिन्तासु न सावस्था न स शिवः।
भोक्तैव भोग्यभावेन तदा सर्वत्र संस्थितः। इति

अमुनाप्रकारेणैव शिव जीवयोरभेदमभिभाष्य—"एतत्तत्वपरिज्ञानान्मुक्तिरज्ञानाच्च बन्ध इति निर्धार्यते। चित्तमपि शक्तिस्वरूपमेव चितिरेव संकुचितग्राहकतामभ्युपगम्यार्थग्रहणपरायणा घटपटादिरूपेणात्मानं संकोच्य यदा भासयति तदैव चित्तपदेनाभिधीयते। अतएव परमार्थानुगामिनो योगिनः स्वस्वरूपस्यावभासात् सर्वस्यामप्यवस्थायां स्वप्रकाशकत्वं न तिरोधीयते इति सर्वथा मन्वते न केवलमपितु वस्तुस्तथाऽनुभवन्त्यपि। देहेन्द्रिय बुद्धिप्राणादिज्ञानं चितप्रधानमेव। सर्वं शिवमिति ज्ञानं चैतन्यप्रधानम्। एकस्यैव चिदात्मनः रुचिभेदेन, उपासनाभेदेन च, उपासना सौविध्याय परिलब्धनाम्नो भगवतो भगवत्या वा स्वातन्त्र्यप्रच्छादनोन्मीलनन्यूनाधिकभावभेदिता इमाः सर्वा भूमिका लोके नटस्येव स्वेच्छापरिकल्पिता एव मन्यते।

अत्र प्रसङ्गतो विविध दर्शनोदित परतत्त्वनिरूपणे मतवैलक्षण्यं वैभिन्न्यञ्च प्रख्याप्यते।

तत्तद्दर्शनप्रवर्तका आचार्या भिन्न-भिन्न प्रक्रियया भगवत्प्रेरणया इच्छया वा परतत्त्वस्वरूपं नाल्पं नैकमत्येन निर्धारणमभिकाङ्क्षन्ते यथाहि :

१. चैतन्य विशिष्टं शरीरमात्मेति चार्वाकाः ।

२. ज्ञानाधिष्ठानमात्मेति नैयायिकाः ।

३. सुखदुःखाद्युपाधिरहिताहंप्रतीतिप्रत्ययः आत्मेति जैमिनीयाः । (मीमांसकाः)

४. ज्ञानसन्तानमेवात्मेति सौगताः ।

५. प्राणाएवात्मेति केचनौपनिषदाः ।

६. असदेवेदमासीदिति श्रुत्याऽभावं शून्यमेव ब्रह्मवादिनो माध्यमिकाः ।

७. चिदचिदीश्वराऽपरपर्यायपराप्रकृतिः भगवान् वासुदेवः तद्विस्फुलिंगसदृशाः अंशभूता वा-जीवा इति वैष्णवाः ।

८. त्रिगुणात्मिका साम्यावस्थापन्ना प्रधानापरपर्याय प्रकृतिरेव कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेप इति सांख्याः ।

९. सर्वं खलु सांख्यवत्प्रतिपद्यमाना .अपि केवलं "कलेशकर्मविपाकाशयैरपरामृष्ट पुरुषविशेष ईश्वर" इतीश्वरतत्त्वमधिकम्मन्यमाना यौगिका (योगदर्शनाभिमानिनः) ।

१०. सदेव सोम्य इदमग्र आसीदितीश्वरतत्त्वपदमास्थिता अपरे वेदान्तिनः ।

११. शब्दब्रह्ममयं परारूपमात्मतत्त्वमिति वैयाकरणः, स्वरूपज्योतिरेवान्तः परावागनपायिनी तस्यां दृष्टा यां स्वरूपायामधिकारो निवर्तते इति भर्तृहरि वचन प्रामाण्यादपि ।

१२. आगमदर्शनोक्त गुणतत्त्वसदृशीमास्थामातिष्ठन्ते जैनाः ।

अत एवागमप्रोक्त सप्तप्रमातृभूमिषु-शिव मन्त्र-महेश्वर-मन्त्रेश्वर-मन्त्रविज्ञानाकल प्रलयाकल-सकलादिष्वेते पूर्वोक्ता भेदाभेदमतप्रवर्तका दार्शनिकाः षट्त्रिंशत्तत्त्वेषु सदाशिवादिप्रकृतिपर्यन्तेषु भिन्न-भिन्न भूमिषु एवाभिनिविष्टाः शिवशक्तितत्त्वाभ्यामधः स्थिताः

शिवशक्तितत्त्ववैशिष्ट्यं नावाप्ता इत्यपि वक्तुं शक्यते। उक्तञ्च श्री तन्त्रालोकेऽपि यथा—

"बुद्धितत्त्वे स्थिताः बौद्धाः गुणेष्वेवार्हतास्थिताः
स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः" इति।

इत्थमालोडनेन सर्वेष्वपि दार्शनिकेषु वैयाकरणा एवास्माकं सदा शिव शक्ति पर्यन्तमनुधावन्तीत्यागमदृष्ट्यापि परेभ्यः वैयाकरणा एव विशिष्यन्ते ?

१३. तान्त्रिक दृष्ट्याऽऽत्मतत्त्वं विश्वोत्तीर्णम्।

१४. कौलमतेनात्मतत्त्वं विश्वमयमेव।

१५. प्रत्यभिज्ञादित्रिकदर्शनवादिनां मते त्वात्मतत्त्वं विश्वोत्तीर्णं विश्वमयञ्च।

सैव शक्तिर्यदा बहिर्मुखं रूपं स्वरूपे विश्राम्यति तदा-तदा बाह्यवस्तूपसंहारादन्तः पदावस्थितिः संहारपदेनोच्यते। तत्तदुद्देश्य संवित्संतत्या सूत्रणमेव सृष्टिः प्रोच्यते, इयमेव संविदरूपाशक्तिभट्टारिका तत्तत्सृष्ट्यादिभेदानुद्वमन्ती संहरन्ती च सदा पूर्णा कृशा चोभयानुभयात्मिकाक्रमाक्रमरूपाच सततं स्फुरन्ती स्थिता। एषैवाधिकमनुशील्यमाना भक्तजनमनुगृह्णाति। चिदात्मा परमेश्वरः स्वातन्त्र्यवशादभेदमाच्छाद्य भेदंप्रकटय्येच्छादिशक्तिसहकारेणासंकुचितमपि संकुचितमिव विधाय सम्प्रकाशयति। तस्मादेव हेतोः हि संकोचग्रहणेन निर्मलोऽपिजीवो बलात्त्रिविधमलावृततया संसारी भवति मन्यते च तथा।

(अ) संकोचं गृहीत्वा स्वात्मानसपूर्णं पश्यन्नेव मलेन युज्यते,

(आ) अनन्तरं क्रमेण ज्ञानशक्तिसंकोचात् सर्वज्ञत्वं तिरस्कृत्य देहेन्द्रियादिबुद्धिष्वात्मतत्त्वं ग्राहितेनात्मस्वरूपात् विश्वस्य वेद्यरूपस्य भेदज्ञानान्मायामलेन युज्यते।

(इ) सर्वं कर्तृं त्वनिमज्ज्ते किञ्चित् कर्तृत्व प्राप्तौ कर्मेन्द्रियरूपमत्यन्तं संकोचं परिगृह्णान् शुभाशुभकर्मानुष्ठानेन तज्जन्येनादृष्टेन सुखदुःखात्मकफलेनावलिप्तो भवति। तदेवं रीत्या त्रिप्रकारकमला-

ऽऽप्लुतेन नियन्त्रितो जीवः कलादि शक्तिभिर्विलुप्ताखिलाऽऽत्मविभवः शक्तिदरिद्रः संसारी पशुरित्युच्यते। अत्र विषये स्पन्दकारिकावचनमपि प्रमाणभूतम् यथा—

शब्द राशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम्
कलाविलुप्त विभवो गतः सन् स पशुः स्मृतः।

इति। एतेन तथ्यमित्यवगन्तव्यमेव सत्पथभ्रष्टतया जीवस्य विविधयातना भोगबन्धः सृष्टो बध्नात्येव। यतोऽज्ञानमेव बन्धस्य कारणं भवति। शब्दराशिस्वरूपा वर्णमातृकातु स्वभाव प्रच्याविका। तेनस्वरूपात्प्रच्याव्यात्मानं पशुत्वे विनियोजयति। स्वशक्तिविकासलाभे तु शिव एव संसाराऽपन्नोऽपि शक्ति पञ्चकृत्यानि सम्पादयति।

तथा च देहेन्द्रियप्राणादिभूमिमवतीर्य महेश्वरो वहिर्मुखीभावावसरे घटपटादिकमर्थं तत्तन्नियतदेशकालादितया यदाऽऽभासयति तदा तत्तदा भासांशे विलयकारिता, प्रकाशेनसहैक्यमासाद्य प्रकाशेत्वनुहीता। एवमित्थं पञ्चविधकृत्यकारित्वमात्मीयं ज्ञातुः साधकस्य दृढप्रतिपत्तिदशायां महेश्वरत्वं जीवन्मुक्तत्वञ्चास्त्येवाज्जस्येनेति। ये चात्मनोभेदेनप्रपञ्चं पश्यन्ति त एव बद्धा इति वेदान्तिनोऽपि संगिरन्ति सुतराम्। इत्थं केचनविपश्चितो वर्णयन्ति योगतन्त्रार्थरहस्यमनुभवविचक्षणाः। केषाञ्चिदनुभवबलात् शास्त्रप्रमित युक्तिबलाच्चान्यथापि पञ्चविधकृत्यकारित्वं योगतन्त्रहृदयं स्वरूपमपि क्वचित् यथार्थतः प्राशस्त्यं भजतीत्यपि परमं रहस्यम्। यथा-आभासनशक्तिविमर्शनबीजावस्थापनविलापनताभिस्तानि पञ्चविधकृत्यानि करोतीति सामञ्जस्यं सुसंगच्छते पूर्वेणापि तत्तत्वेन।

दृष्टिसृष्टिवादवदत्रापि चक्षुरादिज्ञानेन्द्रियसमक्षं यद्यदाभाति तत्तत्सृज्यते। अतः सृष्टे वस्तुनि यदाकिञ्चित्कालं निमेषपरिवर्जनक्रमेण यावत्कालं रज्यते तावदेवस्थितिरिति भण्यते विमर्शनकाले संहृतिः। प्रलयावस्थायामपि संह्रियमाणमपि हृदि यदा विचित्राशंकादि संस्कारेण विलापयति, तदा विलय उच्यते। समनुभूयमानमपि वस्तु कार्त्स्न्येन चिदग्निसद्भावमासाद्य पूर्णत्वापादने सत्येवानुग्रहः,

एतदनुभूतये सद्गुरोः प्रक्रियोपेतः सदुपदेशः परमावश्यकः। सद्गुरूपदेशमन्तरा नैव सिद्धिः कथञ्चिदपि योगतन्त्रार्थमात्रज्ञानवतामपि। यतोऽनुभूतावपि भ्रमः स्थातुं शक्नोत्येव तेषु तेनानुभूतिः सद्गुरूपदेशात् सार्थं साधनावस्थायां परीक्षिता शास्त्रीया चावश्यमधिगन्तव्या फलप्रसवित्रीति निश्चयः।

अतः सैव ब्रह्मविद्यापराशक्तिः स्वरसवाहिनी परावाक् पूर्णाहन्ता संवित् काली अनादि नाम्ना व्यवहृति पथमुपगता। कथं सा काली; इति निरूप्यतेऽत्रकल, किल, विल, विक्षेप, कलगतौ कलशब्दे, कलसंख्याने इति धातुभ्यः कर्मणि घञ् प्रत्ययविधानात् ङीषि प्रत्ययेसति काली शब्दः सिद्धयति। तेन कल्पते यथा, सर्वं ज्ञायते स्वात्माभेदेन परामृश्यते यथा संख्यायते प्रभातृप्रमेयादित्रिपुटीवर्गः स्वरूपमारुह्यते दर्पणगत प्रतिबिम्बवत् स्वस्मादव्यतिरिक्तत्वेऽप्यवभास्यते यथा, शब्यते स्वात्मपरामर्शं शेषतां नीयते सर्वमविकल्प ज्ञानादि विलोप्यते यथा सैव कालीत्यभिधीयते अतः स्वरूपावभासनक्षमस्यात्मनो यो विश्वात्मनाऽवभासः स एवाहमिति नाम्नाऽऽम्नातस्तस्यैव प्रत्यवमर्शात्मिका दशा अहन्तानाम् अस्येदं तात्पर्यम् योऽयं प्रत्यवमर्शादि नीलान्तस्य योऽयं प्रत्यवमर्शादि घटान्तस्य वेद्यस्यावभासको वेदनैकस्वभावः सर्वप्रमितिभावप्रकाशो नाऽसौ स्त्रयमिति पर इति वा व्यपदेष्टुं योग्यो यतस्तयोरवेद्यत्वात्। वेद्यज्ञानास्कन्दितैकत्वस्यसत्त्वेन भेदकमानाभावेन तस्यैव मूलभूतप्रकाशस्य चिद्रूपस्य प्रत्याहारन्यायेन अश्च हश्च अहौ अनयोः समाहारोऽहम् इति। अकार हकाराभ्यां समस्त शब्द राशिमयस्य प्रकृतिप्रत्ययार्थ सदृशस्याहन्ततया व्यवहार आगमेषु तन्त्रेषु चोपलभ्यते। मूलकारणस्य मूलभूततत्त्वस्य शब्दार्थसंघातरूपस्योद्भूतावयवविवक्षायां ज्ञानकरणे भावार्थं तल् प्रत्यय संयोगेऽहनोभावोऽहन्तेति व्यपदिश्यते योगिभिरिह। अतइदमिति वेद्यस्य, अहमिति वेदकस्य तमोमलस्य प्रकाशस्य मूलभूतोधर्मः एक एव मन्तव्योभवति। स एव विच्छिन्नाभासत्वे परस्य न भेदव्यवहारग्राहके इदन्ततयाऽविच्छिन्न भावाभासकत्वेऽहन्ततया भासते। अतः सुस्पष्टमिदं भाषितुं शक्यते यत्—

शक्तिर्माया प्रकृतिः पृथ्वीति चतुर्विभागमण्डवत् ।
यश्च विभागोऽस्य बहुधासर्वं स्थितमेतत् ॥

एतनेदं प्रथितम्भवति यत् निखिलमपि ब्रह्माण्डं चतुरण्डयुक्तम् ।

१. शक्त्यण्ड-मायाण्ड-प्रकृत्यण्ड-पृथिव्यण्ड भेदात् । अत एव तन्त्रेष ब्रह्माण्ड कल्पनायां षट्त्रिंशत्तत्वानि स्वीक्रियन्ते योगतन्त्र-विद्भिः १—शिवः २—शक्तिः ३—सदाशिवः ४—ईश्वरः ५—शुद्धे विद्या, ६—माया, ७—कला, ८—विद्या (अशुद्धविद्येत्यर्थः) ९—रागः, १०—कालः, ११—नियतिः, १२—पुरुषः, १३—प्रकृतिः, १४—बुद्धिः, १५—अहंकारः, १६—मनः, १७—श्रोत्रम्, १८—त्वक् १९—चक्षुः, २०—जिह्वा, २१—घ्राणः, २२—वाक्, २३—पाणिः, २४—पादः, २५—पायुः, २६—उपस्थः, २७—शब्दः, २८—स्पर्शः, २९—रूपम्, ३०—रसः, ३१—गन्धः, ३२—आकाशः, ३३—वायुः, ३४—अग्निः, ३५—सलिलम्, ३६—भूमिरिति । एतानि षट्त्रिंशत् तत्त्वानि विश्वब्रह्माण्डत्वेनाभिधीयन्ते । इत्थमत्र समासतः प्रतिपाद्यते यत् सर्वमपि कर्मजालं शक्तिसमाराधनाय एव । शक्तिरपि योगतन्त्रसाहित्ये विमर्शरूपिणी सर्वाकारयोगिनी चिद्रूपा निर्धारिता, सैव विविधैरुपायैः सर्वैरप्यात्मसात्कत्तु शक्यते । अतः केचन ज्ञानयोगेन केचन भक्तियोगेन तल्लाभाय यतन्ते । साधकास्तन्त्रागमयोः असाध्यसाधनाय, अलभ्यलाभाय च वर्णराशिमयं मातृकाचक्रम्, मालिनी चक्रं वा भूतलिपिंवाऽऽराधयन्ति । शरीरमेव तदाराधानक्षेत्रम् स्वीकृत्य तत्र षट्चक्राणि भावयित्वा सच्चिदानन्द-घनमात्मतत्त्वं मार्गयन्ते । योगतन्त्रे तु कुण्डलिनी योगस्य प्राशस्त्यं माहात्म्यं वर्णितमस्ति, तस्याः सिद्धिमात्रेण शक्तेरपि सिद्धिः सञ्जायते । अतएव योगः शक्तिः तदेव तन्यते श्रद्धोपकरणादिना प्रक्रियापरकेण योगशास्त्रेण (शिवशास्त्रेण) इतियोगतन्त्रमुच्यतेऽन्व-र्थनाम्ना ।

---

# २

## स्फोटवादविलासः

परमतनिराकरणपूर्वकं स्वसिद्धान्तप्रतिपादनेनालोच्यविषयः स्पष्टो भवति। तत्र नैयायिका अनया रीत्या शब्दानित्यत्वं साधयन्ति, यथा प्रथमक्षणे वर्णं उत्पद्यते, द्वितीयक्षणे तिष्ठति, तृतीयक्षणे पूर्व-वर्णो नश्यति द्वितीयो वर्णस्तिष्ठति, तत्रैव वर्णान्तरमुत्पद्यते द्वितीय-श्च नश्यति। अत्रैतादृशी शङ्का जायते यदेवंविधस्यानित्यस्य शब्दस्य श्रोत्रेण ग्रहणं कुतः? भेर्यादिदेशे शब्दो जायते, श्रोत्रं तु पुरुषदेशेऽस्ति, अस्याः शङ्‌काया अनया रीत्योत्तरं ददन्ते तार्किकाः—भेरीदेशे जातः शब्दो वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेंन वा सन्निहितं शब्दान्तरमारमते, स च शब्दः शब्दान्तरमिति क्रमेण श्रोत्रदेशे जातः, अन्त्यः शब्दः श्रोत्रेण गृह्यते, नाद्यः, न मध्यमः, भेरीशब्दो मयाश्रुत इति मतिस्तु भ्रान्तैव, तथाहि शब्दोऽनित्यः, सामान्यवत्त्वे सति, अस्मदादिबाह्येन्द्रियग्राह्यत्वाद् घटवत्। यथा घटो घटत्वजाति-मान् बाह्येन्द्रियेण चक्षुषा गृह्यते, अतोऽनित्यः, तथैव शब्दोऽपि शब्दत्वजातिमान् बाह्येन्द्रियेण श्रोत्रेण गृह्णते, अतः सोऽपि अनित्य इति नैयायिकाः।

न्यायमूलभूता वैशेषिकास्तु इत्थं शब्दस्यानित्यत्वं समर्थयन्ति। गुणस्य सतोऽपवर्गकर्मभिः साधर्म्यम्। सतो नित्यस्यशब्दस्य लिङ्‌गाभा-वात् शब्दनित्यत्वसाधकप्रमाणाभावादनित्यत्वम्। यत्तवसौ नोपलभ्यते, तदैतस्य सत्त्वेन किञ्चित् प्रमाणमस्ति, किञ्च चैत्रोवक्ति, मैत्रोवक्ति इति कुड्यादिना आवृतोऽपि चैत्रादिवचनेनानुमीयते। कुतस्तद्ववचनस्य भिन्नरूपत्वात, शब्दस्य नित्यत्वे तस्यैकत्वादयं चैत्रशब्दः; अयं मैत्रशब्द इत्याकारिका भिन्ना-भिन्ना अनुमितिर्न स्यात्। तस्मात् शब्दोऽनित्योऽ-नेकश्चेति वैशेषिकाः।

मीमांसकाः, वेदान्तिनः, सांख्याः, योगिनश्च शब्दानां नित्यत्वं सङ्गिरन्ते । गौरित्यत्र वर्णा एव शब्दास्तेषामेवार्थेन शक्तिरूपः सम्वन्धः। न च स्फोटात्मकः शब्दः कुतः ? वर्णत्रयातिरिक्तस्य बुद्धावप्रतिभासमानत्वेन तदभावात् । अर्थप्रतीतिरूपकार्येण स्फोटस्य सिद्धिर्भवितुं नार्हति, कुतः अन्योऽन्याश्रयत्वात् अन्योऽन्याश्रयाणि कार्याणि न प्रकल्पन्ते, न नौर्नावि बद्धा इतरत्राणायकल्पते।[1] तस्मात् स्फोटरूपकारणसिद्धावर्थप्रतीतिरूपकार्यसिद्धिः, अर्थप्रतीतिरूपकार्यसिद्धौ स्फोटावर्गातिरित्यन्योऽन्याश्रयः सुव्यक्तः। तस्मान्नास्ति स्फोटाख्यः कश्चन वर्णातिरिक्तोऽन्यपदार्थ इति मीमांसकाः ।

अत्र स्फोटवादिनो वैयाकरणाः शब्दानित्यत्ववादिनां नैयायिकानां मतेऽनन्तवर्णकल्पनं तद्द्वारा तद्ध्वंसप्रागभावादिकल्पनम्, पदादीनां बोधकत्वसिद्धये तत्प्रयोजकस्मृतिस्वीकारे च महद् गौरवम् । एवं मीमांसकानां मते वर्णानां विभुत्वस्वीकारे यद्यप्यनन्तवर्णतद्ध्वंसप्रागभावानामकल्पनया वर्णानित्यत्ववादिनामपेक्षया लाघवं वर्तते, तथापि नवस्वराणां त्रय स्त्रिंशद् व्यञ्जनानां विसर्गादीनाञ्च नित्यानां स्वीकरणे तद्व्यञ्जकानां ध्वनीनां क्रमेणाभिव्यक्तिमता प्रत्येकवर्णेनार्थस्याबोधात् सकलोच्चारणानन्तरं बोधदर्शनात् संहृत्यकारितोपपत्तये तत्प्रयोजकभावनाख्यसंस्कारस्मृतिकल्पने च गौरवात् सर्वानुभूतपदवाक्यादीनांमिथ्यात्वकल्पनस्यानुचितत्वात् तेषां मीमांसकानां मतमपि न स्मरणीयंप्रतिभाति, अतोऽत्वकत्वादिधर्मवन्तो वर्णरूपा ध्वनय एवार्थस्य प्रत्यायकं ध्वनिरूपरूषित कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति । तदेव शब्दब्रह्म स्फोट इत्युच्यते । स्फुटत्यर्थोऽनेन, अस्माद् वा स्फोटःकरणे अपादाने वा । "अकर्तरि च कारके संज्ञायाम्"[2] इति घञा सिद्धिः । स एव स्फोटस्तत्तदर्थनिरूपिततत्तच्छक्तिमान् कत्वादिविशिष्टवर्णातिरिक्तः पूर्वपूर्ववर्णानुभवसहचरितान्त्यवर्णानुभवव्यङ्ग्योऽर्थप्रत्यायकः शब्दस्तत्तदर्थनिष्ठविषयतानिरूपकशक्तिमत्त्वं स्फोटत्वम् । वृत्याश्रयः शब्दः । प्रत्येकं वर्णा भवितुं नार्हन्ति, वर्णानामुच्चरितप्रध्वंसित्वेन

---

१. महाभाष्यम्

२. अष्टाध्यायी-३।३।१९

यौगपद्यासम्भवात् । अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात्, क्षणात्मककालस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्यापि अप्रत्यक्षत्वात्, "इको यणचि' इत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थे अयं पूर्वः, अयं पर इति नष्टस्य प्रत्यक्षविषये इदंशब्देन पौर्वापर्यव्यवहारायोगाच्च ।

यत्तु तार्किका वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णेपूर्वपूर्ववर्णवत्वम् अव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वात् शाब्दबोधः । यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न प्रत्यक्षानुपपत्तिः । यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध इत्याहुः, तदपि रमणीयं न प्रतिभाति, कुतः ? आद्ये नष्टविद्यमानयोः पौर्वापर्यस्य वक्तुमशक्यत्वेनायं पूर्वः, अयं पर इत्यभिलापासम्भवेनाव्यवहितोत्तरत्वसम्बन्धायोगात् । नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च । द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयस्य ग्रहणानुपपत्तेः । अविद्यमान आश्रयत्वाङ्गीकारे नष्टो घटो जलं वा नित्याद्यपत्तेश्च, तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्यायापत्तेः ।

उत्पत्तिविनाशवद् वर्णसमुदयरूपपदस्य मनुष्यादिवद् भेदे एक इन्द्रशब्दःक्रतुशते प्रादुर्भूतो युगपत् सर्वयागेषु अङ्गं भवतीति भाष्यविरोधापत्तेश्च । किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः, तदुक्तं हरिणा—

अशब्दो यदि वाक्यार्थः पदार्थोऽपि तदा भवेत् ।[2]

एवञ्च महद्विप्रतिपत्तौ समायातायां को वा वृत्त्याश्रयः शब्द इति प्रश्ने स्फोटात्मकः शब्दः समुपस्थितो भवति । सम्प्रति स्फोट-

---

१. तदेव—१।१।७७
२. वाक्यपदीयम्—२।१६

स्वरूपं स्पष्टतया स्फोर्यते । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते, मूलाधारो मूलप्रकृत्यात्मिका कुण्डलिनी सा मध्यादिभिर्वेष्टिता सर्पंवत्तिष्ठति । मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोति । तदुक्तं संगीतरत्नाकरे[1]

> गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
> अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।।
> आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः ।
> एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ।। इत्यादि ।

नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद् द्वयं वाग्ब्रह्मयोगिनां समाधौ निर्विकल्पक-सविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्द्धानमाहत्य परावृत्य च तत्तस्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते । तदाह—

> परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
> हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।।
> वैखर्या हि कृतो नादः परश्रवणगोचरः ।
> मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ।।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । वैखरीनादो ध्वनिः, सकलजनश्रोत्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः करापिधाने जपादौ च सूक्ष्मतरवायुव्यङ्गयः शब्दब्रह्मरूपस्फोटव्यञ्ज-

---

१. सङ्गीतरत्नाकरः—२।१२०, १४५

कश्च । तादृशमध्यमानादव्यंग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च । तदाह हरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

यथा घटपदादिपदार्थातिरिक्तत्वेनाकाशो न कुत्रापि समुपलभ्यते, किन्तु तद्रूपरूषित एव । अतः स्फुट्यते वर्णादिभिरभिव्यज्यत इति, स्फुटत्यर्थोऽस्मादिति स्फोटनिर्वचनमपि संगच्छते । स च स्फोट एकोऽखण्डश्च, तथापि पदं वाक्यं जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जकोपरागवशात् लोहितः, पीतः, स्फटिक इति भानवद् वर्णादिव्यङ्गयो वर्णरूपः. पदरूपवाक्यरूपश्च । यथा मुखेमणि-कृपाण-दर्पणाव्यञ्जकोपाधिवशाद् दैर्ध्यवर्तुलत्वादिभानम् । उक्तञ्च हरिणा—

यथा रक्तगुणेतत्त्वं कषाये व्यपदिश्यते ।
संयोगि संनिकर्षात्तु वस्त्रादिष्वपि गृह्यते ॥[2]

अयं भावः—यथा रक्तगुणे वर्तमानं रक्तत्वं स्वसमवायिसमवायसम्बन्धेन कषाये द्रव्ये इदं रक्तमिति व्यवह्रियते, एवं व्यञ्जकवर्णपदादिरूपत्वं नानुपपन्नं स्फोटस्य । स्फोटस्याखण्डत्वेऽपरं दृष्टान्तमाह हरिः—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥[3]

यथा वर्षेष्वेकारौकारादिसन्ध्यक्षरेषु प्रतीयमानाअपि वस्तुतोऽवयवा न सन्ति, तथैव पदे वर्णाः, वाक्ये पदानि च न सन्ति । व्यञ्जकध्वनिगतकत्वादिकं स्फोटे भासते । बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् व्यञ्जकरूषितस्यैव स्फोटकादेर्भानाच्च ।

---

१. वाक्यपदीयम्—१।१
२. तदेव—३।१-७
३. वा०प०—१।७३

यथा चैकस्याकाशस्य घटाकाशः, मठाकाश इत्यौपाधिको भेदः, जीवानाञ्च परस्परं भेदः । एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात् ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः । औपाधिको भेद इत्यत्रोपाधिर्घटत्वेन कत्वेन भिन्न आकाशः, स्फोट एक एवेति तात्पर्यम् । पदवाक्ययोः सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव । पूर्वपूर्ववर्णस्तु तात्पर्यग्राहकः । यथा न्याय नये चित्रगुः इत्यादौ पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तिभिया गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकम्, तथैवात्रापि व्यवस्था ।

सम्प्रति प्रसंगवशात् स्फोटे कारणीभूतो ध्वनिर्निरूप्यते । ध्वनिस्तु द्विविधः प्राकृतो वैकृतश्च । प्रकृत्याऽर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्राकृतध्वनिः, तस्मात् प्राकृतात् जातो विकृतिविशिष्टश्चिरस्थायी निवर्त्तको वैकृतिकः । तत्र प्राकृतध्वनिं विना स्फोटः सामान्यरूपेण वा न भासत इति प्राकृतध्वनिव्यतिरेकेण स्फोटानुपलम्भात् प्राकृतध्वनिं स्फोटस्वरूपमिव मन्यन्ते । वैकृतध्वनिस्तु प्राकृतध्वनिप्रतीतं स्फोटमुत्तरकालं स एवायमित्युल्लेखेन चिरकालमुपलम्भयति, तदुक्तं हरिणा—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥[1]

अयं भावः—प्राकृतध्वनिजन्याभिव्यक्तेरूर्ध्वम्, अनन्तरं वैकृत ध्वनयो जायमाना द्रुतादिवृत्तिभेदे तावत्कालं स्फोटोपलम्भे कारणानि भवन्ति । वैवैकृतध्वनिभिः स्फोटरूपं न भिद्यते, वृत्तिभेदेऽपि स एवायमकार इति प्रत्ययात् ।

यथोदितः प्रकाशः पदादिभ्यो भिन्नं घटं प्रकाशयति, अनन्तरं तु प्रकाशेन पुनः पुनर्दृश्यमानोऽपि घटो न पूर्वप्रकाशितघटाद् भेदमवलम्बते, तथा प्राकृतध्वनिरेव भिन्नं स्फोटमभिव्यञ्जयति । अनन्तरं वैकृतध्वनिस्तु पूर्वाभिव्यक्तस्यैव तावत्कालमुपलम्भे हेतुर्भवति, न पूर्वा-

---

१. वाक्यपदीयम्—१।७७

भिव्यक्ताद् भेदे। अत एव द्रुतादिवृत्तिभेदेऽपि अकार एव पुनः पुनरुपलभ्यते। भगवान् भाष्यकारोऽपिभेर्याघातवत् इति वार्तिक-कव्याख्यानावसरे। तद्यथा-भेर्या हन्ता भेरीमाहत्य कश्चिद् विंशति पदानि गच्छति, कश्चित् त्रिंशत् कश्चित् चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः इत्युक्तवान्। एतेन ध्वनिभेद एव न स्फोटभेद इति प्रतीयते।

शब्दस्य नित्यत्वेऽपि तस्य सर्वदोपलब्धिः कथं न भवतीति शङ्काया उत्तरं भाष्यकारमुखेनैव श्रूयताम्। तत्र भाष्ये-"स्फोटः शब्दः, ध्वनिः शब्दगुणः"[1] इति स्फोटोपलब्धि प्रतिबन्धकस्तिमितवाय्वप-सारणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेन ध्वनिः स्फोटाख्यस्य शब्दस्य गुण उपकारक इति तदर्थः। एतदुक्तं भवति-स एवायमकार इति प्रत्यभिज्ञानात् स्फोटस्य नित्यत्वे सिद्धे सर्वदा तदुपलम्भाभावो व्यञ्जकाभावकृतः, न तु स्वभावकृतः, यथा मेघान्धकारे विद्युज्जनिता घटबुद्धिर्न चिरमनुवर्तते। तत्र व्यञ्जकाभाव एव कारणम्, न तु घटा-भावः। तदाहुः श्लोकवार्तिकतर्ककाराः —

सन्नेव साधनाभावाच्छब्दो नवोपलभ्यते।
क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते॥[2]
मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत्।

एवं वृत्तयोऽपि द्रुतमध्यादिभेदेन त्रिधा, यथा चोक्तम्—

अभ्यासार्थे द्रुता वृत्तिर्मध्या वैचिन्तने स्मृता।
शिष्याणामुपदेशार्थे वृत्तिरिष्टा विलम्बिता॥

सम्प्रति समासेनैव वाचकत्वरीतिः प्रदर्श्यते-केनचिद् घटमानय इति वैखरीनादः प्रयुक्तः, स केनचित् श्रोत्रेन्द्रियेण श्रावणप्रत्यक्षविष-यतां नीतः। स च नादः श्रोत्रेन्द्रियद्वारा बुद्धिहृद्गतः सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति, तस्मादर्थबोधः, स्फुटत्यर्थोऽस्या-

---

१. महाभाष्यम्—१।१।७०

२. श्लोकवार्त्तकम्—शब्दनित्यताधिकरम्—४०।४१

दिति स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमा-वैखरीभ्यां नाद उत्पद्यते, तत्र वैखरीनादो वह्नेः फूत्कारादिवन् मध्यमानादस्योत्साहकः। मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः, अनुभवसिद्धत्वात् परस्य विलम्बेन शाब्दबोधः अत एव श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्याकारको ग्रन्थः संगच्छते। स च प्रयोगेण वैखरीरूपेणाभिचलितः–स्वरूपरूषितः कृत इति तदर्थः। तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्ण-पद-वाक्यनिष्ठजातेर्वाचकत्वम् तदुक्तम्–"अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता" इति।

तस्मादष्टविधस्फोटात्मकः शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटः वाक्यजातिस्फोट एव वृत्त्याश्रयः, तत एव लोकेऽर्थबोधः

उक्तञ्च—

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः।
साधुशब्देऽन्तर्गता बोधका न तु तत्स्मृताः॥ इति।

---

# ३

# अद्वैततत्त्वालोकः

प्रयोजनमनुद्दिश्यमन्दोऽपि न प्रवर्तते इति वचनानुसारमेव प्रतिपाद्ये विषये किमपि प्रयोजनं भवेदिति विचार्य पूर्वं तदेवावधार्यते, लोकोऽयं जनानां व्यवहारेषु प्रवृत्तिनिवृत्त्युपकारकतया ईष्टप्रवृत्तौ-अनिष्टतो निवृत्तौ च कर्मक्षेत्रतयाऽधिष्ठित एव नात्र संशयः, सर्वे च जनाः सुचिरं स्थिरां सुखशान्तिङ्कामयमानाः कर्मसु प्रवर्तन्ते, कर्माणि क्रियारूपत्वेनाऽऽशुविनाशशालिन्यपि कर्मजन्यादृष्टाऽपरपर्याय-धर्मप्रयोजकानि सन्तीति निश्चयः। स्वर्गकामो ज्योतिष्टोमं यजेत् पुत्रकामः पुत्रेष्टिं यजेदित्यादि वचनैः स्वर्गादिरूपफलेषु कार्यत्वं तत्साधनीभूतयागादौ च कारणत्वमवधार्यते परञ्चयागादौ स्वर्गादि-फले च कार्यकारणभावो नैवोपपद्यते यतः कार्यनियतपूर्ववृत्तित्वं कार्याव्यवहितप्राक्क्षणवृत्तित्वम्वेति कारणलक्षणं स्वर्गादिरूपे फले प्रयोज्ये तत्प्रयोजके यागादौ न संघटते, यागादेः क्रियारूपत्वेन क्षणिक-त्वात् स्वर्गादिरूपकार्याव्यवहितप्राक्क्षणवृत्तित्वाभावात् कार्यनियत पूर्ववृत्तित्वाभावाद्वा। एवन्तर्हि कार्यकारणभावानवगमात् यागादौ तत्त-त्फलप्राप्तये प्रवृत्तिर्न स्यादिति न वाच्यं, यतः कार्येण कारणस्या-नुमानं भवति। अथवा कार्येण कारणकल्पनं भवति तद् यथा-स्वर्गादि-प्राप्तिरूपकार्येण यागादिजन्योऽदृष्ट धर्मरूपः कल्प्यते, तादृशो-ऽदृष्टापरपर्यायो धर्मं स्वर्गादिरूपकार्यस्याव्यवहितप्राक्क्षणवृत्तिः, कार्यनियतपूर्ववृत्तिर्वा इति वक्तुं शक्यः। स्वर्गादिफलप्राप्तकर्तरि समवायेन तदानीं विद्यमानत्वात् तेन तादृशधर्मेण सह स्वर्गादेः कार्यकारणभावः सिद्धः एव। परं यागादिभिरपि पापक्षयो पुण्यलाभः स्वर्गादिफलञ्चापि न आत्मसाक्षात्काररूपे परमपुरुषार्थे मोक्षे साक्षात् साधकत्वप्रयोजकम, पुण्यपापे उभेऽपि भोगाय जन्मादि-प्रयोजके एव। अतः पुण्यपापयोरुभयोः क्षयो मोक्षाय कल्प्यते। तयोः क्षयश्चात्मज्ञानेनैव शक्यः। कर्तव्यबुद्धयैव सत्कर्मोपासनपूर्वकमात्म-

तत्त्वावधारणान्निःश्रेयससाधकमिति लब्धजन्मनां परमं प्रयोजनम् । तथाहि—आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतिवचनेन आत्मसाक्षात्कार एव धर्मार्थकाममोक्षाख्यचतुर्विध-पुरुषार्थेषु परमपुरुषार्थतया प्रतिपादित इत्यत्र सर्वे दार्शनिकाः समानमतयः । परमत्रात्मदर्शनं तावन्नोपपद्यते यावदात्मश्रवणन्न स्यात् श्रोतव्यश्श्रुतिवाक्येभ्य इति वचनात् । किन्तु श्रुतावस्याँ पूर्वमा-त्मदर्शनमेव प्रतिपादितं वर्तते तर्हि श्रवणविधेःप्राथम्येन कथं प्रति-पादनं भवेदिति विचारणायां मीमांसाविषयत्वेन विचारः प्रस्तूयते । तथाहि अग्निहोत्रं जुहोति जवागुं पचतीति वाक्ये शब्दक्रमापेक्षया-ऽर्थक्रमस्य बलीयस्त्वेन पूर्वं जवागुं पचति ततोऽग्निहोत्रं जुहोति इति निर्धार्यते । तथैवात्रापि शब्दक्रमापेक्षयाऽर्थ क्रमो बलवान् भवतीति रीत्या पूर्वं श्रुतिपुराणादिभ्य आत्मश्रवणानन्तरमुपपत्तिभिर्मननं विधाय ततः परं निदिध्यासनं ततः परमेवात्मसाक्षात्कारः शक्य इति निश्चितसिद्धान्तः । अत्र हि जगति लब्धजन्मनां जनानामीष्टसाधन-त्वप्रकारकं ज्ञानं प्रथमं प्रवृत्तिप्रयोजकमिदं मदीष्टसाधनमिति वचनात् । ततः परञ्च कृतिसाध्यत्वप्रकारकं ज्ञानं तदभीष्टकर्मणि प्रयोजकं भवति इदं मत्कृतिसाध्यमिति वचनात् । तदीत्थमीष्टसाधन-त्वप्रकारके ज्ञाने कृतिसाध्यत्वप्रकारके ज्ञाने चावधारिते जाते इष्ट-पदार्थः कः; इति जिज्ञायां परित्राणाय साधूनां विनाशाय च दुष्कृतां धर्मसंस्थापनार्थाय सम्भवामि युगे युगे इति वचनानुसारं परमार्थतः इष्टप्राप्तिरनिष्टनिवृत्तिरेव च परित्राणपदार्थः निश्चितः । सतां परमात्मतत्त्वचिन्तनपरायणानां साधूनां परमात्मदर्शनमेवेष्टो नान्यः पदार्थः । स च परमात्मा कः ? आत्मा च कः ? आत्मपरमात्म-विषये तीर्थकराणां विभिन्ना विप्रतिपत्तिपूर्वकं विचारा दर्शनेषूप-लभ्यन्ते । एवं हि निखिलनिगमागमश्रुतिवचनैर्निःश्रेयससिद्धौ आत्मसाक्षात्कार एव परमोपायो दर्शितो भवति । तेनात्मपदार्थ-विवेचनप्रसंगः प्रवर्तते । आत्मज्ञानं हि निःश्रेयसहेतुरति सिद्धान्तात् । विषयेऽस्मिन् विभिन्ना विप्रतिपत्तयः सन्त्येव तद् यथा—तत्र चार्वाका देहाद्यात्मत्ववादिनः, अन्ये केचन इन्द्रियाण्येव मन्वते, केचन मन एवात्मा, प्राणपरे प्रतिपादयन्ति । केचनाध्यस्तज्ञातृभावमनहंकारं चैतन्यमात्रम् अनहंकारमहं बुद्धिशब्दाविषयम् । अविद्यमहंकारग्रन्थिस्थं

ज्ञातृत्वग्रन्धिस्थं ज्ञातृत्वमात्मन्यारोप्यते इत्येकः पक्षः, आनादिवासनया ज्ञानस्यैव ज्ञातृभावाद्यारोपः इति केचनाङ्गीकुर्वन्ति । देहेन्द्रियमनः प्राणधीभ्योऽन्यमचैतन्यस्वरूपमागन्तुकज्ञानसुखादि विशेषगुणवन्तमहं बुद्धिशब्दगोचरमात्मानं कणादगौतमाश्चस्वीकुर्वन्ति । अत्र मते हि आकाशादेरिवात्मस्वरूपस्य जडत्वं विवक्षितम् । सांख्यमतानुयायिनस्तु बोधैकस्वभावमेव (बोधश्चैतन्यम्) तदेव स्वोभावः—स्वरूपं यस्य तं ज्ञानस्वरूपमेव उपाधेः सन्निधानमिममेवात्मानं साङ्गिरन्ते, यथा स्वभावतो धवल एव स्फटिकादिर्जपाकुसुमाद्युपाधिसन्निधानेनारोपिततत्त्द्रक्तादिरूपेण प्रतिभासते । एवं नित्यस्वप्रकाशः स्वयं ज्योतिरात्मा अन्तःकरणसन्निधानतः आरोपितसुखदुःखादि तद्गुणवत्तया भासते, तेन हि तन्मते केवलं नित्यनिर्दुष्ट एवात्मेति निश्चितः । केचन मीमांसकैकदेशिनः विशिष्टाद्वैतसिद्धान्त्येकदेशिनो वा ज्ञानानन्दस्वभावमाहुः । विशिष्टाद्वैतवादिनैकदेशिमीमांसकैकदेशिनाञ्च मते ज्ञानानन्दौ स्वाभाविकधर्मो आत्मनः इति तदाशयः । विशिष्टाद्वैतवादिनां मते आश्रयानुकूल्यप्रतिलब्धानन्दसुखादिव्यपदेशबोधविशेष एवास्य स्वभाविक इत्युच्यते । आनन्दोऽपि नातिरिक्तः किन्त्वात्मनोऽनुकूलत्वेन प्राप्त आनन्दसुखादिनिर्देशो येन एवं भूतो ज्ञानविशेष एव सः । स एवात्मनः स्वभाव उच्यते । सांसारिकत्वदुःखित्वादि तु कर्मोपाधिकमिति भावः । इत्थं च तत्र तत्रात्मविषये वादिनां युक्तयः प्रदर्श्यन्ते । सौत्रान्तकीयोऽनुमानिकत्वपक्षोऽयं यथा-अहं विज्ञानं सालम्बनं विज्ञानत्वात् नीलपीतादि विज्ञानवत्, विलक्षण आत्माऽनुमानगोचर इति नैयायिकपक्षोऽपि कीर्तितः । आगमैकवेद्य आत्मेति श्रोत्रियाणां पक्षः । अहं बुद्धेर्देहालम्बनतयोपपत्तेः संघातपरार्थत्वाद्यनुमानस्याप्रयोजकत्वादिना च शास्त्रैकगम्य आत्मेति तेषामाशयः । मानसप्रत्यक्षवेद्यः तार्किकाणां भाट्टानाञ्च मतम् । ज्ञातृतया ज्ञानस्य त्रितयावभासकत्वाद्घटप्रत्यक्ष इव तज्ज्ञानं ज्ञाता चात्मा प्रकाशेते इति प्रभाकराः । इत्थं बहुविकल्पाः प्रादुर्भूता आत्मविषये । इदृशोऽप्यागमानुमानयोगजप्रत्यक्षैः स्वेतरसकलविलक्षणस्वाभाव्येन विशदविशदतरविशदत्तमतयाऽन्ततो यथावदपरोक्ष्य इति विशिष्टाद्वैतसिद्धान्तवादिनां मतम् ।

आत्मनः परिमाणविषयेऽपि विप्रतिपत्तयस्तद् यथा—परममहान् इति नैयायिका अणुपरिमाण इति विशिष्टाद्वैतसिद्धान्तिनः, माध्यमं परिमाण मन्यमानमैकान्त्यवादिनां शरीरपरिमाण इति मतम् । सत्त्वैकान्त्यवादिनां सांख्यानां मतमिदं यत् स्वतः परिमाणरहितोऽपि व्याप्य वस्तु परिमितिकृतपरिच्छेद इति परिमाणराहित्यं विभुत्वादात्मनाम् । परिमाणत्वे हि परिच्छिन्नत्वमविभुत्वं च प्रसज्येत् अत औपाधिकं परिमाणं तथाहि व्याप्यान्तः । करणपरिमाणौपाधिकपरिमाणोऽयम् । स्वधर्मभूतज्ञानद्वारिकैव व्याप्तिरिति विशिष्टाद्वैतसिद्धान्तपक्षः यथाऽन्तः करणाधीनं परिमाणं तथा ज्ञानाधीनं व्याप्यकत्वमिति सादृश्येनोपस्थितत्वात् विशिष्टाद्वैतसिद्धान्तपक्षस्य प्रथमनिर्देशो व्याप्तिरपि चैतन्यमात्रेण स्वरूपेणेति ।

आत्मा स्वरूपतः सर्वगतः नैयायिकादयः, क्षणिकत्वं सौगतानामभिमतम् । यावच्छरीरोष्मस्थायित्वं चार्वाकाणाम् अप्राकृतलयस्थायित्वं ब्रह्मदेवादीनाम् । आमोक्षस्थायित्वम् औड्लोम्युपज्ञानाम् । कूटस्थनित्यत्वं नैयायिकादीनाम् । विशिष्टाद्वैतसिद्धान्तिनामपि तथैव । कुटस्थत्वन्निर्विकाश्त्वं नित्यत्वं सर्वकालसत्ता । एकदेशिमायावादिनामेकजीववादः । प्रतिशरीरात्मभेदो नैयायिकादीनां विशिष्टाद्वैतवादिनाञ्च ।

इत्थं परमात्मविषयेऽपि विप्रतिपत्तयः सन्ति । यथा चार्वाकाः, बौद्धा, जैनाः (आर्हताः) कर्मजडाश्च समस्तवस्तुसाक्षात्कारिणं सर्वशक्तिमन्तमीश्वरं नाङ्गीकुर्वन्तिः । ईश्वरमङ्गीकृतमद्वैतवादिनां केचित्कूटस्थमविकारिनित्यं विज्ञानमात्रं सत्यं यत्रेशेशितव्यादि भेदप्रपञ्च मानमेयतदवच्छिन्नमितित्वादिरपि नैवास्ति काल्पनिकं कल्पितेश्वरभावं मन्वते । एवं भूतेऽधिष्ठानेऽविद्यैव नानाशक्तिमत्या विपदादिनानाचित्प्रभासो रज्वामिव सर्पाद्यवभासः । अविद्याभूतसमष्टिव्यष्टितदवच्छिन्नज्ञानैश्वर्यादिमहिमभेदप्रतिभासश्च ।

तत्र समष्ट्यवच्छिन्नज्ञानैश्वर्यादिमत्तया भासमानं चैतन्यमीश्वरः । व्यष्टिरूपदेवादि देहाद्यवच्छिन्नज्ञानादिमत्तया नानात्वेन च भासमानत्वादेव जीवानामित्येवेतेषामाशयः । अविद्याया एव जीवेश्वरभावकल्पकोपाधित्वमेतन्मते । मायाऽविद्योपाधिभेदवादिनां मते निर्भेदचैतन्य-

मात्रमेवाविद्योपहितं नाना जीवभावेन मायोपहितं चेश्वरभावेनाभिव्यज्यते। तत्राऽविद्याकृतत्वाज्जीवभेदः कामक्रोधलोभाद्याविद्यगणप्रधानोऽविद्यापरवशश्च।

ईश्वरस्तु स्ववशवर्तिविविधपरिणामशीलमायाशक्त्याऽधिगतसार्वज्ञसर्वेश्वर्यादिमहिमा इत्येषामाशयः। योगतन्त्रनिष्ठानां मते औपाधिकमेवेश्वरत्वम्। स्वरतन्त्रप्रकृतिपरिणामविशेषस्य यो विशेषो नित्योद्रिक्तसत्त्वकत्वरूपप्रकृष्टसत्त्वप्रधानांशोपादानत्वप्रयुक्तः तेन सम्पादिता सर्वेश्वर्यव्यवस्था यस्य तमीश्वरमाद्रियन्ते योगतन्त्रनिष्ठाः।

सदा शुद्धसत्त्वात्मकान्तः करणादीश्वरोपाधिः तदुपहितचैतन्यमात्र वपुः पुरुष विशेषः ईश्वरः उपाधिविशेषाधीनमेव तस्यैश्वर्यमितियावदवप्रकाशस्तुसिन्धुरिव फेनबुदबुद्तरंगभेदेन ब्रह्मैव जडजीवेश्वररूपेण भवतीति परिणामवादं मनुते तमेव भावन्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति। न दृष्टेर्द्रष्टारं पश्येः इत्यादि प्रमाणवचनैः एकः कूटस्थः निर्धर्मकः साक्षी आत्मा सिद्धयति। निरूपस्य निरवयस्यात्मनः कथं प्रतिबिम्बः? इति न शक्यं विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य निरूपस्य निरवयस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्। शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्। तयोः सम्प्रतिपन्नप्रतिबिम्बवैलक्षणा निरूपणात्। आत्मन इन्द्रियग्राह्यात्वाभावात् तस्य न प्रतिबिम्बमित्यपि न शक्यम्, यथाऽऽकाशस्य यद् ज्ञानज्जायते तत्र घटादिप्रत्यक्षवत् प्रमातृप्रत्यक्षम् आकाशे रूपाद्यभावेन चक्षुरादीन्द्रियसन्निकर्षाभावात् तथाप्याकाशस्य जलादौ प्रतिबिम्बोपलब्धिः भवत्येव।

तथैवातिन्द्रियग्राह्यस्याकाशस्येवात्मनोऽपि प्रतिबिम्बत्वस्वीकारे न बाधकं किमपि।

यद्युच्यते आकाशस्येन्द्रियग्राह्यत्वाभावेन नैव जलादौ प्रतिबिम्बसम्भवः, जलान्तराकाशोपलब्धिस्तु जलावच्छिन्नाकाशस्येव न प्रतिविम्बभूताकाशस्येति तर्हि जलावच्छिन्नमाकाशस्य गाम्भीर्याभावात् जानुमात्रेऽप्युदके गाम्भीर्यप्रतीतिर्न स्यात्। तथा चाकाशं न साक्षिमात्रप्रत्यक्षं, किन्तु चक्षुरिन्द्रियग्राह्यमितीन्द्रियग्राह्यस्यैव प्रतिबिम्ब-

इति नियमस्य न व्यभिचारः इत्यपि न वक्तव्यम् आकाशस्य स्वत्त्वाभावेन तस्य तत्प्रतिबिम्बस्य च चाक्षुषप्रत्यक्षविषयत्वासम्भवात् । आकाशे चाक्षुषत्वप्रत्यक्षस्तु भ्रम एव । यदि चात्र शंक्यते यत् कथन्तर्हि बिम्बस्य प्रतिबिम्बस्य चाकाशस्य च प्रत्यक्षे चक्षुरपेक्ष्यते इति चेत् तर्हि आकाशप्रदेशे यः पृथिव्यादीनामभावः तादृशाभावग्रहणार्थमेव चक्षुषो व्यापारसंचारोऽपेक्ष्यते, यतः पृथिव्याद्यभावः आकाशश्चानयोर्द्वयोः समनीयतत्त्वात् । पृथिव्याद्यभावग्रहणपूर्वकमेवाकाशग्रहणम् । अतएव प्रतिबिम्बाकाशग्रहणसमये प्रतिबिम्बोपाधिभूतस्यजलादेरधिष्ठानस्य ग्रहणार्थं चक्षुरपेक्ष्यते ।

एवं रीत्याऽऽत्मनो रूपत्वाभावेऽपि इन्द्रियग्राह्यत्वाभावेऽपि च तत्प्रतिबिम्बं सम्भवति इति प्रतिबिम्बरूपेण मनसि तस्य सम्बन्धः, योग्यता, साधिता तथापि मनस्यात्मप्रतिबिम्बमस्त्येवेत्यत्र निश्चायकं किमपि प्रमाणमिति विचारणायां रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय इति बृ० २।५।१९ इत्यत्र दर्शितम् । तेनैक एव हि आत्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवत् मायाभासेन जीवेशौ करोत्यादि श्रुत्यादिकस्यैव प्रामाण्यत्वेनाभ्युपगमात् । तथाहि रूप्यतेऽनेन तद्रूपं मनः, व्यवहारार्थकाद् रूपधातोः करणे घञ् प्रत्ययः । आत्मा हि मनसैवाहमिति व्यवह्रियते । प्रतिरूपशब्दः प्रतिबिम्बार्थकः परमात्मा हि प्रतिमनः प्रतिबिम्बरूपेणाविशदिति तत्तात्पर्यम् । मायापरमात्मशक्तिरविद्यायाश्चाश्रयमेकमपि परमात्मानं स्वस्मिन् स्वकार्ये च प्रतिबिम्बवशाज्जीवेशभेदेन विभक्तं करोति स्वभावत एक रूपोऽपि परमात्मा जलप्रतिबिम्बितचन्द्रवत् मनसि मनसि प्रविश्य बहुरूपो दृश्यते इति स्मृत्यर्थः । एवं परमात्मनः प्रतिबिम्बे श्रुतिस्मृतिरूपं शब्दप्रमाणं प्रदर्शितम् ।

एवमुच्यते—

आकाशमेकं हि यथा घटादिषु पृथग् भवेत ।
तथात्मैको ह्यनेकश्च जलधारेष्विवांशुमान् ।।

इति याज्ञवल्क्यवचनम् ।

अचेतनविलक्षणन्तु तस्य श्रुतिसिद्धं प्रत्यक्षसिद्धञ्च तस्मात् सिद्धमन्तः करणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम् ।

एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा अविरोधित्वे सौगतमतापत्तिरिति चेत् इति न शंक्यम्, यतोऽहं मनुष्यः कर्ता-भोक्ता इत्यादि प्रतीतिस्तावत् सर्वत्र सर्वजनप्रसिद्धा न दूषणाय अपि तु भूषणाय। आत्मनि भौतिकशरीरविशेषरूपमनुष्यत्वस्य कर्तृत्वस्य, भोक्तृत्वस्य च श्रुतिविरुद्धत्वात् युक्तिविरुद्धत्वाच्च हेतुबाधः सिद्ध एव। श्रुतयश्च तद्विषये योऽयं विज्ञानमयः प्राणेषु हृद्यन्तज्योतिः पुरुषः-बृ०४।३।८ अयमात्मा ब्रह्म, य आत्मापहृतपाप्मा—छा० ८।७१ इति प्रमाणत्वेनाद्वैतवादिनः प्रदर्शयन्ति। जीवात्मा ब्रह्मैव न तु तदन्यः. ब्रह्म च सत्यं, सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दमित्यादि श्रुतौ च वर्णितमेव। सत्यन्तु न मिथ्या, ज्ञानन्तु न जडम् अनन्तं तु न विनाशी, आनन्दरूपन्तु न कदाचिदपि दुःखी, इत्येवमर्थः स्फुट एव अयं जीवोऽयमीश्वर इत्येकस्मिन्नेवात्मनि भेदव्यवस्थोक्ताध्यासमूलिकैवेति तथा च कदाचिदेव केनचिदेव किञ्चिदेव प्रमीयते न तु सर्वदा सर्वैः सर्वं ज्ञायते इति मानमेयादिप्रतिकर्म व्यवस्थाऽध्यासमूलिकैव। तेनैकस्यात्मनोजीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते। तथाहि अज्ञानोपहित आत्मा अज्ञानतादात्म्यान्नस्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमीश्वरः इति बोध्योः भवति। बुद्ध्युपहितश्च तत्तादात्म्यापन्न स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमाता इति च कथ्यते।

तत्त्वमसीति वाक्ये तच्छब्देन जगत्कारणीभूतो ब्रह्मेशादिपदबोध्योऽज्ञानोपहितचैतन्याभासो हि (चिदाभासो वा) परामृश्यते। त्वं शब्देन च बुद्धिगतश्चिदाभासो जीवपदवाच्यः परामृश्यते। इत्थं तयोश्चैक्योपपादनाय तत्त्वं पदाभ्यां लक्षणया चिदात्मोच्यते तथाच लक्ष्यस्य वाच्यार्थानन्तर्गतत्वाद् वाच्यार्थस्य च सर्वथा त्यागात् जहल्लक्षणैव गंगाया घोष इत्यादिवत् इत्थं समासतोऽज्ञानोपहितबिम्बचैतन्यमीश्वरः अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवः इति विवरणकारादीनां सम्मतम्। अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः

बुद्धि प्रतिबिम्बितं चैतन्यञ्जीवः अज्ञानानुपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककारा इति मधुसूदनसरस्वतिपादैः प्रत्यपादि ।

जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिमात्रप्रभवा अपि शास्त्रेणानुद्यन्ते तत्त्वज्ञानोपयोगित्वात् । फलवत् सन्निधावफलमिति न्यायात् । भ्रमसिद्धस्यापि श्रुत्यानुवादसम्भवात् । एतेन द्वैतज्ञानस्य बाधो निरस्तः। वस्तुतस्तु धर्माधर्मयोः प्रत्यक्षयोग्यतायाः स्वरूपत एव भासः यथा जीवस्यस्वं प्रति एव स्वरूपमात्रमावृतं न तथा ब्रह्मणः, तथा ब्रह्मणः स्वं प्रति स्वरूपस्यानावृतत्वेऽपि परं जीवं प्रत्यावृतत्वमिति व्यपदेशाज्जीवस्य तज्ज्ञानावरणभंगाधीनमेव भवति । न च ब्रह्मणः कथमावरणम् ? निरवद्य स्वप्रकाशेन सर्वज्ञत्वात् इति शंक्यम् स्वसम्बद्धसर्वभासकतया सर्वज्ञान्तःकरणावच्छिन्नजीवाज्ञानविषयतया आवृतमिति व्यपदेशात् । तस्माद् ब्रह्मजगदुपादानमिति पक्षे चिदुपरागार्थाऽऽवरणभंगाधी च वृत्तिरङ्गीकर्तव्या भवति । जीवोपदानपक्षे तु आवरणभंगार्थैव । इत्थमद्वैतमतेन जीवब्रह्मणोः स्वरूपविमर्शः प्रतिष्ठितः ।

वाचस्पतिमिश्राः अज्ञानविषयीभूतञ्चेतन्यमीश्वरः अज्ञानाश्रयीभूतञ्चजीव इति मन्वते, पक्षेऽस्मिन् भावरूपाज्ञानसम्बद्धात् स्वेनैव स्वस्य रूपन्नैव ज्ञायते तत्र यन्नज्ञायते तेन रूपेण तस्येश्वरत्वम् । यश्च न जानाति तेन रूपेण तस्यैव जीवत्वम् तेनात्राऽज्ञाननानात्वात् जीवनानात्वम् प्रतिजीवं प्रपञ्चभेदः जीवस्यैवाज्ञानोपहिततया जगदुपादानत्व । ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्ववेन कारणत्वोपचारात् अयमेवावच्छेदवादः । अज्ञानस्य चानादित्वात् एतादृश्यावस्थितिरनादिरेव अज्ञानञ्चनानाविधं तदपेक्षयाऽन्या माया तु नास्त्येव । अज्ञानान्येवेश्वरोपाधिभूतानि, तानि स्वविषयतया ईश्वरस्वरूपावच्छेदकानि, आश्रयतया च जीवस्वरुपावच्छेदकानि । तथा वचनैर्व्यवहारसिद्धयर्थं कूटस्थ ब्रह्म जीवेशभेदेन चिच्चातुर्विध्यं प्रकल्पितं यञ्चापरैर्व्यवहारसिद्धयर्थं जीवेशशुद्धभेदेन चित्त्रैविध्यं प्रकल्पितं तदस्मिन्मते न प्रकल्प्यते किन्तु जीवेशभेदे द्वैविध्यमेव चितः । ईशश्शुद्धश्चैक एव निरूपाधिकः, जगदुपादानार्थं हि शुद्ध चिदपेक्षयाऽपमयो मायोपाधिक ईशः कल्प्यते । तच्चजगदुपादानमस्मिन्मते जीवकृतमत्र तथा शुद्धा चिदेवेशपदे-

नोच्यते। सा च नानाविधा चित् जीवास्तदविद्याश्च नानाविधायश्च-नानाविद्यास्तत्कार्यभूताः नानाविधाः प्रपञ्चाश्चेति सर्वेषामधिष्ठा-नभूता इत्येतावदेयेशस्य जगत्कारणत्वम्।

न च ब्रह्मज्ञानेनाप्यविद्यायाः अनिवृत्तेरनिर्मोक्षप्रसङ्गे दुरुद्ध-रस्स्यादिति वाच्यम्, तत्त्वमस्यादि वाक्यार्थज्ञानादविद्यानिवृत्त्यभ्युप-गमात्। स्वविषयकप्रमात्वेनैवाविद्यानिवर्तकत्वात्। महावाक्यार्थ-ज्ञानस्यैवाबाधितविषयतया प्रमात्वात्। मतेऽस्मिन् जीवेशयोर्जड-चेतनयोश्च वास्तवभेदाङ्गीकारः सर्वथा नोपयुक्तः श्रुतिविरोधा-देव। श्रुतयस्तु-तत्त्वमसि, अहं ब्रह्मास्मि, तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते इदं सर्वं यदयमात्मा इत्याद्या अद्वैतं प्रतिपादयन्ति। नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति, इह नानेव पश्यति इत्याद्याश्ज द्वैतं निषेधन्ति। औपाधिकभेदाङ्गीकारेण सर्वव्यव-हारोपपत्तौ द्वैताङ्गीकारस्य गौरवपराहतत्वात् युक्तिविरोधः इत्थं पाशुपतं, पाञ्चरात्रिकं जैनञ्च मतं श्रुतियुक्तिबाधितत्वात् अयुक्तमे-वैति सम्यगद्वैतवादिभिरिह सप्रञ्चं प्रतिपादितः सुप्रतिष्ठितः सिद्धान्तो भ्राजतेतराम् विस्तारभयादेव विरामः श्रेयस्करः।

---

# ४

# शब्दब्रह्मैव जगन्निदानम्

प्रतिज्ञातस्य जगन्निदानस्य शब्दब्रह्मणः "उपादेयताप्रकाशनतः प्रथमन्तावत्तस्यैव स्वरूपनिर्वचनमावश्यकमिति समवधार्य्यं शब्द-शास्त्रमधिगम्य तत्स्वरूपप्रपञ्चप्रकाशनं यद्यप्यधिकम्मूल्यमर्हति तदुप-योगिताञ्च भजतितराम् तथापि प्रस्तुतप्रथित तत्त्वस्य पूर्वं परा-भिमतमनुरुद्ध्य पूर्वपक्षरूपेण विवेचनमतीवावश्यकम्प्रतिभातीति विचार्यं तदेव प्रस्तूयते तथाहि प्रथमं मतभेदेन शब्दस्य नित्यत्वा-नित्यत्वे प्रदर्श्येते। शब्दोऽनित्य इति नैयायिकवैशेषिकाः, आदिम-त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च, इति गौतमसूत्रम्। शब्दः इन्द्रि-यग्राह्यत्वादनित्यः रूपादिवत्। न्यायमूलभूताः वैशेषिकाः इत्थं शब्दस्या-नित्यत्वं समर्थयन्ति यत् कर्माण्याशु विनश्यति, शब्दोऽप्याशु विनश्यति, सोऽयं गुणस्य सतोऽपवर्गः, आशु विनाशः, स खलु कर्मभिः साधर्म्यम्। अनित्यस्य कर्मणः साधर्म्याच्छब्दोऽपि अनित्य इतिभावः, तथा च सूत्रम्—गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यमिति, यत्तुनित्यः शब्द अनित्यत्वे द्वयोर्गुरुशिष्ययोरध्यापनेऽध्ययने च या प्रवृत्तिस्तस्य अभाव-प्रसंगात्। आचार्यस्थः शब्दो यदन्तेवासिनमापद्यते तदध्यापनम्। यदि नित्यः शब्दस्तदा विद्यमानस्य शिष्यस्य देशान्तरप्राप्तिरुत्पद्यतेः, नित्ययत्वेनास्य देशान्तरप्राप्तिर्घटते। किञ्चाध्यापनन्नाम् शिष्येभ्यः शब्दस्य दानम्। स यदा स्थिरो भवेत् तदा तस्य दानं सम्भवेत्। किञ्च दीयमानं वस्तु दातृप्रतिगृहीत्रोरन्तराले तिष्ठति गौरिवायं शब्दोऽपि तादृशः, किञ्चाभ्यासादपि शब्दस्य नित्यता यथा पञ्च-कृत्वो रूपं पश्यति स्थिरस्य रूपस्याभ्यासो दृष्टिः, तथा दशकृत्वो-ऽधीतोऽनुवाकः इत्यभ्यासः शब्दस्य स्थैर्ये प्रमाणम्। तन्न समीचीनम्-अनित्यत्वे नानात्वेऽपि अध्ययनस्य, अभ्यसनस्य प्रत्यभिज्ञानस्य च दृष्टत्वात् तथाहि नृत्यमधीतेः नृत्यमभ्यसति, यदेव नृत्यमेकेन चारणेन कृतं तदेवायं करोति इत्यादौ क्रिया रूपे नृत्ये शब्दनित्य-

त्ववादिनापि नित्यतुल्यव्यवहारस्य दृष्टत्वात् । अध्ययनादिना शब्द-नित्यत्वस्य साधयितुमशक्यत्वात् अन्ये च मीमांसकप्रभृतयः शब्द-नित्यत्ववादिनः । किन्तु तेषां मते गौः इत्यत्र वर्णाः एव शब्दाः तेषा-मेवार्थेन शक्तिरूपः सम्बन्धः न च स्फोटात्मकः शब्दः, वर्णत्रयाति-रिक्तस्य बुद्धावप्रतिभासमानत्वेन तदभावात् । न वार्थप्रतीतिरूप-कार्येण तदवगतिः अन्योन्याश्रयात् । स्फोटरूपकारणसिद्धावर्थ-प्रतीतिरूपकार्यसिद्धिः, अर्थप्रतीतिरूपकार्यसिद्धौ च स्फोटावगतिरित्य-न्योन्याश्रयः । परमेतत्सर्वं शाब्दिकेभ्यो न रोचते यतः स्फोटवा-दिनस्तेषां मते शब्दानित्यत्ववादिनामनन्तवर्णानित्यंताद्वाराऽनन्त्य तद्ध्वंसप्रागभावकल्पनम् । पदादीनां बोधकत्वसिद्धये तत्प्रयोजक-संस्कारस्मृति स्वीकारे च महद्गौरवम् । एवं मीमांसकादीनां मते वर्णानां विभूत्वनित्यत्वस्वीकारे यद्यपि वर्णानित्यत्ववादिनामपेक्षया लाघवं वर्तते तथापि नवस्वरा त्रयस्त्रिशद् व्यंजनानां विसर्गादीनाञ्च नित्यानां-स्वीकारेण प्रक्रियाविचारे गौरवमस्त्येव, अथ च सर्वानु-भूतपदवाक्यादीनां मिथ्यात्वकल्पनस्यानुचितत्वाच्च तन्मतमपि न रमणीयम् । अतोऽत्व कत्वादि धर्मवन्तो वर्णरूपाध्वनय एवार्थप्रत्या-यकं स्व (ध्वनि) रूपरुषितंकालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति तदेव शब्दब्रह्मस्फोट इत्युच्यते, स्फुटत्यर्थोनेनास्माद् वेति स्फोटः करणेऽपादाने वा अकर्तरि च कारके संज्ञायामिति घजि साधुः ।

अयञ्च स्फोटः अन्तरप्रणवरूपत्वात् ब्रह्मरूप एव ओंकार एव सर्वा वाक्, सैषास्पर्शोष्मिभिर्व्यंज्यमाना वह्वी नानारूपा भवति इति-श्रुतेः ।

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः
हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ।

इत्यादि व्यासस्मृतेश्च । स च प्रणवरूपः स्फोटः एकः सन्नपि नानावर्णपदवाक्यरूपव्यनिरूपोपाधिभेदभिन्नोऽन्तः करणाद्युपाधिभेद-भिन्ननानात्मकजीस्वरूपब्रह्मवत् पदवाक्यादिनानात्मको मध्यमाना-दांशरूपरुषितो वैखरीरूपेण परश्रवणागोचरः सन्नंतःकरणग्राह्यः सर्वार्थवाचको भवति । स्फोट्यते व्यज्यते वर्णैर्यः स इति व्युत्पत्या-

र्थंप्रकाशकत्वमेव स्फोटत्वम् । प्रकाशश्च ज्ञानम् । शाब्दिकानामाशयस्तु-परा, पश्यन्ती, मध्यमा, वैखरी, इति चतुर्विधा वागस्ति । तासु मूलाधारस्थपवनसंस्कारीकृता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या विन्दुरूपिणी परा वागुच्यते ततो नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनो गोचरीभूता पश्यन्ती वागुच्यते, एतद् द्वयं शब्दब्रह्मव्यञ्जकवाक् योगिनां समाधौ निर्विकल्पक सविकल्पकज्ञानविषय इत्युच्यते । समाधिलक्षणन्तु—

समाधिस्तु समाधानं जीवात्मपरमात्मनोः
ब्रह्मण्येव स्थितिर्या स समाधिः प्रत्यगात्मनः ।

सूतसंहितायाञ्च—

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन,
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः । इति—

इत्थं हृदयपर्यन्तमागच्छता तेन संस्कृतपवनेनाभिव्यज्यमाना तत्तदर्थवाचक स्फोटरूप हिण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन जपादौ बुद्धिनिर्ग्राह्या सूक्ष्मा माध्यमा वागुच्यते । जपः स्यादक्षरा वृत्तिर्मानसो पांसुवाचकैः इति, तत आस्यार्यन्तमागच्छता संस्कृतपवनेनैव कण्ठदेशं प्रापिता मूर्धानमाहत्य, परावृत्त्य च तत्तत् स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या वैखरी वागुच्यते । अत एव—

परावाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता,
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।
वैखर्या हि कृतो नादः परश्रवणगोचरः,
मध्यमया कृतोनादः स्फोटव्यञ्जक उच्यते ॥

इत्यादिना स्फोटात्मकशब्दस्य ब्रह्मरूपत्वं नित्यत्वञ्च दर्शितम्भवति तत्र वैखरी नादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः मध्यमानादस्त्वर्थवाचक स्फोटात्मकशब्द व्यञ्जकः सार्थः । तथा च यथा मुखे मणिकृपाणदर्पणादिव्यञ्जकोपाधिवशाद् दैर्घ्यवर्तुल-

त्वादिकमवभासते, तथा घटादिपदध्वनिरूपव्यञ्जकव्यंग्यतया स्फोटेऽपि घटत्वपटत्वादिकमवभासते, व्यञ्जकवर्णपदवाक्याद्यात्मध्वनीनामानन्त्यात् स्फोटस्याप्यानन्त्यम्भवति। यथा च जपापाकुसुमादि लौहित्यपीतत्वादि व्यञ्जको परागवशादेक एव स्वच्छः स्फटिकः, लोहितः स्फटिकः, पीतः स्फटिकः, इत्यादि नानानुभवविषयतामधिगच्छति। नानात्मकश्च भवति, तथा प्रकृतेऽपि ध्वनिरूपरुषितत्वेन ज्ञानात्मकता जायते। एवञ्चौपाधिकधर्मेण न वस्त्वानन्त्यज्जायते इति विभाव्य आकाशादिवदेक एव वास्तव स्फोटः, इति सिद्धान्तः औपाधिकभेदे त्वस्याष्टविधत्वं प्रतिपाद्यते। यतः शास्त्रप्रक्रियालोकानुभवसिद्धव्यवहारादिसिद्धये तावतां स्फोटानामावश्यकता। ओंकार एव सर्वावाक् इति श्रुत्या शब्द स्फोटस्यैवोंकाररूपत्वसम्भवात् प्रणवश्च परापरभेद द्विविधः। तत्र परो ब्रह्मात्मकः, अपरश्च शब्दात्मकः, उक्तञ्च सूतसंहितायाम्।

परः परतरं ब्रह्मज्ञानानन्दादि लक्षणम्।
प्रकर्षेण नवं यस्मात्परं ब्रह्मस्वभावतः॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः॥इति

तदर्थस्तु सत्यज्ञानानन्दादिरूपं ब्रह्म यतः प्रकर्षेण नवं निःशेषविकारराहित्येन कूटस्थं तथा प्रकर्षेण नवस्तत्प्राप्तिरूपो यस्मादिति व्युत्पत्त्या शब्दोऽपि प्रणतः इति अतश्च द्वादशस्कन्धे श्रीमद्भागवते कृष्णद्वैपायनो वेदव्यासोऽप्याह यत् समाहितात्मन इत्यादिवचनमुक्तमेव, तत्रैवेत्थमपि—

शृणोति व इमं स्फोटं सुप्ते श्रोत्रे व शून्यदृक्।
येन वाग्, व्यज्यते यस्य व्यक्तिराकाश आत्मनः।

इत्यनेन प्रणवरूप स्पोटश्रावकत्वेन परमात्मा लक्षितः। जीवस्तु न तथा तस्य करणाधीनज्ञानवत्वात्, किञ्च तत्रैव।

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः।
स सर्वमन्त्रोपनिषद् वेदबीजं सनातनम्।

इत्यनेन समस्तदेवतावाचकत्वं प्रणवस्योक्तम्। तत्रैव च श्रीमद्-भागवते—

तस्य ह्यासंस्त्रयोवर्णा अकाराद्याभृगूद्वह।
धार्यन्ते यैस्त्रयो भावा गुणानामर्थवृत्तयः।

इत्यादिना प्रणवस्फोटस्यैव सर्वप्रपञ्चकारणत्वं सुतरां प्रतिपादितम्। अथ च तत्रैव शाब्दिकसृष्टिविषयेऽपि व्यासेनैवोक्तम्—

ततोऽक्षरसमाम्नायमसृजद् भगवानजः
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम्।
तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः।
सव्याहृतिकान् सोङ्गान् चातुर्होत्रविवक्षया॥
अतश्चास्य नित्यत्वमुपयोगित्वञ्च सुप्रथितम्।

इत्थं स्फोटात्मकशब्दब्रह्मख्यातिरतीवानुकूला प्रपद्यते। इत्थञ्चाखण्डवाक्य स्फोटस्यैव वाचकत्वं सिद्धं तदन्ये स्फोटाश्च शास्त्रप्रक्रिया निर्वाहका इति शाब्दिकसिद्धान्ते सम्यगुपपादिताः, लोकानामपि सकलोऽपि व्यवहारः प्रवृत्तिनिवृत्तिरूपः वाक्याधीन एव। उपर्युक्त-दिशा शब्दब्रह्मणः सत्स्वरूपं समासतोऽभिधाय इदानीं तस्य जगन्निदा-नत्वख्यात्यै तदधीनजगतः प्रक्रिया प्रकर्षेण प्रपञ्च्यते, तथाहि, प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीनसर्वजग-त्कामायाचेतने ईश्वरे लीयते, लयश्चायमपुनः प्रादुर्भावफलको नात्य-न्तिको नाशः उत्तरसर्गानुपपत्तेः। अत एव प्रलयपदार्थोऽत्रत्य खण्ड-प्रलय एव ग्राह्यः। नापि सर्वथाऽभानम्। प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति कार्यप्रवृत्त्यभावात्। तथा च कर्म विक्षेपसंस्कारसहितलक्षणा विद्या-विशेषतासाम्येन स्वापसादृश्यं लयस्य। तत्र हि अन्तःकरणादयोऽवि-द्यायां सूक्ष्मरूपेण शक्तिरूपेण वासनाभिः सहावतिष्ठन्ते। एवञ्च सूक्ष्मरूपेण स्थिताशक्तिः स्थूलरूपेण विवर्तते। शक्तिमिश्रितो ब्रह्मणः पुनः शक्तेः कथमुत्पाद इत्यपास्तम्—

उच्यते ऽपि—

प्रकृतौ विलीनेषु भेदेष्वेकत्वदर्शिनाम्
द्रव्यसत्वं प्रपद्यन्ते स्वाश्रया एव जातयः।

मूलप्रकृत्या ब्रह्मणा वा ये जगत एकत्वमभेदेन पश्यन्ति तेषां मते निरन्वय विध्वंसाभावान्महासामान्यरूये तस्मिन्मूलकारणे लयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं शक्तियोगः। द्रव्यात्मना तदानीमपि जातीनां सत्त्वं द्रव्यान्तरप्रमोषे यद्गगनत्वावभासः, एवं शुद्धायां चिति मायोपाधिसान्निध्या-दिश्वरत्वाध्यासः।

सोऽयमात्मा आवरणविक्षेपशक्त्या अविद्याया आश्रयः।
तत्रावरणांशेन शुद्धरूपतिरोधानं विक्षेपांशेन ईशादि
स्थूलदेहान्तानां प्रतिभासः।

तयोर्निवृत्तौ शुद्धचित्स्वरूपेणावतिष्ठते। ततोऽपरिपक्व प्राणीकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धि-पूर्विकासृष्टिः ततो मायापुरुषावाविर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते ततो बिन्दुरूपमव्यक्तं त्रिगुणज्जायते। इदमेव शक्तितत्त्वम् (अविद्याहि परमेश्वरस्य स्वभावो लीलेति-प्रोच्यते) तस्य बिंदोरचिदंशो बीजम् चिदचिन्मिश्रोंऽशो नादः चिदंशो बिन्दुरिति अचिच्छब्देन शब्दार्थोभय संस्काररूपाऽविद्योच्यते। अस्मादेवबिन्दो शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरादिशब्दैर्व्यवह्रियते। तथाचोक्तम्—

विन्दोस्तस्माद् भिद्यमानादरवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते।
सा तत्त्वसंज्ञाचिन्मात्रं ज्योतिषः सन्निधेस्तदा
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्॥
कालेन भिद्यमानस्तु स विन्दुर्भवति त्रिधा।

स्थूलसूक्ष्मतरत्वेन तस्य द्वैविध्यमिष्यते।
स बिन्दुनादबीजत्व भेदेन च निगद्यते॥

एतत्सर्वंगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योगे एव मूलाधारस्थ पवनसंस्कारः तदभिव्यक्तं शब्दब्रह्मस्वप्रतिष्ठतया निष्पन्दं परावागित्युच्यते। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणवृत्तिभेदा जायन्ते तथा सृज्यमान प्राणिकर्मवशेन परमेश्वरोपाधिभूतमायायाम् वृत्तिभेदा जायन्त इति। एतेन पूर्वोक्तप्रक्रियायां ब्रह्मणो निमित्तकारणत्वावगमतात् एतस्मादात्मन इतिश्रुतौ जनिकर्तुरित्यपादानलक्षणपञ्चम्यनापत्तिरित्यपास्तम्। स ऐक्षत, एकोऽहं बहु स्याम, इति श्रुतौ ईक्षितृत्वश्रवणेन निमित्तत्वाद् बहुवचनश्रवणेन चोपादानत्वस्यापि स्वीकारात्। एवञ्च शब्दब्रह्मणो निर्विकारत्वमेव ऋग्वेदेऽपि वागेव विश्वाभुवना यज्ञे वाचक इत्येतसर्वममृतं यच्च मत्परमिति छन्दोभ्य एव प्रथममेतद् विश्वं विवर्तते इति च नात्रारम्भवादः परिणामवादो वा विवक्षितः किन्तु विवर्तवादः। यथा च—

सच्चिदानन्दविभवात्सकलात्परमेश्वरात्
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमूद्भवः।
परशक्तिमयःसाक्षात् त्रिधाऽसौ भिद्यते पुनः
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः
विन्दुः शीवात्मको बीजं शक्तिर्नादस्तयोमिथः।
समवायः समाख्यातः सर्वागमविशारदैः॥
रौद्री विन्दोस्ततोनादात् ज्येष्ठा बीजादजायत।
वामाताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः।
सज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्क स्वरूपिणः।

भिद्यमानात्परात् बिन्दोव्यक्तात्मा ततोऽभवत् ।
शब्दब्रह्मे ति तं प्राहुः सर्वागमविशारदाः ।।

अत्र समवायो नाम सम्बन्धः, क्षोभ्यक्षोभकरूपः सृष्टिहेतुः । शक्यत्याख्यावस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादि-विशेषरहितोऽखण्डो नाद मात्र रव उत्पन्नः ।

यत् इच्छति तज्ज्ञातुं कर्तुंवा स्वेच्छया क्रिया
अनन्तरं हि तत्कार्यंज्ञानदर्शनश्थंक्तता ।।
ज्ञानशक्तिस्तदर्थं हि योऽसौ स्थूलः समुच्चयः
सा क्रियाशक्तिरुदिता ततः सर्वं जगत् परम् ।।

एवं व्यवहारसाधनीभूताया वैखर्याः किं स्वरूपमिति विचारमा-णायां प्रणव एव व्यानोदानाभ्यां स वैखरी रूपं प्रतिपद्यते अत एव हरिणा व्याकरणस्य त्रिविधा वाग् विषय इत्युक्तम् ।

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेक तीर्थभेदायास्त्रय्या वाचः परम्पदम् ।।

शिष्टव्यक वर्णरूपा प्राप्तसाधुत्वाभावाऽपभ्रष्टा दुन्दुभिवेणुवीणा-दिशब्दरूपाचेत्यर्थः । तीर्थो नाम उपायः प्रकार इति स्वपरोभय श्रोत्र-विषया वैखरी, हृदयदेशस्था पदप्रत्यक्षानुपपत्या व्यवहारकारणं मध्यमा, पश्यन्ती तु लोकव्यवहारतीतायोगिनां तु तत्रापि प्रकृतिप्रत्यय-विभागावगतिरस्ति परायान्तु प्रकृतिप्रत्ययविभागावगतिर्नास्तीति कृत्वा त्रय्या इत्युक्तम् —

स्वरूपज्योतिरेवान्तः परावागनपायिनी
तस्यां दृष्टायां स्वरूपायामधिकारो निवर्तते ।
ऋक् तन्त्रेऽपि–

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा
ये मनीषिणः ।
गुहात्रिणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या
वदन्ति ।।

वाक्परिमितानि कोऽर्थः, शास्त्रेनिर्णीतानि सूक्ष्मतर, सूक्ष्मस्थूल, स्थूलतररूपा, परात्पश्यन्ती मध्यमावैखरर्याया अवस्था सन्ति। चत्वारिपदानि यानि मनीषिणोऽध्यात्मकुशला ये विदुः। इत्थं शब्दब्रह्मणोर्विषये तदारम्भकजगत्प्रक्रियायाञ्च नन्दिकेश्वरकाशिकायामपि यथेष्टमेवोक्तं शब्दब्रह्मैव जगन्निदानमिति निर्धार्यमाणविषयप्रमाणग्राहकतया यथा–

अकारः सर्ववर्णाग्रयः प्रकाशः परमेश्वरः
आद्यमन्तेन संयोगो दहमित्येव जायते।
इकारादिलकारान्ता वर्णा समभवन्ततः
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्
ज्ञप्तेर्बभूव पश्यन्ति मध्यमावाक् ततः परम्।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः।
वृत्ति वृत्तिमतोरत्र भेदलेशो न विद्यते।
चन्द्रचान्द्रिकयोर्यद्वद् यथा वागर्थयोरपि॥

—कालिदासः अनेनप्रमाणेन

इत्थं नामरूपात्मकमिदं जगत् ततः प्रतिपन्नम्। यतः स्फुटत्यर्थो जगद् रूपो यस्मात् स स्फोटः बाहुलकादपादाने घञ्। अथ च शब्दात्मकं ब्रह्म स्फोटो रूपं स्वरूपं यस्य तं गौरीरमणरूपिणं श्रीलक्ष्मीरमणं नौमि इति महावैयाकरणः कौण्डभट्टो मंगलश्लोके श्रीलक्ष्मीरमणस्य श्रीविष्णोः शब्दब्रह्मणश्च तादात्म्यं साधु सम्पाद्य तस्य जगन्निदानत्वे महत्त्वमाद्यान्तं स्वसिद्धान्तस्थापने प्रतिपाद्य कृतिं सफलीचकार यद्वा स्फुटति बोधविषयो भवति, अर्थोऽस्मादिति स्फोटः शब्दः, रूप्यते ज्ञायते इति रूपोऽर्थः स्फोटश्च रूपश्चानयोः समाहारः स्फोटरूपं शब्दार्थस्वरूपमिति। शब्दार्थरूपस्य जगत् उपादानकारणस्यापि शब्दार्थरूपत्वौचित्यात्। जगतो नामार्थरूपत्वे नामरूपे व्याकरणवाणीति श्रुतिप्रमाणम्। नामात्मकमर्थात्मकञ्च जगत् प्रकाशयानिति तदर्थः। वेदान्तिनये मायोपाधिकस्यैव परमात्मनो जगदुपादानत्वय्। वेदान्तिमते रज्जूरगवत् जगतो ब्रह्मरूपत्वे

विवर्तते इत्यस्यान्यथा प्रतीयते इत्यर्थः। यथा रज्ज्वां सर्पस्य रज्जुसत्तातिरिक्तसत्ता नास्ति तथा निखिलप्रपञ्चस्यापि ब्रह्मसत्तातिरिक्तसत्ता नास्ति। यावद् रज्जुर्न प्रतीयते तावत्सर्पः प्रतीयते, एवं यावद् ब्रह्म न प्रतीयते तावत्प्रपञ्चः प्रतीयते। एतेन मुक्तिसाधनज्ञानविषयीभूतस्वरूपत्वेन व्याकरणसिद्धान्तप्रतिपाद्यत्वेन च शब्दब्रह्मणः साक्षात्कारः तदाकारानुभूतिर्वा निःश्रेयसाय कल्पते। मुक्तिकल्पे इदमपि प्रमाणीभूतम्—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितिम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥

एवं भेदरहितं यद् ब्रह्म तदुपनिबन्धनं वस्तुभूतं यस्य स ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञां लभते। वस्तुतस्तु वर्ण, पद, वाक्यादिरूपतया तत्रापि वर्णजाति, पदजाति, वाक्यजाति नियततया पदवाक्योरखण्डसखण्डरूपतया च स्फोटस्य अष्टविधत्वं संसाध्य अखण्डवाक्यस्फोटातिरिक्तानां स्फोटानां शास्त्रप्रक्रियानिर्वाहकतामापाद्य जातेः प्रत्येकं वर्णेषु सत्त्वात् प्रत्येकादर्थबोधापत्तिस्यादिति प्रसंगे—

अनेक व्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता
कैश्चिदव्यक्त एवास्या ध्वनित्वेन प्रकल्पिता॥

इत्युदीर्य स्फोटस्य नित्यत्वात्सर्वदाऽर्थबोधापत्तिरित्यपास्तम्। अर्थात् वर्णस्फोटपक्षे उक्तदोषोऽस्ति। तथापि पदवाक्ययोर्जातिस्फोटपक्षे प्रतिवर्णनार्थबोधरूपो दोषः यतः पदवाक्यजातिस्फोटपक्षे जातेः व्यासज्यवृत्तित्वस्य (पर्याप्ति सम्बन्धेन समुदाय वृत्तित्वस्य) धर्मिग्राहकमानसिद्धत्वात् इति कैश्चित् व्यक्तयोध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयन्ते इति शेषार्थः स्पष्टः। अतः सुस्पष्टमेवैतदभिधातुं शक्यते यत्—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः

इति प्रतिभावं प्रतिपदार्थमिति। तेन हि तत्तद् व्यक्त-

विशिष्टं ब्रह्मैव जातिरिति भावः कैयटेनापि प्रोक्तं यत् असत्योपाध्यवच्छिन्नं ब्रह्म तद् द्रव्यशब्दवाच्यमित्यर्थः । इत्थं ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति । कथं तर्हि ब्रह्मदर्शने च गोत्वादिजातेरप्यसद्वादनित्यत्वम् । इति सुविचारणीयम् ।

आत्मैवेदं सर्वम् इति श्रुति वचनात् । प्रत्याहाराह्निके महाभाष्येऽपि ब्रह्मराशिरिति प्रतीके कैयटे ब्रह्मतत्त्वमेवोक्तम् वाचकशब्दरूपतया वेदरूपतया वा । ब्रह्मणः साक्षाज्ज्ञातुमशक्ततया रूपनामनिरूपणद्वारा तज्ज्ञानाय शास्त्रस्योपयोगः । अथ च कार्य्यमात्रोपादानभूता सदसदादिभिरनिर्वचनीया मिथ्या ज्ञानजन्यसंस्काररूपा अविद्या, एवं हि निःशेषेण प्रतिपाद्यते—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुतस्मै पूर्णात्मने नमः ॥

वाक्यपदीयकारो हरिरपि व्याजहार—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम् ॥

ब्रह्मैवेत्यनेन अत्रार्थ पुरुषः स्वरूपज्ज्योतिः, तमेव भान्तमनुभाति सर्वम् न तत्र सूर्यो भाति, न चन्द्रतारकं नेमा विद्युतो भान्ति सोऽयमग्निः श्रुत्युपलक्षणतया 'यदादित्यगतं तेजो जगद् भासयतेऽखिल'मिति स्मृतेरपि प्रमाणत्वम् । तस्य भासा सर्वमिदं विभाति इति श्रुति सिद्धस्वपरप्रकाशकत्वं सूचयन् स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिक स्फोट शब्दाभिधेयत्वं सूचयति । इत्थं हि स्फोटवादे शब्दब्रह्मणः स्वप्रकाशकत्व रूपेण पुरुषार्थोपयोगिनिज्ञाने व्याकरणस्योपयोगो निःश्रेयस्करः तथाहि—

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥

इति समुद्घोषेण समेषां, प्राणिनां सचेतसामन्तर्बहिश्च सर्वतः शुभमभिकांक्षमाणोऽन्ते सेवायां समासतो विचारपुष्पं समर्प्य विरमत्यज्जनः ।

———

# ५

# स्फोटनिरूपणप्रक्रियाविधा विमर्शः

असंदिग्धे विषये विचारः प्रवर्तितुं नार्हति, संदिग्धे न्यायः प्रवर्तते इति न्यायान्नकोऽपि सचेता मरीचिमालिनिभगवति भास्करेऽम्बरतलावलम्बिनि पुरतः प्रकाशमानं घटपदादिकं वस्तुजातं स्फुटमाकलयन्नपिजिज्ञासते किमिदमिति ? तथैव प्रयोजनरहिते विषये न कश्चित् ब्रूते किमिति ? यथाकरटस्य दन्ता भवन्ति नवा ? तस्मात् संदिग्धे सप्रयोजने च वस्तुनि विस्तरतो विचारारम्भः सर्ववादिसिद्धः सिद्धान्तः। अतोऽभिमतार्थस्य बुबोधयिषया शब्दान् लोकः प्रयुङ्क्ते ते खलु श्रोत्रेन्द्रियगोचराः गृहीतशक्तिकाः शाब्दबोधकारण सामग्री कलिता स्वार्थानुबोधयन्ति तथाश्रवणेन्द्रियेणैवतत्स्वरूप ग्रहणात्स्फोटाख्यस्य शब्दतत्त्व विमर्शस्य न किञ्चिदपि फलमुत्पश्यामि शब्दप्रयोगस्यार्थावबोधमात्र फलकतया तस्य श्रोत्रेन्द्रियेणानन्तरमुपपन्नतयातद्विचारः काकदन्त परीक्षेव निष्फलताम्भजते। अतएव भामतीकारेण श्रीवाचस्पती मिश्रेण प्रोक्तमपि साधु—यदसंदिग्धप्रयोजनञ्च न तत्प्रेक्षावत् प्रतिपित्सा गोचर इति, तथाचात्रसंशयप्रयोजनयोरभावात् तद्विचारो भवितुन्नार्हतीतिसत्यम्, यद्यप्यसंदिग्धंनिष्प्रयोजनञ्च वस्तु न जिज्ञास्यं तथापि सामान्यतया ज्ञातेऽपि विषये विशेषरूपेणाज्ञाततया विशेषविषयिणो जिज्ञासां को निवारयितुमिष्टे ? यथा मन्दान्धकारे उच्चैस्तरत्वेन रूपेण सामान्यतो ज्ञातेऽपि पदार्थे स्थाणुर्वा पुरुषोवेतिविशेषरूपेण ज्ञातुंप्रयत्नः प्रवर्तते तथा तद्धर्मावच्छिन्नपिषयकं ज्ञानं तद्धर्मावच्छिन्नविषयिणीं जिज्ञासामुपशमयति नत्वन्यविधां जिज्ञासाम्। अन्यथाप्रमेयत्वेन ज्ञातेसर्वस्मिन् पदार्थे विशेषजिज्ञासानुदयात् सर्वशास्त्राणामनारम्भः सर्वेषाञ्च सार्वज्ञ्यंप्रसज्येत्। वस्तुतो विरुद्धा प्रतिपत्तिरूपा विप्रतिपत्तिरपि संशयस्यकारणम्भजति, तथा च न्याय सूत्रम्—

समानानेक धर्मोपपत्तेर्विप्रतिपत्तेरूपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति—स्फोटविषये संशयबीजरूपा-

विप्रतिपत्ति: प्रतीतपदार्थं को लोकेऽध्वनि: शब्द: इत्युच्यते शब्दं कुरु शब्दं माकार्षीशब्दकार्ययं माणक: इतिध्वनिंकुर्वंन्नेवमुच्यते इति पस्पशाह्निकभाष्य उक्तम्। तपरतत्कालस्येति सुत्रेतुस्फोट: शब्दध्वनि: शब्दगुण इत्युक्तम् तदभिप्रायस्तु ध्वनि: शब्दोपकारको व्यञ्जकतया न स्वयं शब्द इति एवं रूपेण विरुद्धार्थं प्रतिपादनेन पिप्रतिपत्तिमूलक: संशयोनिराबाधस्तिष्ठति। अद्य चैक: शब्द: सम्यग्-ज्ञात: सुष्ठुप्रयुक्त: स्वर्गेलोकेच कामधुगभवतीति महाभाष्य वचनेनापि सस्फोटात्मको ज्ञातव्यो विमर्शितव्यश्चेति—

अत आपामर सहृदयहृदयानुकारि प्रथिताचार चर्चा चर्च्यतेऽत्रेदानीं तद् यथा—

व्यवहारस्तावद् द्विविध: प्रवर्तते लौकिकश्शास्त्रीयश्च, उभय-विधोऽपि व्यवहार: शब्दमन्तराऽशक्य एव, तेन शब्दाधीनो व्यवहार-स्सुनिश्चित एव, यद्यपि मूकानां सकलोऽपिव्यवहारश्शब्दं विनैव प्रचलतीत्यत्र न सन्देहलेशस्तथापितेषामपिव्यक्तवाचामुच्चारणाभा-वेऽपि सूक्ष्मवाय्वाघातजन्याभिमतोपांशुजपवत् तत्रोपांशु अव्यक्त शब्द-सत्त्वात् तत्रापिशब्दाधीन व्यवहारस्सुसङ्गच्छत एवेति चेष्टापि तत्र फलतिवा।

एवञ्च सकल व्यवहारसाधक: श्रोत्रेन्द्रिय ग्राह्यत्वसमानाधि-करण गुणत्वविशिष्टो हि शब्दो भवति, स च द्विविध: वर्णात्मको ध्वन्यात्मकश्चेति भेदात्। संस्कृतभाषादिरूपोवर्णात्मक:, ध्वन्या-त्मको भेरीमृदङ्गादि शब्द:।

प्रथमन्तावत्तस्यानित्यत्वं साध्यते—तद्यथा शब्द: कारणवत्वात् संयोगविभागजन्यस्वादिन्द्रियजन्यप्रत्यक्षविषयत्वेनानित्य:, अनुमान प्रयोगश्चेत्थम्—

शब्दोऽनित्य: वहिरिन्द्रिय ग्राह्य प्रत्यक्ष विषयत्वात् रूपादिवत्। यद्यत्रोच्यते येनेन्द्रियेणायद् गृह्यते तद् गताजातिस्तदभावश्चतेनैवेन्द्रि-येण गृह्यते इति नियमात् कत्व गत्वादीनामपि श्रोत्रेन्द्रियजन्य प्रत्यक्ष-विषयत्वेनानित्यत्वा भाववत्यां कत्वादि जातौ श्रवणेन्द्रियजन्य

प्रत्यक्षविषयत्वहेतोस्सत्वादस्यहेतोर्व्यभिचारित्वेन न तेन शब्दानित्यत्वसिद्धिः शक्यावक्तुमिति-तत्रेदंबोध्यते यत् कण्ठताल्वादि संयोगोहि व्यञ्जकशब्दस्योत्पादक अभिव्यञ्जकस्याभिव्यंग्यदेशीयत्वनियमः, यथाऽभिव्यञ्जकोदीपोघटदेशीयस्सन् घटमभिव्यनक्ति। कण्ठताल्वादिषु वायु संयोगोऽयं कण्ठताल्वादि देशे वर्तते, अभिव्यंग्यश्च शब्द शब्दजन्यायेन श्रोतुः कर्णविवरे विद्यते इत्यभिव्यञ्जकस्य कण्ठताल्वादि संयोगस्याभिव्यंग्यत्वेनाभिमतस्य शब्दस्य च विभिन्न देशीयत्वाच्छब्दाभिव्यञ्जकत्वं कण्ठताल्वादि वायुसंयोगस्य न संघटते किन्तु तदुत्पादकत्वमेव, तथा चापरमपितथ्यमित्थं प्रबोध्यते यत् तीव्रंसुखम् मन्दं सुखम् तीव्रोऽश्वो मन्दोऽश्वः इत्यादिवत्तीव्रं पदं मन्दं पदमितिकृतकवदुपचारादपि शब्दस्यानित्यत्वं सिद्धयति। भेरीशब्दस्तन्त्री शब्दं तिरस्करोति तत्रतत्र शब्द श्रवणानन्तरमयं भेरी शब्दः अयं तन्त्रीशब्दः, तन्त्री सम्बन्धी, भेरी शब्दो भेरी सम्बन्धीत्यनुमीयते, तेन शब्दस्य भेदोऽवश्यं वाच्यः नित्यत्वेत्वयम्भेदो न सिद्धयेत् तेन तस्य शब्दस्यानित्यत्व सिद्धिः। नैतावताऽलं किन्तुक्रिया साधर्म्यादपि शब्दस्यानित्यत्वम्। क्रिया यथा क्षणस्थायिनी तथा शब्दोऽपि शब्दस्य ध्वंसेसति केनापि लिंगेन शब्दस्यानुभवाभावात् नहि शब्द सत्तायां तस्याज्ञानंवक्तुं शक्यते।

न वाशब्दस्यानित्यत्वे गुरु शिष्ययोरध्ययनाध्यापनव्यवस्था न संभवतीतिवक्तुं शक्या यतोऽध्ययनंनाम गुरुणा स्वशब्दस्य शिष्ये प्रापणम् तद्धि शब्दस्य नित्यतायामेव सम्भवमिति, नहि क्षणिकः पदार्थोऽत्र नेतुं शक्य इत्यपि न वाच्यम् शब्दस्यानेकत्वेपि नृत्यमधीते यन्नृत्यमनेनकृतं तदनेनैक चरणेनकृतमिति नृत्यक्रियाभेदेऽपि अभेदावगाहि यत्तदोः प्रयोगात् तदनित्येऽपि तदध्ययनमुपपद्यत एव।

यद्यप्यत्राध्यापनं नाम गुरुकर्तृक शिष्योद्देश्यक शब्दप्रदानमिति गोदानवच्छब्दस्यस्थैर्यमुचितम्, तथापञ्चकृत्वोरूपं पश्यतीत्यत्र स्थिरस्य रूपस्याभ्यासवच्छब्दस्याभ्यासेष्वपि तस्य स्थैर्यमपेक्षितम्।

तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यतीतिन्यायेन शब्दस्य नित्यत्वं सिद्धयति तदपि तुच्छमेवप्रतिभागति, यतोऽनित्याया नृत्य-

क्रियाया अध्ययनाभ्यासवच्छब्दस्यानित्यत्वेऽध्ययनाभ्यासोपपत्तेः एवं शब्दस्यानित्यत्वेऽपि घट पदे उच्चरिते घकार श्रावणप्रत्यक्षजन्य संस्कारेणाव्यवहितोत्तरत्वसम्बन्धेनाकारेतत्प्रत्यक्षकालेऽपि भानं भवति, ततोघकारविशिष्टाकारविषयकप्रत्यक्षजन्यसंकारजन्यस्मरणाख्यज्ञानलक्षणासन्निकर्षेण टकारे तत्प्रत्यक्षकाले घकारविशिष्टाकारस्य भानात् तथाघटविषयक प्रत्यक्षजन्यसंस्कारजन्यस्मरणात्मकज्ञानेलक्षणया श्रावणप्रत्यक्षकालेअकारे घट इत्यस्य भानात् घटविषयक प्रत्यक्षाद्घटत्वावच्छिन्नविषयकोपस्थितेर्घटत्वावच्छिन्ननिरूपितघटपदनिष्ठवृत्तिज्ञानाधीना या घटत्वावच्छिन्न विषयकशाब्दबोधापत्तिः, तथा घट मानयेतिवाक्यस्यापि प्रत्यक्षोपपत्या घटनिष्ठकर्मतानिरूपकानयनविषयक शाब्दबोधोऽपि जायते ।

अथवा घट इत्युच्चरितेऽकारोच्चारण जनित तत्प्रत्यक्षकालेऽव्यवहितोत्तरत्व सम्बन्धेन घकारविषयकप्रत्यक्षजन्य संस्कारेण तथाऽकारप्रत्यक्षजन्य संस्कारेणटकार प्रत्यक्षजन्य संस्कारेण चाकारप्रत्यक्षेण च घकाराकार टकाराकारविषयक समूहालम्बनात्मकस्मरणेन वृत्तिज्ञानद्वारा घटत्वावच्छिन्न विषयकोपस्थितेस्तद् विषयकशाब्दबोधोपपत्तिः ।

एवमेव घटमानयेति वाक्यस्थलेऽपि घकाराद्यानयनघटकनकाराकारान्तविषयकप्रत्यक्षजन्य संस्कारप्रत्यक्षेधकारादि नकारान्तविषयक समूहालम्बनात्मकस्मरणेन तत्तत्पदनिष्ठवृत्तिज्ञानाधीनासत्तिसम्पन्नघटत्वावच्छिन्निविषयक समूहालम्बनात्मकोपस्थितेश्च घट निष्ठकर्मतानिरूपकानयनविषयक शाब्दबोधः। एवं सर्वेभ्यः पदेभ्यः सर्वेभ्योवाक्येभ्यश्च खलेकपोतन्यायेन राजपुरप्रवेशन्यायेन च शाब्दबोधा उपपादनीया भवन्ति ।

अत्राव्यवहितोत्तरत्व सम्बन्धश्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणवृत्तित्वेसति स्वाधिकरणक्षणध्वंसाधिकरणवृत्तित्वम् । घ घटकाकारे घकाराधिकरणक्षणध्वं साधिकरणक्षण ध्वंसानधिकरणवृत्तित्वं घकाराधिकरणक्षणध्वंसाधिकरणवृत्तित्वञ्चास्तीति घकाराव्यवहितोत्तरत्वं तत्र बोध्यम् । टकारे घकारक्षणध्वंसाधिकरणक्षणध्वं

साधिकरणवृत्तित्वस्यसत्त्वात् घकारक्षणध्वंसाधिकरणवृत्तित्वेऽपि न घकाराव्यवहितोत्तरत्वम्। नीलघट इत्यत्र ल घटकाकारे घकाराधिकरणक्षणध्वंसाधिकरणध्वंसानधिकरणवृत्तित्वस्य सत्त्वेऽपिघकारक्षणध्वंसाधिकरणवृत्तित्वाभावान्नघकाराव्यवहितोत्तरत्वंलघटकाकारे विमृष्टमनित्यत्वं शब्दस्य।

सम्प्रति वर्णनित्यता विषयेऽपि युक्तयः प्रदर्श्यन्ते—अकारादयोवर्णा नित्याः पूर्वंदिवसोच्चरिताकारेणाद्योच्चारिताकारस्याभेद प्रत्यभिज्ञानात्। सोऽयमकार इत्याकारात्। तावत्कालस्थिरञ्चैनं कः पश्चान्नाशयिष्यतीतिन्यायेन नाशानुपपत्तौ नित्यत्वमभ्युपगम्यत एव।

इत्थमकार एक एव इकारोप्येक एवेति सर्वे वर्णा भिन्नजातीया एकैकत्व विशिष्टा एव। प्रत्येकमकारादयो वर्णाविभवः तथा च नित्यवर्णसमूहः पदम् पदसमूहोवाक्यम्, पदवाक्यानां वर्णातिरिक्तत्वाभावात्। यथैक इन्द्रशब्दःऋतुशते प्रादुर्भूतः सर्वं यागेष्वङ्गं भवति इतिभाष्यकारोक्तेः तथैव वर्णानां नित्यत्वं सुस्थम्। घट, इत्यत्रघकाराव्यवहितोत्तरत्वमकारे घ ज्ञानाधिकरण क्षणोत्पत्तिकज्ञानविषयत्वम्।

न चात्राकारादीनां नित्यत्वे ककार उत्पन्नः ककारोनष्टः इतिप्रतीतिः कथन्निवार्यताम्? अद्यचायमकार उदात्तः अयमनुदात्तः अयं स्वरितः अयमकारो मन्दः अयमकारस्तार इत्यादिप्रतीतयश्च कथमुपपद्येरन्? तत्रेत्थं समाधिः—अकाराद्यभिव्यञ्जकः कण्ठतालवादिषु वायुसंयोगः तत्रध्वनिश्चकण्ठताल्वादिषुवायुसंयोगानामनित्यत्वादुत्पन्न विनष्टत्वात्तद्गतोत्पत्तिः स्वाश्रयाभिव्यंग्यत्वसम्बन्धेन वर्णेषु भासते। तथा तत्प्रतियोगिकध्वंसश्च स्व प्रतियोग्यभिव्यंग्यत्वसम्बन्धेनाकारादिषु भासते। तथा चोदात्तत्वानुदात्तत्वस्वरितत्वमन्दत्वादोनि स्वाश्रयाभिव्यंग्यत्वसम्बन्धे नैव अकारादिषु वर्णेषु प्रतीयन्ते। परम्परा सम्बन्धेनोत्पत्यादीनामकारादिषुतत्तत्सत्तामङ्गीकृत्यैव अकार उत्पन्नः नष्टः इत्यादि विशिष्ट प्रतीतयो न स्युरिति न वक्तुं शक्यते, स्वाश्रयाभिव्यंग्यत्व सम्बन्धमूलकस्वरूप सम्बन्धेनाकारादिष्वारोपात् सर्वं सामञ्जस्यं संगच्छते। तस्मादेव कारणात् विशिष्ट प्रतीतौ न कश्चन शंकावकाशोऽवतिष्ठते, सोयंककार इति-

प्रतीतिः कत्वावछिन्न जात्यैकविषयकत्वेन न साध्यातयोर्घट व्यक्त्यो-र्जात्यैक्येन सोयं घट इति प्रतीतेरस्वीकारात् । एक व्यक्तिविषयकत्वे-एव सोयं घट इतिप्रतीतेरुदयात् । सेयं दीपकलिका इत्यत्र व्यक्ति-भिन्नत्वेऽपि जात्यैक्येन यथा प्रतीतिरुपजायते तथा सोयमकारइत्यत्र व्यक्तिभिन्नत्वेऽपि आकारसाम्येन जातिविषयिणीप्रतीतिरत्राप्यङ्गी-क्रियतामिति न वक्तुं शक्यते यतोदीपकलिकायाँ सेयंमिति प्रतीति-सत्वेऽपि कलिकाजातोयेयमिति प्रतीतेरपि सम्भवात् । अकार-विषयकप्रतीतौ तु द्वयोरकारयोर्विभिन्नकालिकयोः सोयमकार इत्येव प्रतीतिः, न तु तज्जातोयोऽयमिति प्रतीतिरपितत्रानुभूयते । यदि सोयमकार ध्वनिरित्यभेदप्रत्यभिज्ञया ध्वनिनिष्ठोत्पत्त्यादीनां नाका-रादिषु भानमित्युपगम्यते तदाकण्ठताल्वादि सयोगनिष्ठोत्पत्त्य दीना-मेव मानंस्वीकार्य्यम् स्वाश्रयाभिव्यंग्याभिव्यंग्यत्व सम्बन्धेन । यथा बुद्धि तद्धि यदेकं प्रक्रिया भेदैर्वंहुधाप्रविभज्यते ।

तद् व्याकरणमागम्य परं ब्रह्माधिगच्छति इति भर्तृहरिणा, सिद्धे शब्दार्थसम्बन्धे इति वार्तिके सर्वशब्दानां घटत्वादि रूपामत्योपा-ध्यवच्छिन्नंब्रह्मै व शब्दानुशासनस्य परं प्रयोजनं कैयटेनापि प्रकीर्तितम् तस्मादेवात्रतद् विषयकः प्रपञ्चः सर्वमतप्रतिपादनपुरःसरं निरूप-णीय एव। अत्र स्फोटवादिनः स्फुटत्यर्थोऽस्मात् अर्थात् प्रतीति विषयो भवत्यर्थो यस्मात् सस्फोटः 'अकर्तरिच' कारकेऽसंज्ञायामिति घञन्तः । अथवा स्फुट्यते प्राकृतध्वनिभिरभिव्यज्यते यः स स्फोटः इति कर्मघञन्तः स्फोटशब्दः । तत्र वर्णानां क्षणिकत्वेन वर्णसमूहस्या-भावात् प्रत्यक्षं प्रतितादात्म्येन विषयस्यकारणत्वान्न घटपद प्रत्यक्षं सम्भवति । यदि पूर्वं पूर्वं वर्णानुभवजन्यसंस्कारैरन्तिमवर्ण प्रत्यक्ष-वेलायाँ वर्णानां भानमिति समूहालम्बनात्मकं पदस्मरण स्वीक्रियते तन्न साधुमन्यते, तत्तद् वर्णप्रत्यक्षे जाते संस्कारैः प्रत्यक्षक्रमेण संस्कार-क्रमेण च पूर्वं पूर्वं वर्णानामन्तिमवर्ण प्रत्यक्षकाले स्मरणासम्भवेनैव नदीशब्दप्रयोगे दीनरूपेण पदभानात् दीनत्वावच्छिन्नविषयक-प्रतीत्युपपत्तेः । यदि पूर्वोक्तरीत्या स्वाव्यवहितोत्तरत्वसम्बन्धेन संस्कारैः पूर्ववर्णानां भानमङ्गीक्रियते तदपि न समीचीनं प्रतिभाति स्मरण क्रमस्यसंस्कारक्रमानुयायित्वाभावात्, यस्य संस्कारस्योद्बोध-स्तस्य पश्चात्तनत्वेऽपि पूर्वंस्मरणोत्पत्तेः ।

अथ च तथास्मरणात्मक ज्ञानोपपादनेऽपि शब्दानां सत्ताया-अभावेन शक्तयाश्रयत्वस्यानुपपत्तिर्न ह्याधाराभावे आधेयता प्रतीयते, तथा सति नष्टो घटो जलवान इति प्रतीत्यापत्तेः। अविद्यमानस्यापि स्मृतिविषयस्यशब्दस्यशक्तेस्तार्किकमते तत्तदर्थविषयक बोधजनकत्वप्र-कारकेश्वरेच्छीय विशेष्यतायाश्शक्तिरूपत्वेन तस्या अविद्यमानेऽपिपदे सत्तायाँ बाधकाभावः।

नष्टो घटो ज्ञात इति प्रतीतौ ज्ञानविषयताया नष्टे घटेऽप्यङ्गीका-रात्। यथापूर्वं जानामि इति प्रतीतौ नष्टेऽपिघटे पुरातनज्ञानतौल्यस्य साम्प्रतिकज्ञानेप्रतीतौ साम्प्रतिकज्ञानविषयताया अतीतेघटे स्वीकारा-दिति यदुच्यते तदाप्येकं पदमितिप्रतीतिर्न स्यात्। तार्किकमते पदस्यवर्णसमुदायरूपत्वेन तस्यवर्णानतिरिक्तत्वेनैकत्वस्यबाधात्। एक प्रतीतिजनकत्वेन प्रतीतिनिष्ठस्यैकत्वस्यतद्वर्णेष्वारोपादेकंपदमिति-प्रतीतिरस्पादिति न वक्तुं शक्या यतः यदस्यैकत्वे एकप्रतीतिरेक-प्रतीतौ सत्यां पदे आरोपेणैकत्वमित्यन्योन्याश्रयदोषप्रसंगात्। न वा समूहालम्बनात्मक बुद्धिनिष्ठैकत्वस्य पदे समारोप इति समुचितम्-समूहालम्बनात्मकस्मृतेर्वर्णव्युत्क्रमविषयकत्वेन नदीसरपदयोरापत्ति सत्त्वेन समूहालम्वनात्मक ज्ञानस्य निरर्थकत्वात्। तथा च शक्तिमत्त्वेन पदप्रत्यक्षस्यैव बोधजनकत्वन्नतुस्मृतस्य तस्य। यथारूपरसगन्धादि प्रत्यक्षाणामनुभूयते सुखजनकत्वं न तु तेषां स्मरणस्यापि। तस्मादेव पदस्मरणन्न शाब्दबोधजनकम् किन्तु पदप्रत्यक्षस्यैवशाब्दबोध जन-कत्वम्। वर्णानित्यतावादे (क्षणिकवादे) पदस्य कथमपि प्रत्यक्षास-म्भवेन शाब्दबोधो दुरुद्धरः। तेनाकारादिवर्णातिरिक्तः क्रमशून्योनित्यो विभुः स्वयंप्रकाशस्वरूपः स्फोटो ब्रह्मात्मकोऽभ्युपगन्तव्य एव, स एवार्थप्रत्यायकत्वाच्छाब्दबोधजनकः। न च स्फोटस्यवाचकत्वे तस्य नित्यत्वेन सर्वदाऽर्थभानप्रसंगापत्तिः शक्यावक्तुम् प्राकृतध्वनिरूपेणा-भिव्यक्तस्यैव स्फोटस्य शाब्दबोध जनकत्वस्वीकारात्। न वा घट इत्यत्र घकारादिवर्णानां क्षणिकत्वात् तेषां समूहस्य ज्ञानाभावेन पदरूपेणस्फोटस्याभिव्यक्तेरभावात् घटरूपेणाभिव्यक्तस्यस्फोटस्य घटत्वावच्छिन्ने शक्तिस्तादृशशक्तिज्ञानात् तदुपस्थिति शाब्दबोधौ कथमुपपद्येताम्? यदि घकारादिवर्णानां स्मरणात्मकज्ञानेन तेनरूपेण

स्फोटस्याभिव्यक्तिरङ्गीक्रियते तदा वर्णानां व्युत्क्रमस्मरणप्रयुक्ता यादुरवस्था सैव स्फोटाभिव्यक्तावपि समापतेत् इति वाच्यम्, घट-पदे उच्चरिते घकारादिवर्णपदजन्यप्रत्यक्षानुभवजन्यसंस्काराश्चित्त भित्तौ श्रोतुः क्रमेणचित्रीभवन्ति । अन्तिमवर्णप्रत्यक्षे सतिप्राकृत ध्वन्यात्मकनादरूपेण स्फोटो हृदिस्थोऽभिव्यक्तोऽर्थं बोधयत्येव ।

न च स्फोटस्याखण्डत्वेन घटपदोच्चारणे सति यदि घकारसंस्कारेणाभिव्यक्तः तदाऽन्यवर्णोच्चारणानां वैयर्थ्यम् । अखण्डस्य पदार्थस्य पदस्य वा यदि केनचिदंवर्णेनाभिव्यक्तिस्तदाऽपरवर्णानां वैयर्थ्यंसिद्धमेव, नहि घटपदघटक तत्तद्वर्णैः स्वस्वसंस्कारेण स्फोटस्यक्रमेण कस्मिंश्चित्कस्मिंश्चिदंशेऽन्तिमवर्णप्रत्यक्षेणान्तिमांशस्याभिव्यक्तौ तदा घट-पदरूपेण स्फोटस्य ज्ञानमिति वक्तुं शक्यम् ।

अयञ्च स्फोटः वर्णाभिव्यक्तपदाभिव्यक्तवाक्याभिव्यक्तवर्णपद-वाक्यजात्यभिव्यक्त रूपेणाखण्डवाक्याभिव्यक्ताखण्डपदाभिव्यक्तरूपेणाष्टविधः । आनन्दबल्लीस्थपञ्चकोशव्युत्पादनेन यथा शुद्ध-ब्रह्मावगम्यते, पूर्वपञ्चकोशानां क्रमप्रदर्शनं श्रुतिगतप्रयोजकम् तथा स्फोटरूप शुद्धब्रह्मबोधनाय वर्णादि स्फोटानामष्टानां व्युत्पादनं शुद्धस्फोटरूप ब्रह्मज्ञान-प्रयोजकम् । वस्तुतोऽखण्डजातिस्फोटःपदरूपेण-वाक्य रूपेणाभिव्यक्तः सन् बोधं जनयति ।

जातिश्च नित्यब्रह्मस्वरूपाविभुस्वरूपा पूर्ववदेवक्रमबद्धवर्णावली-स्मरणेनाभिव्यक्ता सती अभिव्यञ्जकभेदेन भिन्नार्थं प्रत्याययति सैव जातिः पदाभिव्यक्ता सती पदरूपा एकापि अभिव्यञ्जकपदवर्णादि भेदैर्भिन्नरूपवती लोके प्रतीतिपथमवतरति । यथाविभिन्न शब्दरूपेणाभिव्यक्ता विभिन्नपदादिरूपा तथा घटादिभिरर्थैः व्यक्तिरूपैरभि-व्यक्ता सती घटाद्यर्थरूपाभर्तृहरिणापिप्रोक्ता—

सत्यासत्यौ च द्वौ भागौ प्रतिभावं व्यवस्थितौ<br>
सत्यरूपातु साजातिरसत्याव्यक्तयो मता । इति ।<br>
योवेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः<br>
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।

तेनागमेन, वेदेषु वेदान्तेषु च प्रतिष्ठितस्य प्रणवरूपस्य स्वरस्य प्रकृतिरकारः तद् वाच्यो महेश्वर इति वेदात्मक प्रणवकारणाकार-वाच्यत्वं महेश्वरस्य परदेवतानारायणस्य सिद्धयति। ओंकार एव सर्वावाक् इतिश्रुत्या प्रणवस्यवेदकारणत्वं सिद्धयति। इत्थंवेद प्रकृति प्रणवकारणाकारशब्दवाच्यत्वं यदि ब्रह्मणः स्वीक्रियते तथा स्फोट वाच्यत्वमपि ब्रह्मणः स्वीक्रियते, तद् ब्रह्मरूपत्वमव्यक्तपरिणाम-वाय्वाकाश शरीरक परमात्मन इति तदानेत्थं स्फोटवादिना सह कश्चिद् विवादस्तिष्ठति। यदिनिर्विशेषं निरवयवं स्फोटशब्दस्वरूपं ब्रह्मविद्या/तिरोहितंविदितवर्णपदवाक्यरूपेण पृथिव्याद्यर्थरूपेण च विवर्तमानमस्तितद् प्रमाणिकम्, स्वयंप्रकाशे स्फोटरूपे ब्रह्मणि-स्वरूपाज्ञानरूपाया अविद्याया विरोधादभावेऽविद्याश्रयत्वानुपपत्त्या अविद्यया ब्रह्मस्वरूपस्य स्फोटस्य च तिरोधानानुपपत्त्या न भर्तृहरि सम्मतं स्फोटात्मकं ब्रह्मनामरूपात्मकजगत्कारणं भवितुमर्हतीति निर्मत्सराः सुधियः स्वयं विभावयन्तु।

यद्युच्यते वर्णानां तत्समूहभूत पदानाञ्चानुभवात् तदतिरिक्त-स्यचाननुभवात् कथन्तद्व्यतिरिक्तं वाक्यमिति तन्न समीचीनं यतः पदं वाक्यमित्येकत्वावगाहिनो प्रतीतिरेकस्यवस्तुनः उपारोहादेव जायमाना पदस्यवाक्यस्य चाण्डखण्डतां प्रमाणीकरोत्येव, न वा बुद्धिरेषा वर्णान् पदानि च विषयीकरोति तेषां बहुत्वेनैकत्व प्रतीति-व्याघात प्रसंगात्। एकत्ववहुत्वयोरेकत्र पर्याप्तित्वस्यादृष्टत्वात्। तस्मादेव सिद्धान्तेऽखण्डवाक्यस्फोटोऽङ्गीकृतः। न वा स्फोटस्याखण्ड-त्वेशास्त्रानर्थक्य शंक्यम्? पञ्चकोशादिवत्तस्मात् कल्पनैषा-समाश्रिता उपेय प्रतिपत्यर्था उपाया अव्यवस्थिता इत्यनया सूक्तया शास्त्रानर्थक्यस्य परिहृतत्वात्। तथाहि भृगुबल्यामानन्दबल्याञ्च अन्नप्राणमयमनोविज्ञानानन्दात्मकादि पञ्चकोश व्युत्पादनं यथा शुद्धब्रह्मबोधाय तथा प्रकृतेऽपि प्रकृतिप्रत्यादिवर्णस्फोट पदस्फोटादि व्युत्पादनंवास्तवस्फोटज्ञानायैव पूर्वं संस्तुम् न वा प्रत्यक्षस्यस्फोटस्य-श्रवणादितोऽपि बोध सम्भवान्न शास्त्रानर्थक्यमिति वक्तुं शक्यम् उपायस्योपायान्तरादूषकत्वात्। नादात्मकस्फोट प्रतिपादकशास्त्रस्य प्रशंसारूपमेव वचनं वाक्यपदीये प्रोक्तम्—

तद् द्वारमपवर्गस्य वाङ्‌मलानां चिकित्सितम्
पवित्रं सर्वं विद्यानामधिविद्यं प्रकाशते । इति ।
इदमाद्यं पदस्थानं सिद्धि सोपान पर्वणाम्
इयं सा मोक्षमोणानामजिह्मा राजपद्धतिः ।

अत्रातीत विपर्यासः केवलामनुपश्यतीति चेत्यादिन वा प्रकृति-प्रत्ययकल्पनाया अलीकत्वात् कथं वास्तवस्फोट बोधकत्वमितिशक्यम् पञ्चकोशादिवत् प्रकृति प्रत्यय विभागस्यापि शशश्रृंगादिवदलीकत्वासिद्धेः मणि प्रभाप्रतिबिम्बस्य मणिप्राप्तापिव परमार्थ दर्शने उपयोगसम्भवाच्च ।

न चैकार्थ बोधजनकत्वेन पदैकत्वमिति युक्तम्—अज्ञातार्थ पद श्रवणेऽप्येकं पदमिति दर्शनात् । वर्ण समूहस्य पदस्य पदसमूहस्य वाक्यस्यचार्थवाचकत्वं सम्भावयितुमपि न शक्यते—तथाहिसमस्ता वर्णा वाचकाः प्रत्येकं वा ? यदि प्रत्येक वर्णाः वाचकास्तर्हि पूर्वोच्चारितवर्णेनाभिमतार्थप्रतीतिसम्भवे उत्तरोत्तर वर्णोच्चारण वैपर्थ-प्रसंगात् । यदि समस्तवर्णा एव वाचका इति स्वीक्रियेत्तर्हि वर्णानां क्रमेणोत्पत्तिविनाशशालिनां युगपदवस्थाना सम्भवेतेषां समूहस्यैवानिष्पत्तेः ।

न वा पूर्वं पूर्वं वर्णानुगृहीत चरमोवर्णो बोधमुत्पादयिष्यतीति-वाच्यम् नवा पूर्वोच्चारितानां वर्णानां वैयर्थ्यमपि चरमवर्णानुग्रहाय, तेषामावश्यकत्वात् । तत्रेदं पृच्छयते यत् पूर्वं पूर्वं वर्णानामुत्तरोत्तर-वर्णे कीदृशोऽनुग्रह उच्यते ? किन्तावत् पूर्वं पूर्वं वर्णानां चरमवर्णं प्रति जनकत्वमभिमतम् ? किञ्चार्थविबोधे सहकारित्वमभिमतम् ? तत्र प्रथमपक्षः अर्थात् पूर्वं पूर्वं वर्णानां चरम वर्णं प्रति जनकत्वन्नैव वक्तुंशक्यते वर्णस्य वर्णान्तरोत्पत्तिं प्रति जनकत्वासम्भवात् । अर्थविबोधेपूर्वपूर्वं वर्णानां सहकारित्वमपिनसम्भवम् अविद्यमानानां वर्णानां-मर्थविबोधे सहकारित्वासम्भवात् । यतो विद्यमान एव पदार्थः कस्यचिदुत्पत्तौ सहकारित्वेन प्रतिपादयितुं शक्यः नाविद्यमानः सहकारिताम्भजते । तेन प्रत्येकस्य समस्तस्य वा वाचकत्वं खपुष्पायित-

मेवावतिष्ठते। अत एव बोधानुपपत्त्या तदर्थं बोधजनको वर्णपदातिरिक्तो वाक्यस्फोटः स्वीकर्तव्य एव।

अत्रेत्वमपि न शंकितव्यम् यदभिव्यक्तः स्फोटोऽर्थं प्रतीतिञ्जनयतीति, अथवाऽनभिव्यक्तः स्फोटोऽर्थं प्रतीतिं जनयतीति वा, यद्यनभिव्यक्तएव स्फोटोर्थं प्रतीतिं जनयितुं समर्थस्तर्हि स्फोटस्य नित्यत्वात् सर्वं काले विद्यमानत्वेन सर्वदाबोधजनकत्व प्रसंगात्। स्फोटरूपकारणस्य विद्यमानत्वेन अर्थप्रतीतिरूपकार्यस्यावश्यम्भावात्। यद्यभिव्यक्त एव स्फोटोर्थं प्रत्याययति इति मन्यते तदा किं प्रत्येकस्माद् वर्णात् स्फोटोऽभिव्यक्तो भवति उद्वा वर्णसमूहात्? तत्र प्रत्येकस्माद् वर्णान्निवक्तुं पार्यते यतोह्याद्येनवर्णेनैव स्फोटाभिव्यक्त्या वर्णान्तरोच्चारणवैयर्थ्यप्रसंगात्। वर्णसमूहादपि नाभिव्यक्तिः शक्यावक्तुं यतो वर्णानांक्षणप्रध्वंसितया विनाशात्कथमप्येकदाऽवस्थानासम्भवेन वर्णसमूहस्य स्फोटाभिव्यञ्जकत्वकल्पनाया असम्भवात्।

अथ चातिदरिद्रवसनमिवैकेनापकृष्यमाणमपरं परिहरतीति न्यायोऽत्र सम्यगवकाशम्भजतेतराम्। अतएवोक्तम् स्फोटवादीय श्लोकवार्तिके—

यस्यानवयवः स्फोटोव्यज्यतेवर्णं बुद्धिभिः
सोऽपिपर्यनुयोगेन नैकेनापि विमुच्यते। इति

अत्रेत्थमुपपाद्यते यत् प्रथमवर्णोच्चारणेनाभिव्यक्तस्यापि स्फोटस्य स्फुटतर स्फुटतम प्रतीति सिद्धये द्वितीय वर्णोच्चारणस्य सार्थकत्वात्।

यथा रत्नपारखीजनानां रत्नपरीक्षणे प्रथमदर्शने सर्वथा रत्नावभासोनोपपद्यते तस्मात्पौनःपुन्येन दृष्टोरत्न परिज्ञानाय तैः क्रियत एव तदनन्तरमेव रत्न विशुद्धमविशुद्धम्वेति ते ज्ञातुं प्रभवन्ति ततः परमेव निर्णयं ददति रत्नविषयकम्। तद्वदाद्याक्षरश्रवणेन स्फोटस्याभिव्यक्ता वापिस्फुटतरस्फुटतमप्रतीति गोचरतालाभायेतरवर्णानामुच्चारणस्यावश्यकत्वान्न नैरर्थक्यशङ्कावकाशः कश्चन भवति-यथोत्तमपिवाक्य पदीयकारेण १-८४ नादैराहतवीजायामन्त्येबध्वनिनासह।

आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते इति,

तात्पर्यमस्य कारिकावचनस्येत्थम्—

अन्तिमेन ध्वनिना स्फोटात्मकशब्दस्य स्फुटपरिच्छेदानुकूला स्फोटाभिव्यक्तिर्भवति ततश्चान्तिमोध्वनिः स्फुटः स्फुटतरावधारण-हेतूनां सहकारेण स्फोटात्मकशब्दपरिच्छेदानुकूलां योग्यतामासादयन् स्वधर्मं रूषितं स्फोटमर्थबोधक व्यञ्जयति। नात्राश्चर्यं किञ्चित् यतोह्येवंविधाः प्रायः नैकविषयाः येषां सहृदध्ययनेनार्थः कथमपि न स्फुटमवभासते प्रत्युत्पौनःपुन्येनैवाध्ययनेनैवातत्तदर्था अवगतादृष्टि-गोचरीभूता जायन्ते तद्वदत्रापि प्रत्येकं ध्वनयोव्यञ्जयन्तोऽपिन झगिति शब्दतत्त्वं स्फोटात्मानं प्रकाशपदवीमानेतुमीशाः। तस्मादेव पूर्वंपूर्ववर्णानुभवजनित स्फुटःस्फुटतराभिव्यक्तिसचिवोऽन्तिमोध्वनिः तद्रूपतामापन्नोवर्णो वा स्फुटतमंस्फोटं द्योतयति अभिव्यञ्ज्यति वा कोऽत्र विस्मयः शास्त्रावासनवताम्? तस्मादिहेत्थं वक्तुंशक्यत एव यत् पूर्व पूर्ववर्णानामुच्चारणे तज्जन्यस्फुटस्फुटतराभिव्यक्त्य भावात् तत्सद्भावमन्तराऽन्त्यवर्णस्य द्योतकत्वानुपपत्तेरित्येवतत्तात्पर्यम्। एवं घट इत्यत्र अत्वेन टत्वेन अत्वेन विसर्गत्वे चाभिव्यक्तये तेषामपि-वर्णानां सार्थकत्वान्न कस्यापिवैयर्थं शंकांकलंकपंकावशकाशः कदा-चिदत्र।

यदि चात्रोच्यते पूर्व-पूर्ववर्णानुभवजन्य संस्कारसचिवोऽन्तिमोवर्ण एवार्थं बोधयिष्यतीति नापूर्वस्यकस्यचित्स्फोटस्यकल्पनामहीयसी दरीदृश्यते इति तत्कथमपि नसमोचीनं प्रतिभाति। अत्रतावदुच्यते (पृच्छयते वा), कोऽयं संस्कारः? किंस्मृतिकारणीभूतः? अथवान्य-एव कश्चन प्रोक्षणादिजन्य व्रीह्यादिनिष्ठइवेहापीष्यते? स्मृति-कारणी भूतः नकथमपि वक्तुंशक्यः यतो वासनारूपः स्मृतिहेतुः संस्कारः स्मरणेन फलेनकल्प्यमान शरीरोवर्णान्तरेणार्थं बोधजननेसहकारीति कल्पना कथं कारमङ्गीकियताम्? स्वभावभेदस्यायुक्तत्वात्। योहि संस्कारो यद्विषयकानुभवेनजन्यते, सः स्वजनकस्यानुभवस्य विषये धियमादधातीति तस्य स्वभावः। तद् विपरीत कल्पनेऽन्य-विषयकानुभवेन लब्धजन्मा संस्कारः सविषयान्तरेऽपि धियमुत्पा-दयेत। अथच

पूर्वानुभूत वर्णाहित संस्कारोऽवश्यमेव पूर्ववर्णान् स्मारयि-ष्यति न वर्णान्तरेण बोधे सहायकस्सन्नर्थंबोधयितुं—समर्थो भविष्यति।

तथा सति तु तदुक्तरीत्या—संस्कार सचिवेनान्तिमवर्णस्यबोधकत्वेऽर्थवत्त्रात्तस्य प्रातिपदकत्वेन सुबाद्युत्पत्तिर्दोषो वज्रलेपायितोऽत्रतिष्ठेत्। अन्योऽपि द्वितीयो विकल्पः कथन्तावत् स्वीक्रियताम् ? क्रमजन्मनां वर्णानामेकस्मिन् काले समवस्थानाऽसम्भवेन सम्भूयैकस्य संस्कारस्योत्पादनेऽसामर्थ्यात्। अत्रेदमपि समवधारणीयं प्रतिभाति यत् यथा—' दर्शपूर्वमासाभ्यां स्वर्गकामो यजेत्' इतिश्रुत्या स्वर्गफलाय सम्यक्प्रतिबोधितस्य यागस्याङ्गभूता आग्नेयादयः समिदादयो भिन्नकाल भाविनोऽपि अपूर्वद्वारा परमापूर्वं जनयित्वा सफला भवन्ति तद्येहाप्यवान्तरं संस्कार क्रमभाविनो वर्णा अपि जनयिष्यन्त्येव।

तेनैकः संस्कारः समुत्पत्स्यत इति कस्यचिदभिप्रायश्चेत् तदपि स्थवीयम्मनोरथमात्रमेवावगन्तव्यम् यतः श्रुतीनां स्वतःप्रामाण्यात् तासां प्रामाण्यस्य रिरक्षयिषयाभिन्न-भिन्नकालाधिष्ठितानां यागानांमङ्गभूतानामवान्तराऽपूर्वं जननद्वारा परमाऽपूर्वजनकत्वेऽपीहैकगोचरानुभवादेवार्थप्रतीत्युपपत्तेरप्रमाणिकानां नानाविध-संस्काराणां कल्पनाविनिगमकाभावात् खपुष्पायि—तैव स्यात्। तथाचैकैकवर्णानुभवजन्य संस्कारा-प्रतिवर्ण विषया अन्यमेकं संस्कार-मुत्पादयितुन्नेष्टा : समर्था वा यतः संस्कारान्तरोत्पादमन्तरापि—स्मृति जनकतयातेषांलब्धावकाशत्वात्।

न वा स्मृति समारूढा वर्णा अर्थबोधं सुतरां—जनयिष्यन्तीति वक्तुं शक्यते—अनुभवक्रमेणैव—स्मृतिरित्येतन्नियमाभावात् तत्र पूर्वानुभूतस्य पश्चात्परानुभूतस्य पूर्वं स्मृति दर्शनाञ्च । तस्मादेवायं स्फोटो नित्यो निरवयवः शब्द ब्रह्मात्मकः सकल जगदुपादानतया सुव्यस्थितो भगवताभर्तृहरिणाऽपि प्रत्यपादि यथा—

अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति

इत्थं शब्द ब्रह्मणः सकाशादेव निखिलजगत्प्रक्रियापि—विमृश्यतेऽत्र-प्रसंगतः।

———

# सारांशः

निखिलोऽपि प्रपञ्चः परमेश्वरस्य परमलीलैवेति सर्वे समानन्ति। तत्र न कोऽपि पदार्थः निष्प्रयोजनः, लोके सामान्योऽपिजनः न निष्प्रयोजनः कदाचिदपि कार्यंकारी भवति, तर्हि परमेश्वरकृतं किमपि वस्तु कथं महत्त्वन्नभजेत् ? वस्तुतो मर्यादा पुरुषोत्तमो लीला पुरुषोत्तमो वा भगवान् नारायणः सकललोकहिताय धर्मरक्षायैसदा साधूनां-परित्राणाय चावतरतीति शास्त्रेषु गीतायाञ्चापि सम्यक् प्रतिपादितमेव। मानवजीवनस्य चतुर्विध पुरुषार्थेषु धर्मार्थकाममोक्षेषु यथाविधि व्यहारप्रवर्तने सत्कर्मसम्पादने सदनुष्ठाने च वेदेषु पुराणेषु सर्वोपनिषत्सु धर्मशास्त्रेषु रामायणमहाभारतादिषु च नैक विधा उपायाः समुपदिष्टाः फलवन्तः, वेदांगेषु षड्दर्शनेषु चापि सर्वविध पदार्थविवेचनप्रक्रिया अपिनैकविधया विमर्शिताः सर्वत्र यथाकालं यथायोगं यथाधिकारि यथावर्णाश्रमं नियमोपनियमानाधारीकृत्य तत्तच्छास्त्रेषु विस्तरेण संक्षेपेण च सरसः सरलश्चानायास साध्योऽपि न कश्चनैकः पन्था अपि प्रकाशितः। तत्तच्छास्त्र वासनवतामपि यथाशास्त्रं यथाशक्यं यथाबुद्धि महान् प्रयासोऽपि सरलः सामयिकः साध्यश्च निरूपितः सर्वजनहिताय, तदनुसारमेव समग्रशास्त्रापकारके वेदांगप्रमुखे व्याकरणे कश्चनैवं विधो वर्णनीयः प्रशंसनीयः सामयिकैः शास्त्राध्यनाध्यापन शालिनामुपयोगिभूतः परमपदार्थः सत्यं विमर्श पदवोमारोहति। स च तदीय परमसिद्धान्तभूतः पारमार्थिको दर्शनभूमिर्न तिरोहितश्शास्त्रज्ञानाम्। यद्धि तार्किकैः सांख्यैः योगिभिर्मीमांसकैश्च स्वस्वशास्त्रतत्त्वनिरूपणप्रसंगे बहुधा समालोचितः प्रख्यातः सत्ताया अभावश्च युक्तिप्रमाणाभ्यां प्रदर्शितः। स हि प्रस्तुतो वर्णनीयो मीमांस्यश्च विशेषरूपेण व्याकरणाध्ययनस्यानुबन्धचतुष्टये प्रयोजनरूपः स्फोटो मध्यमानादभिव्यंग्यः शब्दब्रह्मापरपर्याश्चर्चितव्य एव।

स्फोटविषयको विचारो मान्यैर्विद्वद्वरेण्यैः सर्वव्याकरणसिद्धान्तप्रतिपादकग्रन्थानुसारं सम्यक्तया बहुत्र कृत प्रायः। स्फोट-

निरूपण प्रक्रियास्समस्ता यथाशास्त्रमुपवर्णिता एव। तेन मदीयोऽयं तद् विषयको विचारो नैवापूर्वो वक्तुं शक्यः। परं विदुषां प्रकाशितानां प्रदर्शितानां सिद्धान्तानां नानाविधप्रक्रियाणां यथा बुद्धिपराणां यथाबुद्धि सादरमध्ययनेन तदीयानेव पथः स्वीकृत्य यथाशक्यं सरलतया विलक्षणतापरो विमर्शः स्फोटविषयकः कश्चनावतार्यते। तत्र शास्त्रान्तरप्रक्रियया खण्डन मण्डनविधस्फोटनिरूपणप्रक्रिया चापिप्रायो नैकविधा, इत्येतत्सर्वमत्रावश्यं विचारणीयविषयो विद्यते। स्फोटविषयक विचारो न केवलं शाब्दिकैरेव व्याकरणे विहितो वर्तते किन्तु तद् विषये वेदेषु-उपनिषत्सु विभिन्नशाक्ततन्त्रागमेष्वापि च विचारो लभ्यत एव, येन शाब्दिकसिद्धान्ते स्फोटविषयको मीमांसाविषयः सर्वथाऽतिप्राचीनः शाश्वतः परमसिद्धान्तभूतः सदाऽऽदरणीयः सदाऽनुसन्धेयश्चास्ति। सर्वथा व्याकरणशास्त्रस्य शब्दानुशासनाभिधेयस्य प्रक्रियापरकतया शब्दसाधुत्वान्वाख्यायकत्वेऽपि परिणामतश्शब्दब्रह्मज्ञानप्रयोजकता नैव तस्यापलपितुं शक्या, समग्रशास्त्र प्रक्रिया: खलु काल्पनिका एवाखण्डवाक्यस्फोटस्य पारमार्थिकस्यावबोधाय नात्र संशयः। तस्मादेव शाब्दिकैः कार्यवादः नित्यवादश्चोभावपि स्वीकृतौ व्याकरणशास्त्रे। अयञ्च मीमांस्यमानः स्फोटः शब्दब्रह्माऽपरपर्यायः शास्त्रान्तराद्भूतपरम सिद्धान्ततयोपास्यमान ब्रह्मणा सहैक्यं भजते न वा? जडभूतश्चेतनो वा? आत्म भिन्नोऽभिन्नो वा? तदीयसाक्षात्कारः कथं कर्तुं शक्यः? तदुपासनयाऽऽराधनया किमिष्टं सिद्ध्यति? कथञ्च तज्ज्ञानाय प्रवृत्तिः? समेषामावस्यकी? यदि तदेव शब्दब्रह्म जगत्प्रतिकारणन्तर्हितद् वर्णनप्रक्रिया का? कथञ्च ततो जगत्सृष्टिः? कथञ्चान्यशास्त्रैश्शास्त्रजैश्चसिद्धान्तैः सह सामञ्जस्यम्? व्याकरणशास्त्रप्रवर्तकाचार्याणां सूत्र-वार्तिक-भाष्याद्यभिमत का वाचो युक्तिः स्फोट निरूपण परेति? शाब्दिक सिद्धान्ते शब्दब्रह्म स्वरूपं शब्दब्रह्मणः सकाशादेव जग्रतः प्रक्रिया शब्दब्रह्म सायुज्यलाभः मोक्षाधिगमश्चेत्यत्सर्वं यथामति संगृह्य प्रस्तुते स्फोटमीमांसा प्रबन्धे तथाविध प्रक्रिययोपपादयितुंप्रयत्नो विधास्यते येनावश्यं व्याकरणाध्ययनाध्यापन पराणां विदुषां छात्राणाञ्चकृते तोषकरोऽकिञ्चित् करः प्रयासः समेषां विदुषां सेवापरश्च स्यात्। कियन्तस्य

स्फोटस्य महत्त्वम् ? शास्त्रव्यवहारे लोकव्यवहारे चापि कथं संगमनीयः स्फोटः ? कतिविधः कथञ्चनानात्वम् वास्तविकत्वञ्च क्वास्ति ? ध्वनिपदार्थेन सह कीदृशस्सम्बन्धः ? कथञ्च तेन ध्वनिना सामञ्जस्यम् ? तं विना कथन्न लोक-शास्त्रव्यवहारसिद्धिः ? कथञ्चास्य शास्त्रान्तरेषु प्रभावः ? योगिभिः सामान्य जनैश्चापि कथमवधारणीयः समुपास्यश्च स्यादित्येदखिल-तत्त्वजातं स्फोटमीमांसाप्रबन्धे ज्ञातव्यमिति। अमूमेव पदार्थं स्फोटनाम्ना, ध्वनिनाम्ना, शब्दब्रह्मात्मनावा कथं वर्णयन्तिशास्त्रज्ञाः ? तेषु परस्परं विशेषाऽविशेष तत्त्वं किन्तावदत्र सिद्धयति ? अन्यैरपि शास्त्रान्तरवासनावद्भिः तथोक्तविधतत्त्वं कथं स्वीक्रियते ? सर्वशास्त्रोपकारकतयाचास्य प्रख्यापनमप्यन्यैश्शास्त्रज्ञैः स्वीकृतं न वेत्यादिकं वस्तुतत्त्वं मीमांसा विषयः।

प्रसंगतश्च।त्रव्याकरणशास्त्रे वर्ण समाम्नायमूलकत्वेन पाणिनीयव्याकरणे स्वरव्यञ्जनवर्णानामपि सौम्य-सौर-आग्नेय भेदः पुंलिगस्त्रीलिंग नपुंसकतादि व्यवस्था स्वरदीर्घादि वर्णानां यौगिकदृष्ट्या पिंगलादिषु नाडिषूपस्थितिः, व्यापकत्वं व्याप्यत्वं तेभ्यस्त्रिंशत्कलानामुत्पत्तिः तदनुसारञ्चापि विभागा अपि प्रपञ्चसारादौ वर्णिता शाब्दिकसिद्धान्ते; यौगिके पथिचापि तत्तद्रूपेण कथं समन्वयः सुसामञ्जस्यम्बा सुसंगच्छते ? सर्वमेतदपि मीमांसाविषय एवास्ति। अयञ्चस्फोट ओंकारस्य प्रणवस्य कथमक्षरत्वं समर्थयति कथम्वास्फोटे प्रणवस्यतस्य बीजरूपत्वं परस्परञ्चतयोः कथं कीदृशश्च सम्बन्धः ? ऐक्यम्वा भेदो वा परायाः पश्यन्त्याश्च वाचः परस्यःब्रह्मशक्त्या सह कथं सामञ्जस्य कथम्वा तादात्म्यता ? कश्च पदार्थः शब्दशास्त्रेऽभि व्यञ्जकःकश्चाभिव्यंग्यः तथाविध सम्बन्धाङ्गीकारेण को लाभः ? कथंञ्च शब्द ब्रह्मैव सर्वथा सर्वजगदुपादानम् ? शब्दब्रह्मसामञ्जस्यं शैवागम-वैष्णवागमशाक्तागम सिद्धान्तैः च सहापि। किं बहुना समस्त वेदवेदांगादि षड्दर्शनशमते-धर्मशास्त्राणि सर्वा कला सर्वा विधा तस्मोदेवोकारात्मक स्फोटाऽपरपर्यायात् शब्दब्रह्मणः सकाशादेवेत्यपि पारमार्थिक दृष्टिःशास्त्रयुक्ति प्रमाणोभयप्रयुक्तो शाब्दिकैरङ्गीकृता न विरुद्धा। सर्वंखलु विमर्शितव्यं तत्त्वं स्फोटमीमांसायाँ स्पष्टी भविष्यतीत्यवधार्यं विरम्यतेऽत्र विचारतः।

# स्फोटवाद विमर्शः

समग्रशास्त्र सद्धाम वाङ्मलानां चिकित्सकम् ।
प्रार्थये वाङ्मयज्योतिः शब्दब्रह्म सनातनम् ॥

यो वेदवदनं सदनं हि सम्यग्
ब्राह्म्या सवेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथमेतदधीत्य विद्वान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥

इति महत्या श्रुत्या शब्दशास्त्रस्य किन्महत्त्वपूर्णं स्थानं, कीदृशश्चकथमुपयोग ? शास्त्रव्यवहारे, समग्रशास्त्रार्थसन्धारणतयोपकारकत्वञ्चान्यतमम्म हत्त्वमादधीतशास्त्रज्ञः । अस्य शब्दानुशासनस्य अस्यस्योपकारकतया कथं विधो विमर्शः प्रस्तोतव्य ? इति तत्र भवतां विपश्चित् पश्चिमानां काऽवधारणा वरीवर्ति कोऽभिनिवेशश्चेति ? विचारणायामिदमवश्यमवधारणीयं प्रतिभाति यत् कथमप्यसंदिग्धे विषये विचारः प्रवर्तितुं नार्हति, संदिग्धे न्यायः प्रवर्तते इति नयेन न कोऽपि सचेता मरीचिमालिनिभगवति भास्करेऽम्बरतलावलम्बिनि पुरतः प्रकाशमानं घट पटादिकं वस्तु जातं स्फुटमाकलयन्नपि जिज्ञासते किमिति ? तथैव प्रयोजनरहिते विषये न कश्चिदपि ब्रूते किमिति ? यथा करटस्यदन्ता भवन्ति न वा ? तस्मादेव सन्दिग्धे सप्रयोजने च वस्तूनि विस्तरतो विचारारम्भः सर्ववादिसिद्ध सिद्धान्तः । अतोऽभि मतार्थस्यबुबोधयिषया शब्दान् लोकः प्रयुङ्क्ते, ते च खलु शब्दाः श्रोत्रेन्द्रियगोचराः (श्रावण प्रत्यक्षविषयतामापन्नाः) गृहीतशक्तिकाःशाब्दबोधकारणसामग्री कलिता एवार्थान् बोधयन्ति तथा श्रवणेन्द्रियेणैव तत्स्वरूप ग्रहणात् स्फोटाख्य शब्दतत्त्वविमर्शस्य न किञ्चदपि फलमुत्पश्यामि ।

शब्द प्रयोगस्यार्थावबोध मात्र फलकतया तस्य श्रोत्रेन्द्रियेणानन्तर-मुपपन्नतया तद् विचार: का दन्तपरीक्षेव निष्फलताम्भजते । अत-एव हि भामतीकारेण श्री वाचस्पतिमिश्रेण प्रोक्तमपिसाधु-यदसन्दिग्ध-प्रयोजनञ्च न तत्प्रेक्षावत् प्रतिपित्सागोचर इति तथा चात्रसंशय प्रयोजनयोरभावात् तद् विचारो भवितुन्नर्हतीति सत्यम् । यद्यप्यसन्दि-ग्धं निष्प्रयोजनञ्चवस्तु न जिज्ञासाविषय तथापि सामान्यतया ज्ञातेऽपि विषये विशेषरूपेणाज्ञातया विशेष विषयिणी जिज्ञासां को निवार-यितुमीशः संमर्थः। यथा मन्दान्धकारे उच्चैस्तरत्वेन रूपेण सामान्य-तया ज्ञातेऽपि पदार्थे स्थाणुर्वा पुरुषो वेति विशेष रूपेणावगन्तुं प्रयत्न: प्रवर्तते तथा सति तद्धर्मावच्छिन्नविषयकं ज्ञानं तद्धर्मावच्छिन्न-विषयिणीं जिज्ञासामुपशमयति न त्वन्यविधां जिज्ञासाम् अन्यथा प्रमेयत्वेन ज्ञाते सर्वस्मिन् पदार्थे विशेषजिज्ञासानुदयात् सर्वशास्त्राणा-मनारम्भः सर्वेषाञ्च सार्वज्ञ्यं प्रसज्येत् । वस्तुतो विरुद्धाविप्रतिपत्तिरूपा विप्रतिपत्तिरपि संशयस्य कारणम्भवति नात्रसन्देहः, तेनैव न्यायसूत्रा-मिदमत्रावधारयीयं विद्यते एव तथाहिसमानानेकधर्मोपपत्तेर्विप्रतिपत्ते-रूपलब्ध्यनुपलब्ध्यव्यवस्थाश्चविशेषापेक्षो विमर्शः संशय इति, अतः स्फोट विषये संशयबीजरूपाविप्रतिपत्तिः प्रतीत पदार्थको लोके ध्वनिः शब्दइत्युच्यते, "शब्दं कुरुशब्दमाकार्षीः शब्दाकार्ययं माणवकः इति ध्वनिंकुर्वन्नेवमुच्यते" इति महाभाष्येप्यूपशाहि्नके प्रोक्तम् तपरस्त-त्कालस्येतिसूत्रे तु स्फोटः शब्दध्वनिः शब्द गुण इत्युक्तम् तदभिप्रायस्तु ध्वनिःशब्दोपकारको व्यञ्जकतया, न स्वयंशब्द इति, एवंरूपेण विरुद्धार्थं प्रतिपादनेन विप्रतिपत्तिमूलकः संशयोः निराबाधस्सम्यक्, तिष्ठत्येव, अथ चैकः शब्दः सम्यज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गेलोके च कामधुग् भवति" इति महाभाष्यवचनेनापि स स्फोटा-त्मकोहि शब्दो ज्ञातव्यो विमर्शितव्यश्चेति, अत आपामर सहृदयहृदया नुकारि प्रथिताचार चर्चा चर्च्यंतेऽपेदानी तद् यथा—व्यवहारस्तावद्-द्विविधः प्रवर्तते लौकिकश्चशास्त्रीयश्च । उभयविधोऽपि व्यवहारः शब्दमन्तराऽशक्य एव। अतश्शब्दाधीनो व्यवहारः सुनिश्चत एव। यद्यपि मूकानां वधिराणाञ्च सकलोऽपिव्यवहारः शब्दं विना ऽपिशब्दार्थंवोधमन्तरापि प्रचलति नात्र संशयलेशस्तथापि तेषमपि त्यक्तवाचामुच्चारणाभावेपिशब्दार्थाऽग्रहेऽपि सूक्ष्म वाय्वाघात-

जन्याभिमतोपांशु-अव्यक्त शब्द सत्त्वात् स्वनिष्ठ संस्कार समवायित्वाच्च तत्रापि शब्दाधीन एव व्यवहारः प्रवर्तमानः संगच्छते। चेष्टापि तत्र तत्र फलति वा। एवञ्च सकलव्यवहारसाधकः श्रोत्रेन्द्रियग्राह्यत्वसमानाधिकरणगुणत्वविशिष्टो हि शब्दो भवति। स च शब्दो द्विविधो वर्णात्मको ध्वन्यात्मकश्च। संस्कृत भाषादिरूपो वर्णात्मकः भेरीमृदङ्गादिजन्यो ध्वन्यात्मकः। यस्य शब्दस्य विषये विचारः प्रवर्तते स शब्दो नित्यो वा कार्यो वेति प्रसंगतो विमर्शपदवीमारोहति तस्मात्तस्य नित्यत्वानित्ये सम्यक्तया विमर्शितव्ये भवतः।

**शब्दस्यनित्यता विचारः**

शब्दस्य नित्यत्वमेवं शाब्दिकैरङ्गीक्रियते मीमांसकैश्चापिन्यायशास्त्रकारैस्तु तस्यानित्यत्वमेव। तेनाऽशाब्दिकमतापेक्ष शब्दानित्यत्वविषयकविचारः क्रियते तद् यथा—शब्दोऽनित्यः कारणवत्वात् संयोगविभागजन्यत्वान्द्रियजन्य प्रत्यक्षविषयत्वाच्च, तथानुमान प्रयोग इत्थमपि—शब्दोऽनित्यो वहिरिन्द्रियग्राह्य प्रत्यक्षविषयत्वात् रूपादिवत्। यद्यत्रोच्यते येनेन्द्रियेण यद्गृह्यतेतद् गताजातिस्तद् भावश्च तेनैवेन्द्रियेण गृह्यत इति नियमात् कत्वगत्वादीनामपि श्रोत्रेन्द्रियजन्य प्रत्यक्षविषयत्वेनानित्यत्वाभाववत्यां कत्त्रादि जातौ श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वहेतोः सत्त्वात् तस्य हेतोर्व्यभिचरितत्वेन न तेन शब्दानित्यत्व सिद्धिश्शक्यावक्तुमिति, तत्रेदं हि वोध्यते यत् कण्ठताल्वादि संयोगो हि व्यञ्जकशब्दस्योत्पादकः, अभिव्यञ्जकस्याभिव्यंग्यदेशीय नियमः, यथाऽभिव्यञ्जकोदीपो घट देशीयस्सन् घटमभिव्यनक्ति, कण्ठताल्वादिषु वायु संयोगोऽयं कण्ठताल्वादिदेशे वर्तते, अभिव्यंग्श्च शब्दः शब्दशब्दजन्यायेन श्रोतुः कर्ण विवरे वर्तते "इत्यभिव्यञ्जकस्य कण्ठताल्वादिसंयोगस्याभिव्यंग्यत्वेनाभिमतस्यशब्दस्य च विभिन्न देशीयत्वाच्छब्दाभिव्यञ्जकत्वं कण्ठताल्वादिषु वायुसंयोगस्य न संघटते किन्तु तदुत्पादकत्वमेव, तथाचापरमपि तथ्यमित्थं ज्ञाप्यते यत् तीव्रं सुखं मन्दसुखं तीव्रोऽश्वो मन्दोऽश्वः- इत्यादिवत्तीव्रं पदं मन्दं पदमिति कृतकवदुपचारादपि शब्दस्य नित्यत्वं सिद्धयति। भेरी शब्दस्तन्त्री शब्दं तिरस्करोति तत्र तत्र शब्द श्रवणानन्तरमयं भेरी शब्दः अयं तन्त्री शब्दः तन्त्रीशब्दस्तन्त्री

सम्बन्धी भेरी शब्दो भेरी सम्बन्धीत्यनुमीयते, तेनशब्दस्य भेदोऽवश्यं-वाच्य एव, नित्यत्वे तत्रस्य भेदो न सिद्धयति। अतस्तस्यशब्दस्यानित्य-त्व सिद्धिः सुस्थिता। नैतावताऽत्यं किन्तु क्रिया साधर्म्यादपि शब्द-स्यानित्यत्वम्, क्रिया यथाक्षणस्थायिनी तथा शब्दोऽपि। शब्दस्य ध्वंसे सति केनापि लिंगेन शब्दस्यानुभवाभावात्। नहि शब्दसत्तायां-तस्याज्ञानं वक्तुं शक्यते। अत्र यत् शब्दस्यानित्यत्वे तु गुरुशिष्यो-रध्यापन व्यवस्था न सम्भवनीति शब्दनित्यत्ववादिभि: नेत्थं शक्यम् ;यतोऽध्ययनं नाम गुरुणा स्वशब्दस्य शिष्ये प्रापणं तद्धि शब्दस्य नित्यतायामेवसम्भवमिति, नहि क्षणिक: पदार्थोऽत्र नेतुं शक्य: इत्येतत्सर्वं शब्दनित्यतावादिभिर्न वक्तुं शक्यते यतो तथा शब्दस्या-नेकत्वेऽपि नृत्यमधीते नृत्यमनेन कृतं तदनेनैकचरणेन कृतमिति नृत्य क्रियाभेदेऽपि अभेदात्रगाहि यत्तदो: प्रयोगात् यदनित्येऽपि (शब्दानित्य-त्वेऽपि) तदध्ययनमुपपद्यत एव।

यद्यप्यत्राध्यापनं नाम गुरु कर्तृक शिष्योद्देश्यक शब्द कर्मकं दानम् (शब्दप्रदानम्वा) इति गोदानवच्छवदस्य स्थैर्यं समुचितं प्रतिभात्येव तथा च पञ्चकृत्वो रूपंपश्यतीत्यत्र स्थिरस्य रूपस्याभ्या-सवच्छब्दस्याभ्यासेष्वपि तस्यस्थैर्यमपेक्षितम्। तावत्कालं स्थिरञ्चैनं क: पश्चान्नाशयिष्यतीति न्यायेन शब्दस्य नित्यत्वसाधनमपि तुच्छमेव भाति। यत: अनित्याया नृत्यक्रियाया अध्यनाभ्यासवच्छब्द-स्यानित्यत्वेऽपिऽध्ययनाध्यापनाभ्यासादीनामुपपत्ते:। एवं शब्दस्या-नित्यत्वेऽपि घट पदे उच्चरिते घकारश्रावणप्रत्यक्षजन्य संस्कारेणा-व्यवहितोत्तरत्व सम्बन्धेनाकारे तत्प्रत्यक्षकालेऽपि भानं भवति। ततोघकार विशिष्टाकार विषयक प्रत्यक्षजन्य संस्कारजन्य स्मरणा-त्यज्ञानलक्षणासन्निकर्षेण टकारे तत्प्रत्यक्षकाले घकार विशिष्टा-कारस्य भानात् तथा घट विषयकप्रत्यक्षजन्य संस्कारजन्य स्मरणा-त्मकज्ञानलक्षणया श्रावणप्रत्यक्षकाले अकारे घट इत्यस्य भानात् घटविषयक प्रत्यक्षाद्घटत्वावच्छिन्न विषयकोपस्थितेर्घटत्वावच्छिन्न निरूपित घट पद निष्ठवृत्तिज्ञानाधीना "या" घटत्वावच्छिन्नविषयक-शब्द बोधापत्ति:, तथा घटमानयेति वाक्यस्यापि प्रत्यक्षापत्त्या घट-निष्ठकर्मतानिरूपकानयनविषयकशब्दबोधोऽपिजायते। अथवा घट

इत्युच्चरिते अकारोच्चारणजनिततत्प्रत्यक्षकालेऽव्यवहितोत्तरत्वसम्बन्धेनघकारविषयक प्रत्यक्षजन्य संस्कारेण तथाऽकारप्रत्यक्षजन्य संस्कारेण टकार प्रत्यक्षजन्य संस्कारेण चाकार प्रत्यक्षेण च घकारकम् टकाराकारविषयक समूहालम्बनात्मक स्मरणेन वृत्तिज्ञानद्वारा घटत्वावच्छिन्न विषयकोपस्थितेस्तद् विषयक शाब्दबोधोपपत्तिः। एवमेवघटमानयेति वाक्यस्थलेऽपिघकाराद्यानयन घटकनकाराकारान्त विषयकप्रत्यक्षजन्यसंस्कारप्रत्यक्षैः घकारादिनकाराकारान्त विषयकसमूहालम्बनात्मक स्मरणेन तत्तत्पदनिष्ठ वृत्तिज्ञानाधीनासत्ति सम्पन्न घटत्वावच्छिन्न विषयकसमूहालम्बनात्मकोपस्थितेश्च घटनिष्ठकर्मता निरूपकानयन विषयक शाब्दबोधः। एवं सर्वेभ्यः पदेभ्यः सर्वेभ्योवाक्येभ्यश्च खलेकपोतन्यायेन राजपुरप्रवेशन्यायेन च शाब्दबोधा उपपादनीया भवन्ति।

अत्राव्यवहितोत्तरत्व सम्बन्धश्चस्वाधिकरणक्षणध्वंसाधिकरण क्षण ध्वंसानधिकरणवृत्तित्वे सति स्वाधिकरणक्षण ध्वंसाधिकरणक्षण ध्वंसानधिकरण वृत्तित्वे घकाराधिकरणक्षण ध्वंसाधिकरण वृत्तित्वञ्चास्तीतिघकाराव्यवहितोत्तरत्व तत्र बोध्यम् टकारे घकारक्षण ध्वंसाधिकरणक्षणध्वंसाधिकरणवृत्तित्वस्य सत्त्वात् घकारक्षणध्वंसाधिकरणवृत्तित्वेऽपि न घकाराव्यवहितोत्तरत्वम्। नीनघट इत्यत्र त्र घटकाकारे घकाराधिकरणक्षण ध्वंसाधिकरणक्षणध्वंसानधिकरणवृत्तित्वस्यसत्वेऽपिघकारक्षणध्वंसाधिकरणवृत्तित्वाभावान्न घकाराव्यवहितोत्तरत्वं ल घटकाकारे इति विमृष्टमनित्यत्वं शब्दस्य गुरुचरणानामाशयः।

**शब्दस्यानित्यत्वविषये सामान्य प्रक्रिया (सरला प्रक्रिया)**

तथाहि नैयायिकाः शब्दस्यानित्यताविषये ब्रुवते यत् प्रथमक्षणे वर्ण उत्पद्यते, द्वितीयक्षणे तिष्ठति, तृतीयक्षणे पूर्ववर्णो नश्यति, द्वितीयोवर्णस्तिष्ठति तत्रैव वर्णान्तरमुत्पद्यते द्वितीयश्चनाशमुपैति तत्रेदमाशक्यते यत् यदेवंविधस्यशब्दस्यानित्यस्यश्रवणेन्द्रियेण प्रत्यक्षत्वं कथम्भवति ? यतो भेर्यादि देशे शब्दोजायते श्रोत्रन्तु पुरुष देशेऽस्ति तदुपरि समाधानमिदमुच्यतेतैर्यत् भेरी देशे जातः शब्दो वीचितरंगन्यायेन, कदम्बमकुलन्यायेन वा सन्निहितं शब्दान्तरमा-

रभते, स च शब्दः शाब्दान्तरमिति क्रमेण श्रोत्रदेशे जातः अन्त्यः शब्दः श्रोत्रेण गृह्यते नाद्यो न वा मध्यमः भेरी शब्दोमयाश्रुत इति मतिस्तु भ्रान्तिरेव, तथाहि शब्दोऽनित्यः सामान्यवत्वेसति अस्मदादि बाह्येन्द्रियग्राह्यत्वात् पटवत्। यथा घटोमठो व घटत्व जातिमान् मठत्व जातिमान् बाह्येन्द्रियेणचक्षुषागृह्यते तस्मादनित्यः तथैव-शब्दोऽपि शब्दत्वजातिमान् बाह्येन्द्रियेण गृह्यते अतः सोऽनित्य इति-तार्किकाः प्रतिपादयन्ति। न्यायमूलानुगामिनो वैशेषिकास्तु शब्द-स्यानित्यत्वमित्थं समर्थयन्ति यत् गुणस्य सतोऽपवर्गकर्मभिः साधर्म्यम्, सतो नित्यस्यशब्दस्य लिङ्गाभावात् शब्दनित्यत्व साधक-प्रमाणाभावादनित्यत्वम् यत्वसौनोपपद्यते तदैतस्य सत्वे न किञ्चिदपि प्रमाणमस्ति, किञ्च चैत्रो वक्ति मैत्रोवक्ति "इति कुड्यादिनाऽऽवृतोऽपि चैत्रादि, वचनेनानुमीयते, कुतस्तद्वचनस्य भिन्नरूपत्वात्, शब्दस्य नित्यत्वे तस्यैकत्वादयं चैत्रशब्दः, अयं मैत्रशब्दः" इत्याकारिका भिन्ना भिन्नानुमितिर्न स्यात्। तस्मादेव शब्दोऽनित्योऽनेकश्चेति वैशेषिकाः। मीमांसकाः, वेदान्तिनः सांख्याः योगिनश्च शब्दानां नित्यत्वं संगिरन्ते, गौरित्यत्र वर्णा एव शब्दास्तेषामेवार्थेन शक्तिरूपः सम्बन्धः। न च स्फोटात्मकः शब्दः कुतः ? वर्णत्रयातिरिक्तस्य बुद्धावप्रतिभासमा-नत्वेन तदभावात्। अर्थ प्रतीतिरूपकार्येण स्फोटस्य सिद्धिर्नार्हति कथमितिचेत् अन्योन्याश्रयदोषप्रसंगात् अन्योन्याश्रयाणिकार्याणि न प्रकल्पन्ते न नौर्नाविबद्धा इतरत्राणाय कल्पते। यतः स्फोटरूप-कारणसिद्धौ-अर्थप्रतीतिरूपकार्यसिद्धिः, अर्थ प्रतीतिरूपकार्यसिद्धौ स्फोटावगतिरित्यन्योन्याश्रयः सुव्यक्त एव, तस्मान्नास्ति स्फोटाख्यः कश्चनवर्णातिरिक्तोऽन्यपदार्थ इति मीमांसका भवन्ति।

**वैयाकरणमतेन शब्दनित्यत्व साधनप्रक्रिया**

अत्र नित्यत्ववादिनां वैयाकरणानां शब्दनित्यत्व साधनप्रक्रिया प्रथमं सामान्यतयैवोच्यते यथा—ते स्फोटवादिनः शाब्दिकाः शब्दानित्य-त्ववादिनां नैयायिकानां मतेऽनन्तवर्णकल्पनं तद्द्वारा तद्ध्वंसप्राग-भावादिकल्पनं, पदादीनां बोधकत्वसिद्धये तत्प्रयोजनकस्मृतिस्वीकारे च महद्गौरवमाशङ्कन्ते, एवं मीमांसकानां मते वर्णानां विभुत्व-नित्यत्वस्वीकारे यद्यप्यनन्तवर्णतद्ध्वंसप्रागभावानामकल्पनायां

वर्णानित्यत्ववादिनामपेक्षयालाघवं वर्तते, तथापि नवस्वराणां त्रयस्त्रिशद्व्यञ्जनानां विसर्गादीनाञ्च नित्यानां स्वीकारेण तद्व्यञ्जकानां ध्वनीनाम् क्रमेणाभिव्यक्तिमता प्रत्येकं वर्णेनार्थस्याबोधात् सकलोच्चारणानन्तरं बोधदर्शनात् संहृत्य कारितोपपत्तये तत्प्रयोजकभावनाख्यसंस्कारस्मृतिकल्पने च गौरवात् सर्वानुभवानुगतपदवाक्यादीनां मिथ्यात्व कल्पनस्यानुचितत्वात् तेषां मीमांसकानां मतमपि न समीचीनं प्रतिभाति । तस्मादत्वकत्वादि धर्मवन्तो वर्णरूपाध्वनय एवार्थस्य प्रत्यायकं ध्वनिरूपरूपितं कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति, तदेव शब्दब्रह्मस्फोटः इत्युच्यते । स एव स्फोटः तत्तदर्थनिरूपित तत्तच्छक्तिमान् कत्वादिविशिष्ट वर्णातिरिक्तः पूर्वंपूर्वंवर्णानुभव सहकरितान्त्यवर्णानुभवव्यंग्योऽर्थप्रत्यायकः शब्दः। तत्तदर्थनिष्ठ विषयतानिरूपक शक्तिमत्त्वं स्फोटत्वम् वृत्याश्रयः शब्दः, प्रत्येकं वर्णा भवितुं नार्हन्ति वर्णानामुच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् द्वितीयवर्णोच्चारणवैयर्थ्यात् प्रथमेनैकेन वर्णेनैवार्थबोधनाच्च द्वितीयवर्णोच्चारणस्यानिष्प्रयोजनत्वाच्च । अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात् क्षणात्मककालस्य प्रत्यक्षायोग्यत्वेन तदवाच्छिन्न वर्णस्यापि अप्रत्यक्षत्वात् । इकोयणचोत्यादौ तस्मिन्निति परिभाषोपस्कृत वाक्यार्थेऽयं पूर्वः, अयं परः इति नष्टस्य प्रत्यक्षविषयेइदं शब्देन पौर्वापर्यव्यवहाराऽयोग्यत्वंच्चेतिमंजूषाकारैः प्रतिपादितत्वात् ।

**तार्किकाभिमतशब्दानित्यत्व निरासः**

यद्युच्यते तार्किकैः वर्णानामनित्यत्वेऽपि पूर्वंपूर्वंवर्णवत्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यते इति पदस्य प्रत्यक्षत्वाच्छाब्दबोधः सम्पद्यते । यद्वा पूर्वंपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेनचरमवर्णं प्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न प्रत्यक्षानुपपत्तिः; यद्वा पूर्वंपूर्वंवर्णानुभवजन्य संस्कारसध्रीचीन चरमवर्णनुभवात् शब्दबोधः इति तदपि न रमणीयं प्रतिभाति, यतः प्रथमे नष्टविद्यमानयोः पौर्वापर्यंस्यवक्तुमशक्यत्वेनाऽयं पूर्वः अयं परः "इत्यभिलापासम्भवेनाव्यवहितोत्तरत्वसम्बन्धाऽयोगात् । नष्ट विद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्यवक्तुमशक्यत्वाच्च । द्वितीये—शब्दजशब्दन्यायेन

पद प्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयस्य ग्रहणानुपपत्तेः। अविद्यमाने आश्रयत्वाङ्गीकारे नष्टोघटो जलवान्-इत्यादिषुनित्यत्वापत्तेः। तृतीये—येनक्रमेणानुभवस्तेनैव क्रमेण तत्सं-स्कारस्थितिरित्यत्र विनिगमकाभावात् सरोरसोनदीदीनइत्यादौ विपरीत संस्कारोद्बोधेन प्रत्येकमन्यार्थंप्रत्यायपत्तेश्चेत्यादिकं प्रत्युत्तरितमपि। उत्पत्तिविनाशवद् वर्णसमुदायरूपपदस्य मनुष्या-दिवद् भेदे एक इन्द्र शब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेषु अङ्गं भवतीति भाष्यविरोधापत्तेश्च। किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैवहानिः येन तार्किका स्वाग्रहं त्यजन्तु नाम। अत-एवोक्तं भगवता भर्तृहरिणात्र अशब्दो यदि वाक्यार्थः पदार्थोऽपितदा-भवेत्।

## वृत्याश्रयस्फोटात्मकशब्द निरूपणप्रक्रिया

तथाहि उक्तरित्यामहद्विप्रतिपत्तौ समायातायां को वा वृत्या-श्रयः; शब्दः; इति प्रश्ने स्फोटात्मकः शब्दः समुपस्थितो भवति। तस्मादत्र तत्स्वरूपं सुस्पष्टतया सप्रमाणमुच्यते। तत्र मूलाधारस्य पवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या विन्दु-रूपिणी परावागुच्यते। मूलाधारो मूलप्रकृत्यात्मिका कुण्डलिनी सा मध्यमादिभिर्वेष्टिता सर्पवत्तिष्ठति। मूलाधारादुत्थितः पवनो नाडी-द्वारेण कार्याणि करोति तदुक्तं संगीतरत्नाकरे :

> गुदालिंगान्तरेचक्रमाधाराख्यं चतुर्दलम्।
> अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपंकजे॥
> आधाराद् द्वयङ्गुलादूर्ध्वं मेहनाद् द्वयंगुलादधः।
> एकांगुलं देहमंध्यं तप्तजाम्बुनदप्रभम्॥[1] इत्यादि।

नाभिपर्यन्तमागच्छता तेन संस्कृतपवनेनाभिव्यक्ता मनोगोचरी भूता पश्यन्तीवागुच्यते, एतद्द्वयंवाग्ब्रह्मयोगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते, ततोहृदयपर्यन्तमाग-

---

१. संगीतरत्नाकरे—२।१२०।१४५

च्छता तेन वायुनाभिव्यक्तातत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्र-ग्रहणायोग्यत्वेन सूक्ष्मा जयादौबुद्धि निर्ग्राह्य मध्यमावागुच्यते, तत आस्य पर्यन्तभागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य परावृत्य च तत्तस्थानेष्वभिव्यक्तापरश्रोत्रेणाभिग्राह्या वैखरी वागुच्यते। अतएवाह वाक्यपदीयकार :

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥
वैखर्या हि कृतानादः परश्रवणगोचरः ।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥

इत्थम् मध्यमावैखरीभ्यां युगपदेव नाद उत्पद्यते, तत्र मध्यमा-नादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः। वैखरी नादो ध्वनिः सकल-जनश्रोत्रग्राह्यो भेर्यादिनादवन्निरर्थकः। मध्यमानादश्च सूक्ष्मतरः करापिधाने जयादौ च सूक्ष्मतरवायुर्व्यंग्यः शब्दब्रह्मरूपस्फोटव्यञ्ज-कश्च। तादृशमध्यमानाद व्यंग्यः शब्दः स्फोटात्मकोब्रह्मरूपो नित्य-श्चेति सर्वथासिद्धान्तसिद्धः। अतस्वस्य नित्यत्वविषयकपरिष्कारो-ऽपिविमृश्यते येनानित्यवादिनां सर्वोऽपि विकल्पो जडतामेति तद् यथा-अकारादयो वर्णा नित्याः पूर्वदिवसोच्चारिताकारेणाद्योच्चारिताकार-स्याभेद प्रत्यभिज्ञानात्। सोऽमकारइत्याकारात्। तावत्कालस्थिरञ्चैनं कः पश्चान्नाशायिष्यतीति न्यायेन नाशानुपपत्तौ नित्यत्वमभ्युपगम्यत एव।

इत्थमकार एक एव इकारोऽप्येक एवेति सर्वेवर्णाभिन्नजातीया एकैकत्वविशिष्टा एव। प्रत्येकमकारादयो वर्णाविभवः (व्यापकाः) तथा च नित्यवर्णसमूहः पदम् पदसमूहो वाक्यम् पदवाक्यानांवर्णाति-रिक्तत्वाभावात् यथैक इन्द्रशब्दः क्रतुशते प्रादुर्भूत इत्युक्तमेव पूर्वम् घट इत्यत्र घकाराव्यवहितोत्तरत्वमकारे घज्ञानाधिकरणक्षणोत्पत्तिक-ज्ञानविषयत्वम् कामुक समवेत कामिनी जिज्ञासास्थले कामिनीविषयक ज्ञानस्य प्रत्यक्षात्मकस्य स्मरणात्मकस्य वा विजातीय विषयकत्वा-भावेन ज्ञानस्य क्षणिकत्वेऽनियत दीर्घकालवृत्तित्वस्य कामिनी विषय-

कैकज्ञाने बाधितत्वात् तार्किकैस्तत्र कामिनीविषयक कामुक समवेत प्रत्यक्षाधारा स्मृतिधारा वाऽङ्गीक्रियते। तत्रानेकप्रत्यक्षस्मरणकल्पनायां गौरवाद् यावत् कामुक समवेत कामिनोविषयक ज्ञानकालमेकमेव ज्ञानमङ्गीकर्तव्यम्। तथा घट पद विषयक श्रावण प्रत्यक्षेऽपि घकरादिविषयक प्रत्यक्षाणि अकार प्रत्यक्षं यावत् स्थिराणि स्वीकर्तव्यानि। इत्थं घटपद प्रत्यक्षं वाक्यप्रत्यक्षञ्चसर्वं सुलभेव भवति। ज्ञानस्य क्षणिकत्वं शब्दस्य क्षणिकत्वञ्च नाभ्युपगन्तव्यम्, इदानीमुच्चरितावर्णा इदानीं जानामितिप्रत्ययापत्तेः। न वेत्थं कथञ्चिदप्याशंकनीयं यत् अकारादीनां नित्यत्वेककार उत्पन्नः ककारोनष्टः इति प्रतीतिः अथ चायमकार उदात्तः, अयमनुदात्तः, अयंस्वरित, अयमकारोमन्दः, अयमकरास्तारः, इत्यादयः प्रतीतयः कथमुपपद्येरन्? इति यतस्तत्रेत्थं समाधानम् यदकाराद्यभिव्यञ्जकः कण्ठताल्वादिषु वायुसंयोगः ध्वनिरपितत्र कण्ठताल्वादिषु वायु संयोगानामनित्यत्वादुत्पन्न विनष्टत्वात्तद् गतोत्पत्ति, स्वाश्रयाभिव्यंग्यत्वरूपपरम्परासम्बन्धेन वर्णेषु भासते। एवं तत्प्रतियोगिकध्वसश्च स्वप्रतियोगमभिव्यञ्जकत्व रूप परम्परासम्बन्धेनाकारादिषु भासते। तथैव हि उदातत्वानुदातत्त्वस्वरितत्त्वतारमन्दत्वादीन्यपि स्वाश्रयाभिव्यंग्यत्वसम्बन्धेनैवाकारादिषुवर्णेषु प्रतीतिगोचरतामुपयांति। इत्थम्परम्परा सम्बन्धेनोत्पत्यादोनामकारादिषु सत्ताऽङ्कारो'अकार उत्पन्न इत्यादि विशिष्ट प्रतीतयः कथं स्युरिति न शंकास्पदं भजन्ते यतस्वाश्रयाभिव्यंग्यत्वसम्बन्ध मूलकस्वरूपसम्बन्धेन अकाराद्यभिव्यञ्जक कण्ठताल्वादिगतवायुनिष्ठोत्पत्यादेः स्वरूप सम्बन्धेमाकादिषूपचारात् (आरोपात्)। तस्मादिह विशिष्टप्रतीतौ न शंकाकलंकपङ्कावकाशः। सोऽयं ककार इति प्रतीतिः कत्वावच्छिन्नजात्यैक विषयकत्वेन न साधितुमर्हा, तयोर्घटव्यक्तयोर्जात्यैक्येन सोऽयं घट इति प्रतीतेरस्वीकारात् एक व्यक्तिविषयकत्वे एव सोऽयं घट इति प्रतीतेरुदयादित्यादिआशयो गुरुवराणां प्राचार्यचराणां श्री रामवदनशुक्लमहोदयानां श्रीरामदेशिक सं० म० विद्यालयस्थानां प्रयागस्थानां कृपा प्रसादादधिगतः। अपि च सेयं दीपकलिका इत्यत्र व्यक्तिभिन्नत्वेऽपि जात्यैक्येन यथा प्रतीतिरुत्पद्यते तथैव सोयमकार इत्यत्र व्यक्तिभिन्नत्वेऽपि आकारसाम्येन जातिविषयिणो प्रतीतिरत्राप्यङ्गीक्रियतामिति कथमपि न

वक्तुं शक्यते । यतो दीप कलिकायां सेयमिति प्रतीतौ सत्यामऽपि कलिकाजातीयायामिति प्रतोतेरपि सम्भवात् । अकारविषयक प्रतीतौ तु द्वयोरकारयोर्भिन्नकालिकयोः सोयमकार इति प्रतीतिः, नतु तज्जातीयोऽयमिति प्रतीतिरपि तत्रानुभूयतेकथञ्चिदपि । यदिह सोऽयमकार-ध्वनिरित्यभेदप्रत्यभिज्ञयाध्वनि निष्ठोत्पत्यादीनामकारादिषु भानन्ना-भ्युपगम्यते चेत्तदाकण्ठताल्वादि संयोगनिष्ठोत्पत्यादीनामेव भानं स्वीकार्यं स्यादेवस्वाश्रयाभिव्यंग्यानिव्यंग्यत्वसम्बन्धेनेति निर्विवादः ।

## पूर्वपूर्ववर्णानुभवजन्यसंस्कारैर्वर्णसमूहात्मकपद प्रत्यक्ष चिन्तनम्

अपि चात्र पूर्व पूर्वं वर्णानुभवजन्य संस्कारैरन्तिमवर्णप्रत्यक्षकाले वर्णानां भानमिति समूहालम्बनात्मकं पदस्मरणं स्वीकृतमित्युच्यते तदपि स्थवीयमेव यतस्तस्तद्वर्णंप्रत्यक्षे जाते संस्कारै प्रत्यक्षक्रमेण च पूर्वंपूर्वं वर्णानामन्तिमवर्णप्रत्यक्षवेलायां स्मरणाऽसम्भवेन नदी शब्द-प्रयोगे दोनरूपेण पदभानात् दीनत्वावच्छिन्नविषयक प्रतीतिः स्यात् । यदि चात्र तदर्थं स्वाव्यवहितोत्तरत्वसम्बन्धेन संस्कारैः पूर्वं-पूर्व वर्णानां भानं स्वीक्रियते तदपि न समीचीनम् स्मरणक्रमस्य संस्कारक्रमानुयायित्वाभावात् । यस्य संस्कारस्योद्बोधस्तस्य पश्चात्तनत्वेऽपि पूर्वं स्मरणोत्पत्तेः ।

अथ च स्मरणात्मकज्ञानोपपादने सत्यपि शब्दानां सत्ताया अभा-वेन शक्त्याश्रयत्वस्यानुपपत्तिः, नहि आधाराभावे आधेयता प्रतीयते, तथा सति तु नष्टो घटो जलवानिति प्रतीत्यापत्तिर्वज्रलेपायित्वात् । तार्किक मतेऽविद्यमानस्य स्मृतिविषयतामधिगतस्य शब्दस्य शक्तेः तत्तदर्थविषयक बोधजनकत्व प्रकारकेश्वरेच्छीय विशेव्यतायाश्शक्ति-रूपत्वेन तस्या अविद्यमानेरपि पदे सत्तायां बाधकाभावः, नष्टोघटो ज्ञातोघट इति प्रतीतो ज्ञानमिषयताया नष्टे घटेऽपि स्वीकारात् । यद्युच्यतेऽत्रयत् पूर्वंजानामिति प्रतीतौ यथा नष्टे घटे पुरातन ज्ञान-तौल्यस्य साम्प्रतिक ज्ञाने प्रतीतौ साम्प्रतिक ज्ञान विषयताया भूत-कालिके घटे स्त्रीकारादिति र्तह तदा एकं पदमिति कथं तार्किकैः क्रियतामित्यपि सुविचरणीयमवशिष्यते । वस्तुतस्तार्किकमते पदस्य वर्णसमुदायरूपत्वेन तस्य वर्णानतिरिक्त्वेनैकत्वस्य बाधात् । यदि

तैरुच्यते यत् एकप्रतीतिजनकत्वेन प्रतीतिनिष्ठस्यैकत्वस्य वर्णेष्वारोपं विधायैवैकं पदमिति करिष्यते इति चेत् तदपि न साधु यतः पदस्यैकत्वे "एकप्रतीतिरेकप्रतीतौसत्यां पदे आरोपेणैकत्वमित्यन्योऽन्याश्रयदोषग्रस्तत्वादयमाग्रहो न समीचीनः । अथ च समूहालम्बनात्मक बुद्धिनिष्ठैकत्वस्यापि पदे समारोपोपि न शक्योवक्तुम् यतः समूहालम्बनात्मकस्मृतेः वर्णव्युत्क्रमविषयकत्वेन नदी सरपदयोरापत्तिसत्त्वेन समूहालम्बनात्मक ज्ञानस्य नैरर्थक्यापत्तेः ।

**शक्तिमत्वेन पद प्रत्यक्षस्यैवशाब्दबोधजनकत्वम्**

तस्माच्छक्तिमत्वेन पद प्रत्यक्षस्यैव शाब्दबोधजनकत्वमङ्गीकार्यन्नतु स्मृतस्य । ऋगित्युक्तौऋग्वेद मन्त्राः पठितव्याः इति ऋकपदस्य वेदमन्त्रे शंकेते मत्युपाध्यायेन ऋगित्युक्ते ऋग्वेद मन्त्रप्रतीतिवद् ऋग्वेदमन्त्रार्थं प्रतीतेरप्यापत्तेः । अपि च सुखजनकत्वं रूपरसगन्धादि प्रत्यक्षाणामेव स्वीक्रियतेनतु कथमपि तेषां स्मरणसुखजनकत्वं स्वीक्रियते । तेन पदस्मरणस्य न कथमपि शाब्दबोधजनकत्वं किन्तु पद प्रत्यक्षस्यैव । यदि वर्णः क्षणस्थायो स्वीक्रियते चेत्तदा वर्णसमूहात्मक पदस्य कथञ्चिदपि प्रत्यक्षाऽसम्भवेन शाब्दबोधस्तार्किकमते दुरुद्धरः स्यादेवाशक्यश्चापि ।

अतोऽकारादि वर्णातिरिक्तः क्रमशून्योनित्यो विभुः प्रकाशस्वरूपः स्फोटोब्रह्मात्मकोऽभ्युपगन्तव्य एव, स एवार्थं प्रत्यायकत्वाच्छाब्दबोधजनकः, न वा स्फोटस्य वाचकत्वे तस्य नित्यत्वात् सर्वदाऽर्थभानप्रसंगः स्यादितिवक्तुं शक्य इति यतः प्राकृत ध्वनिरूपेणाभिव्यक्तस्य स्फोटस्य शाब्दबोधजनकत्वस्वीकारान्नकश्चनापत्तिप्रसंगः स्मृतिपथमारोहति ।

**ध्वनिभेद निरूपणम्**

ध्वनिश्च द्विविधः—प्राकृतोध्वनिर्वैकृतश्चेति भेदात्, प्राकृतोध्वनिरकारादि वर्णरूपः, वैकृतध्वनिश्च वर्णचिरचिरोपलब्धिप्रयोजकः शंखभेर्यादिध्वनिः । न वर्णानां ध्वनि व्यपदेशो विरुद्धः, शंखभेरीमृदंगादिशब्दानामेव ध्वनित्वेन व्यवहारादिति वक्तुं शक्यम्, लोके प्रतीतपदार्थको ध्वनिशब्दः, इति महाभाष्यकारोक्त्या वर्णेष्वपि ध्वनि-

व्यवहारस्यप्रमाणिकत्वात् । न केवलं शाब्दिका एव तथा तत्र तत्र व्यवहरन्ति अपि तु काव्यप्रकाशकारेणाचार्यमम्मटे नापि वर्णानां ध्वनित्वं सम्यगनुदितम् तथाहि बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूप व्यंग्यव्यञ्जकस्य ध्वनिरिति कृतः इति-तत्र खलु स्वकीयध्वनिनिरूपणप्रसंगे तेनोपपादितः यदयं ध्वनिर्बुधानां वैयाकरणानामपि सम्मतः नत्वबुधानामित्यर्थोऽपि व्यञ्जितः । न च घकारादि वर्णानां क्षणिकत्वात् तेषां समूहस्यज्ञानाभावेन पदरूपेण स्फोटस्याभिव्यक्तेरभावेन घटरूपेणाभिव्यक्तस्य स्फोटस्य घटत्वावच्छिन्नेशक्तिः तादृशशक्तिज्ञानात् तदुपस्थितिशाब्दबोधौ कथमुपपद्येते । यदि घकारादिवर्णानां स्मरणात्मकज्ञानेन तेनरूपेण स्फोटस्याभिव्यक्तिमङ्गीक्रियते चेत्तदा वर्णानां व्युत्क्रमस्मरण प्रयुक्ता या दुरवस्था सैव स्फाटाभिव्यक्तावपि समापतेदिति वाच्यम् घटपदे उच्चरिते घकारादिवर्णजन्य प्रत्यक्षानुभवजन्यसंस्काराश्चित्तभित्तौ श्रोतुः क्रमेण चित्री भवन्ति । चरमवर्ण श्रावणप्रत्यक्षविषयतायाँ सत्यां प्राकृत ध्वन्यात्मक नादरूपेण स्फोटो हृदिस्थोऽभिव्यक्तोऽर्थं बोधयतीति साध्वी प्रथा शाब्दिकानाम् ।

यद्युच्यते तस्याखण्डरूपत्वेन घटपदोच्चारणे सति घकारसंस्कारेणाभिव्यक्तस्तदाऽन्यवर्णोच्चारणानां वैयर्थ्यप्रसंग इति तन्न समुचितं प्रतिभाति यतोऽखण्डस्य पदार्थस्य यदि केनचिद् वर्णेनाभिव्यक्तिस्तदापरवर्णानां वैयर्थ्यकेनापास्यताम्; तत्तु सिद्धमेव वैयर्थ्यम् । यतो हि घटपदघटकत्तद् वर्णैः स्वस्वसंस्कारेण स्फोटस्य, क्रमेण कस्मिश्चित् कस्मिश्चित् तत्तदंशेऽन्तिमवर्णप्रत्यक्षेणान्तिमांशस्याभिव्यक्तौ तदा घटपदरूपेण स्फोटस्या ज्ञानमिति कथमपि वक्तुन्नशक्यते कथमिति चेदित्थम् अखण्डे स्फोटेंऽशाभावेनाँशिकाभिव्यक्तेर्हिदूरापास्तत्वात् । तस्मात्कथं घटपदादिरूपेण स्फोटाभिव्यक्तिरिति वाच्यम् रत्नपरीक्षणप्रस्तावे रत्नपरीक्षकोरत्नोपरि बहुवारं निकषसंघर्षे सति कदाचिदन्तिमसंघर्षे रत्नमिदं साध्विति व्युत्पद्यते, प्रथमसंघर्षस्यद्वितीयादि संघर्षणाच्च नैष्फल्येऽन्तिमसंघर्षस्य रत्नप्रतीतिजनकत्वं यद्यपि तथापि पूर्वंपूर्वं संघर्षकाभावे केवलेनान्तिमेनसंघर्षेण रत्नप्रतीति नैव सम्भवेत् न वा सम्भाव्यतेऽपि, तस्मादन्तिमसंघर्षेपूर्वंपूर्वंसंघर्षाणांसहाय्यमबाधम् प्रतीतिस्त्वन्तिमे नैवेति श्रुतोऽयंस्फोटो वर्णाभिव्यक्ततत्तत्पदाभिव्यक्त वाक्याभिव्यक्त वर्ण-पद वाक्यजात्याभिव्यक्तरूपेण-

खण्ड वाक्याभिव्यक्ताखण्डपदाभिव्यक्त भेदेनाष्टधा प्रकीर्तितः, यथाऽऽनन्दबल्लीस्थपञ्च कोशव्युत्पादनेन शुद्धब्रह्मावबोध उत्पद्यते तत्र पूर्वं पञ्चकोशानां क्रमप्रदर्शनं श्रुतिगतप्रयोजनकम् तथा स्फोटात्मकशब्द शब्दब्रह्मबोधनायवर्णपदप्रभृतिस्फोटानां व्युत्पादनं शुद्ध स्फोटरूपब्रह्मज्ञान प्रयोजकमवधार्यंते तस्मादेवात्र शास्त्रप्रक्रिया निर्वाहिका एते प्रोक्ताः परमार्थस्तु–अखण्डवाक्यस्फोट एवस्वीकृतः इति सिद्धांतः संगच्छते ।

## जातिस्फोट विमर्शः

वस्तुतस्तु-अखण्ड जातिस्फोटः पदरूपेण वाक्यरूपेणाभिव्यक्तः सन् बोधं जनयति, जातिश्च नित्या ब्रह्मस्वरूपाविभुस्वरूपा पूर्ववत् क्रमबद्धवर्णावली स्मरणेनाभिव्यक्ता सत्यभिव्यञ्जक भेदने भिन्नार्थं प्रत्यायति, सैव जाति, पदाभिव्यक्तासतीपदरूपाएकाप्यभिव्यञ्जकपदवर्णादिभिन्नरूपवती लोके प्रतीतिपथमागच्छति ।

प्रमाणञ्चाप्युक्तवाक्यपदीयंवचनमिदम् :

सत्यासत्यो च द्वौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यरूपातु सा जातिरसत्या व्यक्तयो मताः ॥[1] इति।

कठोपनिषदि चापि-"तमेव[2] भान्तमनुभाति सर्वम्" इति श्रुतावधिष्ठानरूपेण जातेर्भानेसति सर्वासां पदपदार्थरूपाणां व्यक्तीनां लोके मानं भवति ।

अत इदं वक्तुं शक्यते यत् प्रकृतिपरिणामवाय्वाकाशशरीरकपरमात्मनः सकाशात् सर्वे शब्दा उत्पद्यन्ते । स्वतन्त्रस्य विभोर्द्रव्यरूपस्य गुणरूपस्य च नित्यस्य प्रभाकरभट्टाभिमतस्य शब्दास्य सत्तायान्नमिकमपि प्रमाणम् ।

अत्र स्फोटविषये शुक्लयजुर्वेदमन्त्रोऽपि प्रमाणम् "शंन्नोमित्रः शंवरुणः शंनो भवत्यर्मा, शं न इन्द्रे बृहस्पतिः नमस्ते वायो, त्वं

१. वाक्यपदीये—३।१।३२
२. कठोप०—२।५।१६

प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मवदिष्यामिऋतं वदिष्यामिसत्यं वदिष्यामि" इत्यादिश्रुतौ वायोर्भेदात्मकशब्दोपचारेण शब्दाभिव्यञ्जकत्वमेव वायोः प्रतिपाद्यते। पक्षान्तरे तु नाभिप्रदेशनिर्गतो वायुः कण्ठताल्वादिसंघट्टनेन शब्दरूपेण परिणमति भगवतो श्रुतिरपिबोधयति यत् वेदात्मक शब्दरूपता वायोरिति श्रुतावस्यां शब्दानामुक्तव्याख्यानेन वायुपरिणामत्व श्रवणान्य स्फोटोपादानकत्वं वर्णानां भर्तृहरि सम्मतम्। तन्मते स्फोटे निरयवेनित्ये ज्ञानरूपेविभौ योग्यानुपलब्धेर्नास्मदादि प्रत्यक्षविषयता।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥ इति

इत्थमागमेन वेदेषु वेदान्तेषु च प्रतिष्ठितस्य स्वरस्यप्रकृतिरकारः तद्वाच्योमहेश्वरः इतिवेदात्मकप्रणवकारणाकार वाच्यत्वं महेश्वरस्य पर देवतानारायणस्य सिद्धयति।

**प्रसंगत ओंकार एव सर्वावागितिविचारः**

ओंकार एव हि सर्वावाक् इति श्रुत्या प्रणवस्य वेदकारणत्वं सिद्धयति। तेन वेदप्रकृतिप्रणवकारणाकार शब्दवाच्यत्वं यदि ब्रह्मणः स्वीक्रियते चेत् तदा तथा स्फोटवाच्यत्वमपि ब्रह्मणः स्वीक्रियते तद्ब्रह्मरूपत्वमकारव्यक्त (अव्यक्त) परिणामवाय्वाकाशशरीरक परमात्मन इति तदा नेत्थं स्फोटवादिनां क्वचित् कश्चिद् विवाद प्रसंगः। निर्विशेषं निरवयं स्फोटशब्दरूपं ब्रह्मअविद्यातिरोहितं विदितवर्णं पदवाक्यरूपेण पृथिव्याद्यर्थंरूपेणविवर्तमानमस्ति तदप्रमाणिकम्। यतः स्वयं प्रकाशे स्फोटरूपे ब्रह्मणि स्वरूपाज्ञानरूपाया अविद्याया विरोधादभावेऽविद्याश्रयत्वानुपपत्त्या अविद्यया ब्रह्मस्वरूपस्य स्फोटस्य च तिरोधानानुपपत्त्या च भर्तृहरिसम्मतं स्फोटात्मकं ब्रह्मनामरूपात्मकं जगत्कारणं भवितुमर्हति, इति निर्मत्सराः सुधियः स्वयं परिभाव्ययाथातथ्यवधारयन्तु।

आन्तरं स्फोटात्मकं वाक्यं ध्वनिव्यंग्यमान्तर एवार्थस्तद्वाच्यः शब्दस्फोट रूपविषयः पूर्वं बहूक्तमेव, अन्तरे बुद्धौभव आन्तरः पक्षे-

ऽस्मिन् शब्दस्य विमुत्वेऽपि ध्वनिरूपरूषितत्वेन परिच्छिन्नाया हृदयरुप-देशावच्छिन्नाकाशसम्बद्धतया स्फोटस्यान्तरत्वम्, सूक्ष्मसंस्कार विषयतयाचार्थस्यापिआन्तरत्वम् चित्तं हि सत्यमेवेन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमति न तु तत्र बाह्य विषयस्य प्रतिविम्बः ।

एवमपि स्फोटविषये विमृश्यते यत् वाक्यमखण्डमेववाच्कम् वाक्यार्थश्चापि अखण्ड एव तद्वाच्यः । तस्मात् सत्यमेवैतद् यद् वाक्यार्थ बोधोत्तरमेव पद पदार्थ निर्णयः न तु ततः पूर्वम् । एवं स्फोटरूपमखण्ड-मेव वाक्यं निराकांक्षवाचकत्वेनाभ्युपमेयम् । उक्तमपि वाक्यपदीये-

यथैवानर्थकैर्वर्णैर्विशिष्टार्थोऽभिधीयते
पदैरनर्थकैरेव विशिष्टार्थोऽभिधीयते ।
नहि किञ्चित् पदं नामरूपेण नियतं क्वचित्
पदानामर्थरूपञ्च वाक्यार्थादेव जायते । इति

वाक्येऽखण्डत्वञ्चापृथगुपस्थिति जनकत्वम् वाक्येऽखण्डत्वञ्चापृथगुपस्थिति विषयत्वम् ।

**स्फोटस्यान्तरप्रणवरूपत्वब्रह्मरूपत्वविमर्शः**

अयञ्चस्फोटः "आन्तरप्रणवरूपत्वात् व्रह्मरूपएव" ओंकार एव सर्वा वाक् सैषा "स्पर्शोष्मिभिर्व्यंज्यमाना वह्वी नाना रूपा भवति" इति श्रुतेः ।

समाहितात्मनो विद्वन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादोवित्तिरोधाद् विभाव्यते ।

इति व्याससमृतेश्च स एव प्रणवरूपः स्फोट एकः सन्नपि नानावर्णपद वाक्यरूपध्वनिरूपोपाधिभेद भिन्नोऽन्तःकरणाद्युपाधि-भेदभिन्ननानात्मकजीवस्वरूप व्रह्मवत् पदवाक्यादि नानात्मको मध्यमा नादांशरूप रूशितो वैखरीरूपेण परश्रवणगोचरः सन्नन्तः करणबाह्यः सर्वार्थवाचको भवति । स्फोटयते व्यञ्जते वर्णैयः स इति व्युत्पत्याऽर्थप्रकाशकत्वेमेव स्फोटत्वम् प्रकाशश्चज्ञानम् । शाब्दिकानामाशयस्तु-परापश्यन्ती मध्यमा वैखरी इति चतुर्विधा-

वागस्ति। तासु मूलाधारस्थ पवन संस्कारी भूता मूलाधारस्था शब्दब्रह्मरूपास्पन्दशून्या विन्दुरूपिणी परा वागुच्यते। एवद्द्वयं शब्दब्रह्मव्यञ्जकवाग् योगिनां समाधौ निर्विकल्पक-सविकल्पक ज्ञानविषय इत्युच्यते। समाधिलक्षणन्तु—

समाधिस्तुसमाधानं जीवात्मपरमात्मनोः।
ब्रह्मण्येवस्थितिर्या स समाधिः प्रत्यगात्मनः॥

इति सूत संहितायामुपपादितम्। सोऽहं ब्रह्म न संसारी नमत्तोऽन्यत्कदाचन इति-विद्यात्स्वमातमानं ससमाधिः प्रकीर्तितः तस्मादत्र पूर्वमुक्तं स्मार्यंते विशेष विचाराय परावागेव संस्कृत पवनसचिवेन नाभिदेशमागत्यपश्यन्ती रूपात्मनाऽभिव्यक्ता सती हृदयपर्यन्तमागच्छता तेन संस्कृतपवनेनाभिव्यज्यमाना तत्तदर्थवाचक स्फोटरूपा-हिरण्यगर्भदैवत्त्यापर श्रोत्रग्रहणायोग्यत्वेन जपादौबुद्धिनिर्ग्राह्या सूक्ष्मा मध्यमा वागुच्यते। जपस्मादक्षरावृत्तिर्मानसोपांसुवाचकैः इति। तत् आस्यपर्यन्तमागच्छता तेन संस्कृतपवनेनैव कण्ठताल्वादि-देशं प्रापितामूर्घानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदैवत्या वैखरी वागुच्यते। अतएव—

परावाङमूलचक्रस्था पश्यन्तीनाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥ इति।

वचनानुसारमेव स्फोटात्मकशब्दस्य ब्रह्मरूपत्वं नित्यत्वञ्च प्रदर्शितम्भवति। तत्र वैखरी नादो ध्वनिः सकल जनश्रोत्रमात्र-ग्राह्यो भेर्यादिन दवन्निरर्थकः मध्यमानादस्त्वर्थवाचकस्फोटात्मक शब्दव्यञ्जकः सार्थकः तथा च यथामुखेमणिकृपाणदर्पणादिव्यञ्जको-पाधिवशाद् दैर्घ्यवर्तुलत्वादिकमवभासते तथा घटादि पदध्वनि रूपव्यंग्यतया स्फोटेऽपि घटत्वादिकमवभासते। व्यञ्जक वर्णपद वाक्याद्यात्मक ध्वनीनामानन्त्यात् स्फोटस्याप्यानन्त्यसिद्धिः। यथा च जपाकुसुमादि लौहित्य पीतत्वादि व्यञ्जकोपरागवशादेक एव स्वच्छः स्फटिकः, लोहितः स्फटिकः पीतः स्फटिकः इत्यादि नानानुभव





विषयतामधिगच्छति नानात्मकश्च भवति, तथा प्रकृतेऽपि ध्वनि-रूप रूषितत्वेन ज्ञानात्मकता जायते । एवञ्चोपाधिक धर्मेण न वस्त्वानन्त्यज्जायेत् इति विभाव्य आकाशादिवदेक एव वाक्यस्फोटः इति सिद्धान्तः औपाधिक भेदेत्वस्याष्टविधत्वं प्रतिपाद्यते । यतश्शा-स्त्रप्रक्रिया निर्वाहाय, लोकानुभव सिद्ध व्यवहारादिसिद्धये च तावतां स्फोटानां नितान्तमावश्यकता वरीवर्त्येव । ओंकार एव सर्वा-वाक् इति श्रुत्याशब्दस्फोटस्यैवोंकाररूपत्वसम्भवात् प्रणवश्चपरा-परभेदेन द्विधा । तत्र परोब्रह्मात्मकः अपरश्चशब्दात्मकः उक्त:-ञ्चसूतसंहितायाम्—

> परः परतरंब्रह्म ज्ञानानन्दादिलक्षणम् ।
> प्रकर्षेण नवं यस्मात् परं ब्रह्मस्त्रभावतः ॥
> अपर प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।
> प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ॥ इति

तदर्थास्तु सत्यज्ञानानन्दादिरूपब्रह्म यतः प्रकर्षेण नवं निःशेष-विकार राहित्येन कूटस्थं तथा प्रकर्षेण नवस्तत्प्राप्तिरूपो यस्मादिति व्युत्पत्या शब्दोऽपि प्रणव इति । अतश्च श्रीमद्भागवते द्वादशस्कंधे कृष्णद्वैपायनो वेदव्यासोऽप्याह यत् समाहितमन इत्यादि वचनम् । तथैवेदमपि वचनम् ।

> शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
> येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥

इत्यनेन प्रणवरूपस्फोट श्रावकत्वेन परमात्मा लक्षितो भवति जीवस्तु न तथा तस्य करणाधीन ज्ञानवत्वात् किञ्चतत्रैव ।

**प्रणवस्फोटस्यैव सर्व प्रपञ्चकारणत्वम्**

'स्वधाम्नो ब्रह्मणः साक्षाद्‌वाचकः परमात्मनः स सर्वं मन्त्रोप-निषद् वेदबीजं सनातनम् ।' इत्यनेन समस्त देवता वाचकत्वं प्रणवस्य समुदीरितम् तत्रैव श्रीमद्भागवते—

> तस्यह्यासंस्त्रयोवर्णा आकाराद्यामृगूद्वह ।
> धार्यन्ते येस्त्रयो भावा गुणानामर्थवृत्तयः ॥

इत्यादि वचनेन प्रणवस्फोटस्य सर्वप्रपञ्चकारणत्वंसुतरां प्रतिपादितम्भवति, तत्रैवेत्थं शब्दसृष्टिप्रक्रिया व्यासेनैव प्रोक्ता संगच्छते—यथा—

ततोऽक्षर समाम्नायमसृजद् भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादि लक्षणम् ।।
तेनाऽसौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान् सोऽङ्गान् चातुर्होत्रविवक्षया ।। इति

अतश्चास्यनित्यत्वमुपयोगित्वञ्च सुप्रथितमेव । वैयाकरणमतेन सृष्टिक्रम विचार स्फोटात्मक शब्द ब्रह्माख्यातिरतीवानुकूला प्रपद्यते उपर्युक्तदिशाशब्दब्रह्मणः सकाशादेव जगतः प्रक्रिया प्रकर्षेण प्रपञ्चयते तथाहि—प्रलये नीयतकालपरिमाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीन सर्वंजगत्कामाया चेतने ईश्वरे लीयते, लयश्चायमपुनः प्रादुर्भावफलको नात्यन्तिकोनाशः उत्तरसंसर्गानुपत्तेः । अतएव प्रत्यय पदार्थोऽत्रत्वखण्डप्रलयएव ग्राह्यः । नापिसर्वथा भानं प्रतिभास मात्रशरीरस्य मिथ्यावस्तुनोऽऽवभासे तदमावस्यैवापत्तेः । किन्तु सुप्तेव तिष्ठति कार्यप्रवृत्यभावात् । तथा च कर्म विक्षेपसंस्कार सहितलक्षणाऽविद्याविशेषता साम्येनस्वापसादृश्यंलयस्य । तत्र हि अन्तःकरणादयोऽविद्यायाँ सूक्ष्मरूपेण शक्तिरूपेण वासनाभिः सहावतिष्ठते । एवञ्च सूक्ष्मरूपेणस्थिताशक्तिः स्थूलरूपेण विवर्तते । शक्तिमिश्रताद्ब्रह्मणः पुनः शक्तेः कथमुत्पाद इति सर्वथाऽपास्तमेव । यथोच्यते—

प्रकृतौ विलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्यं प्रपद्यन्ते स्वश्रयाएव जातयः ।।

मूलप्रकृत्या ब्रह्मणा वा ये जगत एकत्वमभेदेन पश्यन्ति तेषां मते निरन्वयध्वंसाभावान्महासामान्यरूपे तस्मिन्मूलकारणे लय मात्रं महाप्रलयः इति शक्तिरूपेषु पदार्थेषु यथायथं शक्तियोगः । द्रव्यात्मना तदानीमपि जातीनां सत्त्वं द्रव्यान्तरस्याभावात् । यथा स्फटिके जपाकुसुमसन्निधानात् रक्तत्वावभासस्तत्रैव स्फटिकांश प्रमोषे यद् गगनत्वावभासः, एवं शुद्धायां चिति मायोपाधिसान्निध्यादीश्वरत्वा-

ऽध्यासः। सोऽयमात्मा आवरणविक्षेपशक्त्या अविद्याया आश्रयः। तत्रावरणांशेनशुद्धरूपतिरोधानं विक्षेपांशेन ईशादि स्थूलदेहान्तानां प्रतिभासः। तयोर्निवृत्तौ शुद्धचित् स्वरूपेणावतिष्ठते, ततोऽपरिपक्व प्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विकासृष्टिः, ततो मायापुरुषावाविर्भवतः। ततः परमेश्वरस्य-सिसृक्षात्मिका मायावृत्तिर्जायते, ततो विन्दुरूपमव्यक्तं त्रिगुणञ्च जायते, इदमेवशक्तितत्त्वम् (अविद्याहि परमेश्वरस्य स्वभावो लीलेतिप्रोच्यते)। तस्य विंदोरचिदंशो बीजम् चिदचिन्मिश्रोंऽशोनादः, चिदंशोविन्दुरिति, अचिच्छब्देन शब्दार्थोऽभय संस्कार रूपाविद्या प्रोच्यते। अस्मादेव विन्दोः शब्द ब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरादिशब्दैर्व्यवह्रियते, तथोक्तमत्र—

विन्दोस्तस्माद्भिन्द्यमानाद्योऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते॥
सा तत्त्व संज्ञा चिन्मात्रं ज्योतिषः सन्निधेस्तथा।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति विन्दुताम्॥
कालेन भिद्यमानस्तु स विन्दुर्भवतित्रिधा।
स्थूल सूक्ष्मतरत्वेन तस्य द्वैविध्यमिष्यते॥
स विन्दुनाद बीजत्व भेदेन च निगद्यते।

एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते, ज्ञातमर्थं विवक्षोः पुंसः इच्छया जातेनप्रयत्नेनयोगे एव मूलाधारस्यपवनसंस्कारस्तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्यन्दं परावागित्युच्यते, उक्तञ्च भर्तृहरिणा—

अनादि निधनं ब्रह्म शब्दतत्त्वं पदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जागतो यतः॥

यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरण-वृत्तिभेदाः सञ्जायन्ते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधि-भूत मायायाम् वृत्तिभेदा अपि जायन्ते। तेन पूर्वोक्त प्रक्रियाया

ब्रह्मणोनिमित्तकारणत्वावगमात्" एतस्मादात्मन इति श्रुतौ जनिकर्तुरित्यपादानलक्षण पञ्चमी स्यादित्यापत्तिरपास्ता । स ऐक्षत, एकोऽहं बहुस्याम: इत्यादिश्रुतौ ईक्षितृत्वश्रवणेन निमितत्त्वाद् बहुवचनश्रवणेन चोपादानत्वस्यापि स्वीकारात् एवञ्चशब्दब्रह्मणोर्निर्विकारत्वमेव । ऋग्वेदेऽपि वागेवविश्वा भुवनानि यज्ञे वाचक इत्सर्वंममृत यच्च मत्परमिति छन्दोभ्य एव प्रथममेतद् विश्वं विवर्तते इतिनात्रारम्भवादः परिणामवादो वा विवक्षितः किन्तु विवर्तवादः यथा च प्रमाणम्—

**स्फोटनिरूपणात्मकविवर्तवादविचारः**

सच्चिदानन्द विभवात्सकलात्परमेश्वरात् ।
आसोच्छक्तिस्ततोनादो नादाद्विन्दु समुद्भवः ॥
परशक्तिमयः साक्षात् त्रिधाऽसौभिद्यते पुनः ।
विन्दुर्नादो वीजमिति तस्य भेदाः समीरिताः ॥
विन्दुः शिवात्मको वीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ॥
रौद्रीविन्दोस्ततो नादाद् ज्येष्ठावीजादजायत ।
वामाताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ॥
स ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।
भिद्यमानात्पराद्विन्दोरव्यक्तात्मा ततोऽभवत् ॥
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ।

अत्रसमवायोनाम सम्बन्धः क्षोभ्यक्षोमकरूपः सृष्टिहेतुः शक्त्याख्यावस्थारूपो यः प्रथमो विन्दुस्तस्मादव्यक्तात्मा वर्णादि विशेषरहितोऽखण्डो नाद मात्रं ख उत्पन्नः ।

यत इच्छति तज्ज्ञातं कर्तुं वा स्वेच्छयाक्रिया । अनन्तरं हि तत्कार्यंज्ञानदर्शनशक्तिनाम् ज्ञानशक्तिस्तदर्थं हियोऽसोस्थूलः समुच्चयः । सा क्रिया शक्तिरुदिता तत्तत्सर्वं जगत् परम् । एवं व्यवहारसाधनीभूताया वैखर्याः किं स्वरूपमिति विचारमाणायाँ प्रणव एव व्यानोदा-

नाम्यां सहवैखरी रूपं प्रतिपद्यते । तेनैवहरिणा व्याकरणस्यत्रिविधा वाग्विषया इत्युक्तम्—यथा—

**भर्तृहरिमते त्रिधावाग्विषयता प्रतिपादनम्**

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतददमुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम् ।।

शिष्टाव्यक्तवर्णरूपाप्राप्तसाधुत्वाभावाप्रभ्रष्टादुन्दुभिवेणुवीणादि शब्दरूपाचेत्यर्थः । तीर्थोनाम उपायः प्रकारः इति स्वपरोभय श्रोत्र-विषयः वैखरी हृदयदेशस्था पदप्रत्यक्षाननुपत्या व्यवहारकारणं मध्यपमा, पश्यन्तीतु लोकव्यवहारातीता योगिनान्तु तत्रापि प्रकृति-प्रत्यय विभागावगतिरस्ति परायान्तु प्रकृति प्रत्यय विभागावगतिर्ना-स्तीति कृत्वा त्रय्या इत्युक्तम् अयमेव पक्षः वाचास्त्रिविधरूपो भर्तृंहरेरपि—समभिमतः । अन्येषां मतेतु चतस्रोवाचः तस्मादेवोक्त-मपि सुसंगच्छते—

स्वरूप ज्योतिरेवान्तः परावागनपायिनी ।
तस्यां दृष्टायां स्वरूपायामधिकारो निवर्तते ।।

ऋकवन्त्रेऽपि—

चत्वारि वाक्परिमितापदानित्वानि विदुर्ब्राह्मणाये मनीषिणः ।
गुहात्रिणिनिहितानेङ्यन्ति तुरीयं वाचो मनुष्यावदन्ति ।।

वाक्परिमिता इत्यस्य कोऽर्थः ? शास्त्रे निर्णितानि सूक्ष्मतर सूक्ष्म-स्थूल, स्थूलतररूपा, परापश्यन्ती मध्यमा वैखरीनांवाचा—परात्प-श्यन्ती मध्यमा वैखर्याया अवस्था दशाः सन्ति । चत्वारि पदानि यानि मनीषिणोऽध्यात्मकुशलाये विदुः इत्थं शब्दब्रह्मणो विषये तदारम्भक जगत् प्रक्रियायाञ्च नन्दिकेश्वर काशिकायामपि यथेष्टमेवोक्तं ।

**शब्दब्रह्मैवजगन्निदानविमर्शः**

शब्दब्रह्मैव जगन्निदानमिति निधार्यमाणविषयेप्रमाणग्राहकतया

यथा—

आकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्त्रेन संयोगो दहमित्येव जायते ।।
इकारादि लकारान्ता वर्णाः समभवत्ततः ।
सर्वं परात्मकं पूर्वं ज्ञाप्तिमात्रमिदं जगत् ।।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमावाक्ततः परम् ।
वक्त्रे विशुद्ध चक्राख्ये वैखरी सा मता ततः ।।
वृत्ति वृत्तिमतोरत्र भेदलेशौ न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वद् यथावागर्थयोरपि ।।

अनया प्रक्रियया नाम रूपात्मकमिदं जगत् स्फोटात्मकशब्दब्रह्मणः सकाशादेव प्रतिपन्नं नात्राश्चर्यं किञ्चिदपि । यतः स्फुटत्यर्थो नाम-रूपात्मकमिदं जगद्रूपो यस्मात् स स्फोटः वाहुलकादपादाने "अकर्तरिचकारके संज्ञायामित्यनेन घञिकृते सिद्धयति । अथ च शब्दात्मकं ब्रह्म स्फोटो रूपं स्वरूपं यस्य तं गौरी रमणरूपिणं श्रीलक्ष्मीरमणं-नौमि" इत्येतदर्थकं महावैयाकरणः श्रीकौण्डमट्टो मंगलश्लोकरूपेण व्याजहार सम्यक्—तत्रश्रीलक्ष्मीरमणस्यश्रीविष्णोः शब्दब्रह्मणश्च साधर्म्यं प्रतिपादयन्नसौ तस्य जगन्निदानत्वे महत्त्वमाद्यन्तं स्वसिद्धान्त-संस्थापनेन सफलीचकार । यद्वा—स्फटति बोधविषयो भवति अर्थो-ऽस्मादिति स्फोटः शब्दोरूप्यते ज्ञायते नामरूपात्मक जगद् रूपी वाऽर्थः, स्फोटश्चरूपश्चानयोः समाहारः स्फोटरूपं शब्दार्थ स्वरूप-मिति च । शब्दार्थरूपस्य जगदुपादानकारणस्यापि शब्दार्थरूपत्वौ-चित्यात् । जगतो नामार्थरूपत्वे नामरूपे व्याकरवाणीति श्रुति प्रमाणम् नामात्मकमर्थात्मकञ्च जगत् प्रकाशयानिति तदर्थकः ।

वेदान्तिनां नये मायोपाधिकस्यपरमात्मनो जगदुपादानत्वम् वेदान्तिमते रज्जूरगवत् जगतो ब्रह्मरूपत्वे विवर्तते इत्यस्यान्यथा प्रतीयते इत्येवार्थः । यथारज्वांसर्पस्य रज्जुसत्तातिरिक्त सत्ता नास्ति तथा निखिलप्रपञ्चस्यापि ब्रह्म सत्तातिरिक्तसत्ता नास्ति । यावद्-रज्जुर्न प्रतीयते तावत्सर्पः प्रतीयते, एव मेव यावद् ब्रह्म न प्रतीयते

तावत्प्रपञ्चः प्रतीयते। एतेन मुक्तिसाधनज्ञानविषयीभूतस्वरूपत्वेन व्याकरणसिद्धान्तप्रतिपादकत्वेन च शब्दब्रह्मणः, साक्षात्कार तदाकारानुभूतिर्वानिःश्रेयस्ताधिगमाय कल्पते।

**विशेषतः शाब्दिकमते स्फोटः**

सः शब्दो यत्रान्ये शब्दा प्रच्छन्नरूपेण तिष्ठन्ति तथा यदनुग्रहेण-शब्द श्रवणं भवति, तथाप्यर्थावबोधो भवति, अतएव स्फोट एव निमित्त-तया अर्थावबोधकत्वेन च द्वैविध्यमापद्यते, तस्मादेव स्फोट रूपतया वैखरी रूपतया च तयोः कार्यंकारणभावोऽभ्युपगम्यते। अतः स्फोटो निमित्तः, अर्थंवोधश्चेति, श्रोतृणां कृते वैखरी वागेव निमित्ततया-ऽङ्गीक्रियते स्फोटश्चार्थंबोधकतया स्वीक्रियते यतः पूर्वपूर्ववर्णं नाशे सति उत्तरोत्तरवर्णैः सहैकक्षणावच्छेदेन सहावस्थानामाभावात् तदर्थबोधः सर्वथाऽसम्भवः। अतः स्फोटः स्वीकृतोऽर्थंबोधाय, वक्तुस्तात्पर्येण स्फोटो वैखर्य्यानिमित्तः वैखर्येवार्थंबोधाय (स्फोट प्रकाशनाय) उच्चरिता भवति, उभयपक्षेऽपि स्फोट एवार्थंबोधकतयास्वीकृतः यद्यपि ध्वनीनां क्रमेण जायमानत्वात् स्फोटः सक्रमः प्रतीयते तथापि नायं सक्रमः किन्तु मयूराण्डरसेमयूरस्यङ्गानि प्रत्यङ्गानि च "अक्रमाणि सन्ति, परन्तु क्रमेणैव विकसन्ति" तथैव स्फोटोऽपि रहितः सन्नपि ध्वनिक्रमोच्चारणेन अर्थात् ध्वनीनां क्रमशः उच्चरणवशादेव स्फोटे क्रमः प्रतीयते। एवं रूपेण शब्दे वर्ण-पद वर्णावयवपदावयव-जाति-व्यक्ति प्रभृति प्रतीतयो भ्रमभूताः सन्ति न वास्तविक्यः। वस्तुतः एकं सत्यं वाक्यमेव स्फोटः।

जगदिमं शब्दस्यैव विवर्तः परिणामश्चोभयमपि। एवमपि प्रमाणमुपलब्धं वर्तते येन विवर्तं परिणाम शब्दौ पर्यायौ मन्येते भवभूतिरित्थमुक्तवान् यत् आवर्तबुद्बुदतरंगमयान् विकारानिति स्फोट सिद्धौ प्रारम्भे टीकाकारः शब्दं जगतो विवर्तं विकारञ्च स्वीकरोतीति पण्डितप्रवराः श्रीसूर्यनारायण शुक्लमहोदया वाक्यपदीय-टीकायां प्रोक्तवन्तः। स्फोटस्य विवर्तः जगत् स्वीकृतम् किन्तु ध्वने वैखर्याश्च परिणामरूपं जगत्। ध्वनेः परिणामतासमुचिता प्रतीयते। वागेव विश्वाभुवनानि जज्ञे स भूरितिव्याहरत् भुवमसृजत् इत्यादिकाः श्रुतयः भूव्या हारं जगतः सृष्टिं प्रतिकारणं प्रतिपादयन्ति। इत्थं

प्रसंगत उक्त चर्चा चर्चिताः पुनरत्र शब्दतः सृष्टि प्रक्रिया विद्या प्रोच्यते यथा पूर्वमुपपादिताः ।

**वाक्यपदीयकारमतेन शब्दब्रह्मणः सकाशात् जगतः प्रक्रिया**

वाक्यपदीयकारभर्तृहरिमतेन सृष्टिप्रारम्भे पश्यन्ती वाग्रूपं शब्द-ब्रह्म स्वयाऽपरिमितशक्तिसम्पन्नया मायया सह विभिन्न प्राणिनां कर्मसहायतया समस्तं नामरूपात्मकं जगत् बुद्धिगतं विधाय इदं सर्वमहं विधास्ये इति संकल्पं करोति ततः स्वतन्त्रकालशक्त्या सहा-ऽऽकाशादीनां ततोऽन्यभूतानां स्रजनं करोति यथोक्तमपि—

य: सर्वपरिकल्पनामाभासेऽप्यनवस्थितः ।
तर्कागमाऽनुभानेन बहुधः परिकल्पितः ॥
अन्तर्यामी स भूतानामाराद्दूरे च दृश्यते ।
सोऽत्यन्त मुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ॥
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अंगारांङ्कितमुत्पाते वारिराशेरिवोदकम् ॥
त्रयी रूपेण तज्ज्योतिः प्रथमं परिवर्तते ।
ब्रह्मेदं शब्द निर्माणं शब्दशक्ति निबन्धनम् ।
विवृतं शब्दमात्राभ्यः तास्वेव प्रविलीयते ॥

अर्थात् योहि शब्दः प्रत्ययानन्तरमपि स्थिरः यस्य तर्कागमानुमानैरनेक विधाकल्पनाविहितो यः समस्तप्राणिनामन्तर वहिर्दूरस्थश्च धृत-सत्ताकः । यस्य मुक्तौर्मुमुक्षभिश्च समुपासना विधीयते । स एकएव चैतन्यरूपोऽनेकरूपेषु प्रविभक्तः स्वीकृतः । यस्य प्रथमं ज्योतिः त्रयी वेदरूपे परिणतं भवति, स शब्द एव तस्यैकमात्राभ्योजगत् विवर्तरूपं मन्यते तत्रैव सर्वं लीयते ।

**सम्प्रति नागोजिभट्टमतेन शब्दसृष्टिप्रक्रिया**

प्रलयवेलायाँ समस्त प्राणिनां भोग्यकर्मणां क्षयो भवति तदा जग-न्मायायाँ, माया चेश्वरे लीना भवति, सा लीनता, मायाया, न नाश-

रूपा किन्तु सुप्तरूपाङ्गोकृता, तदनन्तरं यानिकर्मफलदानेऽयोग्यानि कालवशादेवोन्मुखानि जायन्ते तदा भगवतो मायारूपे पुरुषरूपे चाबुद्धि-पूर्विका सृष्टिः संजायते तदेश्वरे सृष्टिसंचालनात्मिका इच्छारूपा मायावृत्तिरुदिता भवति, तदा अव्यक्तत्रिगुणविन्दोरुत्पत्तिः। विन्दु-रुत्पत्तिरेव शक्तितत्त्वात्मनाभिधीयते। अस्मिन् विन्दौ त्रयोंऽशाः चिदंशः (बोजम्) चिदचिन्मिश्रांशो नादः (परावाक्) चिदंशोविन्दुः। इत्थमुत्पन्नोविन्दुरयं नादरूपः परावाक् कथ्यते। एनमेव वाक्यपदीय-कारोऽपि—अनादिनिधनरूपतया यावत् सृष्टिस्थित्या प्रवाह नित्यत-याच शब्दतत्त्वात्माऽक्षरप्रभृतिशब्दैः व्यवहृतवान्। नागेशभट्टमते शब्दोऽनादिरन्तः स्वोकृतो न विद्यते। मतमिदमेव तन्त्रशास्त्रीये प्रपञ्चसारनामके ग्रन्थे प्रतिपादितम्भवति तद्यथा—

> प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम।
> अणोरणीयसीस्थूलात्स्थूलाव्याप्त चराचरा॥
> स जानाति विपाकाँश्च तस्यां सम्यग्व्यवस्थितान्।
> सा तत्त्व संज्ञाचिन्मात्रा ज्योतिषः सन्निधेस्तदा॥
> विचिकीर्षुः घनीभूतः सा चिदभ्येति विन्दुताम्।
> कालेन भिद्यमानस्तु स विन्दुर्भवतित्रिधा॥
> स्थूल सूक्ष्म परत्वेन तस्य त्रैविध्यमिष्यते।
> स विन्दुनाद बीजत्व भेदेन च निगद्यते॥
> विन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
> स रवः श्रुतिसम्पन्नैश्शब्दब्रह्मेति कथ्यते॥

अत्रत्य तात्पर्यमिदं यत् तद्घनीभूतं ब्रह्मैव चिकीर्षति तच्चिकीर्षया अव्यक्तकारणविन्दुः अव्यक्तरवः, (परावाक्) (पश्यन्ती) कर्म-विन्दुरूपा सामान्यस्पन्दवती (मध्यमा) नादरूपा स्पन्दविशेषवती (वैखरी) बोजरूपा अकारादिवर्णरूपा विविधाऽवस्थां भजतितराम्। नागेशमतमिदं सत्यं तन्त्रशास्त्रवासनया वाक्यपदीयकारापेक्षया भिन्नतामाप्नोति, अत्र वाक्यपदीयकारः शब्दब्रह्म नित्यं स्वीकरोति, तथा च तस्य प्रवाह नित्यतामाधारीकृत्यवाक्यपदीयकारस्यानादि-

निधनंब्रह्मेति कारिकार्थमन्यथा प्रस्तौति । सम्भाव्यते नागेशमतमिदं शैवागमस्य शिवदृष्टि ग्रन्थानुरूपं बौद्धदर्शनस्य तत्त्वसंग्रहग्रन्थे वैयाकरणमतेनोधृतं स्वीकृतञ्च सिद्धान्ततः भिन्नतया वाक्यपदीय-कारानभिमतमेव प्रतीयते ।

**सिद्धान्तशैव-शांकर-वैयाकरणमतानां प्रकाशनम्**

वस्तुतः सिद्धान्तशैव-शांकर-वैयाकरण मतेषु भिन्नता परि-लक्ष्यते । सिद्धान्तशैवमते हि शिवशक्त्योः, ज्ञानरूपत्वात् तदेकमेवतत्त्वं शिवस्यपरिग्रहणशक्तिः विन्दुरेवक्रियाशक्तिरूपतयाभिधीयते द्वितीय तत्त्वात्मनाख्यातावापि । आत्मातुतृतीयन्तत्त्वमितिकृत्वा रत्नत्रयं प्रथितं प्रतिपद्यते । विन्दोरपि भेदद्वयं शुद्धा महामाया, अशुद्धातु माया, विन्दोश्शक्तिर्विकल्पात्मना प्रशस्ता, तामाश्रित्यैव शिवः शुद्धं विन्दुं विक्षुब्धीकरोति, तत एव शब्दार्थयोः सृष्टिधारा प्रभवति । सैव धाराः शब्दधारा क्रमशः परा-पश्यन्ती-मध्यम-वैखरीरूपेणाभिव्यक्ता भवति । इत्थं द्वाभ्यामपि विन्दुभ्यामुत्पन्नाधारा जड्भूतैवास्ति । तत्परिणामो वाण्यपि जड़ीभूता, तदतिक्रमणमेव मोक्षो मन्यते मतेऽस्मिन् । वाक् तादात्म्यं न मोक्षः स्वीक्रियते । मतमिदं शैवसिद्धान्त-स्यपूर्वप्रकरणे प्रतिपादितं विद्यते ।

**अभिनवगुप्तमतानुसारं प्रकाशो विमर्शश्चेतिवस्तु द्वयं वर्तते**

प्रकाश एव शिवः विमर्श एव शिवस्यस्वातन्त्र्य शक्तिरत्राऽभि-हिता भवति मतेऽस्मिन् प्रकाशमन्तराविमर्शो विमर्शमन्तरा प्रकाश्चो-भावपि न स्थातुं प्रभवतः तस्मादेव द्वयोरैक्यम्मन्यते । अतएव मतमिद-मद्वैतमेव मन्यते, विमर्शएव परावाक् प्रकाशश्चार्थः स्वीकृतोमते-ऽस्मिन् । अभूमेवसिद्धान्तं कविकुलगुरुकालिदासोऽपि–

वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।

—रघुवंशमहा० प्र० सर्ग १

काव्ये प्रथमसर्गे तदैक्य समर्थकं वचो ब्रूते । यदाखलु सर्वस्वतन्त्रो भगवान् शिवः स्वस्यास्स्वतन्त्रशक्तेः संकोचं विधत्ते तदैवाऽहं जानामि इत्यादि भेदबुद्धिरुपजायते । तस्मादेव स्वातन्त्र्यशक्ति-रहितोंऽशो जड़ो भवति तन्मते, शक्तिसहितश्च चेतनवर्गः ।

शांकर मतेतु—विशेषतेयं यत् प्रकाशमेव स्वप्रकाशं मत्वा कार्यं निर्वाहो भवति। प्रकाशरूपतया विमर्शाङ्गीकारो नैवावश्यकः। प्रकाश एव ब्रह्म वर्तते। यद्धितदनिर्वचनीयाऽविद्ययानानारूपतयाऽभिभासते। **शब्दब्रह्मवादिनां मतेन**–विमर्श (पश्यन्ती) एव ब्रह्म स्वीक्रियते यद्ध्यविद्ययाऽनेकरूपतयाऽवभासते तेन वैयाकरणमते पश्यन्ती वागेव शब्दब्रह्म विद्यते। तस्मिन् शब्द ब्रह्मणि तादात्म्यमेव जीवानां मोक्षोऽभिधीयते। मुक्तावपि शब्दात्मना जीवस्थितिरभिमताऽत्र। सिद्धान्तशैवमते च मोक्षदशायामाशुवाग्बन्धनाविक्रमणं भवति। शुद्धायावाचोऽनुममो भवति। तस्माच्चित् रूपतयाभासितो भवति जीवः वाणी चिद्रूपतया प्रतीयते 'तस्मादत्रजीवस्य वाचासह' तादात्म्यं नैव जायते।

इत्थं द्वैविध्यमापन्नावाक् पश्यन्ती---मध्यमावैखरी भेदात् प्रत्येकं त्रिधा विभज्यते। यथा स्थूला-सूक्ष्मा-पराचेतिकृत्वा नवधा वाक् संप्रवृत्ता। वर्णविभागरहिता स्वरप्रधाना संगीत रूपावाक्स्थूला पश्यन्ती प्रोक्ता भवति। सैव जिज्ञासासहिता सूक्ष्मा पश्यन्ती मन्यते। सैव च जिज्ञासाहीना संविद्रूपा परा पश्यन्ती चर्मावनद्ध मृगादिजनिता ध्वनिरूपा स्थूलामध्यमा, सैव वादनेच्छाद्रूपा सूक्ष्मा मध्यमा, सैव वादनेच्छारहिता निरुपाधिका परामध्यमा, विभिन्नविलक्षणता कारण वशात्स्पष्ट व्यक्तवर्णरूपा वाक् स्थूला वैखरी, सैव यदि विवक्षारूपा तदासूक्ष्मा वैखरी, विवक्षारहितापर संविद्रूपा परा वैखरी। एवं रीत्या पश्यन्त्येव सूक्ष्मतरावस्थायाँ परावागरूपतयाऽभिधियते शाब्दिकमते।

एकस्मिन् विन्दौ तिस्रो रेखाः प्रक्षिप्ता सन्ति। तेनैव विभक्ताः सत्यः प्रतीयन्ते ताः परन्तु मूलभूतो विन्दुरेक एव विद्यते यस्मिन् पश्यन्तीमध्यमावैखरी रूपास्तिस्रोरेखामन्यन्ते। आसु रेखास्त्रपि-स्थूला-सूक्ष्मा परा त्रिस्रोरेखा, अत एव नवधा विभक्ता तास्सन्ति। पूर्वोक्ता नव भेदाः एतास्तिस्रो मिलिता द्वादश संख्याकाः प्रवृत्ताः ता एव द्वादशरश्मयः प्रोच्यन्ते रविश्चापि, यथा–

सर्वभूतान्तरवरःशब्दब्रह्मात्मको रविः।
भित्वायं बोधखड्गेन निर्गच्छन्त्यविशङ्कितः॥

तस्मादेव समस्तप्राणिषु संचारी हृदिस्थः शब्द ब्रह्मरूपसूर्यः बोधरूपखड्गेन भिन्नो निर्गतो निर्भयः सन् प्रकाशते, आत्मशक्तय एव चिन्मरीचयः उद्वासूर्यरश्मयः प्रोक्ता भवन्ति । सूर्यः समस्तार्थं प्रकाशकतया शब्द ब्रह्मात्मको वेदात्मको वा सम्भाव्यते । इदमपि तथ्यं यत् षोडशकलात्मके पुरुषे पञ्चदशकलाः परिणामशालिन्यः षोडशीकलातु चित्कलापरिणामस्य चसाक्षीभूतापरमाऽमृतरूपा च भवति । अत एव तन्निरोधोऽसम्भव एव नाशस्तु कथमपि न सम्भवः । अतएतादृशस्य शब्दब्रह्मणोनित्यताकेनापवार्यतां कथञ्च तदप्रलपताम् । सिद्धान्तशैव मतन्तु परापश्यन्ती-मध्यमा-वैखरी रूपाश्चास्त्रोवाचः पृथमेव ब्रह्मणः । तन्मते पश्यन्ती प्रभृतयो वाण्यः परावस्थायां ब्रह्मणा संगतास्सत्यः एकरूपतया स्थिरापि स्वीकृताः । तदनन्तरमेवा वाचस्पतिरीश्वरः स्व ज्योतिषा स्वस्मादभिन्नं वस्तु समुदायं नित्यमवभासयति । येनेच्छोदयः संजायते स एव सृष्टिक्रमस्य कारणं भवति ।

**नागोजिभट्टस्य सिद्धाशैवमतेन सह भेदः**

नागोजिभट्टैः सिद्धान्तशैवस्य मतमिदमुरीकृत्यपरावाङ्मूलाचक्रस्थापश्यन्ती नाभिसंस्थिता हृदिस्थामध्यमाज्ञेया वैखरी कण्ठदेशगा इत्युक्तमनुसृत्यचास्यतन्त्रशास्त्रस्य मतानुसारं वाचश्चत्वारो भेदाः स्वीकृताः परं वाक्यपदीयकारमतेन सामञ्जस्यन्नास्ति यतो वाक्यपदीयकारोहि "वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् अनेकतीर्थं भेदाया स्त्रय्या वाचः परं पदम्" इतिकारिकामुखेन वाचस्त्रय एव भेदा भवन्तीति स्वीकृतवान्—

स्वरूप ज्योतिरेवान्तः परावागनपायिनी ।<br>
तस्याँ दृष्ट्यां स्वरूपायामधिकारो निवर्तते । इति

वचन्तु भर्तृहरेः सिद्धान्तानुरूपन्नास्तीतिविभाव्य पार्थक्यसिद्धान्ते भासते ।

**कैयटमते भेदः**

चत्वारि वाक् परिमिता पदानि इति भाष्यव्याख्याने कैयटेन सह नागेशस्यैकमत्यन्नास्ति अतस्तद् भाष्यकारव्याख्यानानुरूपमपि नागेशमतं वाचश्चतुर्धाप्रतिपादनं भर्तृहरिणासह वैमत्यं सुतरां भजति ।

चतुर्णाम् ( नामाख्यातोपसर्गनिपातानाम् ) पद जातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरण वदन्ति । यद्यपि चतुर्णामिति मन्त्र-व्याख्यानम् (नामाख्यातोपसर्गनिपातानाम्) इति मन्त्रव्याख्यानञ्च कैयटेन नाकारि तथापि चत्वारि शृंगात्रयोऽस्य पादा इति मन्त्र व्याख्यानं भगवता भाष्यकारेण स्वयं कण्ठतो नामाख्यातादिरूपतोहि कृतम् । यद्युच्यते वाण्याः के तर्हि चत्वारो भागाः ? येष्त्रवैयाकरणाश्च-तुर्थमेव भागं वदंति । एतस्यसमाधानन्तु विमृश्यमाणमिदमस्ति यत् अवैयाकरणावाचः तद्रूपं जानन्ति यस्मिन् लोकव्यवहारः प्रचलति-नतुशेषसाधुत्वरूपादिकं जानन्ति । समाधानान्तरमपि त्रिपादूर्ध्वं उदैत् पुरुष पादोस्येहा भवत् पुनः पादोऽस्यविश्वा भूतानि त्रिपादस्यामृतं दिवि । मन्त्रेऽस्मिन् वर्णितस्य ब्रह्मणश्चत्वारोंऽशाविवेचिताः सन्ति शब्द ब्रह्मवादिमते सुस्थिराः प्रतिभान्ति न सन्देहः । सा वाक् संस्कृत वागेव यस्याज्ञानं पुण्यजनकं विद्यते फलंचापि-एकः शब्दः सम्यग्यातसुप्रयुक्तः (शास्त्रान्वितः) स्वर्गेलोके च कामधुग् भवतोति महानुपदेशः । इत्थंशब्दतः सर्गंप्रतिपादनं सर्वथा समीचीनमेव यथा च—

शब्देष्वाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रकाशते ॥

—वा० प०, ब्र० का० ११

अत्रनिबन्धनी, जनिका प्रोक्ता—

शब्दस्यपरिणामोऽयमित्याम्नाय विदो विदुः ।
छन्दोभ्य एव प्रथमेतद्विश्वं व्यवर्तत ॥

—वा० प०, ब्र० का० २०

शब्दाक्षरं परं ब्रह्म यस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वान् अक्षरं ध्यायेत् यदीच्छेच्छान्तिमाप्नुयात् ॥

अत्राक्षरपदात्प्रथममोंकार एव सर्वावाक् प्रतिष्ठितः तस्मादेव कारणात् गीतायामपि भगवताश्रीकृष्णेन सम्यगुपदिष्टं यत्—

द्वाविमौ पुरुषौलोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
क्षरादप्यतोतोऽहमक्षरादपिचोत्तमः ।
अतोऽस्मिलोके वेदे च प्रथितः पुरुषोत्तमः ॥

इति प्रमाणैरेतैः सुस्पष्टमेव यत्सर्वं खलु शब्द ब्रह्मणो विवर्तभूतं परिणाम भूतञ्चोपपद्यते । तेन सर्वेषु भूतेष्वाघातेन शब्दाभिव्यक्तिरेव भवति । वाक्यपदीये ब्रह्मकाण्डे प्रोक्तं चापि—

अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते ।
व्यञ्जनाद्वायुरिव स स्वनिमित्तात्प्रतीयते ॥
—वा० प०, ब्र० का० ११७

पञ्चीकरणप्रक्रियापि चात्र दृश्यते—

द्विधविधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरतुरीयाँश योजनात्पञ्चपञ्चते ॥

तस्मादिह वक्तुं शक्यत एवं यत् भौतिकस्यापि त्रैलोक्यस्य-तत्तदर्थवाचकाः स्थूलशब्दा एव प्रकृतय इति व्यवस्था । तथाहि शब्दतन्मात्रेभ्यः स्थूलशब्दोत्पत्तिरिति प्रक्रियापिप्रपञ्चिता नेहविस्तार भयात् प्रोच्यते । एतद्विषये वचनमिदम्—

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्तेशब्दाख्याः परमाणवः ॥
—वा० प०, ब्र० का० १११

अतोत्र शब्द परमाणुभ्यः स्थूलशब्दोत्पत्तिप्रक्रियाप्रदर्श्यंते प्रथमम् । परस्तादेव स्थूलशब्देभ्योऽर्थोत्पत्तिप्रक्रियापि । तत्र शब्दतन्मात्राणि प्रथममदृष्ट संजाततेजः परिपाकवशादकाराकारेण परिणातानि । तेजः, परिपाकवशादेव रूपरसादिपरावृत्तिरपि फलादिषु संजाते सुपरिपाके परिणामतया दृष्टिपथायते तद्वत् प्रकृतेऽपितत्कल्पना साधीयसी । उक्तञ्चात्र भर्तृहरिणा यथा—

अथेदमान्तरं ज्ञानं सूक्ष्म वागात्मनास्थितम् ।
व्यक्तये त्वस्यरूपस्य शब्दत्वेन विवर्तते ॥ ११३

स मनो भावमापद्य तेजसापाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ ११४

अन्तःकरणतत्त्वस्य वायुराश्रयतांगतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥ ११५

तेन तत्तद्वर्णाकारैः "अकारो वैसर्वावाक् इति श्रुतेः" ततो वर्णाः पदरूपेण परिणताः। तत्रापि सर्वपदेभ्यः प्राणोंकाराथशब्दाकाराभ्यामेवपरिणामः तदनन्तरमन्यपदाकारेण परिणाम प्रक्रिया। उक्तमपि ब्रह्मसूत्रभाष्ये—

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वाविनिर्यातौ तस्मान्मांगलिकावुभौ ॥

अतोऽत्रपदानाञ्च वाक्याकारेण परिणाम इति।

सम्प्रति पदेभ्यः पदार्थानां जन्मश्रुतं प्रतिपाद्ययथाशक्यप्रकाश्यते—तत्र श्रुतौ यथा—स भूरिति व्याहरत् स भूमिमसृजत् भुवरित्यन्तरिक्षम् इत्यादि श्रूयते। एतदेव भर्तृहरिरपि ब्रह्मकाण्डे वाक्यपदीये—अनादि निधनं ब्रह्मेत्यादि कारिकया ब्रह्मशब्दतत्त्वं प्रकृति-विकृति भावेन सामानाधिकरण्येन निनिर्दिशति। अग्रेऽपि 'शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्यनिबन्धनी' इत्यादिना प्रोक्तमेव। गीतायामपि—

अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते।
यतः सर्वाणि भूतानि भवन्त्यादि युगागमे ॥
यस्मिंश्च प्रलयं यान्ति पुनरेवयुगक्षये।

इत्याद्यागमाः स्मृतयश्चानुकूला सन्ति। ब्रह्मप्रतिमूर्तिभूतस्य वेदस्य प्रधानांगस्य व्याकरणशास्त्रस्यापि दर्शन परकत्वमिति सिद्धान्तं परिशीलितुमिह प्रथमं पाणिनिमुनिमतमुपस्थाप्यते।

**शब्दब्रह्मणस्वरूपं पाणिनिमतेन**

अत्रहि प्रथमं पाणिनिमुनिमतमुपस्थाप्यते-तत्र मते शाब्दिकानां नये शब्द एव ब्रह्मेति सिद्धान्तो गीयते। कीदृशं हि ब्रह्ममतन्मते ? इति जिज्ञासायाम् महर्षिपाणिनेः प्रातिपदिकसंज्ञा विधायकसूत्रमुपस्थापयामि—

अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, तत्रैत्थं विचारः। पदं पदं प्रतिपदमर्हतीतिप्रातिपदिकम् "इतिव्युत्पत्त्याशब्दस्य सर्वस्थानसर्वकालस्थितत्वात् तस्यव्यापकत्वम्। अधातुरित्यस्य सर्वशब्द प्रकृतिरेव-

नात्रविवादः सोऽविद्यमानो यत्रेतिव्युत्पत्त्या, अप्रत्यय इत्यस्यापि चाविद्यमानः प्रत्यययोयत्रेति व्युत्पत्त्याऽधात्वप्रत्ययपदाभ्यां प्रकृतिप्रत्यय विभागराहित्यं संहृतक्रमरूपत्वमपरिच्छिन्नत्वञ्च शब्द ब्रह्मणः सूपपादितमेव। अर्थवदित्यनेन च घटपटाद्यर्थयुक्तत्वं प्रतिपाद्यत एव तेनमहर्षि पाणिनिना अर्थवदिति सूत्रं विरचय्यापरिच्छिन्नः पूर्वापरो भावशून्यः तेनोत्पादविनाशरहितो व्यापकोऽर्थवानेवशब्दो ब्रह्मेत्यत्राऽभिप्रायः प्रदर्शितः सम्यक्। तत्रार्थशब्देन च शक्तिरेवाभिमता। तथा चास्मिन् शब्दब्रह्मणिशक्तिमत्वमुपपादितम्भवत्येव। अतश्शक्तिमद् ब्रह्मैवसृष्टिं रचयतीति परमार्थः। तस्मादेव केषांचित्प्राचीन शाब्दिकानाम्मते शक्तिमत्त्वमर्थवत्वमिति सिद्धान्तः स्वीकृतः।

नैतावतालंकिन्तु कृत्तद्धितसमासाश्चेत्यनेन भगवता पाणिनिमुनिनाशब्द ब्रह्मणि कर्तृत्वं, सर्वपालकत्वं संहारकत्वमपि त्रिविध कार्यंजातं संसूचितमेव तद् यथाकरोतीति कृदित्यनेन जगत्स्रष्टृत्वम् तस्मादुत्पन्नाय जगते हितस्तद्धितः इत्यनेन रक्षकत्व-पालन कर्तृत्वम्, समसनं संक्षेपकरणं संहारशक्तिमत्त्वमपि प्रबोधितम्। एवं विधस्यैव शब्दब्रह्मणो हि प्रतिमारूप वेदोऽस्ति यस्याङ्गभूतं व्याकरणं कल्पितप्रकृतिप्रत्ययविभागाभ्यां तत्तदर्थं विभागं जनयती। स्थानिनामादेशानां तदर्थानाञ्चार्थकल्पना प्रवर्तिता, अस्मादेवहेतोनामरूपात्मकस्य जगतोऽपारमार्थिकाः कल्पित—अवास्तवव्यवहारा अपि लोकवद् दर्शितः। इदं केवल न विनोदाय वागाण्यते किन्तु तथ्यमेव यथामति प्रस्तूयते यत् लोके पूर्वं कलह भवति तदनन्तरञ्च सन्धिर्विधीयते। एवं व्याकरणेऽपि प्रथमं विगृह्यो विग्रहं विधाय (कलहाऽपर पर्यायं कृत्वा) पश्चाच्च सन्धिर्विधीयते। यद्यपि न ते व्याकरणे सिद्धान्ततः पारमार्थिकास्तथापि शास्त्रप्रक्रियानिर्वाहाय लोकव्यवहारवल्लक्ष्यन्ते—कल्प्यन्ते। एवं समास व्यासादयश्चोपलभ्यन्ते। पृषोदरादीनि[1] यथोपदिष्टमिति सूत्रेऽपि यथोपदिष्टशब्दस्य साधुत्वाभिधानेन" लुपियुक्तवदव्यक्ति[2] वचने तदशिष्यं[3] संज्ञा प्रमाणत्वात् "इति सूत्रेण सूत्रकृतोक्ताऽभिप्राये समादरः प्रदर्शितोविद्यते।

---

१. अष्टा० ६। ३। १०९ २. अष्टा० १। २। ५१
३. „ १। २। ५३

यथासूत्रकारस्य पाणिनेर्मते शब्द नित्यता तथैव कात्यायनपतञ्जली अपिनित्यता समर्थकौ ।

**कात्यायनपतञ्जली-मुनीद्वावपिशब्दस्य नित्यत्वं स्वीकुरुत:**

तावपि सम्बन्धस्य नित्यत्वं मन्वाते। शास्त्रप्रक्रियानिर्वाहाय यदा स्थानिनामादेशानां प्रकृतिप्रत्ययादीनां तत्तदर्थानाञ्च कल्पना कल्पे कार्यवाद: पक्षएक: स्वीकृतएव, तस्मादत्र शब्दानां नित्यत्वाऽनित्यत्व पक्षावपिस्त एव । वस्तुतोऽसत्योपाध्यवच्छिन्नएव शब्दोऽनित्य:। असत्योपाध्यनवच्छिन्न: शब्दोनित्य: स एव ब्रह्माऽपरनामधेय:। चत्वारि शृंगास्त्रयोऽस्य पादा इत्यस्य प्रयोजन प्रख्यापनावसरे महतादेवेन न: साम्यं यथास्यादितिवचनेन स्वत: प्रकाशे न शब्दब्रह्मणा न: साम्यमित्यभिप्राय:सुष्ठुप्रकाशित: । ब्रह्मविद ब्रह्मैव भवतीति रीत्या शाब्दिकानामपि शब्दब्रह्मसाम्यं यथा स्यादित्यभिप्रकाशनं भवति। वार्तिककृताऽपि सिद्धे शब्दार्थसम्बन्धे सिद्धन्तुनित्यशब्दत्वात् इति वार्तिकाभ्यां संग्रहे तावत् प्राधान्येन परीक्षितं नित्येषु कूटस्थैरविचालिभिवर्णैं भवितव्यम् इति सर्वं शब्दब्रह्मविषयकं तथ्यं सम्प्रकाशितम् ।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिने: ।
एकदेश विकारे हि नित्यत्वन्नोपचर्यते ॥[1]

इत्यादि वचनै: भाष्यकृताऽपि शब्दस्य नित्यत्वमखण्डत्वञ्च सम्यगुपपादितम् एवं विध एव शब्दोऽसत्योपाध्यवच्छिन्नो जगद्रूपेण विवर्तंतइति मतस्थिति:। भर्तृहरिणापिभगवता भाष्येऽस्मिन् स्वीयं मतं प्रकाशितमनादि निधनेत्यादि वचनेनोत्पादविनाशरहित: पूर्वापरीभावशून्य: उपसंहृतक्रमश्च शब्द एव जगत उपादानकारणं भवति नत्वन्यदित्यादिकम् ।

अत इदमित्थं वक्तुम् शक्यते यत् तच्चशब्द तत्त्वमपरिच्छिन्ना सर्षत: संहृतक्रमा ग्राह्यग्राहकत्वशक्तिरहिता पश्यन्ती वागेव ब्रह्म । तदेवाविद्यालक्षणान्त: पश्यदवस्थया संश्लिष्ठं ज्ञेयश्चिन्मात्रं जीव: । विवर्तस्तु अतात्विकोऽन्यथाभाव एव यथा शुक्तौ रजतमिति । सतात्त्विकोऽन्यथा भाव: परिणाम: यथा पयोदधि भवति । उत्तररामचरिते भवभूतिना विवर्तपरिणमयो: शब्दयो: पर्यायमेवं प्रदर्शितम्—

1. अ० १।१।२०

एकोरसः करुण एव निमित्तभेदात्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुदबुदतरंगमयान्विकारान्
अम्भो यथा सलिलमेव हितत्समस्तम् ।।

एवमेव तत्त्वसंग्रहे का० १२८ प्रोक्तं यथा—

नाशोत्पादासमालीढं ब्रह्मशब्दमयञ्चयत् ।
यत्तस्यपरिणामोऽयं भावग्रामः प्रतीयते ।।

एवमेव वाक्य पदीये १।१२० प्रोक्तम् यत्समस्तमपि जगत् शब्दस्यैवपरिणाम भूतम्—

शब्दस्य परिणामोऽयमित्याम्नायविदोविदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ।।

अत्रापितयोः पर्यायित्व प्रतीति न तिरोहिता ।

शब्दब्रह्मणएवारोपितभेदान् कालशक्तिमुपाश्रित्यजगतो जन्मादि षड्विकाराः जायन्ते, तस्यैव भोक्तृभोक्तव्यरूपेण नानात्वमपि भवति । तस्यैव शब्दब्रह्मण एव प्रतिभारूप एव वेदः । स च एकोऽपि भिन्नभिन्न महर्षिभिराम्नातत्वात् ऋग्यजुःसामाथर्वभेदेन चतुर्विध इव भवति । अभेदमपि तस्य सहितं कृतवान् मन्त्रद्रष्टा महर्षिः संस्मृत्य यथा—"अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदो सामवेदोऽथर्वाऽङ्गिरसः" इति चतुर्विध एववेदो ब्रह्मणः सकाशादाविर्बभूव इति केषाञ्चिन्मतम् । प्रथमं ब्रह्मस्वरूपं शब्दतत्त्वं वेदरूपेण व्यवर्तत । वेदस्यैवानन्तकलात्मकशक्तिभिः जगद्विवर्तं रूपम् अन्तेऽपि तस्मिन्नेव जगतोलयः । अथ च सर्वाविक्षाभेदा अपि वेदादेव । ओंकार एव सर्वावाक् सैषा स्पर्शोष्मभिर्व्यंज्यमाना बह्वी नानारूपा भवति इति श्रुत्या वाक्यपदादिरूपाघटपटाद्यर्थरूपा च सृष्टिर्वेदादेव, स्फोटात्मकं शब्द ब्रह्मबुद्धिस्थं ध्वनिव्यंग्यम् यथाऽरणिस्था वह्निर्मंथनान्तरं दाहकत्वकारणं भवति तथैव बुद्धिस्थोऽपि स्फोटोऽर्थज्ञानेच्छया श्रुतीनां पृथक् पृथक् कारणं भवति । शब्दश्च जलगतचन्द्रप्रति-

बिम्बवत् नादस्य ह्रस्वदीर्घादि कत्वखत्वादिधर्माश्चानुगच्छति। माया संवलितस्य परमेश्वरस्य, तदैक्षत बहुस्याम्प्रजायेय "एकोऽहं बहुस्याम," इदानीं स्रष्टव्यम्, इति सिसृक्षात्मिका बुद्धिरुपजायते। ततस्त्रिगुणात्मकमव्यक्तं विन्दुरूपं शक्तितत्त्वमाविर्भवति, ततस्त्रिगुणात्मकस्य विन्दोरचिदंशो बीजम्, चिदंशो विन्दुः। चिदचिन्मिश्रोनादः, तत्राचिदंशः शब्दार्थोभयसंस्काररूपाऽविद्या, अस्मादेव गुणत्रयात्मकात् विन्दोर्वर्णविशेषरहितं ज्ञानप्रधानं सृष्ट्युपभोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतदेव हि जगदुपादानं खपरा-इत्युच्यते। बोधविषयं गतस्यार्थस्य प्रकाशनेच्छया प्रयुक्तस्य, इच्छया सञ्जातप्रयत्नेन योगोभवति तदैत्रमूलाधारस्य संस्कृत पवनसंस्कारः, तेनाभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठितया निष्पन्दं परावागित्युच्यते, तदेवब्रह्म नाभिपर्यन्तंसंस्कृत पवनसचिवेनागच्छता तेनाभिव्यक्तञ्च मनोविषयः पश्यन्ती वागुच्यते, एतद्द्वयं सूक्ष्मतमं सूक्ष्मतरमीश्वराधिदैवतं योगिनां समाधौ निर्विकल्पकसविकल्पकसमाधिविषयः प्रोच्यते। तदनन्तरं हृदयदेशं स्पर्शवता संस्कृतपवनेन समभिव्यक्तं तत्तदर्थं विशेषबोधिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदैवत्या परश्रोत्रेण ग्रहणयोग्या सूक्ष्माकर्णपिधाने सूक्ष्मतर वाखभिघातेनोपांशुगब्द प्रयोगेचेत्पादिकं वा सर्वं सुविवेचितं पूर्वम् तत्रेत्थंक्रमप्रक्रिया विनिर्दिष्टा—यथा घनीभूतं ब्रह्म, ततो विचिकीर्षा, ततोऽव्यक्तम् ( कारणविन्दुपदवाच्यम् ) ततोऽव्यक्तोरवः ( कारणविन्द्वात्मकः निष्पन्दं शब्दब्रह्म मूलाधारेऽभिव्यक्तिमान् परावाग्रूपः ) ततः पश्यन्ती (कार्यविन्दुरूपा स्पन्दसामान्यवती) ततो मध्यमा ( नादाख्य स्पन्द विशेषवती) ततो वैखरी।

**बीजरूपा अकारादिवर्णरूपा**

एवमेव शारदातिलकेऽपि प्रकारः प्रक्रियायाः प्रतिपादितो वर्तते। यथा—

> निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।
> निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥[1]

---

१. शारदा तिनके

अत्र सनातनपदेन तस्य नित्यत्वमेव विहितम् प्रकृतेरन्यपदेन प्रकृतिसम्बन्धशून्यत्वन्तस्योपपादितम् सकलपदेन कला प्रकृतिस्त-त्सहितः। एवं शिवतन्त्रे शक्तिर्वोधिता—

सच्चिदानन्दविभवात् सकलात्परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद्विन्दु समुद्भवः ॥[1] इति

यद्युच्यतेऽविद्याशबलितत्वेन जडत्वे कथन्तस्य सृष्टत्वमिति तन्न-समोचीनं यतः सच्चिदानन्द विभवादित्युक्तम्। तेन तस्याविद्यावत्वे-ऽपि न स्वरूपहानिः यदुच्यते शक्तिसहितादेवपुनः कथं शक्तिरासी-दिति तदपि न शोभनं यतः या अनादि रूपाचैतन्याऽऽभासेन महाप्रलये सूक्ष्मा स्थिता तस्या गुणवैषम्येन सात्त्विकराजसतामस स्रष्टव्यकार्य-साधने वा उच्छूनावस्था सैवोत्पत्तिरिह विवक्षिता। वायवीय संहितायामपि प्रोक्तं यथा शिवेच्छयापराशक्तिः शिवतत्त्वैकतां गता, ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवेति नात्रकाचनशंका। तस्या एवशक्तेर्नादविन्दु सृष्टयुपयोग्यवस्थारूपौमन्येते। प्रयोगसागरेऽपि—

नादात्मना प्रबुद्धासा निरामय पदोन्मुखी।
शिवोन्मुखीपदाशक्तिः पुंरूपा सातदास्मृता ॥[2]

इत्थं प्रथमोविन्दुः तस्मादव्यक्तात्मा वर्णादि विशेषरहितोऽखण्डो-नादमात्रंखण्डउत्पन्नः स एव शब्दब्रह्म प्रोच्यते।

तत्प्राप्यकुण्डलीरूपं प्राणिनां देहमध्यगम्।
वर्णात्मनाविर्भवति गद्यपद्यादि भेदतः ॥
अर्थविद्यात्मनः शम्भोः कालबन्द्यः कलात्मनः।
अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥[3]

---

१. शिव तंत्रे
२. प्रयोग सागरे
३. प्र० सागरे

अत्र षण्णवत्यंगुलो देहायामः तत्रांगुलार्धसहितं सदाचत्वारिंशदंगुत्मकमधः उपरि च परित्यज्यैकांगुलपरिमितं मध्यं मूलाधार इत्युक्तं भवति। यथोक्तमत्र—

पाय्वन्ताद् द्वयंगुलादूर्ध्वंलिंगाचारुयुगुक्तादधः।
मध्यमेकांगुलं यच्च देहमध्यं प्रचक्षते।
गुद लिंगान्तरे चक्रमाधाराख्यं चतुर्दलम्।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधार पंकजे।[1]

किमधिकं वक्तव्यम्—सर्वस्यापि बीजभूतं वाग्रूपत्वमेवसावाक् सर्वविद्याशिल्पानां सर्वासांविद्यानां, सर्वेषां शिल्पानां कलानाञ्च—उपनिबन्धनी विधत्ते, अर्थात् उपवध्यतेऽनया उपबन्धनी=वोधिका, वाग्रूपमता वशादेवाभिनिष्पन्नं सर्वं वस्तुविभज्यते घट-पटात्मना। यथोक्तं भर्तृहरिणा ब्रह्मकाण्डे वाक्य पदीये—१२५

सा सर्व विद्या शिल्पानां कलानाञ्चोपबन्धनी।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ।। इति
अपरमिहतथ्यं प्रकाशितं विद्यते यथा।
भेदाद्ग्राहविवर्तेन लब्धाकारपरिग्रहा।
आम्नातासर्वविद्यासु वागेव प्रकृतिः परा।।
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धना।
पृथक्प्रत्यवभासन्ते वाग्विभागागवादयः।
षद्द्वारांषडधिष्ठानां षड्प्रबोधनं षड्व्ययाम्।
ते मृत्युमति वर्तन्ते ये वैवाचमुपासते।[2]

---

१. प्र० सागरे

२. वा० प०, १२५, १२६-१२७

एवं विधोक्तं ब्रह्म, "एकमेवाद्वितीयम्" प्रणव एवैकस्त्रिधा (त्रेधा) अभिव्यज्यत् तदेव च प्रकाशाख्यशब्दशक्तिसमाविष्टम्। तदुक्तञ्च-त्रीणि ज्योतीषि त्रयः प्रकाशाः योऽयं जातवेदा यश्चपुरुषेष्वान्तरः प्रकाशोयश्च प्रकाशयोः प्रकाशयिता शब्दख्यः प्रकाशः तत्रैत्सर्वंमुपनिबद्धं यावत्स्थास्नुचरिषणु च।

ओमित्येतदक्षरमिदं सर्वंम् "इति श्रुतिव्याख्याने भगत्पादैश्श्री-शंकराचार्यैः "यदिदमर्थंजातमभिधेयभूतं तस्याभिधायाअतिरेकात्। अभिधानस्य चाकारव्यतिरोकादोंकार एवेदं सर्वम् इत्युक्तं संगच्छते। यथा सर्पो रजतमित्यादि विकल्पस्य रज्जु—शुक्तिरित्यादिरधिष्ठान-विशेष आस्पदोऽभ्युपगतस्तथा प्राणादि विकल्पस्य तद्विषयस्य सर्वस्य वाक्प्रपञ्चस्योक्रोंकार मात्रात्मकस्तदास्यदोऽभ्युपगम्यते। शब्दब्रह्मणो जगदुपानत्वं हेलाराजोऽपि स्वप्नदृष्टान्तेन च जगतो विभिन्नरूपतया भासमानस्य मिथ्यात्वेमेवमेव प्रतिपादयति यत् ब्रह्माख्यं शब्दतत्त्व मेववाङ्मन सगोचरमन्यदोयरूपभेदोपग्रहेणान्यथा प्रतोयते" इति—तदुक्तमत्र—

ज्ञेयेन न विना ज्ञानं ब्यहारेऽवतिष्ठते।  
नालब्धक्रमयावाचाकश्चितदर्थोऽभिधीयते॥[1] इति

निवर्तवाद एव वाक्यपदीयकाराशयं सुव्यक्तोचकारहेलाराजः न तु परिणामवादः। शब्दस्य परिणामोऽयमित्यत्रापि परिणामपदेन विवर्ताख्यः परिणाम विशेष एव तेनापि स्वोकृतः। न च तान्त्रिक नयवदिदं परिणाम दर्शनमन्तव्यमपि तु विवर्तपक्ष इति सर्वं व्यपदेशा-तीतं परं ब्रह्म मूर्तिक्रिया विवर्त्त रूपस्यैव विश्वस्योपादानकारणम्। उपादानकारणत्वं च विवर्त्तोपादानत्वमेव तस्मादविभक्तादेकस्मादेव शब्दाख्याद् ब्रह्मणो जगदाख्या विकाराः समुद्भवन्ति, यथैकस्मादेव मनसः स्वप्नेनानाविरुद्धानि रूपाण्यवभासन्ते तद्वदेव। यथोक्तम्—

आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम्।  
विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः॥[2] इति

---

१, वा० पदीयम् हेलाराजः

२. वा० प० हे०

यथा वा समुद्रस्यबुद्बुद वीचितरंगाख्या विकारा जायन्ते तथा च ते विकारा उदकात्मनः समुद्राद् वस्तुतो न भेदमापन्नामन्यन्त्रे तथैव जगदिदमपि अविधावशादेव भिन्नतभाऽवभासमानाः प्रतीयन्ते तथोक्तमप्यत्र–

अभेदिनो निर्विकृतेरनेकमृषा स्वरूपानन्तरदर्शकत्वम् ।
विवर्तशब्दार्थं इह प्रसिद्धस्तरंगभेदादिव चन्द्रभेदः ।।

इत्यद्वैतवादमतेन शब्द ब्रह्मणो जगत्प्रत्युपादान-निमित्तकारणत्वे यथा न संशयस्तथा तस्य मोक्षो पायत्वेऽपि न विवादः, शाब्दिक-सिद्धान्तं सुविचार्य व्यवस्थित साधुभावेशब्दतत्त्वे संस्क्रियमाणेऽभ्युद-यलक्षणो धर्मविशेषो नियमेनाविभवत्येव, तदनन्तरमभ्यासाद्धि शब्दपूर्वकंयोगमभिधाय ममाहमित्यहंकारग्रन्थीन् समतिक्रम्य महता देवेन परेण शब्द-ब्रह्मणाऽत्यन्तं संसृज्यऽते वाग्योगविद ।

पश्यन्तीरूपप्रतिभातत्त्वजन्यां भाव ग्राम प्रकृतिसत्तां सकलशक्ति समवेतां विधिवदवधार्य शाश्वतन्नियतं कैवल्यमधिगच्छति वा भर्तृहरि-रपि तथैवोपपादयति–

यस्मिन् संमुखतां प्रयातिरुचिरः कोऽप्यन्तरुजृम्भते
नेदीयान् महिमा मनस्यभिनवः पुंसः प्रकाशात्मनः ।
तृप्तिं यत् परमां तनोति विषयास्वादं विना शाश्वतीं
धर्मानन्द सुधामयोर्जित वपुस्तत्प्रातिभं सस्तुमः ।। इति

—वा० प्र०, तृतीये काण्डे-मंगलश्लोके हेलाराजेनापि

पश्यन्तीरूप प्रतिभात्त्व साक्षात्कारेण सच्चिदानन्द रूपतामा-प्नोतीति । अपरञ्चोक्तमन्त्र—

प्राणवृत्तिमनुक्रान्ते वाचस्तत्त्वे व्यवस्थितः
क्रमसंहारयोगेन संहृयात्मामात्मनि ।।
वाचः संस्कारमाधाय वाचः स्थाने निवेश्य च
विभज्य बन्धनान्यस्याः कृत्वातांच्छिन्नबन्धनाम् ।।
ज्योतिरान्तरमासाद्यछिन्नग्रन्थिपरिग्रहम्
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते ।। इति

अतः इदमेव तथ्यं वस्तुतोऽत्र प्रकाश्यते यत् सकलोपाध्यतीतः परमात्मैव वस्तुतो वर्णाश्रमादिरहितः स्वाभिन्नानाद्यविद्यया शक्त्या जीवेशादि विभागेन स्वस्वोचितानि कर्माणि कुर्वन् प्रति देहमहमहमिकया बद्ध इव शास्त्रजन्य ज्ञानेन मुक्त इव भवति, न वस्तुतो बन्ध मोक्षवान् बन्ध निमित्ताया अविद्याया ब्रह्मव्यतिरेकेणाभावात्। परमात्मैवाविद्यासहकारेण जीवजगद्भावादिना व्यवह्रियमाणं वस्तु नान्यत् श्रुतियुक्तिविरोधात् केषांचित् शाब्दिकानां मते परिणामवादो-निरस्यते यथा—द्वैतस्य ब्रह्मा [illegible] नेहनानास्ति इत्यादिश्रुतेः, नहि यन्नास्ति तत कस्यचित् परिणामः सम्भवति यथा नरशृंगम्। न वेत्थं वक्तुं शक्यते यद् दृष्टिरेव परिणामोऽस्तु "यत-स्तदतिरिक्तस्य दृश्यामभावादिति, दृष्टेः फलरूपाया आत्मरूपान्त-र्भावेन तत्परिकामत्वानुपपत्तेः। नहि स्वयं स्वस्वपरिणामः सम्भवति कात्स्न्यैकदेशाविकल्पेन परिणाम पक्षानुपपत्तेश्च। विवर्त पक्षेतु न कश्चन दोषावसरः यतोऽधिष्ठानस्वरूपायातिरिक्तं विवर्तो नाम किञ्चिद्वस्तुनास्त्येव। यदाश्रित्य कात्स्न्यैक देश विकल्पावतारः स्यात्। किन्त्वधिष्ठानमेव दोषवशाद् विलक्षणाकारेण भासमानो-विवर्तइत्युच्यते। स एव विलक्षणाकारः कस्येति जिज्ञासायाम; वस्तुतो न कस्यापोति समाधिः, अधिष्ठोन तस्य बाधादन्यत्राप्रतीते-रिति दृष्टिरेव सृष्टिरिति परमसिद्धान्तं निमालयामास वाक्यपदीय-कारः।

**ब्रह्मणोऽविद्याकालशक्ति कृत भेदाभासनिरूपणम्**

सर्वमेव विवर्त दर्शनेनोपपद्यते। एकस्यतत्त्वादप्रच्युतस्य निष्क्रि-यस्य सक्रमस्येव प्रकाशनं विवर्तोज्योतितः। तत्त्वमिदमेवभगवान् भर्तृ-हरिः स्वमतेऽद्वयस्य ब्रह्मणेऽनादिसिद्धजीवात्मगता शक्तिर्वर्तते इति प्रतिपादयति। तच्छक्तिवशादेव तत्त्वन्तिरोधायक्रमिकोव्यवहारो भेदेनावभासते। तादृशक्रमेऽपि ब्रह्मणाभेदावसभासनं कथं सम्भवतीति विचारणायाम् तदविद्याकृतमेवोत्तरयति। तत्रैव हि क्रमाभासनंकाला-ख्यस्वातन्त्र्यशक्तिकृतमेवेत्यपि स्वीकरोति। शक्तिरपि न ब्रह्मणो भावात्परमार्थतो भिन्नेति निरूपयिष्यते। अथ च विश्वात्मैकमेव परं ब्रह्म नानाविधकार्यकारितयाऽनन्तशक्तिमत् तथा क्रमिकांश्चक्रभ्रमिवत्

परावर्तमानान् संजायमानान् जन्मादिषडभावान् प्रकाशयन् कालयति भूता नितिकाल: इत्युच्यते स विभु: स्वतन्त्र: तस्मादेव स्वातन्त्र्य-शक्ति: काल इति वाक्यपदीये सिद्धान्ततयाप्रथिताऽभूत । यथा—

अध्याहित कलां यस्य कालशक्तिमुपाश्रिता: ।
जन्मादयोविकारा: षड्भावभेदस्ययोनय: ।।[१]

अपरमपि हरिरवोचत् प्रमाणंकालसमुद्देशविशेषेऽपि यथा—

प्रतिबन्धाम्यनुज्ञाम्याँ वृत्तिर्या तस्य शाश्वती ।
तथाविभज्यमानोऽसौ भजते क्रमरूपताम् ।।
निर्भासोपगमो योऽयं क्रमवानिवदृश्यते ।
अक्रमस्यापि विश्वस्यतत्कालस्य विचेष्टितम् ।।[२] इति

न केवलं भर्तृहरिरेव वदति किन्तु हेलाराजोऽपि तथा भाषतेतद्-यथाअक्रमंब्रह्मविवर्तरूपं विश्वं तस्य यदिदं क्रमेणैवावभासनं तत्काल शक्तिकृत प्रतिबन्धाम्युनुज्ञासामर्थ्यम् । सा कालाख्या हि ब्रह्मशक्ति: का ? इति जिज्ञासायाम् ब्रह्म शक्तिरविद्यैव क्रमावभासकारितया जीवात्मसु सकला एवं हि निष्क्रमं ब्रह्म तत्त्वं विद्यामयं काल कलितम-विद्यावशात् क्रमरूपोपग्रहेण यथायपविवर्त्तते इति कालानुवेधात् पदार्थानां क्रमेण प्रत्यवमासोऽनादिसिद्धजीवात्मगत: सर्वस्य च भेदजा-तस्याविद्यामयत्वात् । कालेऽपि दर्शनभेदेन योऽपि विभागोदृष्टि पथं स्मृति पथम्बाऽऽरोहति सोऽपि ह्यविद्याविजृम्भित एव । आविर्भूता-याँत्वविद्यायां सर्वस्य भेद प्रपञ्चस्यानवगमादयमप्युपैति । तस्मा-देव—

सर्वंशक्त्यातमभूतत्वमेकैकस्यैवेति निर्णय: ।
भावानामात्म भेदस्य कल्पनास्यादनर्थिका ।।[३] इति

"वाक्यपदीयं संगच्छते । तेनैकमेवब्रह्म सर्वंशक्तिमदिति प्रमाणी-भूतम् । तेनैवेत्थमविद्यापरिकल्पितस्यभावभेदस्यापारमार्थिकत्वात्

१. वाक्य पदीये ब्रह्मकाण्डे
२. वाक्य पदीये कालसमुद्देशेऽपि
३. वा० पदीयम्,

कार्यविभिन्नत्वादुन्नीय मानः शक्तिभेदः एकस्यैव युक्तो न स्वरूपभेदः कथमपि । इत्थंहि प्रकाशक प्रकाश्य रूपौ शब्दार्थौं विशेषौ (भिन्नौ) अविशेषौ (अभिन्नौ) वेति विमर्शोऽपि महत्त्वं विभर्ति—वस्तुतश्शाब्दिकसिद्धान्ते तौहि शब्दार्थौं फलतोऽभिन्नावेकस्यान्तरस्य तत्त्वस्य सम्बन्धिनौ वहिः स्थितौ भेदाविवप्रतिभासमानौ गोचरीभूतौ स्तः। एकस्यैवात्मनो भेदौ शब्दार्थाविपृथकस्थितौ इति कारिका-मुखेन भर्तृहरिः प्रतिपादयति यत् शब्दार्थौं हि वाच्यवाचकाविति प्रसिद्धिं गतौस्तर्हि कथन्तयोरभेदोपपदानं सम्भवमिति 'शंका न प्रकर्त्तव्या' यतः शब्दतत्त्वस्यान्तरस्य ज्योतीरूपस्य भेदप्रतिभासो न विरुद्धयते शक्तिभेदात् यथा द्वितीय काण्डे वाक्यपदीये प्रोक्तम्—

प्रकाशक प्रकाश्यत्वं कार्यकारणरूपता ।
अन्तर्मात्रात्मनस्तस्य शब्दतत्त्वस्य सर्वदा ॥
तस्यैवास्तित्वनास्तित्व सामर्थ्येसमवास्थिते ।
अक्रमेक्रम निर्भासे व्यवहारनिबन्धने ॥' इति

तेन सर्वरूपविकल्पातीतमपि ब्रह्मसमाविष्टसर्वशक्तित्वात् सर्व-रूपेणावभासमानं कालाह्वय स्वातन्त्र्यशक्तिसमाविष्टं मूर्ति प्रति-माम् रचयति। तेनाप्रविभागमपिदेशकालाभ्यांप्रविभक्तमेव प्रभासितं सत् तत्प्रविभागानुसारं जन्म नाशौ समस्त क्रिया भेदानुयायिनौ व्यवहारिकौ प्रसिद्धौ समभवताम् ।

इत्थमद्वयस्यैवब्रह्मणोमहासत्तास्वरूपविमर्शः सिद्धान्ततः सिद्धयति—यथाहि—

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्यच्युते तस्मात् सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपादिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥[२] इति

---

१. वा० प० द्वि० काण्डे
२. वा० प०

तथा हि—अद्वयं परमार्थं सत्यं यत् सैव जातिर्महासत्ताख्यापरब्रह्म स्वभावेति व्यवहृतमद्वैतवादिभिः । भेदप्रत्ययेष्ववाध्यमानत्वात् सर्वत्रानुगमाच्च । तत्र सर्वत्रानुगमादेव सत्यस्वरूपं व्यवस्थितं भवति । तस्या एव जातेर्गोत्वादिजातिभेद न विर्वते सति व्यवहारः घटाद्युपहिता घटत्वादिर्जातिः, द्रव्यत्वाद्युपहिता द्रव्यत्वदिर्जातिः । द्रव्यगुणा कर्मंत्रयोपहिता सत्तेति व्यवहृति पथमागता एकस्या अप्युपाधिभेदाद्भेदावगमः ।

आश्रयादिभिः स्वसम्बन्धिभिभेदात् । उपचरित भेदा गवाश्वादिषु सत्तैव जातिर्गोत्वादिका नान्यापरमार्थं भिन्ना सा वर्तते । यथैकमपि मुखं तैलोदकादिरूपा श्रयोपाधिकतयाऽनेकस्थतयाऽवभासते । एवमेव व्यञ्जकानां गवादीनां भेदात् सत्ता गोत्वादिरूपतयाऽवभासते नानाविधा । तस्याँ सत्ताख्यायाँ जातावेतत् सर्वे गवादयः शब्दा वाचकत्वेन व्यवस्थिताः इति सर्वं शब्दविषयत्वं सुस्पष्टमेव । अयमेव च सत्ताऽद्वैतवादः सांख्य नयेऽपि सम्यगवबोधितो हेलाराजेनापि तथाहि—'योगिनामष्टस्वणिमादिकेष्वैश्वर्येष्वश्रेयःसुश्रेयोबुद्धिरष्ट विधो मोहः इति । सैवास्मितावृत्तिरुच्यते तत्त्वविद्भिः । तादृशास्मृता लक्षणस्य सत्त्वप्रधानस्य श्रवणादिविशेष धर्म शून्यस्याभिमानमात्र धर्मकस्याऽहंकारस्य बुद्धीन्द्रियाणि श्रवणादि धर्मकाणि पञ्चज्ञानेन्द्रियाणि रजः प्रधानस्य तु पञ्चकर्मेन्द्रियाणि । एकादशम्मनस्तूभयात्मकम् बुद्धदीन्द्रिय कर्मेन्द्रियश्चोभयं मन्यते ।

**अत्रविषये निरुक्तकारस्य यास्कमुनेरपि वचनम्**

सैव भावविकारेषु षडवस्थाः प्रपद्यते ।
क्रमेण शक्तिभिस्ताभिरेवं प्रत्यवभासते ।।[1] इति

अत्राशयस्तु—सन्मात्रस्य तस्यैव शब्द ब्रह्मण एवाभिन्नाः काश्चन शक्तयोऽविधाशक्ति महात्म्यात् प्राप्त नानात्वावस्थ विशेषाः याभिर्भावविकारेषु षडवस्थाः प्राप्ताः सा सत्तैव । अत एव हेलाराजेनापि—

---

१. निरुक्त वचनम्

'स्वाभिरेवशक्तिभिरव्यतिरिक्ताभिर्जन्मादिरूपतयाऽविद्यायामवभासते' इति प्रोक्तम्। स चावभासो न युगपत् किन्तु क्रमशः एव। क्रमाख्याहि कालशक्तिः ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रिया द्वारकमेवपौर्वापर्येणाऽत्रभासोपगमविघ्नायिनीति प्रथिता। तृतीयकाण्डे वाक्यपदीयेऽपि—

आत्मभूतः क्रमोऽप्यस्याः यत्रेदं कालदर्शनम्।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम्॥[1]

ताश्चात्मीया एव शक्तयः क्रियेच्छास्वातन्त्र्यवाक्कालाद्यात्मिका ब्रह्मणः सन्ति तेन तस्याश्शक्तिमताब्रह्मणासहाभेदोपपादनमत्र सिद्धान्तितम्—

एकमेवपदाम्नातमित्यादि वचनैः।
अत्याहिताः कलायस्य कालशक्तिमुपाश्रिता॥[2] इति

वचनैश्च सम्यगुपादित एव तयोरभेदः। अतश्शक्तिभ्योब्रह्मणोऽपृथकत्वेऽप्यारोपित एव पृथक्त्वावभासः। न खलु=जातिव्यक्तिवदन्याः शक्तयः तस्मिन् ब्रह्मणि विद्यन्त इति वक्तुं पार्यते तत्तत्प्रकाशवत् इति तदर्थमपि व्याचख्यौ हेलाराजः सम्यगरूपेण। यथाचिन्तामणिरर्थिनां यथाशयमाकार नानात्वं दर्शयति तथाऽनन्तशक्तिसमाविष्टं सन्मात्रं ब्रह्माविद्याविजृम्भित सांसारिक प्रमातृविषये नानारूपं चकास्त्येव। न **तत्त्वमविद्ययाऽऽवर्तिनी क्रियते कदाचित्**। यथाऽऽवरणादिना इन्द्रियस्यैव प्रकाशशक्तिः प्रतिबद्ध्यते, न तु विषयो विक्रियते तथैवानाद्यविप्रकल्पित विभागानां जीवनामेव संवेदनशक्तिर्नियम्यते यदवच्छिन्नार्थाभिधानेन भेदविषयाणि समाभिधानानिप्रयुज्यन्ते एव। तेनैव तृतीयकाण्डे हरिणा प्रोक्तम् वाक्यपदीये—

आकारश्चैव व्यवच्छेदात् सावर्थ्यमनुरुद्ध्यते।
यथैव चक्षुरादीनां सामर्थ्यं नाडिकादिभिः॥

---

१. वा० प० तृ० काण्डे
२. वा० प०

यथा च—

न तत्त्वातत्त्वयोर्भेदः इति वृद्धेभ्य आगमः।
अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम् ॥

तेन हरिमते सत्याऽसत्ये द्वे रूपे न कथमपि स्तः अद्वैतहानि प्रसंगात् किन्तु पारमार्थिकमेवाद्वयम् ।

**हेलाराजमतमत्र—**

हेलाराजोऽपि—ततश्च योऽयं भेदप्रकाशः सैवैक धन प्रकाशाभावः, प्रकाशविच्छेदोऽविद्या इति । वाक्यपदीयकारमते त्वविद्यायाः प्रकाशरूपत्वाच्चैतन्यात्मकत्वं प्रतिपद्यत इति दर्शनान्तराद् विशेषः ।

**श्रुत्यासमर्थनम्—**

'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुत्यानानाविधाः शक्तया ब्रह्मणोऽभिन्नाः सन्ति । शक्तिशक्तिमतोरुपादानोपादेययोरत्यन्ताभेदात् । तेनैव सौरसहितायामपि—

ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नापरा ।
तथा सति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः ॥
शक्तिशक्तिमतोर्विद्वन् भेदाभेदस्तुदुर्घटः ॥ इति

कूर्मपुराणेऽपि—

शक्तिशक्ति मतोभेदं वदन्त्यपरमार्थतः ।
अभेदञ्चानुपश्यन्ति योगिनस्तत्त्वचिन्तका ॥

ज्ञानवासिष्ठेऽपि—

सर्वं शक्ति परं ब्रह्म नित्यमापूर्णमव्ययम् । इति

पद्माचार्योप्याह—

आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति त्रयोधर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते । इति ।

**शाब्दिकमतेन ब्रह्म सायुज्यं विमृश्यते—**

ब्रह्मे दं शब्दनिर्माणं शब्दशक्ति निबन्धनम् ।
विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥ इति

वचनानुसारं वैयाकरणमते परतत्त्वस्य शब्दब्रह्मणः शब्देन निर्माणमिति प्रोक्तमवश्यमत्र किमपि परमार्थंभूतं सरहस्यं प्रमुख-तत्त्वं प्रतिपादितम्मन्यते । महादेवो वृषभो रोरवीति पस्यशाह्निक भाष्यमनुरुद्धय शब्द एवतत्सुनिश्चितं प्रतिभातीति न संशयलेशः । तस्मादेव लोकोत्तरं तत्त्वं शब्द ब्रह्माख्यं प्रतिपन्नं भवति; वस्तुतोऽत्र शब्देन न स्थूलो न वा सूक्ष्मः शब्दो विवक्षितः "अशब्दम-स्पर्शम्" इत्यादि श्रुति विरोधात् । अतश्शब्दशब्दस्य कश्चन विलक्षण एवत्तादृशाऽर्थोऽङ्गीक्रियते यस्यातिशयेन लोकोतरत्वं ख्यापितं भवेदिति । स खलु अर्थ. शब्द स्वरूपश्चैतन्यमेव प्रतिभाति, यतश्शब्द ब्रह्मे ति व्यपदेशसत्वेन शब्दस्यब्रह्माभिन्नत्वे न कश्चनापि विरोधः स्यात्ः अत्र भगवती श्रुतिरपि प्रमाणम्—यथा यावती वाक् तावद् ब्रह्मे ति । शब्द ब्रह्मणोश्चाभेदेऽत्रविवक्षिते शब्द पदस्य एवार्थः स्वीकृतः । येनाथेन सह ब्रह्म पद प्रतिपाद्य स्यार्थंस्याभेदोऽभ्युपगम्यत एव । तेन शब्दपदस्य ब्रह्मवच्चैतन्यमेवार्थस्सुस्पष्टः । ब्रह्मणि समा-श्रिताः कलाख्याः शक्तयो भाव विकारणां योनयो भिन्ना ब्रह्मणः पृथग्भूता इव ताविवर्तं निवर्तयन्ति सम्यक् । पुनश्चसृष्टि संहार-वेलायां तत्रैव लयोऽपि । अत्र भाव विकाराणामाविर्भावतिरोभाव-घटनायाः सम्पत्तये कलाख्यशक्तीनां ब्रह्मणः पृथगेव प्रथनं सिद्धा-न्तितं परं पारिशेष्यात् पारिमार्थिकत्वेतु न पृथगवभासः ।

वैयाकरण मते मोक्ष दशायां सैव स्थितिर्जायते अर्थात् परस्परं भिन्नानामपि कलानां कालशक्तिवृत्यसमाविषटानां शब्दब्रह्मणि अभेदेनावस्थानं भवति । भगवान् भर्तृहरिरपि तादृशस्य परमतत्त्वस्य शब्द ब्रह्मणः संप्राप्तये—अपूर्वंलाभाय वेदानामुपकारकतया वेदार्थं पर्यालोचनेन परमतत्त्वसाक्षात्कारो भवितु मर्हतीति प्रतिपादयति । अत्रेदं विचार्यते यत् कथं वेदाब्रह्मप्राप्तये तथा विधमानुकूल्यमवधार-यति, एतदर्थंमेव सुनिर्णीतमेव वचनं ख्यापयाति—

प्राहयुपायोऽनु कारश्च तस्यवेदो महर्षिभिः।
एकोऽप्यनेक वत्मेव समम्नातः पृथक् पृथक् ॥ इति

अर्थात्तस्य शब्द ब्रह्मणः प्राप्त्युपायः साधनम् अनुकारोनाम प्रतिमा च वेदो वस्तुतो भेदाभावात् ब्रह्मणोऽनुकारएव स एव वेदः एकः सन्नपि महर्षिभिरनेकधा ऋग्यजुः सामाथर्व भेदेनपृथक्-पृथक् समाम्मातः।

ब्रह्मणः प्राप्तिश्च ममाहमित्यहङ्कारग्रन्थि समतिक्रम मात्रम्। अहंकार चिदात्मनोस्तादात्म्याऽध्यास एव ग्रन्थिः तन्निवृत्तिश्च ग्रन्थि समति क्रमः। यथोक्तं पञ्चदश्यां चित्रदीपे—

अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम्।
इच्छँस्त कोटि वस्तूनि न वाधोग्रन्थि भेदतः ॥ ६२ ॥

यथाऽऽत्मनो व्यापकत्वेऽपि वृक्षादि जन्मनाशैर्न दुःखित्वं तेषु तादात्म्याध्यासाभावात् एवमहंकारगतेच्छादिभिर्देहगतव्याध्यादिभिश्च न दुःखित्वमिति।

अपरञ्चात्रवचनम् यथा—

वाचः संकस्कारमाधाय वाचं ज्ञानं निवेश्य च
विभज्य बन्धनान्यस्याः कृत्वातांच्छिन्न बन्धनाम्।
ज्योतिरान्तरमासाद्यच्छिन्न ग्रन्थिपरिग्रहः
परेण ज्योतिपैकत्वंच्छित्वा ग्रन्थीन् प्रपद्यते ॥

अतः एव चत्वारिश्रृंगा इति मन्त्र व्याख्यावसरे भगतवो भाष्यकारस्यमहता देवेन नः साम्यं यथास्यादित्यध्येयं व्याकरणम् इति प्रतीके महता परेण ब्रह्मणेत्यर्थः कैयटेनापि ब्रह्मणा शब्दब्रह्मणा साम्यं सायुज्यं नागेशभट्टेनापि प्रत्ययादि। ते नैवात्र भगवान् भर्तृहरिरपि सम्मतिं सम्यगिह प्रदाय ब्रह्मसायुज्यं सूप पादितवान् यथा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवास्थितम्।
प्राहुर्महान्तमृषभं ये न सायुज्यमिष्यते ॥ इति

अर्थात् प्रयोक्तुरुच्चारयितुः निवृत्तवाग् रूपस्य जीवस्यात्मान-मन्तर्यामिणं श्रुतेरस्याः वचनं प्रमाणम् एषते आत्माऽन्तर्याम्मृतः "इति अन्तो ना शंरीरान्तः हृदयाकाश देशे प्रतिष्ठितं शालिग्रामशिलायां विष्णुरित तत्रोपलब्धि योग्यं शब्दं महान्तं व्यापकं ऋषभं देव एव प्रकाशं ब्रह्म स्वरूपमपि प्राहुः येन ब्रह्मणाऽविवृत्तवाग् रूपेण ध्वनिगत-क्रमोपरागाभावे सायुज्यम्=ऐक्यमिष्यते। शब्दमेवाविद्यावशंजीवम-विद्यारहितं ब्रह्म च प्रोक्तमान् शब्दश्च द्विविधः नित्यः कार्यश्चेति। नित्यः सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तः प्रविष्टः सर्वविका-राणां प्रभवः शब्द ब्रह्मरूपः, अयमेवाऽविद्यावृतः सन् घटस्थित दीप इव नाना विषयान् भासमन् जीव भावमापन्नः कर्मणामाश्रयः सुख-दुःखयोरयिष्ठानं घटादि निरुद्ध प्रकाश इव स्वीकृतः कार्यस्तु व्यव-हारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही घटपटादिशब्द रूप एव।

**शब्दब्रह्मप्राप्तौ क उपाय इति विमर्शः**

शब्दब्रह्मप्राप्तौ अर्थात् तादात्म्यलाभाय=तादात्म्यभावाय उपयोगी क उपायः शब्दब्रह्मण उक्तं यन्माहात्म्यं तस्माद् यः संस्कारः शब्द संस्कारोऽपभ्रंशविवेकेन ज्ञानं सैव परमात्मनोनित्यस्य शब्द ब्रह्मणः सिद्धिरित। अर्थात् व्यवस्थित साधुत्वेन रूपेण शब्दतत्त्वे संस्क्रियमाणे अपभ्रंशरूप प्रतिबन्धकोपशमे धर्म विशेषस्याविर्भाव-स्ततश्शब्द ब्रह्मतादात्म्योपगमरूपाब्रह्मणः प्राप्तिरिति। शब्दसंस्कारः कथं तद्ब्रह्मणप्राप्त्युपायः' शब्दतत्त्वस्य प्रवृत्ति तत्त्वज्ञः=प्रवृत्तिरपि षड्भाव विकार रूपातस्यास्तत्त्वं प्रतिभाख्या, तामेव योजनाति सततदौपनिषदमृतं ब्रह्म समश्नुतेति नैकीभवतीत्येवार्थः परमार्थः परम पुरुषार्थरूपः शाब्दिकसिद्धान्ते। उक्तञ्चात्र भगवता भर्तृहरिणा वाक्य पदीये ब्रह्मकाण्डे-यथा—

तस्माद्यःशब्द संस्कारः सासिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ॥३२॥

शब्दश्च प्राणाधिष्ठानः बुद्ध्यधिष्ठानः इति कृत्वाद्विविधः, तत्रशब्दः प्राणबुद्धि शक्तिभ्यां प्रतिलब्धाभिव्यक्तिरर्थं प्रकाशयति, यदा

च प्राणवृत्तिं प्राणवायुव्यापारमाक्रामति तदा वायोस्तत्तत् स्थानेष्वभिघातो न जायते, इति शब्दे भेद रूपावभासो न भवतीति भेदरूपस्यासत्यसावबोधात् प्राणवृत्तिमतिक्रान्ते वाचरतत्त्वे बुद्धिस्थे व्यवस्थितो भवति, तत्रापि शब्दात्मा प्रत्यवभासमानः सक्रम इवाव भासते इति क्रम संहारयोगेन क्रम राहित्यभावनया आत्मान बुद्धौ आत्मानं शब्दं संहृत्य क्रमसंहारबुद्ध्या विषयीकृत्य वाचः संस्कारं ध्वन्युपरागरहित्यरूपं कृत्वा वाचं ज्ञाने निवेश्य अस्या वाचो बन्धनानि भेद रूपाणि विभज्य वाचमेनांच्छिन्नबन्धनामविद्याऽहंकाररहितां विधायच्छिन्नग्रन्थिपरिग्रहः सम् आन्तरं ज्योतिः पश्यन्तीवाग्रूपं समासाद्य ग्रन्थीन् छित्वा परेण शब्दब्रह्मणाज्योतिषाएकत्वं प्रतिपद्यते ।

यथोक्तध—

प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः ।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि ।
वाचस्संस्कारमाधाय वाचं ज्ञाने निवेश्य च ।
विभज्य बन्धनान्यस्याः कृत्वातांच्छिन्नबन्धनाम् ।
ज्योतिरान्तरमासाद्यच्छिन्तग्रन्थि परिग्रहः ।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते ॥ इति

शब्द राशयोवेदा अपि परमतत्त्वस्यानुकारः यथा प्रतिबिम्बदर्शनेन बिम्बमपि लोको ज्ञातुं शक्नोति, एवं शब्दब्रह्मानुकाररूपस्य वेदस्य शब्दब्रह्मोपलब्धये सुसामर्थ्यं सुस्पष्टमवधार्ममेव । ऋषयो मन्त्रार्थं द्रष्टारः इत्यास्तिकानां समादृतः समयः सर्वविदितप्रायः तेहि मन्त्रार्थं साक्षादवगच्छन्तिः मन्त्रार्थं साक्षात्कारश्च बोधिगम्य एव न तु बुद्धि गम्यः । मन्त्रार्थस्यप्रत्यक्षानन्तरमृषयः विलक्षणां तादृशीमवस्थामुपगच्छन्ति यस्यां खलु ते स्वानुभूतमर्थमन्येभ्यो विनिवेदयितुं लब्धसामर्थ्याः समुत्सुका भवन्ति । एवं विधायां स्थितौ यदाऽलौकिकं तत्त्वं परं रत्नं बोधि प्रसादेन प्रभावेण वा समधिगच्छन्ति तदातेऽपि स्वान्तरुद्यन्तं भावं ययागिराऽऽविर्भावयन्ति सैववाक् शब्दमयी वेदस्यैव ।

वदरक्षकत्वेनापि व्याकरणमर्थवदिति, भगवान् पतञ्जलिः रक्षोहागमलध्वासन्देहाः प्रयोजनमिति प्रतिपादयन्नस्य शब्द ब्रह्मणो महिमानं स्तौति । तेन षट्सुवेदांगेष्वन्यतमत्वं प्रख्यापितमेव । भगवान् भर्तृहरिरपि—विषयेऽस्मिन्नमौनमालम्बते, किन्तु बहूक्तानि वचांसि प्रमाणभूतानि । यथैकं वचनमत्र महत्पूर्णन्तस्यप्रस्तूयते—

इदमाद्यं पदस्थानं सिद्धिसोपान पर्वणाम् ।
इयं सा मोक्षमाणानामजिह्माराज पद्धतिः ॥ इति ॥

—ब्र० का० १।१६

अर्थात् सिद्धिः मोक्षः तस्य या अन्तरालावस्था तस्यास्ताः, तत्प्राप्तौ सोपानतुल्यत्वात् सोपानानि तेषां विभागाः पर्वाणि, तेषां मध्ये इदमेव व्याकरणं प्रथमं पदस्थानं पर्व । मोक्षमाणानांमुमुक्षूणाम् सा इयम जिह्मा अवक्रा अकुटिला समीचीनोपायाराजपद्धतिः इति ।

शास्त्रेषु ज्योतींषित्रीणि वर्तन्ते—वह्न्यादिपदार्थः एकं ज्योतिः, तेन ज्योतिषा तमसावृताः पदार्थाः प्रकाश्यन्ते । द्वितीयं वृत्तिज्ञानमपि प्रकाशरूपम् । वृत्ति ज्ञानेन तद विषयस्यार्थस्य प्रकाशोभवति । बुद्धेरर्थं प्रकाशकत्वमपि लोके विदितमेव । तस्माद् बुद्धेरपि प्रकाशकत्वं मन्यत एव, परन्त्वनयोर्द्वयोः प्रकाशयोः प्रकाशकोऽपरः कश्चनपदार्थोऽस्तीति तृतीयः प्रकाशः शास्त्रेषु शब्दाख्यः, तस्य प्रकाशरूपत्वं मनसि कृत्यैव प्रमाणयति । महतां वचसा—

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ॥

इदमेव तार्तीयकं ज्योतिः, तन्नूनं किमप्यद्भुतमलौकिकत्त्वमिति पूर्वोक्तस्य प्रकाशद्वयस्य लौकिकत्वात् । तस्मादत्र वैयाकरणसम्मतं मतमेव सर्वथा श्रौतम् । अस्मादेव कारणात् तादृशस्य लोकेत्तरस्याद्वयरूपस्य ज्योतिःपदार्थस्य शब्दरूपस्यावबोधानन्तरं तस्यैव सम्यक् प्रयोगे सार्वत्रिक इष्टलाभः संजायते । एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गेलोके च कामधुग् भवतीति भगवतः पतञ्जलेर्वर्णनमिदमतीव महत्त्वपूर्णं सिद्धान्ततः । भगवता भर्तृहरिणाऽपि तादृशस्यालौकिकस्य

तत्त्वस्य ब्रह्मपदेनैव यद्वक्तव्यं, तदक्षरपदेन, परब्रह्मपदेन, शब्द तत्त्वपदेन च क्रियासमभिव्याहारं प्रत्यपादि । उक्तञ्च—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥ इति ॥

शब्दपूर्वकेन योगेन युक्तो योगी यदा जायते, तदा विश्वमखिलं प्रतिबिम्बायमानं भासते । प्रतिविम्बपदार्थस्य सत्यत्वं मिथ्यात्वं वेति भिन्नः पन्थाः विमृश्य एव । शब्दशास्त्रेऽस्मिन् सम्यगभिनिविष्टस्य-शब्दब्रह्मोपासकस्य वाचो निमित्तानि प्रकृतिप्रत्ययादीनि प्रतिबिम्ब-वद् भासन्ते । व्याकरणस्य सम्यगध्ययनविषये शब्दपूर्वकयोगा-श्रयणेन तत्सम्पादनीयमितिराद्धान्तः । योगो नामात्र सम्बन्ध एव । स च योग शब्दपूर्वको हि कीदृशोऽभिप्रेतः ? समाधानमिति, शब्देन, अर्थात् शब्दाख्येन चैतन्येन योगः सम्बन्धः सक्रमसंहारेण आश्र-यितव्यः, वैयाकरणकृताश्रयः शब्दयोगविद् भवति वाग्योगविच्च भवति । एवं विध देशकालानवच्छिन्न रूपस्य परमतत्त्वस्य स्थितेः अस्माकं शब्दोपासकानां कालकृतो देशकृतो वा क्रमस्तत्र प्रचाकसीति । इत्थं कालकृतस्य देशकृतस्य वा क्रमस्य पूर्वत्वापरत्वरूपस्य सम्यगुप-संहारे समुपजायमाने लोकोत्तरास्थितिर्जायित एव । अतश्शब्द संस्कार-पूर्वकैव सा सिद्धिरभिहिता—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥

इत्युक्तेव पूर्वमिति । एवं विधब्रह्मसायुज्य विचारणायां प्रवृत्ता-यामिह ।

**ब्रह्मसायुज्यविमर्शः**

तद्घटकीभूतंसायुज्यं विमृश्यते । अत्र हि अत्यन्तविनिर्भागेन संसर्ग एव, सर्वथा एकी भवनमिति यावत् । जीवात्मनः परमात्मना सायुज्य-लाभः अभीष्टः इति समुद्बोधयता केनचिच्छास्त्रकारेण शरीराच्छिन्न-स्यजीवस्य शब्द रूपत्वे । परमात्मनोऽपि शब्दरूपतापि विशदं शास्त्रेषु प्रतिपादितैव । नित्यः पुरुषो वागात्मा सर्वथासंहृतक्रमः सर्वेषामन्तः

सन्निविष्टः, विकाराणां प्रभवः, कर्मणामाश्रयः, सुखदुःखयोरधिष्ठानम् । सर्वत्राव्याहतकायशक्तिः स्वेच्छागृहीतपरिमित विग्रहः, सर्वदा मूर्तीनामुत्पादनेऽपि अनालिंगितक्षयः, सर्वज्ञानरूपः, सर्वज्ञेयरूपः सर्वशक्तिः, सर्वेश्वरश्च शब्दवृषभो महादेव इति सुनिगद्यत एव ।

न केवलं शाब्दिकैरेव शब्दब्रह्मवादः स्वीकृतः किन्तु श्रीमण्डनमिश्रपादा अपि शब्दब्रह्मवादं समर्थयन्ति सम्यक् । स्वीयेकस्मिश्चितद् ग्रन्थे मंगलश्लोकरूपेण–यथा–

आनन्दमेकममृतमजं विज्ञानमक्षरम् ।
असर्वं सर्वमयं नमस्यामः प्रजापतिम् ।। इति ।।

अत्राक्षर पदेन शब्दात्मकतामेवाववबोधयामासुः । ऋग्वेदीयेवाक्सूक्ते वाचः सर्वात्मकत्वमुक्तेव । यथा "रुद्रेभिर्वसुभिश्चराम्यहमादित्यैः उत विश्वदेवैः" इत्यादिना । तत्राहं शब्दार्थो वागेव, अस्य सूक्तस्य वागम्भृणी ऋषिरित्युक्तत्वात् । यथाऽऽत्मनि प्रबुद्धेन "अहं मनुरभवं सूर्यश्च" इत्युक्तं ब्रह्मवाक्योभयमेकमेव द्वयोः सर्वात्म्यायोगात् ।

चित्सुखाचार्या अपि ब्रह्मसिद्धिटीकायां भावशुद्धौ ओंकारात्मकशब्दब्रह्म विवर्तत्वमेव निखिलस्य जगतः प्रतिपादयामासुः । मण्डनमिश्रपादैरपि शब्दब्रह्मवादनिरूपणानन्तरमुपसंहरद्भिः शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात् तत्प्रतिसंहारे च संचेतितानामप्यसंचेतित कल्प्यत्वात् पृथिगच्छतो हि तृणादीनामपकर्षात् वाग्रूपताधीनमेव चितश्चित्तत्वमिति सूक्ष्मशब्दस्यस्फोटस्य चेतनत्वमुपदिष्टम् । यद्यपि पूज्यपादैः भगवच्छंकराचार्यैरिह स्फोटखण्डनमकारि तथापि तद्धि अचेतनस्फोटखण्डन परमेव न तु चेतनस्फोटखण्डनपरं, यतश्चेतन स्फोट विषयेतु ब्रह्मवादान्नातिरिच्येत स्फोटवादः ।

वस्तुतश्शब्दतत्त्वविदो वैयाकरणा अद्वैतवादिनः इव इत्यत्र नास्ति प्रवादः कश्चनापि न वाऽत्र दार्शनिकानां काचिदपि विप्रतिपत्तिः । मीमांसायां प्रभाकरगुरवोऽपि प्रथमाध्यायस्थ प्रथमपादस्य पञ्चमाधिकरणे शब्द विवर्तवादस्य पर्यालोचनप्रसंगे शाब्दिकानां विवर्तवादमङ्गीकृतत्यैव तत्खण्डनं चक्रुः ।

तस्मादिह शब्दाद्वैतमते सर्वस्य जगतः प्रपञ्च जातस्यैकविधत्वात् श्रोत्रादीनां भेद एव नोपपद्यते, तर्हि कथं श्रोत्र भेद निबन्धना भेदप्रतीतिरिति। विषयभेद प्रतिपत्ति निबन्धनो भेदः, एवं सतितु अन्योन्याश्रय प्रसंगः विषय भेदप्रतिपत्ति निबन्धन इति कृत्वेतरेतराश्रयत्वं जायत एव। अत्र श्रोत्रादि भेदोऽपि अविद्या कल्पित एवेति सर्ववस्तुजातमविद्यैवेति भेदमात्रमविद्यामूलकमेव परमार्थः। भगवान् भाष्यकारः धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सूत्रव्याख्यानावसरे सम्पूर्णस्य प्रपञ्च-जातस्य शब्द ब्रह्मरूपत्वं शुद्ध शब्दतत्त्वमेव च प्रत्यपादयत्। तत्र न्यूनतापूर्तिवर्तिक मुखेन प्रभाषते यत् 'आशंकायामचेतनेषूपसंख्यानम्' इति—अश्मालुलुण्ठिते, कूल पिपठिषति। किं पुनः कारणं नसिद्ध्यति।" एवं मन्यते चेतनावत एतद् भवतीच्छेति कूलञ्चाचेतनम् इति तत्र एवं मन्यते इति भाष्यांशस्य व्याख्यानावसरे नागेश पादैः भाष्ये एवं मन्यते चेतनावद् इति वक्ष्यमाणेनाभिप्रायेण मन्यत इत्युक्तिः अचेतनस्य वस्तुन इच्छा न भवति, न वा भवितुमर्हति यतः चेतनस्यैव इच्छा धर्मः तत्र कुलञ्चाचेतनमिति। तत्र पतनेच्छा न भवितु-मर्हति इति प्रयोगोऽयमनुपपन्नः, परं शिष्टानामेष प्रयोगस्तु दृश्यते एव। एतच्छंकासमाधनावसरे महाभाष्यकारः समादधाति—यत् समस्तं वस्तु चेतनम्। अत्र वार्तिककारः कात्यायनोऽपि प्रोक्तवान् यत् सर्वस्य वा चेतनावत्वात् अथवा सर्वं चेतनावत्। अत्र सर्वस्य वस्तुनः चेतनत्वे वेद वाक्यमपि प्रमाणम्। यथा—श्रृणोतु ग्रावाणः इत्यादि।

वाचश्चेतनत्वे भूयांसि वचनान्युपनिषद्गतानिप्रमाणानीति यथा जुष्टो वाचो भूयासं जुष्टो वाचस्पतेः। देवि वाग्। यत्ते वाचो मधु-मत्तमंतस्मिन्नो अदधात्। स्वाहा सरस्वत्यै (कौ० ब्रा० १०।६)। अज-नुष्टः=सेवितः, प्रीतिपात्रमिति यावत्। कृष्ण यजुः संहितयामपि श्रूयते जुष्टोवाचो भूयासं जुष्टो वाचस्पतये देवि वाक् यद् वाचो मधुमत्त-स्मिन् माद्यः स्वाहा सरस्वत्यै इति (३।१।१०।१)। रुचित वै वाक् स्वयम् (कौ० ब्रा० ३०।७)। अत्र रुचिता दीप्तिमतीत्यर्थः। अथच वाग्दीक्षा। 'वाचाहि दीक्षते, प्राणो दीक्षितः, वाचा वै दीक्षया देवाः प्राणेन दीक्षितेन सर्वान् कामानुभयतः प्रगृह्यात्मनाधत्ते वाग्वाइन्द्रः, तथा एवैतद् यजमानो चानयैव दीक्षया प्राणेन दीक्षितेन सर्वान् कामानु-

भयतः प्रगृह्यात्मनि अदधत् । तथा एवैतद् यजमानो चानयैव दीक्षया प्राणेन दीक्षितेन सर्वान् कामानुभयतः प्रगृह्यात्मविधत्ते (कौ० ब्रा० ७।१) । 'वाग्वा इन्द्रः । न ह्यते वाचः पवते धाम किञ्चन' (कौ० ब्रा० २।७) वाग्वै विश्वामित्रः । वाचा यज्ञस्तायते (कौ० ब्रा०। १०।५) वाग्वै विश्वामित्रो । वाचैव तत्सर्वतो यज्ञं तन्वते" (कौ० ब्रा० २९।३) । वाग्वै सरस्वतो । वाचावा इदं स्वदितमन्नमद्यते (कौ० ब्रा० १२।८) ब्रह्म वै प्रणवः (कौ० ब्रा० ११।४) शुद्धः प्रणवः स्यात्प्रजाकानाम् । मकारान्तः प्रतिष्ठाकामानाम् । मकारान्तः प्रणवः स्यादिति वैक आहुः । शुद्ध इति त्ववस्थितः । मीमांसितः प्रणवोऽर्थात् इह शुद्ध इह पूर्ण इति । शुद्ध एव प्रणवः स्याच्छास्त्रानुवचनयोर्मध्ये इह स्माह कौषीतकिः तथा संहिते भवति । प्राणो वै स्तवः ब्रह्म वै जपः" (क्रमशः कौ० ब्रा० ८।३, ३।७) इति सर्वमपि वचनं शब्दतत्त्वख्यात् यै प्रस्तुतम् ।

**प्रसंगतो व्याकरणपदार्थविमर्शः**

इदानीमिह प्रसंगतो व्याकरणपदार्थोऽपि विमृश्यते यस्य महिमावर्णितः, यथा—लक्ष्यलक्षणे व्याकरणमिति व्याचक्षाणेन भगवतापतञ्जलिनापि लक्ष्यगतसाधुत्वलक्षकशास्त्रं व्याकरणमिति प्रत्याय्यते, अथ च 'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः' इत्युक्त्या वाक्यपदीयकारेणापि तदुक्तलक्षणे सुसम्मतिः प्रकाशितैव ।

एवमेव सर्वं खल्विदं ब्रह्म[1] अयमात्मा ब्रह्म[2], इत्याद्याश्रुतयो ब्रह्मसूत्राणि दर्शनपदेन व्यवह्रियन्ते । एतद्विषये व्याकरणं पश्चाद् पदं न भवति ।

'प्रजापतिः शब्दोपादानकसृष्टिविधाता वैयाकरणः संगिलिते सत्यानृते पृथक् कृत्य परमार्थभूते सत्ये वस्तुनि श्रद्धामसत्येनात्मनि अश्रद्धां प्रत्यतिष्ठयत्' इत्यर्थिकयाऽनयाश्रुत्या सत्यासत्यविवेचनलक्षणदर्शनत्वं व्याकरणस्य सुस्पष्टमेव प्रतिपादितं, यथा—

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।
अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः ॥[3]

---

१. छान्दो० ३०३।४।२ २. बृहदा० ३०२।५।२९ ३. शु० यजु०१९।१७

इत्यादिवचनैः वैयाकरणैश्शाब्दिकसिद्धान्ते वास्तविकत्वंतु वाक्य-स्फोटस्येवाङ्गीकृतम्। वाक्येषु पदानां पदेषु प्रकृति-प्रत्ययरूपवर्णानां, स्थानिनामादेशानाञ्च तत्तदर्थानाञ्चकाल्पनिकत्वमेव शास्त्रप्रक्रिया-निर्वाहाय। अत एव प्रकृतिप्रत्ययौ असत्यौ, पदानि सत्यानि ततोऽपि वाक्यानि सत्यानि। पश्यन्त्यादिकञ्चाखिलजगदसत्यं, सर्वापेक्षया पराख्यं वाग्ब्रह्म सत्यमित्येव निगूढं तात्पर्यं विषयीभूतमित्येवावधा-रणीयम्।

**शब्दब्रह्म प्रतिपादयितॄणां श्रुतीनां तात्पर्यम्**

संश्लिष्टयोश्शब्दार्थयोः पृथगेव कृतिं बोधयन्ती भगवतीश्रुतिरपि—नामरूपे व्याकरणवाणीत्यादिरूपतया[1] व्याकरणस्य सत्यत्वाऽसत्यत्व विवेचनलक्षणं दर्शनं शाब्दिकमते प्रतिपादयत्येव तेनैव नित्यकार्यवादौ प्रथितौ। एकैव वाग् व्याकृताकृतभेदेन द्वैविध्यमापन्नावाचो व्याकृति-रूपोपासनया व्याकरणस्य दर्शनत्वं ख्यापयन्ती सुसंगच्छते। तत्रापि प्रमाणं श्रुतिवचनं, यथा—वाग्वैब्रह्म[2], वाग्हिब्रह्म[3]ते, मृत्युमतिवर्तन्ते[4]। ये वै वाचमुपासते, इति। तत्र वाचो द्वैविध्ये व्याकृतापदेन पश्यन्ती-मध्यमा-वैखरीणां ग्रहणं भवति। अव्याकृतापदेन च सर्वधर्मरहिताया नित्यायाः पराया वाचो ग्रहणं भवति। अस्य व्याकरणदर्शनतत्त्वस्य स्फोटवादः शब्दाद्वैतवाद प्रभृतिसिद्धान्तान् खण्डनमण्डनदिशा शास्त्रज्ञैः स्मर्यन्ते। उक्तविधया विचारणायां सञ्जातायामिदं तथ्यमपि पर्या-लोचनीयं प्रतिभाति यत् किं तावद्व्याकरणदर्शनमिति ? तस्य किं स्व-रूपमिति ? दर्शनान्तरैरस्य कश्चन सम्बन्धो वक्तुं शक्यते न वेति ? अत्राप्यनुबन्ध चतुष्टयं किंतावद् भवितुमर्हति ? उक्तविषयं पूर्वमपि यथाप्रसंग यथाशक्यं समीक्षितमेव, तथाप्यत्र किंचिदेव सार-रूपतयाऽनुव्यवसायात्मना प्रतिपाद्यते। यथा—परा पश्यन्ती मध्यमा वैखरीति भेदचतुष्टयेनापाद्यस्वरूपाश्चतस्रो वाचो निगमादिषु सर्वं-त्रापि प्रथिताः तास्वेव क्वचिद् व्याकृताऽव्याकृतेति भेदद्वयं प्रतिपादि-तम्। व्याकृतापदेन पश्यन्त्यादयस्त्रयोवाचः अव्याकृतापदेन च शक्ति-शक्तिमतादि भेदमुक्तायाः, पराया एव सुविचारश्चर्चितो वेदेषु—तथा सत्येकैव शब्दब्रह्माऽपर पर्याया परावाक् व्याकृताऽव्याकृताभेदेन द्विधा

१. छा० ३०६।३।२ २. बृहदा० ३०४।१।२ ३. ऐ० ब्रा० २।१५
४. शा० भा०।१।३।८

विभक्ता तथा—"एतं इति वै प्रजापतिर्देवानसृजतासृगिति मनुष्यान् दिव इति पितॄं स्तिरः पवित्रमिति ग्रहानसव इति स्तोत्रं विश्वानीति-शास्त्रमभिसौभगेत्यन्याः प्रजाः"[1] स मनसा[2] वाचं मिथुनं समभवत्, वागेवविश्वाभुवनानि[3], वाग्वैब्रह्म,[4] परावाचा तथाष्टमे[5] इत्यादि श्रुतिभिर्भूरादि महाव्याहृत्युच्चारणपूर्वकंतत्तत्सृष्टिप्रति पादनपरैः तत्रत्यैः कथानकैः सर्वं सुप्रतिष्ठापितं यदियं सृष्टिरखिला वाक् पूर्विकैव। विषयेऽस्मिन् बहूक्तं पूर्वमपि अत्रापि चैकस्मृतिरपि प्रमाण-त्वेनोपन्यस्यते। तद् यथा—

अनादिनिधना नित्या वागुत्सृष्टा स्वयं भुवा।
आदौ वेदमयीदिव्या यतः सर्वाः प्रवृत्तयः ॥[6] इति॥

अत्र च वाक्पदेन पश्यन्ती प्रगृह्यते, तस्या एव ओंकारो वेदः शब्दब्रह्मेत्यादि पर्यायभूतानि नामानि । यथा-

आपः पवित्रं परमं पृथिव्यां अपां पवित्रं परमं च मन्त्राः।
तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥[7]

पृथिव्यां अपः पवित्रम् अद्भ्य ऋग्यजुःसामलक्षणा मंत्राः पवित्रम् ततोऽप्योंकारापरपर्यायं व्याकरणं पवित्रम्। तेन स्पष्टमेव व्याकरणों-कारयोः पर्यायता। अथ च अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् (ऐतरेय ब्रा०, ५।३२) तथा मनुस्मृतावपि (अ० १ श्लोक० २३) दुदोह यज्ञसिद्ध्यर्थमृग्यजुः सामलक्षणम् इत्यादि वचनैरिह अग्नि-वायुरविभ्य ऋग्यजुःसामोत्पत्तिश्रवणेन कार्यकारणयोरविशेषेण (अभेदोपचारेण) ऋग्यजुःसामपदेन तत्कारणीभूतं भूताभयं गृह्यते। तत्ररवेरेव सामोत्पत्त्याश्रवणेन आद्यभूताकाशस्य कारणत्वाभावादभेदो-पचारेण कथं सामञ्जस्यमिति न शंक्यम् यतोऽत्र रविपदेनाकाशस्यापि ग्रहणेन सुसामञ्जस्यं सेत्स्यति, रौति=शब्दं करोतीति व्युत्पत्त्या शब्दाश्रयत्वमेव तस्य प्रवृत्तिनिमित्तम्।

---

१. शा० भा० १।३।८ २. बृ० उ० १।४ ३. वा० प० १।१२, सू०
४. बृ० उ० ४।१।२ ५. अथर्व शीर्षोपनिषदि सर्वमेतत्
६. म० भा० शा० प० २५३ ७. वा० प० १।१४ टीकायाम्।

पारमार्थंकतया रव्याकाशप्रकाशसूर्यादित्यादयः शब्दापर्यायाः सन्ति । आसमन्तात्काशते=प्रकाशत इति मूलव्युत्पत्तिमनुरुद्धय शब्दस्य ज्योतीरूपत्वस्य 'आख्यातोपयोगे इति (पा० सू० १।४।२९)इति सूत्रे भाष्ये सम्यक्तया ज्योतिः शब्दयोरभेदस्वीकारात् तदाश्रयत्वमभेदश्चापि प्रथित एवेति तस्मात्पराया वाचो हि सिद्धान्ततः शब्दब्रह्मापराभिधानं विशिष्यते । तस्याः पराया व्यवहारातीतत्वम् यथोक्तमपि 'स्वरूप ज्योतिरेवान्तः परावागनपायिनी । तस्यां दृष्टरूपायामधिकारो निवर्तते' इति वचनानुसारम् परायां वाचिनैव कश्चनापिव्यवहारिकविचारलेशः संम्भावनास्पदमप्यारोहति दृष्टस्वरूपायामधिकारनिवृत्तेरुपदेशात् ।

अतः पश्यन्त्यामेव कालाख्या स्त्रातन्त्र्यशक्तिः या खल्वन्यासामपि शक्तीनां स्फोरणे पूर्वसमर्था विद्यते । तस्यामेव वाच्यवाचक विभागोऽपि व्यवहृति पथमायाति। तस्यामेव परिपक्वावस्थापन्नस्य युक्तस्य योगिनः सर्वे सर्वार्थवाचकाः इत्यखिलं सम्पद्यते यतः पश्यन्त्या एव बीजरूपत्वात् सर्वशब्दानाम्, प्रतिभारूपेण च सकलार्थं प्रसवत्वाच्च। अत एवावस्थायाम् तस्यां वैयाकरणाः सकलार्थंसमुत्पादनलब्धसामर्थ्या अभिव्यन्य:ते मन्यन्ते च । एतत्प्रकाशेनैव सर्वे प्रकाशा आभासन्ते । जातवेदसोऽपि न स्वतः प्रकाशकत्वं किन्तु, एतत्पारतन्त्र्येणैव । यतो जातं वेदो ज्ञानमस्मादसौ जातवेदा इति प्रक्रियया जातवेदशब्दोऽपि मुख्यया वृत्त्या ज्ञानमूलाधारे परमात्मन्येव विद्यते ।

**पश्यन्तीरूपशब्दब्रह्मणः प्रणवस्य पर्यायतानिरूपणम्**

प्रणवपदेनापि सैव पश्यन्ती शब्दब्रह्मापरपर्याया गृह्यते । तस्या एव शब्दोऽर्थः सम्बन्ध इति रूपत्रयात्मनाभानं स्वीकृतम् । प्रणव एवैकस्त्रिधाऽभिव्यज्यते । एकमेवयदाम्नातं भिन्नं शक्तिव्यापाश्रयादिति वाक्यपदीयकारेणापि प्रोक्तम् । सिद्धे शब्दार्थसम्बन्धे इत्यत्र 'शब्दार्थ सम्बन्धानां नित्यता शब्दार्थयोश्च परस्परमभेदश्च' निर्धारितः कात्यायनेनापि । तस्मात्पश्यंतीरूपं व्याकरणज्ञानं विना पराख्य (परायाः) ब्रह्माधिगतिः कथमपि नैवशक्या भवेत् । शब्दब्रह्माभिध वेद्यतत्त्वप्रणवस्य सर्ववेदपारिषदत्वं सर्वथा सर्वदाऽविरोधित्वमिह सुस्पष्टमभवत् । यथोक्तमपि भर्तृहरिणा-सत्यविशुद्धिरित्यादिवचनेन

ब्रह्मकाण्डे नवमकारिककायाम् । अतः प्रणवाऽपरपर्यायाद्वा व्याकरणाद् भूतभाव्यान्ताः सर्वविद्याविभागाः प्रभवन्ति नात्र सन्देहः । स हि प्रणवः सर्वशब्दार्थ प्रकृतिः, तस्यैव निखिलप्रपञ्चो विवर्तः परिणामोवेति तथ्यम् । वस्तुतो न केवलं पारमार्थिकस्यैव व्याकरणस्वरूपस्य साक्षात्कारेणाऽभ्युदयः शाब्दिकैरभ्युपगतः, किन्तु-आविद्यकस्यापि विशेषतोऽष्टाध्यायीलक्षणस्य व्याकरणस्यावबोधः सम्यक् रूपेण योक्तव्यः तदैवाभ्युदयेन योगो भवति लोके । तेनात्र शास्त्रफलयोः साध्यसाधकभावः सम्बन्धः सुस्पष्ट एवेति । अत एवोक्तमपि वाक्यपदीयकारेणापि—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्ति तत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥
—वा० प० १।१३१

अत एवानादि परम्परायामपभ्रंशैरसंकीर्णानां शब्दानामिदमन्वाख्यानं भवतीति हृद्यम् । यतोऽत्र पाणिनीये व्याकरणे कल्पित-प्रकृति-प्रत्ययसंस्कारमात्रोद्देश्यस्यास्य शब्दब्रह्मणः स्वरूपं सम्यग् विनिर्णीतम् । तथासति ते हि साधवः शब्दाः द्विधाः विशिष्टसाधुत्वविषयाः-सामान्यसाधुत्वविषयाश्च । विशिष्टानां प्रयोगेण विशिष्टफलोपलब्धिः, सामान्यानां प्रयोगे सामान्य एव फलोपलब्धिरिति नियमः फलति । तेनैवेदं भणितिः साधु संगच्छते—

नाकमिष्टं सुखं यान्ति चतुर्भिर्वाडवै रथैः ।
अथपत्काषिणो यान्ति येऽचीकमतभाषिणः ॥ इति॥

भाष्यस्थश्लोकः प्रमाणम् ।

व्याकरणतन्त्रयोस्तु शब्दब्रह्मैव प्रधानं तत्त्वमाश्रित्यतदुपयोगिपदार्थविभागसमुद्भासितानि निगमागममूलकानिशस्त्रवचनानि विभिन्न शास्त्रकारैश्शास्त्रेषु प्रोक्तानि । यथा तन्त्रागमे शक्तिशक्तिमतोर्मध्ये शक्तिरेव प्राधान्यं निखिलसाधनप्रक्रिया निभालिता । व्याकरणागमे तु कालाख्यां स्वातन्त्र्यशक्तिं गौडीकृत्य प्राधान्येन शब्दब्रह्मैव प्रस्तुतम् । यद्यपि निखिलोऽपि वृत्तान्तो दर्शनपरतयैव यथाबुद्धि-विमर्शितस्तथापि उपरिदर्शनं विशेषदिशा व्याकरणभावनायप्रोक्तं यत् तदिह किं मूलभूतं तत्त्वमवश्यं वक्तव्यमेवेति । एतद्धि व्याकरण-

दर्शनं प्रथमं पाणिनीयं व्याकरणमेव सर्ववेद पारिषद्यं हृद्यमधिगन्तव्यमिति प्रतिभाति नात्र तर्कावसरः। द्वितीयस्तु प्रातिशाख्यग्रामः, तृतीयाशिक्षासरण्यः चतुर्थं निरुक्तम्। एषा–चतुष्टय्येव व्याकरण-पदेन महतीं पदवीमाश्रयति। यथोक्तमपि निरुक्तकारेण यास्कमुनि-ना व्याकरणस्यैव कार्त्स्न्यंनिरुक्तं स्वार्थसाधकंचेति (नि० १।१५)। तदेव खिल पदेनाप्युच्यते। यथा महाभारतस्य खिलो हरिवंशः इतिवद् व्याकरणस्य खिलोंऽशो निरुक्तमेव शिक्षामन्तरा तु वर्गोच्चारणमसम्भवमेवेति कृत्वा प्रथमं सर्वतः प्राथम्येन शिक्षाया व्याकरणे महती समपेक्षा-मन्यते। प्रातिशाख्यं व्याकरणन्तु तत्तच्छाखाभेदेन भिद्यते, तेन यथार्थं नामास्य व्याकरणस्य प्रतिशाख्यमिति तथ्यं दर्शनभूमिं व्याकरणमवतारयति सम्यक्। सर्ववेदपारिषदंहीदं शास्त्रं तत्र नैकः शक्यः पन्था आस्थातुम् इति पतञ्जलिमुन्युक्त्या सर्वेषां वेदानामिदं साधारणं व्याकरणं पाणिनीयं महन्महत्वं भजति। भगवान् भाष्यकारः सादर-मिदमभिभाषते यत् अयं हि भगवान् पाणिनिः आपिशलि-काश्यप-गार्ग्यगालव-चाक्रवर्ण-भारद्वाज-शाकटायन-शाकल्य–सेनक स्फोटायनानामेकादशानां वैयाकरणानां मतानि संकलय्य ततः सारमादाय तदष्टाध्याय्यात्मकं ग्रन्थ-रत्नं व्युत्थितायां दशायां निरमासीत्।

इत्थमुक्तदिशा स्फोटप्रपञ्चो न केवलं वर्णनात्मकस्थले एव भवति, किन्तु यथा भेर्याघातो भेरीमाहत्य कश्चिद् विंशतिः पदानि गच्छति। कश्चित्त्रिंशत्। कश्चिच्चत्वारिंशत्। परं स्फोटस्तु तावानेव भवति ध्वनिकृता वृद्धिः। इति भाष्योक्त्याऽव्यक्तस्थलेऽपि स्फोटः स्वीक्रियत एव। किंच शब्दस्यापि प्रतिपदिकार्थत्वेन ध्वन्यात्मकेऽपि शब्दरूपार्थस्य सत्ता न तिरोहितुं शक्या। एवं विधः स स्फोटः प्रसिद्धया प्रक्रियाया अनयाविशदतया विवेच्यते यत् स्फोटायन एव स्फोटस्य उद्भावकः स्मर्ता वा प्रतीयते। नायं स्फोटस्यापत्यम्। अपत्यत्वस्वीकारे नडादित्वात्फकि अश्वादित्वात्फकिवा स्फोटायन इति स्यात्। यद्यपि नडादि गणे स्फुटशब्दपाठो दृश्यते तस्मात्फकिस्फोटायन् इति रूपं सिद्धयति। एवं शब्दतत्त्वस्य स्फोटात्मकस्य स्वरूपनिर्धारणप्रसंगे स्वयं भगवता भाष्यकारेण कोऽयं शब्द इति जिज्ञासायाम् भाष्यमुपन्यस्तम् यत् 'अथगौरित्यत्र कः शब्दः? इति प्रश्ने द्रव्यस्य क्रियायाः गुणस्य आकृतेश्च शब्दत्वमाशंक्य प्रत्याख्याय 'येनोच्चारितेन सास्ना-

लाङ्गूलककुदखुरविषाणिनां सं प्रत्ययो भवति, स शब्दः अथवा प्रतीत-पदार्थको लोके ध्वनिः शब्द इत्युच्यते। अत्र येनोच्चारितेनेत्यस्य प्रकाशितेनेत्यर्थं सत्त्वात् प्रथमलक्षणे स्फोटः शब्दः इति सूचितो भवति अथवेत्यनेन तु ध्वनिः शब्दः इति विनिर्दिश्यते। तथा हि—

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥ इति॥

तत्रत्य भाष्यानुसारमुभयोरपि शब्दसम्बन्धितया तदुपन्यासः सार्थकः। प्रथममान्तरः शब्द उच्यते अथवेत्यनेन तु बाह्यो ध्वनिः प्राकृतवैकृत भेदतो द्विधा। वस्तुतः—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदंतु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥
तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु।
वृत्तिकालः स्वकालश्च नादभेदाद् विभज्यते॥
—वाक्य० १।७७-१०१

इति हेलाराजवचनेनापि सामञ्जस्यं ध्वनिद्वयस्य। शब्दोऽत्रापि द्विधा विभक्तो यथा धर्मजनकोऽधर्मजनकश्चेति। तत्र धर्मजनकशब्दानां ज्ञानं व्याकरणाधीनम्। यथोक्तमपि महाभाष्ये पस्पशाह्निके एकः शब्दः सम्यग्ज्ञातः, शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गेलोके च कामधुग् भवति इति प्रधानञ्च षट्स्वङ्गेषु व्याकरणमिति च भाष्योक्त्या "पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते" इति भगवता भर्तृहरिणापि साङ्गवेदमित्यत्राङ्गपदस्योपकारकत्वाद् व्याकरणशास्त्रस्य वेदोपकारकत्वान्निखिलशास्त्रोपकारकत्वाच्च व्याकरणस्य महिमा वर्णित एव। उक्तदिशा ब्रह्मज्ञानाय=प्राप्तये वेदज्ञानमनिवार्यमेव। वस्तुतः अदृष्टफलजनकानां ब्रह्मचर्याधःशयनचन्द्रायणादीनां काम्यानां वा, मध्येदृष्टाऽदृष्टोभयफलजनकतया ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोध्येयो ज्ञेयश्चेति इति श्रुत्या नित्यतया एकः शब्द इति श्रुत्या च काम्यतया वा श्रेष्ठं तपः अनेन ब्राह्मणेन निष्कारणोधर्म इत्यागम रूपं प्रयोजनमुक्तम्। भाष्योक्तं लाघवरूपं तुरीयं व्याकरणप्रयोजनं वाक्यपदीयकारो हि सम्यगुपपादयति। यथा—प्राप्तरूप विभागाया

यो वाचः परमोरसः । यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाज्जसः। (वा० प० १।१२) । वाक्यपदीयटीकाकाराः श्रीसूर्यनारायणशुक्ल-महोदयाः तदाशयं सम्यगुपपादयन्ति यथा—अभिन्नात् संहृतक्रमात् अन्तः सन्निविष्टात् पश्यन्तीरूपात् शब्दतत्त्वात् प्राप्तो वर्णपदवाक्य लक्षणो रूपविभागो यया—यद्वा अभिनेयत्वेन प्राप्तः रूपविभागः अर्थ-विशेषः गवादिर्यया, यद्वा-प्राप्तः रूपविभागः गवादिरर्थः कार्यकारण-भावेन यया, शब्दो हि गवादिरूपेण परिणमते, ते च गवादयस्तत्रैव लीनाः वाग्रूपेण व्यवतिष्ठन्ते इति । यदाहुः—नामैवेदं रूपत्वेन विवृते रूपं चेन्नामभावेऽत्रतस्थे । एके तदेकमविभक्तं विभेजुः प्रागिवान्ये भेदरूपं वदन्ति ।इति। सा तस्या प्राप्तरूप विभागायाः सक्रमाया वाचः वाचकत्वादभ्युदयहेतुत्वाच्च यः परमो रसः सारः व्यवस्थितसाधु-भावः शब्दसमूहः । यदाहुः ऋजीषमेतद्वाचो यः संस्कारहीनः शब्दः इति निष्पीडितरस्याग्रे रसः सारः इति महत्प्रसिद्धं श्रुतिप्रसिद्धं पुण्यतमं प्रकाशाप्रकाशयोः प्रकाशाख्यं ज्योतिः शब्दाख्यं प्रशस्तम् ।

एवं विधः स्फोटः संस्तुतः कस्य प्रतिभाजुषो न प्रियो भवति, यः सर्वात्मना सुसंस्कृतः पवित्रतमब्रह्मानन्दोद्भावकः, तथाविधस्य ब्रह्मणो बोधाय तदीयप्रक्रियापि संराध्यैव विद्यते, तस्मादेवास्यालौकिकस्य शब्दवृषभस्य चत्वारि शृंगाणि, परा-पश्यन्ती-मध्यमा-वैखरी रूपाणि नामाख्यातोपसर्गनिपातरूपाणि च प्रथितानि शाब्दिकैः । तत्र नामा-दीन्यपि प्रत्येकं परादिरूपाणीति । चत्वारि वाक् परिमितेति व्याख्यान-मपि नागोजिभट्टपादैरुद्योतेविहितं सत्प्रामाण्यमधिगमयति । त्रयः पादास्तस्यवृषभस्य भूतभविष्यद्वर्तमानकालस्वरूपाः । तस्य द्वे शोर्षे-ऽपि विलक्षणे व्यंग्यव्यंजकभेदेन नित्यः कार्यश्चेति शब्दात्मद्वयं शोर्षस्थानीयम् । तत्रव्यंग्यः आन्तरः स्फोटः व्यञ्जकश्च वैखरीरूपः । तत्र यो हि नित्य आन्तरः, स एव सर्वेश्वरः सर्वशक्तिमान् शब्दवृषभो यस्मिन् वाग्योगविच्छास्त्रज्ञानपूर्वकं शब्दप्रयोगेण निष्कलमषः पुरुषः समग्राहंकारग्रन्थीन् विच्छिद्य तदात्मकतामनुभवति तद् रूपतां प्रति-पद्यते । तस्य शब्दवृषभस्य सप्त विभक्तय एव सप्तहस्ताः स चोरसि, कण्ठे, शिरसि त्रिषु स्थानेषु बद्धः प्रोच्यते यत उक्तस्थानत्रयेणोच्चार्य-माणत्वात् तदतिरिक्तस्थानानामपि तेष्वन्तर्भावात् पृथङ् नोक्तानि ।

प्रयोक्तुर्ज्ञातुश्च विविधकामानाम् तत्तदभ्युदयाख्यापवर्गाणां वर्षणादेव वृषभः प्रोक्तः तस्मादेव तत्फलकश्रुतिवचनमिदं संगच्छते—यत् एकः शब्दः सम्यग्ज्ञातः इत्यादिकम् । तत्रकामधुग् भवतीतिश्रुत्य निःश्रेयस हेतुत्वञ्चानेनप्रतिपादितम्भवति । रौतिश्च शब्दकर्मा रोरवीति भृशं शब्दं करोति । महादेवः महान् देवः स्वप्रकाशचिदानन्दरूपः शब्दवृषभो मर्त्यान् मरणधर्माणो मनुष्यांस्तान् आविवेश आत्मरूपेण । स एवान्तरः स्फोटाख्यशब्द एवात्मेति 'तत्त्वमसि' इतिश्रुतिवद्बोधयति । व्याकरणजन्यज्ञानेन—व्याकरणज्ञानजन्येनवा शब्दरूपवृषभेन महादेवेन सहास्माकमैक्यं सिद्धयेत् इत्यध्येयं व्याकरणमिति पस्पशाह्निक महाभाष्ये हेलाराजीयादौ चापि सम्यक्प्रतिपादितमेव । तस्य व्याकरणशास्त्रजसंस्कारसहकारेण सुप्रयुक्तस्य ज्ञातस्य वा शब्दस्याभ्युदयनिःश्रेयसहेतुत्वं सुप्रमाणितन्नापलपितुं शक्यते । स चात्मरूपो नित्यः शब्द एव स्फोटः । तमेव वर्णादिकल्पनाधिष्ठानतयाऽर्थवाचकत्वेन शाब्दिकाः मन्वते । तस्यात्मकरूपत्वे न काचिदनौचितिः, यतस्तस्य वर्णाधिष्ठानत्वं कृष्णद्वैपायनो भगवान् वेदव्यासो महाभारते हरिवंशस्याखिलभागे सुप्रतिपादितवान् यत्—'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रय' इति, (म० भा०, पृ०—४) । स एव महाभाष्यादावपि वाक्यपदीये च ध्वनिव्यंग्यतया वाचकतया भूयसा सुचर्चित एव । अथ च "वागेवेदं सर्वम्"[1] "वाचामाविश्वाभुवनानि"[2] इत्यादिना भगवतो वेदस्य नाप्रामाण्यम्, स्फोटस्यापि तावदवाक्यप्रतिपादितत्वेनाविधीय मानत्वमपि नास्ति, प्रत्युतसमन्वय मार्गस्यैव, तत्तु समन्वयात् इति वेदान्तसूत्रादिष्वपि प्रामाणिकैरभ्युपगमात् । उक्तं "वाचामाविश्वाभुवनानि" इति भगवतावेदेन वाक्तत्त्वं भूम्ना प्रतिपाद्यत एव । उच्यत इति व्युत्पत्त्याऽर्थस्यैव, उच्यतेऽनेनेति व्युत्पत्त्या शब्दस्यापितत्त्वमुपपन्नम्भवेत्येव, नामरूपे व्याकरवाणी त्यादिवाक्येभ्योनाम—नामरूपात्मकस्य प्रपञ्चस्य वागभिन्नत्वमेव सुप्रतिष्ठितम् । अत एवोच्यतेऽपि—पश्य देवस्य काव्यम् इति । काव्यमपि शब्दार्थोभयत्वेन प्रसिद्धमेव काव्यप्रकाशादौ यथालक्षणम् । लोके हि शब्दार्थ प्रतीतिरनुभवसिद्धैव । येभ्यश्च शब्देभ्योऽर्थस्य प्रतीतिः, तेषां

१. जै०ब्रा० २।७८ २. श्रीमद्भागवतम् ३।४।१३

भाषा व्यपदेश्यता व्यवहारशुद्धेत्यत्र प्राय: सर्वे समानमतय: शास्त्रकारा:। भाषापि नादोपहितं चैतन्यं चैतन्योपहितो नादो वा। ते च नादा: संगतार्थप्रतिपादनक्षमा: शब्दा एव। अयमेव यो भाषारूपोऽर्थोवर्णितस्तस्यैव वेदेषु वागिति व्यवहार:। स एव स्फोटरूपेणापिप्रतिपादितो भवति। स्फोटस्यव्यंग्यत्वमिव व्यञ्जकत्वमपि सुप्रतिष्ठितमेव ध्वनेस्तथाभूतत्वात्। तथोक्तमपि वाक्यपदीये—

य: संयोगविभागाभ्यां करणैरुपजन्यते।
स स्फोट: शब्दजा: शब्दा ध्वनयोऽन्यैरुदाहृता:॥

—वा० प० १।१०२

कण्ठताल्वादिभि: करणै: संयोगविभागाभ्यां = वायुस्संयोगविभागाभ्यां य: शब्द: प्रथममुपजन्यते स स्फोट: बाधक उत्तरोत्तरशब्दानां करणञ्च, ये च शब्दजा: स्फोटाख्यात् शब्दाज्जातास्ते ध्वनय: अन्यै: स्फोटकार्यत्ववादिभिराचार्यै: प्रतिपादिता: कार्यवादे।

नित्यत्वपक्षमभिलक्ष्य तु संयोगविभागजध्वनिव्यंग्य: संयोगविभागजध्वनिसभूतंनादाभिव्यंग्यो वा स्फोट: स्फोटरूपानुग्राहकाश्च यथोत्तरमपचीयमानाभिव्यक्ति समर्था: द्रुतादिवृत्तिभेदव्यवस्था हेतवोऽपचयात्मका ध्वनय: इति। उक्तमपि पूर्वं यत् युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते इति सूपपादितं नागोजिभट्टै: मञ्जूषायाम्। तत्र हि वैखरी-नादो ध्वने: फूत्कारादिवन्मध्यमानोत्साहको मध्यमा नाद: स्फोट व्यञ्जयति इति शीघ्रमेव ततोऽर्थबोध: परस्य विलम्बेन अनुभवसिद्धत्वात्। तदैवेदं प्रोक्तं यत् श्रोत्रोपलब्धिर्बुद्धि निर्गाह्य: प्रयोगेणाभिज्वलित: आकाशदेश: शब्द: महाभाष्येऽपि प्रोक्त: संगच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण अभिज्वलित: स्वरूपरूषित्वकृत इति तदर्थ: श्रीनागोजिभट्टपादै: प्रतिपादित:। वैशेषिका: संयोगविभागात् शब्दाद्वा शब्दोत्पत्तिमभिभाषन्ते तत्र प्रथमं वातेनैका वीचिरुत्पद्यते अनन्तरंतत्रैव तरङ्गान्तरं तेनाप्यन्यदिति पूर्वपूर्वतरंगेभ्य उत्तरोत्तरतरंगाणामुत्पत्तिस्तथा भेरीदण्डसंयोगाद्वेणुदल विभागाद्वा शब्द आकाशदेशे निष्पद्यते स च असमवायिकारणतया शब्दान्तरमारभते, तच्चशब्दान्तरमिति परम्परयाश्रोत्रपथमवतीर्णो गृह्यते। भेरीशब्दो मया श्रुत इति धीस्तु

भ्रम एव। परं वैयाकरणा यं प्राकृतध्वनिरिति व्यवहरन्ति, तमेव तार्किकाः वाचकशब्दं मन्यन्ते यञ्च ते वैकृतध्वनिरिति व्यवहरन्ति, तं च ते तार्किकाः ध्वनिरिति व्यवहरन्ति।

**संयोगजध्वनिः स्फोटः, स्फोजास्तु ध्वनय इति निरूपणम्**

संयोगजो ध्वनि स्फोटः, स्फोटजास्तु ध्वनयः इति पूर्वोक्त पक्षे प्रक्रिया निरूप्यते, तथाहि अल्पे महति वा शब्दे वैकृत ध्वनौ जाते स्फोटकालो ह्रस्वाकारादिकालो नभिद्यते, शब्दस्यामूर्तत्वेनाल्पत्व-महत्त्वादि परिमाणायोगात्, किन्तु मुख्याल्पत्व महत्त्वानां सूची पर्वतादीनां यथासूची अल्पदेशं पर्वतश्चाधिकं देशं व्याप्नोति, तथा शब्दोऽपि अल्पमहान्तौ देशौ व्याप्नुवन् अल्पो महान् वा व्यपदेशभाग्-भवति। सा चाधिकाल्पदेश व्याप्तिर्वैकृतध्वनिकृता। परः कार्यभूतः शब्द सन्तानः प्रचयापचयात्मकः अधिकदेश व्याप्तिमान् अल्पेदश व्याप्तिमांश्च भवति। 'प्रचयोऽधिक देश व्याप्तिः अपचयो-ऽल्पदेशव्याप्तिः' इति कार्य भूतानां वैकृत ध्वनीनां वशेन कारण भूताःस्फोटशब्दाः अकारादयः प्रचिताः उपचिता वा न व्यवहृति-पथमाश्रयन्ते। उच्चैरुच्चारिते ह्रस्वाकारे केवलेन ध्वनिनाऽधिको देशो व्याप्यते। अकारस्तु न भेदमुपगच्छति। शब्दोऽत्र ध्वनिपदेन व्यवह्रियते। स च द्विविधः—उत्तरोत्तरशब्दानां कारणरूपः कार्यरूप-श्चेति, आद्यः स्फोटव्यञ्जकः स्फोट एव वा, परकार्य रूपः। तत्र प्रथमः प्राकृतः परश्च वैकृतः। तत्र कारणरूपस्य ध्वनेः कार्यजनने सामर्थ्य भिद्यत एव, यथा भेरीदण्डाभिघातजस्य परम्परा दूरमनुपतति, लोहकांस्याभिघातजस्यतु प्रत्यासन्नदेशमेवानुपतति, न दूर देशमिति। अतोऽत्र वक्तुं शक्यते यत् ह्रस्वदीर्घप्लुतव्यवहाराः स्फोटे न सम्भवाः यतस्तस्यामूर्तत्वात् अमूर्ते शब्दे परिणामाभावात्। अतो ध्वनेर्न्यूनदेशे स्थितिरल्पता प्रयोजिका, अधिकदेशेस्थितिरेव व्याप्तेः महत्ताऽऽधा-यिकास्वीकृता। यथाह भगवान् भर्तृहरिवाक्यपदीय ब्रह्माणे—१०३ कारिकायाम्—

अल्पेमहति वा शब्दे स्फोटकालो न भिद्यते।<br>परस्तु शब्दसन्तानः प्रचयापचयात्मकः ॥इति॥

द्रव्यमवस्थानं करणञ्च, तयोरभिघातः शब्देहेतुभूत संयोगः कण्ठादिभिर्वायूनां संयोग इत्यर्थः तस्माद् द्रव्याभिघाताद् भिन्नौ दीर्घ-प्लुतावपि प्रचितौ ध्वनिकारणवायुसंयोगप्रचयात् दीर्घप्लुतयोः प्रचयोः विशिष्टप्रयत्नजनितेन वायुनाकण्ठताल्वादि स्थानेष्वभिघातो जायत एव। तेनैववायौ कम्पो भवति, तत एवाभिघातपरम्पराप्रचलिता भवति । यथा—महता प्रयत्नेन वादितायां घण्टायामधिक कालं घण्टायां कम्पोऽनुवर्तते तेन च घण्टा मध्यस्थेन (लम्बेन) विद्युत् पदव्यपदेशेन पुनः। पुनश्चाभिघातो भवति । स च कम्पः शब्दस्वरूपलाभ पर्यन्तमनुवर्तते तस्मिन् कम्पेस्पन्दे निवृत्तेसति जाता नादाः वैकृतध्वनयः द्रुतावृत्तेः विशेषकाः भेद व्यवस्थाहेतवो भवन्ति न तु दीर्घप्लुतादेरितितात्पर्यम् । नित्यवादे ध्वनीनां मात्रिक-त्वात् नित्येशब्दे मात्रिकत्वाद्यारोप्यते इति ह्रस्वत्वादिके नाका-रादिधर्मः, कार्यशब्द वादेतु अकारादिनामेव मत्रिकत्वात् ह्रस्वत्वा-दिकं तन्निष्ठमेत्र । वैकृत ध्वनिकृत भेदाभावस्तु पक्षद्वयेऽपिसमान एवस्वीकृतः। अत्र भगवान् भर्तृहरिः मतान्तरमपिप्रकाशयतियथा—

अनवस्थितकम्पेऽपि करणेध्वनयोऽपरे ।
स्फोटदेवोय जायनो ज्वाला ज्वालान्तरादित ।।

अर्थात् करणे वायवादौ अनवस्थित कम्मेऽपि अनुवर्तमान कम्पोऽपि अपरेध्वनयः=वैकृताध्वनयः ज्वालान्तराद् ज्वाला इव स्फोटादेव उत्पद्यन्ते । पूर्वन्तूक्तं यत् कम्पनिवृत्तौ नादाभिव्यक्तिरुक्ता, इदानी मतेऽस्मिन् सत्त्वे एवेतितयोविशेषः । मतेऽस्मिन् प्राकृतस्य ध्वनेरुत्प-त्तिर्नाङ्गीक्रियते प्रत्युत प्राकृतध्वनेरेव व्यक्तः स्फोटः एव वैकृति ध्वनिमुपजनयतीति भावः ।

यदि लोके खलु वेगप्रचयकारणस्य सामर्थ्यात् अर्थात् कर्मणः कार-णस्य सामर्थ्यात्त् वेगः संस्कारविशेषः प्रचयो नाम शिथिलः संयोगः ता-वेवधर्मयस्य वेगप्रचयधर्मणः तस्य वायोः सन्निपातात् संयोगात् सारव-त्योऽपि मूर्त्तयः पर्वतवृक्षादयः त्रिभक्तादृश्यन्त एव, तर्हि का कथा कण्ठताल्वादि विभागस्य, यतो वक्तुरिच्छोदभूतप्रयत्नेन प्राप्तक्रियः कोष्ठयो वायुः वेगप्रचयोजनयन् ताभ्यां वेगप्रचभ्याञ्च कण्ठताल्वादेः संयोगविभागौ आरभमाणः प्राप्तक्रियो वायुः तत्तत् सहकारेण शब्दतां-

म्प्रतिपद्यते। अत एव तस्य न सर्वदोषलब्धिः। एतदेव 'सङ्करोपहितः' (य० प्रा० १।८) इति सूत्रेण शुक्लयजुःप्रातिशाख्य उक्तम्। अत्रैव भगवान् भाष्यकारः पतञ्जलिरपि दृढं प्रतिपादयति यमर्थम् तमेव वाक्यपदीयकार प्रमाणतया कारिकामुखेन दर्शयति यथा—

अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते।। इति
—वा० प० १।११२

अर्थात् आन्तरो ज्ञाता वृत्तिविशिष्टमन्त करणं सूक्ष्मवागात्मना सूक्ष्मशब्दाकारः शक्तिमत्त्वेन स्थितः स एव जीवो विवरप्रसूतिरिति श्रुत्युक्त्या वैयाकरणमते वाच एवात्मतत्त्वमिति। वर्तमानः स्वस्य रूपस्य वृत्त्या एकबुद्धिविषयी भूतार्थविषयकबोधेच्छाविशिष्टस्य स्वस्य व्यक्तये=प्रकाशाय श्रोतृबोधाय शब्दत्वेन स्थूलशब्दभावेन विवर्तते। वृत्तिविशिष्टान्तःकरणस्य शब्दभावापत्तिरेव ज्ञातस्य शब्दभावापत्तिरित्यर्थः। तेनाद्वैतवादे यथा पारमार्थिकदशायामेकः सन्नप्यात्मा व्यावहारिकस्थितौ मायाशबलितो भिन्नः प्रतीयते पुनः संजाते ज्ञाने ब्रह्मैक्यं सिद्ध्यविवक्षाऽशाब्दिकमतेऽपि। यथा तत्र ब्रह्मणो विवर्तं जागदखिलं तथाऽत्रापि शब्द ब्रह्मणो विवर्तं नामरूपात्मकमखिलं जगत्, जीव एव चेतन एवेत्यर्थः, शब्दात्मनाऽभिव्यक्तो भवति। स एव ब्रह्मपदेन शक्तिपदेन चाभिभाषितो भवति। केषाञ्चनमते तु सूक्ष्मे वागात्मनि स्थितीति पाठमभिप्रेत्य ज्ञाता जीवः। ज्ञानात्मकेऽपि तस्मिन् ग्रहीतृत्वव्यवहारोऽस्ति, तथा शब्दतत्त्वमेवेदं वाङ्मनसाख्य प्रविभागमिति तेन ज्ञातर्यपि वाग्रूपानुषङ्गः सूक्ष्मे भेदरूपोपसंहारादतीन्द्रिये वागात्मनि स्थितिः व्यक्तये तस्यामवस्थायां शब्दरूपस्य ज्ञानस्याविवेकेनानवधारणेन शब्दरूपव्यक्त्यर्थं स्थूलेन्द्रियगम्येन रूपेण विवर्त इत्यर्थ-प्रतिपादितः।

**शाब्दिकमतेन शब्दो ज्ञानस्य परिणाम इति विमर्शः**

शब्दो ज्ञानस्य परिणाम इति शाब्दिका भाषन्ते सिद्धान्ततः। यथा 'आख्यातापयोगे' इति सूत्रे भाष्ये भाष्यकारेण भगवता पतञ्जलिना

प्रोक्तं यत्—"अयमपि योगः शक्योऽकर्तुम्, कथमुपाध्यायादधीत इति ? अपक्रामति तस्मात्तदध्ययनम्। यद्यपक्रामति, किं नात्यन्तायापक्रामति ? सन्ततत्वात्। अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" इत्युक्तम् तत्र च कैयटः यद्यपक्रामतीति प्रतीके—यथाफलं वृक्षादपक्रान्तं न पुनर्वृक्षे तद् भवति, एवं शब्देऽपि प्रसंग इति प्रोक्तवान्। शब्दस्य व्यञ्जका ध्वनयः उपाध्यायेनोत्पाद्यमाना भिन्ना अपि सादृश्याश्रयत्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रप्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्ति। अथवा यथा ज्वालारूपं ज्योतिरपि विच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं सन्ततं, तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततानि प्रोच्यन्ते। ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्याभिमतं केनापवार्यताम् ? स एव ज्ञाता अन्तःकरणमर्थं बुबोधयिषया मनोरूपतामुपैति सांख्यवत्। तथा च जठराग्निना संयुतः पाकमाप्नोति तथा प्राणवायुमाहत्य तदनन्तरमेव वृत्तिमनोभ्यां सह प्राणवायुरूर्ध्वं गच्छति, तदैवान्तःकरणतत्त्वस्य मनसः समाश्रयतां गतो भवति वायुः। यत्र प्राणवायुर्नास्ति, तत्र मनोनैव तिष्ठति यथा मृतशरीरे। अतएव प्राणवायुर्मनस आश्रय उच्यते तदैव मनोधर्मेणदाहने ज्ञानरूपशब्देन वा समाविष्टः तेजसैवं जाठराग्निसहकारेणैव विवर्तते बहिः शब्दरूपो भवति, तादृशदाहवशादेव प्राणः सवृत्तिकमनोरूपान्तःकरणयुक्तः स्वात्मनो ग्रन्थीन् कादिवर्णरूपान् विभज्य भिन्नैः श्रुतिपथैः श्रूयमाणैर्ध्वनिभिः वर्णानभिव्यज्य वर्णेष्वेवोपलीयते। अर्थात् स प्राणः वर्णतः पृथक् न तिष्ठति किन्तु वर्णरूप एव भवतीति सवृत्तिकमनोरूपान्तःकरणयुतस्य वायोर्यः शब्दभावेन परिणामः, स ज्ञानस्य शब्दत्वापत्तिरित्युच्यते। यथा पाणिनीयशिक्षायामपि सम्यगभिहितमत्र विषये। स एव क्रम उक्तः शब्दोत्पत्तौ—

> आत्मा बुद्ध्या समेत्यर्थान् मनोयुङ्क्ते विवक्षया।
> मनः कायग्निमाहन्ति स प्रेरयति मारुतम्।
> सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
> वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः।

—पा० शि०, श्लो० ६, ९

इत्यादिरूपेण, अर्थात् अत्र आत्मा अन्तःकरणं न चैतन्यं, तस्य निर्विकारत्वेन वृत्तिरूपरिणामासम्भवात् । अन्तः-करण-विशिष्टस्य तत्सम्भवेऽपि चित्सन्निधावन्तःकरणस्यैव कर्तृत्वम् अयस्कान्तसन्निधानेऽयसः सक्रियत्वमेवेतिसांख्यमतेन व्याहृतम् । स चान्तःकरणरूपात्मा संस्काररूपेण स्वगतानर्थान् बुद्धया स्ववृत्त्या समेत्य नामैकबुद्धि विषयान् कृत्वा तद्बोधनेच्छया मनोयुक्तं करोति, तदिच्छा-वन्मनः कायाग्निमाहन्ति स कायाग्निः मारुतं प्रेरयति, स मारुतः उदीर्णः शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निनाभिप्रदेशादूर्ध्वं प्रेरितः वेगान्मूर्धपर्यन्तं गत्वा प्रतिनिवृत्तश्च वक्त्रं प्रविश्य तदुक्तयत्नसाहा-य्येनैव तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य पराख्या-ख्यमन्तःस्थितं शब्द वर्णत्वेनाभिव्यञ्जयतीत्यर्थः । उत वा स्वात्मानं वर्णत्वेनाभिव्यञ्जयति । विषमीकारास्तु केचन विद्वान्सः आत्मा-न्तःकरणमित्यस्य व्याख्यानं वदन्ति । तन्मतेतु आत्मपदस्य जीवपरत्वे बाधकाभाव एव । अतो जीव एवात्मपदवाच्यो भवति ।

तस्मादत्रायं सिद्धान्तः वाक्यपदीयेन सम्यग्रूपेण समर्थितः—यथा

> तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
> विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥
>
> —वा० प०, ब्र०का०-१।११७

अतोऽत्र शब्दो द्विविधः प्राणाधिष्ठानः बुद्धयधिष्ठानश्च स प्राण-बुद्धि शक्तिभ्यां प्रतिलब्धाभिव्यक्तिरेवार्थमवबोधयति । तत्र प्राणे बुद्धि-तत्त्वेनान्तराविष्ट उर्ध्वमभिप्रवृत्तः तत्तत्स्थानेषु विवर्तमानः आकारा-दिरूपेण भिन्नतया भासमानः क्रमे शब्दात्मनि भेदानुरागमात्र सन्नि-वेशयति ।

समस्तस्य प्रपञ्चस्य निबन्धनी या काचन शक्तिः, सा व्यवहार-कारणभूता शक्तिः । शब्दाश्रिता वाच्यवाचकभावरूपा सूक्ष्मं वाक्तत्त्वं गवादिपदार्थरूपेण गोशब्दादिरूपेण च विवर्तत इति तदधिष्ठानस्य वाक्तत्त्वस्य पिण्डपरिणामेनाभिव्यक्ता गोत्वादि-जातयो वाच्याः, गोवृक्षादिशब्दपरिमाणेन गोशब्दत्वादिजातयो वाचिकाः तदेवमाश्रयस्योत्पत्तौ, जातीनामभिव्यक्त्या वाच्यवाचक-रूपस्य व्यवहारस्य वाक्तत्त्वं निबन्धनमिति । यः शब्दो नेत्रं

ज्ञापकं यस्य सः यन्नेत्रः प्रतिभात्मा प्रतिभाविषयत्वात्प्रतिभा, अयं भेदरूपो व्यवहारः प्रतिपुरुषं प्रतीयते। अत एवोक्तं श्रुतिषु यद् "वागेवार्थं पश्यति। वाग् ब्रवीति, वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं। तदेतदेकं प्रविभज्योपभुङ्क्ते", इति वाक्तत्त्वमेव भोक्तृभोग्यभोगरूपेण विवर्तते न वाह्यं वस्तु किञ्चिदपि।

केषाञ्चिदिदमपि मतं यद् यः अजस्त्रवृत्तिश्शब्दः बहिरन्तश्च वर्तमानः अन्तःसंकल्परूपः ध्वनिरूपः शब्दः सूक्ष्मत्वान्नोपलभ्यते, स एव व्यञ्जयन्त्यनेनेति व्यञ्जनं तालवृन्तकमित्यमरकोशप्रमाणेन--अजगतिक्षेपणयोः करणेऽर्थे ल्युटि सति वायौ इति पक्षे वीभावाभावः। तस्माद् व्यञ्जनाद् वायुरिव यथा सर्वत्र वायुपरमाणवो व्यस्ताः सन्तः व्यजनात् संहता भवन्ति। एवं स्वनिमित्ताद् वक्तुः प्रयत्नवशादेव श्रोत्रदेशं प्राप्तः प्रतीयते। एकस्यैवात्मनो भेदौ शब्दार्थौ अपृथग्रूपेण स्थितौ तस्मादेव तस्य शब्दस्य प्राणे, बुद्धौ वृत्तिविशिष्टान्तःकरणे च या शक्तिः अर्थाद् वहिः शब्दभवन शक्तिः व्यवस्थिता वर्तते, सैवेषा स्थानेषु कण्ठताल्वादिषु विवर्तमाना सती कादिभेदं प्रतिपद्यते। स एष स्फोटः प्रणवस्योंकारस्यैवापरो हि शब्दात्मको भेदः। यश्च प्रणवः समाहितात्मनो ब्रह्मणः हृद्याकाशदुद्भूतान्नादादभिव्यक्तस्तद्रूपतां भजति। यथोक्तमत्र भगवान्व्यास मुनिः—(भागवतपुराणे १२। ६। ३९)

ततोऽभूत् त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट्।
यत्तल्लिङ्गम्भगवतो ब्रह्मणः परमात्मनः॥

सूतसंहितायामपि प्रोक्तं वर्तते—

परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम्।
प्रकर्षेण नवं यस्मात परं ब्रह्म स्वभावतः॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः॥

शारदातिलकेऽपि सम्यक् प्रतिपादितं वर्तते। यथा—

नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशद्वर्णैः क्रमाद्।
व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत्॥
शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं।
तद्वोऽव्यादनिशं शशांकसदनं वाचामधीशं महः॥ इति

"सत्यं ज्ञानम् आनन्दं ब्रह्म" ( बृ० उप० ३।६।२८ ) इत्यादि श्रुत्युक्तं ब्रह्मज्ञानानन्दादिरूपं यथा प्रकर्षेण नवं निखिलविकाररहिततया कूटस्थं तथा प्रकर्षेण नवस्तत्प्रतिरूपो यस्मादिति विग्रहबलेन शब्दोऽपि प्रणवः प्रोच्यते । यथा योगदर्शने (१।३५।) विषयवती वाक्प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीति सूत्रेण नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः, जिह्वाग्रे रससंवित्, तालुनि रूपसंवित् जिह्वामध्ये स्पर्शसंवित् जिह्वामूले च शब्दसंवित् इत्येताः प्रवृत्तयः उत्पन्नाश्चित्त स्थितौ निबध्नन्ति, तस्मादेव ता विषयवत्य उच्यन्ते । ततः 'विशोका वा ज्योतिष्मती'।(यो० द० १।३६) इति सूत्रेण विगतशोका ज्योतिष्मतो प्रकाशरूपा प्रवृत्तिरुक्तासा, सा च उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति, अष्टदलं रेचकं प्राणायामेन, तद् उर्ध्वमुखं कृत्वा तत्रालम्बने चित्तं धारयेत् । तन्मध्ये हि सूर्यमण्डलमकारो जागरितस्थानम्, तदूर्ध्वं-चन्द्र मण्डलमकारः स्वप्नस्थानम् तदूर्ध्वं वह्निमण्डलमकारः सुषुम्नास्थानम्, तदेतदूर्ध्वं ब्रह्म व्योमात्मकम्, नादस्तुरीयस्थानम्, याऽर्धमात्रेति । योगिनां तत्कर्णिकायां बिष्त्रग् व्यापिशाखासहस्रवत्या मनोवहाख्यनाड्या मूलं तिष्ठति । तस्या उर्ध्वमुखी शाखा एका सुषुम्नाख्याऽन्तरसूर्यादिमध्यमा । तथा च बाह्यान्यपि सूर्यमण्डलानि प्रोतानि, सैव मनोवहा नाडी चित्तस्थानं प्रोच्यते । तस्यामेव ध्यान-धारणा-समाधिभिश्चित्तसाक्षात्कारो भवति । सोऽयं प्राणिमात्रस्य हृद्देश-स्थोऽर्धमात्रारूपस्तुरीयोंऽशोऽर्धमात्रा नादः स्फोटाऽपरपर्याय उच्यते । एतदाशयकं वचनं सप्तशत्यां प्रोक्तम् "अर्धमात्रास्थिता नित्या याऽनुच्चार्या विशेषतः" इति (१।६४) । तस्यैव प्रणवस्य श्रुत्या सर्वनादत्वमुक्तं विद्यते । ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूदिति । स नादः कः ? इति जिज्ञासायाम् यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधात् सर्वैरप्यस्माभिर्विभाव्यते, तेन तस्य सूक्ष्मत्वं प्रदर्शितम्भवति । स त्रिमात्रः अकारोकारमकाररूपमात्रात्रयात्मकः । ईश्वरः प्रभवो यस्य । यः छन्दसामृषभः (तै० उ० ४।१) इत्युक्तमिति कथं प्रणवस्य ब्रह्मप्रभवत्वमिति चेत्, सत्यम्, स्वाङ्गस्येवोपलम्भस्थानत्वात्कोशत्वम् । यथोक्तं श्रीमद्भागवतपुराणे (स्क० १२,अ०६ श्लो० ४०)

श्रृणो ति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ।

अपरञ्चापि (भागवते स्क० १२, अ० ६ श्लो० ४१, ४३)

स्वधाम्नः ब्रह्मणः साक्षाद् वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदवीजं सनातनम् ।
ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥

नैनावताऽलं किन्तु—

अकारादयस्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः ।
अन्त्ये प्रतीयमानो यो ध्वनिर्ब्रह्मेति कीर्त्यते ।

समुद्रादावपि वाय्वाद्यभिघातं विना तरंगो नोत्पद्यते, तथा च चिन्मात्रेऽद्वितीये द्वितीयमज्ञानं कथं सम्बद्ध्यते ? यतोऽहंकाराद्युत्पत्तिः स्यादिति चेदत्रोच्यते—कार्यमात्रं प्रत्यविद्यायाः कारणतयाऽहंकारादि-कार्यदर्शनादेव चिदात्मनि सा कल्प्यते, न तु तत्त्वतश्चिदात्मनि तत्सम्बन्धोऽस्तीति । एतत्सर्वं नागोजिभट्टसम्मतं न कथमपि कैश्चि-दपलपितुं शक्यते ।

निरुक्तेऽपि ( नि० १-१-२ ) निरुक्तभाष्येऽपि उक्तरीत्या पदसत्ता-ऽभावाशंकोत्तरभूतम् "व्याप्तिमत्वात्तु शब्दस्य" इति प्रतीकमुपादाय नागोजिभट्टपादैर्वैयाकरणलघुमञ्जूषायां प्रोक्तं यत् अभिधान-भिधेयरूपा बुद्धिर्हृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणो-दीर्यमाणा कण्ठादिषु वर्णभावमापद्यमाना वाह्याकाशस्थं शब्दं स्वस्व-रूपं कृत्वा श्रोत्रद्वारेण तत्र स्थितां श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थंसर्वाभि-धान रूपां तद्बुद्धिं व्याप्नोति । पुरुषयत्नजा वक्त्रोद्धृताः परं नश्यन्ति, न शब्दः । स च तदनुरक्तोऽर्थप्रत्ययं जनयति । पुरुषबुद्ध्यवस्थितस्यैव चार्थस्य प्रत्ययमादधाति शब्द इत्यर्थः । स च शब्दः वस्तुतः एकोऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बितस्तत्तद्रूपोप्यत्र पदरूपतामिवापन्न इति सर्व पदरूपः सर्वार्थाभिधानशक्तिः या योगिप्रत्यक्षगम्या ।

## अलंकारशास्त्रे भाषातत्त्वमेव शब्दतत्त्वरूपतया प्रतिपाद्यत इति विमर्शः

साहित्यशास्त्रेऽपि भाषातत्त्वमेव शब्दतत्त्वरूपतया प्रतिपादितम्। शब्दस्य काव्यत्वं स्वीकृतवता पण्डितराजेन रसगंगाधरकारेण रसगंगाधरकाव्यलक्षणमवतारयता प्रोक्तमेव "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति। नहि कश्चित्तदेकशब्द काव्यताम्भजते, न वा पदसमुदायः वाक्यस्यैव काव्यत्वानुभवात्। अतएव शब्दं विहाय "वाक्यं रसात्मकं काव्यम्" इति दर्पणकारस्य श्री विश्वनाथस्य काव्यलक्षणप्रतिपत्तिः। वाक्यञ्चापि अकांक्षायोग्यता सन्निधिमान् पदसमुदायः। आकांक्षा चापि पुरुषनिष्ठ एव धर्मः शब्दनिष्ठत्वेन तस्याः प्रतीतेः सम्बन्धमात्राश्रितत्वात् एवञ्च। वाक्यस्यापि भौतिकत्वमिव बाह्यत्वमिव वा मानसत्वमपि अव्याहतमेव। ततश्च यदेव भाषात्वं तदेव वाक्यत्वमिति स्थिरतमम्। लोकेऽपि 'भाषाया सदवस श्रुवः', 'प्रथमायाश्च द्विवचनेभाषायाम् (अष्टा०७-२-८८), 'स्थितप्रज्ञस्य का भाषा? समाधिस्थस्य केशवेत्यादिगीतावचनं द्वितीयाध्याये प्रोक्तम्।

## आधुनिक सम्मतिः

सम्प्रति यद्धि वैज्ञानिकानामाधुनिकानां च भाषातत्त्वं, तदेव वैदिकानां शाब्दिकानाञ्च वाक्यत्वमित्येव स्फोटतत्त्वमित्यवधार्यम्। सोऽयं शब्दमात्र परिवर्तनकृतो भेदभ्रमः। वस्तुतस्तु व्यवहारात्मकेऽस्मिञ्जगति कश्चित् कञ्चिद् घटमानयेति ब्रूते, ततश्च घटकर्मकानयने प्रवृत्तिः शाब्दबोधं विना कथमपि न सम्भवा। शाब्दबोधोऽपि वृत्तिविशिष्टपदज्ञानाधीनः। यथा—"तद्धर्मावच्छिन्नविषयक शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः" इति कार्यकारणभावस्य सम्मतत्त्वात्। तथा बोधोपपत्तये तत्तदर्थबोधकत्वशक्तिमतो वृत्याश्रयस्य शब्दस्य निर्णयः समुचित एव। एवं विधे सति कः वृत्याश्रयः? इति प्रश्ने स्फोट एव समाधानमुक्तबहुविधप्रक्रियया प्रदर्शितमेवास्ति।

## कैयटमतेन स्फोटस्वरूपम्

कैयटोऽप्याह—"अइउण्" इत्यत्र व्यक्तिस्फोटजातिस्फोटयोर्बं-

लाबलं विचारणपरं "अक्षरं न क्षरं विद्यात्" इति भाष्यव्याख्यावसरे वर्णपद वाक्यस्फोटानां व्यवहारनित्यता, नित्यत्वन्तु जातिस्फोटस्यैवेति प्रतिपादयन् ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीति व्याजहार। "आद्यन्तौ टकितौ" इति सूत्रेण वर्णं पदस्फोटो उक्तो। असत्यमेव प्रकृति-प्रत्ययविभागं तत्तदर्थञ्चाश्रित्य रेखागवयन्यायेन सत्यस्य पदवाक्य स्फोटस्य व्युत्पादनभिप्रेतमिति तत्र कैयटः। "अर्थवदधातु" "स्वं रूपं शब्दस्याशब्दसंज्ञा", "तपरस्तत्कालस्ये" त्यादिसूत्रेष्वपि भाष्यकैयटादौ सुप्रतिपादितं।

भगवता भर्तृहरिणापि जातेश्च ब्रह्मात्मकत्वमुक्तम्, तृतीये काण्डे-प्रथमे च यथा—

सम्बन्धिभेदात्सत्तैव भिद्यमानागवादिषु।
जातिरित्युच्यते तस्या सर्वे शब्दा व्यवस्थिताः॥
अनेक व्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता।
कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः॥

अष्टसु स्फोटेषु अखण्डवाक्यस्फोटमतिरिच्य सर्वे शास्त्रप्रक्रिया-निर्वाहका एव। वास्तविकत्वं वाक्यस्फोटस्यैव तत्रापि जातिस्फोट-स्यैवेति। यथोक्ततंत्रापि हरिणा :

वाक्यस्फोटोऽपि निष्कर्षे तिष्ठतीति मतिस्थितिः प्रथमव्युत्पत्ते-र्व्यवहाराधीनतया सम्पूर्णस्य वाक्यस्य विशिष्टे प्रथमं शक्तिग्रहो भवतीति निर्विवादमेव, अतोऽष्टविधस्फोटात्मको ब्रह्मरूपः शब्द एव वृत्याश्रयो भवति। तत्राप्यखण्डवाक्यजातिस्फोट एवेति पार-मार्थिकः, तेनैव लोकेऽर्थावगमः इति सिद्धान्तपन्थाः पूर्वमपि प्रदर्शित एव। शब्दादेव गीतरूपेण व्याख्याता षड्जादयरसदास्वराः गान्धर्वे प्रसिद्धास्तेषां भेदस्तदन्यतमः। रूप्यते परिच्छिद्यते यस्तन्निबन्धनं षड्-जातिदभेदनिरूपणं तस्मादेव सर्वा अष्टविधाः प्रकाराः शब्दमात्रासु शब्दशक्तिसु निश्चिताः, तत्तदर्थबोधकत्वेन संविज्ञातपदनिबन्धनः सर्वो-ऽर्थः शब्देन निरूप्यमाणो व्यवहारमवतरति। षड्ज-ऋषभ गान्धार-धैवतनिषादपंचमानां च अनवस्थितप्रसिद्धविज्ञानपदानां विशेषो

निबन्धनपदः प्रत्ययमन्तरेण नावधार्यंते। गोपालादयोऽपि वाचकपदं प्रकल्प्य गवादिषु विशेषविषयं व्यवहारमारभन्ते। एवञ्च सर्वत्र शब्दाध्यासरूढो भिन्नोऽर्थः शब्दशक्तिसंसृष्टशब्दविषय्या बुद्धया प्रकाशते। अतएव भगवान् भर्तृहरिर्वदति यत्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥
—वा० प०, ब्र० का० १।१२३

अथ बाह्यार्थेषु यः प्रत्ययः प्रत्यक्षभूतः प्रथमः. स वाग् रूपनिमित्तापरिग्रहेण वस्तुस्वरूपमात्रमिदं तदिति व्यपदेशरहितया वृत्त्या प्रत्याययति। स्मरणकालेऽपि अव्यपदेश्य वस्तुविषये प्रत्याय्यत्वरहितानामुपलब्धिकारणानां स्मरणजननाभिमुख्ये स्मृतिविषयाश्श्लोकादयः प्रकाशानुगममात्रं स्पष्टप्रकाशब्दरहितं बुद्धिविषया भवन्ति। तथा हि कोऽपि श्लोको वानुवाको वा योऽयं मया श्रुतिमात्रेण गृहीत इति वाग्-रूपतया सत्यामुत्पन्नः प्रकाशो विशेषवाग्रूपतामधिगतः प्रकाशक्रिया-साधनतया व्यवतिष्ठते। यस्य शब्दब्रह्मणो ह्येवंविधो महिमा वर्णितः, स वाग्रूप एव सर्वशाब्दिकसिद्धान्तः। सा वाग्रूपता चतुर्दशानामष्टा-दशानाम्वा सर्वेषां शिल्पानां कलानाञ्चोपबन्धनी।

पुराणन्यायमीमांसाधर्मशास्त्रांग मिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ अथ च

अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥इति

याज्ञवल्क्यादिवचनानुसारं सर्वविद्यानां प्रयोजिका मूलकारण-मित्यवधारितम्। अभिनिष्पत्तौ सर्वेषां पदार्थानां तद्वशाद् अभिनिष्पत्तौ सर्वं वस्तु सर्वमुत्पन्नं वस्तु सामान्यं पदार्थजातं विभज्यते पृथक् क्रियत इत्यर्थः। विद्याशिल्पकलादिभिः लौकिकेषु वैदिकेषु च पदार्थेषु मनुष्याणां व्यवहारप्राचुर्यम् मनुष्याधीनाश्च स्थावर जङ्गमस्य प्रवृत्तयो विद्यादयश्च वाग्रूपायां बुद्धौ निबद्धाः घटाद्युत्पादेऽपि प्रयोजकोपदेशः प्रयोज्य समाहारश्चेत्येतत्सर्वं वाग् रूपानुसारमेव कल्प्यत इति तत्तात्पर्यम्।

अत एव भर्तृहरेयं श्लोक: वाक्यपदीये प्रोक्तः—

सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी ।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ।। इति
—वा० प० ब्र० का० १।१२५

**सूत्रवार्तिकभाष्यकाराभिमतप्रकाशनम्**

तस्या एव वाग्रूपाया: सूत्रवार्तिकभाष्यवाक्यपदीयादिग्रन्थ-काराणां निर्विवादसिद्धा कालाख्या शक्तिरूपा संज्ञा प्रथिता वर्तते । तस्मादिहि कालविषयक: सारांश: प्रस्तूयते । तथा हि—स्वतन्त्रकर्ता इत्यादिवचनैः शब्दब्रह्मण: स्वातन्त्र्यापरपर्याया कलाद्यनेकावान्तर-शक्ति समुज्जृम्भते । सैव शक्तिर्निमित्तरूपमुपादानरूपञ्च संधत्ते, तेन जन्मादिमय्य: शक्तयस्तद्विज्जृम्भितमेव सैवात्राभ्यनुज्ञाशक्तिपुर-स्कारेण विश्वं सृजति, प्रबिन्धशक्तिं पुरोधाय विश्वं विलापयति । कालाख्यस्वातन्त्र्यशक्त्या सर्वा: परतन्त्रा: जन्मवत्यशक्तय: समा-विष्टा: कालशक्तिवृत्तिमनुपतन्ति । ततश्च प्रतिभावं वैश्वरूपस्य प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवाभासो लक्ष्यते । ततश्च सैव कालाख्या शक्तिरेव प्रतिबन्धाभ्यनुज्ञाख्याऽवान्तरशक्तिव्यपाश्रयेण विश्वं सृजति, संहरति चेत्येवार्थः ।

१. तत्र प्रतिबन्धशक्तिरेव भूतभविष्यभेदेन द्विधा प्रोक्ता, तत्रैव कालसमुद्देशे अभिन्नेन कालेन व्यवहर्तुमशक्यतया क्रियोपाधि: भूतभ-विष्यवर्तमानभेदाद् अभिन्नोऽपि कालो भिद्यते । एकस्यैव कालस्य तिस्रः शक्तय: वर्तन्ते । तत्र भूतशक्तिसम्बन्धेन प्रध्वंसाभाव:, भविष्य-सम्बन्धेन च प्रागभाव: प्रतिपाद्यते । वर्तमानशक्तिसम्बन्धेन सत्तां भावानामभिव्यक्ति: जन्येव कथ्यते ।

२. अभ्यनुज्ञाशक्तिस्तु स्वरूप सत्येव विद्योतते । अतीता-नागतावध्वानौ भावावरणहेतुत्त्वात् तम: स्वभावौ, आवरणं तमोधर्म: गुरुवरणकमेव तम: इतिसांख्यकारिकायामुक्तमेव । वर्तमानोऽध्वा प्रकाशतुल्य: सत्त्वसदृश: 'सत्त्वं लघु प्रकाशकमिष्टम्' इत्युक्तेश्च । रजस्तु प्रवृत्तिसामान्यं कालस्वरूपं सर्वत्रान्वयि । प्रतिबन्धाभ्यनु-

ज्ञाभ्यां प्रवर्तकप्रेरणानुरूपं रजः कालात्मकमेवाङ्गीक्रियते। तेनैतद् विज्ञायते यद् विश्वात्मा एक एव परब्रह्माभिधानः सत्योभावः स एव सर्गस्थितिप्रलयव्यवहारहेतुतया अनन्तशक्तित्वेन व्यवह्रियमाणो भवति। तथा च क्रमिकांश्चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीत्युच्यते कालः। स च विभुः स्वतन्त्रश्च। तस्मादेव निखिलप्रपञ्चजातं प्रति स्वातन्त्र्यशक्तिमदभिन्नः कर्तृपदवाच्यः सुसंगच्छते। भर्तृहरिणापि—अध्याहितकलां यस्येत्यादिना प्रतिपादितः।

काल समुद्देशे च—शक्त्यात्मदेवतापक्षैर्भिन्नकालस्य दर्शनम् (वा० प० ३।९।६२) इति वचनेनापि 'कालख्या स्वातन्त्र्यशक्तिः ब्रह्मणः' इति भर्तृहरेरभिप्राये सत्यपि व्याख्यातारः कारणशक्तिरेव काल इत्याचक्षते।

तथा हि सा बीजशक्तिरङ्कुरोपलम्भमभ्यनुजानती काण्डप्रसवञ्च तदानीं प्रतिबध्नती कालकार्यकारणात कालसंज्ञा भजति। एवमङ्कुरादिशक्तावपि यथोत्तरमनन्तकार्यजननाद् व्यवहितं तत्कार्यं प्रतिबन्धाच्च कालतत्त्वं बोध्यते कैश्चित्, तदयुक्तं प्रतीयते, यतो हि नियत कारणाभावाः स्वकारणसान्निध्यं भजन्ति, नान्यथा इति कारणसामर्थ्यमेवेदम् तत्तु नियतकालत्वात् सहकारीकालस्तदन्य एव प्रोक्तः। कारणपरम्परया उत्पद्यमानानां भावानां क्रमदर्शनाच्च क्रमाख्या कालशक्तिः भावोपाधिरित्येवावधार्यते। ततश्च भावभेदावभासने प्रभुः स एव। स एव च तत्र तदनुयायि क्रमावभासनेऽपि समर्थं स्वतन्त्रस्य चिदात्मनः एव जीवात्मगतेयं शक्तिः कालाख्या वक्तुं शक्या।

**चिदात्मनशक्तिः काल इति विचार :**

तादृशचिदात्मनः शक्तिः कालः, तादृशशक्तिविशिष्ट आत्मा पुरुषो जीवो वा प्रोच्यते, स एव यथातत्त्वमर्थंन् प्रत्येतुमसमर्थः स्वाभासकालानुसारं तत्र क्रममध्यवस्यति। ततश्च कालभेदप्रक्लृप्तेः स एवोपचारेण कालाख्यां प्रतिपद्यते। स एव हि कालशक्तेरविद्याशक्तिसहचारिण्याः फलभूमिः। तददृष्टादिवशेनैव च भावेषु प्रतिबन्धाभ्यनुज्ञे भवतः।

**केषाञ्चिन्मते धृतविग्रहा देवतैव कालः**

तथा हि—विग्रहवती महाप्रभावां देवतां कालत्वेन वर्णयन्ति केचन विपश्चितः। तत्रापि चिदरूपस्य ब्रह्मणः शक्तिर्देवतैव सकलजगद्भ्रासघस्मरेत्यतदानुगुण्यमेवेतीदमेवात्र दर्शनम्। तस्मादेवैतत्कालदर्शनमविद्यायां संसारहेतुभूतायां प्रथमं मन्यते। भेदावभास एव संसारः, भेदश्चापि देशकालाभ्यामेव, तत्र च कालभेदो जगत्सृष्टेराद्यः। अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव भासते। अविभूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्य पगमादयमप्युपैति। व्यवहारे तु सर्वस्यैव सत्यतया किं युक्तमयुक्तम्वेति विचारो निष्फलतां भजति। समीचीनं मतमिदमत्र वक्तुं शक्यते यत् सत्त्वादसत्त्वस्य भेदो नास्ति। सत्त्वमेव तिरोभूतमसत्त्वमिति व्यवहृतिपथमागच्छति, न त्वभावो नाम किञ्चित् पदार्थान्तरम्। तदुक्तं भगवतापतञ्जलिना 'धर्मो त्र्यध्वा, धर्मास्तु त्र्यध्वानः। तल्लक्षितास्तां तामवस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते। अवस्थान्तरतो न द्रव्यान्तरतः' इति, (पा० सू० बृ०, पृ० २०।८) कथं तर्हि नित्यानां शब्दानां नित्येन कालेन कृतो ह्रस्वत्वादिभेदः? कल्पित इत्येव ब्रूमः। तद्यथा चिरमिदं क्षिप्रमिदं कृतमिति ज्ञानयोः स्वतःसमानकालत्वेऽपि विषयगतप्रचयापचयाभ्यां कालप्रतिभास इव स्वात्मनि लक्ष्यते। तथा ह्रस्वादावपि शब्दतत्त्वस्य नित्यत्वात् समानकालत्वेऽपि समुपचरितः कालभेदो न विरोधमापद्यते। तदुपचरितश्चेत्थं वक्तुं शक्यते यद् यावत् क्षणसन्तानः संकलनबुद्धया एकत्वेन गृह्यते, तावानेकः कालो दिनपक्षमासादिरूपेण विभक्त इव दृश्यते, समनुभूयते वा। एवञ्चापचयकाष्ठागतः क्षणः उपचयकाष्ठातो मन्वन्तरादिति। तत्परिच्छेदिका नालिकाविवरादम्भः श्रुतिः। अन्यच्च घटिका यन्त्रादिकं चन्द्रसूर्यसंचारादिकञ्च तत्परिच्छेदकमुपवर्णयन्ति विज्ञाः।

अत एव पाणिनिमुनिना स्वाष्टाध्याय्यां कालतत्त्वविषयमधिकृत्य 'कालोपसर्जने च तुल्यम्' इति सूत्रयता कालस्य लक्षणं नैव कर्तव्यमन्यत्र तस्य प्रसिद्धत्वादित्युक्तम्। सैव प्रसिद्धिः 'येन मूर्तीनामुपचयापचयाश्च परिलक्ष्यन्ते, तमेव कालमाहुः,' इत्यादिरूपेणेति भगवता भाष्यकारेण प्रतिपादितम्।

इत्थं वाक् शब्दतत्त्वं सर्वान् देहिनो जीवान् अर्थक्रियासु प्रयोजनार्थव्यापारे समीहयति = नियोजयति कालाख्यशक्तिसचिवः, कालसंज्ञास्वयमधिगतश्च । वागुपरमे च विगता संज्ञा चैतन्यमस्येति विसंज्ञोऽयं देही काष्ठकुड्यवद् इतरव्यापारानुविधायित्वे निदर्शनम्, वाक्तत्त्वमेव चितिक्रियारूपं स्वीकृतम्भवतीति न संशयः । यथोक्तमपि—

भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा ।
आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः ।
पृथक् प्रत्यवभासन्ते वाग्विभागा गवादयः ॥
षड्द्वारां षडधिष्ठाना षट्प्रबोधां षडव्ययाम् ।
ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते ॥ इति

वचनं वाक्यपदीयटीकाकारेण पं० नारायणदत्तत्रिपाठिशर्मणा टीकायामुद्‌हृतम् (ब्र० का०-१२८) ।

**स्वप्नेऽपि वाच उपयोगो दृश्यत एवेति विचारः**

सविभागसाध्यसाधनभावरूपः शब्दब्रह्मणो जाग्रद्रूपो विवर्तः । एवञ्च जाग्रदवस्थायां साध्यसाधनयोः भेदे कर्ता कर्तृत्वाभिमानवान् यथा कार्ये घटादिरूपे, तथा प्रवर्ततेऽभीष्टप्रकारेण प्रवृत्तिशीलो भवति । जाग्रदवस्थायामिव अविभागे साध्यसाधनभेदरहिते स्वप्ने सैव वागेव कार्यत्वेन कर्मत्वेन अवतिष्ठते । यथा जाग्रदवस्थायां विभागेन घटादिरूपेण विवृत्तया वाचा कर्मणि कर्ता प्रवर्तते, तथा स्वप्नावस्थायां वागेवघटादिरूपेण विवर्तमाना तत्कार्यस्थानापन्ना भवति, तथा च स्वप्ने वागुपयोगः पारमार्थिक एव ।

अत एवोक्तमत्र वाक्यपदीयकारैः वा० प०ब्र० का० १।१२७

प्रविभागे यथाकर्ता तथा कार्ये प्रवर्तते ।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते ॥ इति

अग्रेऽपि वाक्यपदीयकारो वदति ब्रह्मकाण्डे (१२८) यथा—

स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा ।
तथैवं रूढतामेति तथा ह्यर्थो विधीयते ॥ इति ।

अत्र वाक्यपदीयकारो मतद्वयं स्वमात्रा परमात्रेति भेदेन प्रदर्शयति। प्रथमपक्षे स्वशब्द आत्मावाची जीवपरः, मात्रा शब्दो अंशपरः, अंशपर्यवसायी अवयववाची वा। द्वितीयपक्षे नानाजीवाः सर्वैश्च तैः प्रत्येकं प्रत्येकं ब्रह्माण्डमारब्धम्, यस्य च जीवस्य तत्त्वसाक्षात्कारः, तद्रचितब्रह्माण्डस्य लयो यथा भवति, तथा प्रतिपाद्यते। दशभिः पुरुषैरेकारज्जुः उरगात्मना प्रतीता तद्रचिता उरगाश्च दशसंख्याकाः, तत्र यस्यैव रज्जुतत्त्वसाक्षात्कारस्तस्यैव सर्पभ्रान्तिनिवृत्तिर्नान्येषाम्। तस्मादेकैकस्य चितितत्त्वस्य सर्वप्रबोधरूपः, सर्वप्रभेदरूपश्चायं परिणाम इति। मतेऽस्मिन् परिणामस्य व्यवहारे सत्यत्वं परमार्थेऽसत्यत्वम्। अन्यपक्षे च एकजीववादो नानाजीवात्मैव चैतन्य सर्वविकारकारणम्, यथा यन्त्रस्थात्, क्षुण्णात्, पेषणात्, घर्षणाद् वा तिला तैलप्रविभागाः एवं चैतन्याद् विश्वस्य सर्गः प्रोक्तः। परस्य परमात्मनः, मात्रा विकारोंऽशः इति परमात्रावादिनः। तथा च श्रूयते तद्यथा—महतोऽग्नेर्विस्फुलिंगाः सूक्ष्माद्वायोरभ्रघनाश्चन्द्रकान्ताद्विभागिन्यस्तोयधाराः पृथिव्या वा शालादयोन्यग्रोधधानाम्न्यो वा सावरोह प्रसवा न्यग्रधा इति। वस्तुतः परममूलकारणं शब्द एव सर्गे नानारूपेणविवर्तते, मतभेदाः स्वस्वानुभवावसायिनः, तथा च श्रुत्याऽन्तः सन्निवेशिना शब्देन कर्त्रा यथा यावत्प्रकारविशिष्टः स्वमात्रादिऽप्रक्रम्यते। अन्तःसन्निवेशिना शब्देन सुखदुःखादिरूपेण भिन्नेषु प्राणिवर्गेषु बहुधा विवर्त्यंत इति। तथैव प्रारम्भप्रकारविशिष्टं रूढतां प्रसिद्धमिति श्रुत्यैवान्तःसन्निवेशिना शब्दतत्त्वेनैवार्थो भूतभौतिकवर्गो विधीयते कल्प्यते, अतात्विकप्रतीतिविषयीक्रियते, उपस्थितिद्वारा शब्दविषयीक्रियत इत्यर्थः। ये च शब्दार्थाः प्रमाणान्तरसिद्धसत्त्वास्तानपि न बहिः सदसत्त्वा प्रकाशयन्ति शब्दाः किन्तु बुद्धिप्रतिभाससमानार्थाकारतया बुद्धौ सर्वपदार्थानां वासनारूपेण सत्त्वात्सर्वं निरवद्यम्।

तस्मादेव शब्दस्यान्तर्यामित्वं सर्वगतं ब्रह्मैव सूपपन्नं को विरोद्धुं क्षमः? 'चत्वारिश्रृंगा त्रयोऽस्य पादाः' इति भाष्यपठित श्रुति बोधितम्, तेनैवेदं शब्दतत्त्वमन्तर्बुद्धिगुहायामवस्थितं महान्तमृषभं शब्दधर्मवर्षकं प्राहुः श्रुतयः, श्रुत्यर्थज्ञाश्चापि। येन ऋषभेण महता देवेन

सायुज्यं शब्दब्रह्माभेदेनात्मज्ञानं मुमुक्षुभिस्समर्थितम् । मतमिदं वाक्यपदीयकारोऽपि समर्थयन्नेव कारिकामिमामवतारयति, यथा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरमवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ।। इति
—वाक्य० ब्र० का०, १।१३०

अतः पुरुषोच्चार्यमाणः शब्दप्रतिबिम्बग्राहको लोकव्यवहारक्षमः कार्यब्रह्मरूपः शब्दः । नित्यश्च सर्वव्यवहारहेतुः क्रमरहितः सर्वप्राण्यन्तःसन्निविष्टः सर्वकार्यवर्गस्य प्रभवः क्रियाजातस्याश्रयः । सुखदुःखयोरधिष्ठानम्—सर्वत्राप्रतिहतकार्यजननशक्तिः परिच्छिन्नानां परिणामशून्यप्रकृतिर्न तु सांख्यसिद्धान्तसिद्ध प्रधानवत्परिणामः । यथापदार्थप्रकाश शक्तिरपि प्रदीपो घटावरुद्धः, एवं भोगायतनशरीरावधिः पर्यन्याग्निवदुत्पत्तिविनाशशक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तत्र वाग्योगविदोविच्छिद्याहंकारग्रन्थीन् अत्यन्तविनिर्विभागेन संसृज्यन्त इति इदमेवानादिनिधनमित्यत्रोक्तं शब्दब्रह्मेति तत्त्वं मोमांस्यं जिज्ञास्यञ्चेति ।

**शाब्दिकतन्त्रानुसारं सृष्टिविमर्शः**

वस्तुतः पराशक्तिः परावागपरपर्याया आत्मगर्भस्था समस्तमपि विश्वमात्मसात्कृत्य, उत वा आत्मगर्भस्था समस्तं प्रपञ्चं द्रष्टुमुन्मुखा मात्रावच्छिन्ना शिवसाध्याभावमापन्ना विन्दुरूपेण परिणता भवति । तस्याः सकाशादेव पारमार्थिकचैतन्यं प्रतिफलितं सत्ज्योतिर्लिङ्गरूपेणाभिव्यक्तो जायते । तामेव विन्दुरूपिणी तांत्रिक परिभाषायां कामरूपपीठात्मना तान्त्रिका वर्णयन्ति ।

शक्तिपीठमिदमेकमात्रा शक्त्यंशभूतमेकमात्रा शिवांशमुररीकृत्य सामरस्यं भजति । समभावेन संघटितस्वरूपमेव परमाचार्याः शास्त्रज्ञाः क्षान्ताशक्ति-अम्बिकाशक्त्यात्मनेति प्रतिपादयंति । पीठेऽस्मिन् महाशक्तेः प्रकाशः परावाग्रूपेणेव भवति, नात्र संशयः । यैस्तन्त्रानुसारं तन्त्रानुमितमनुमोदितं योगसाधनमभ्यस्तं, तैरेव विज्ञातं यदित एव शब्दराज्यसंसूचनं सार्वत्रिकं प्रवर्तत इति, इदमेव प्रणवस्य वास्तविकं स्वरूपं वेदस्वरूपम्वा ।

इत्थं क्रमशः तादृश्याः परावागपरपर्यायामहाशक्तेः पराशक्तेर्वा सुक्रमिकविकासेन शान्ताशक्तिः, सा इच्छारूपतया परिणता भवति । तदानीं शिवांशाम्बिकाशक्तिरपि वामारूपेणाविर्भूता शिवेन सह सामरस्यमयविन्दोश्चाविर्भावे सति ततः स्वयमेव तदनुरूपचैतन्यस्य स्फुरणं सम्पद्यते । इदमेवोक्तस्वरूपं विन्दुं पूर्णगिरिपीठं. तथा चिद्विकासमेव वाणलिङ्गं बोधयन्ति इति प्रोक्तमाचार्यैः । शब्दशास्त्रीयवैयाकरणाना सिद्धान्तदृष्ट्या इयमेव पश्यन्तीवाच अवस्था भवति । पराशक्ति स्वरूपस्य शब्दब्रह्मणः प्रथमभूमौ, उत वा कामरूपपीठे स्वात्मगर्भस्थं विश्वं नित्यं वर्तमानं पश्यन्त्येव पश्यन्तीपदवीं भजति तदन्वर्थसंज्ञामिति । तदानीमतीतानागतरूपविभक्तकालस्य सत्ता न भवति, तथा दूरस्थसमीपव्यवधानमन्तरालमपि न भवति, तदानीं खलु कार्यकारणयोः कठिनोऽपि नियमोऽज्ञात एव भवति, न च तदा कश्चिद् विक्षोभः, चाञ्चल्यम्वा दृष्टिपथायत इत्यनुभवति योगी, अत एव शान्तिमयी पूर्णावस्था भवति । तदनन्तरमिच्छाशक्तिरुन्मिषिता भवति तदुन्मेषेण सहैव शब्दस्य द्वितीये प्रविभागे सृष्टि प्रक्रिया विकाशपथमायाति । इत्थम्भूतप्रक्रियाम्मण्डलपदेनाभिभाषन्ते तज्ज्ञाः । पराशक्तेः इच्छा प्रभावेण बिन्दुरूपगर्भस्थस्यैकदेशस्थितस्य शब्दतत्त्वस्य सकाशात् विसृष्टिरेव सृष्टिपदाभिहिता भवति ।

उपर्युक्ताया भूमेः कालस्य प्रभाव आरब्धो भवति यस्मात् तेनैव सृष्टिक्रिया न युगपद् भवति किन्तु क्रमानुसारमेव । तथैव देशस्य कार्यकारणभावयोश्च स्फुरणमप्यवधारणीयम्भवति । एवं विधपरावस्थायां तदिच्छाशक्तेरुपरमे सति ज्ञानशक्तेरुदयः सम्भवति । तथा स शिवांशो ज्येष्ठया शक्त्या सहाद्वैतभावाधिष्ठितः सम्मिलितो वा जालन्धपीठरूपसामरस्यबिन्दोः सृष्टिं विधत्ते । तस्मादेव विन्दोरभिव्यक्तं चैतन्यमितरलिंगनाम्ना प्रसिद्धं भवति । शक्तेस्तस्या एव प्रविभागे, स्तरे वा मध्यमावागाविर्भूता भवति यस्याः प्रभावेण सृष्टं जगत्तत्तद्भावेषु स्थितं मन्यते । यदा खलु स्थितिशक्तिः क्षीणा भवति, तदा स्वभावतः नैसर्गिकनियमेनान्तर्मुखाऽऽकर्षणप्रबला विजृम्भिता भवति । तत्प्रभावादेव संहारशक्तिक्रिया प्रारम्भा भवति तदा ज्ञान-

शक्तिः क्रियाशक्तिरूपतया परिणता सती शिवांशया रौद्रीशक्त्या सह साम्यभावं भजते, तदा तत्परिणामः फलस्वरूपः । यस्याद्वैतबिन्दो-राविर्भावः सञ्जायते, स एवोड्डीयमानपीठपदेनाभिहितो भवति। अस्मादेव बिन्दोः तच्छक्तिर्महातेजः सम्पन्ने परलिंगरूपेऽभिव्यक्ता भवति । इयमेव शाब्दिक सिद्धान्तेऽपि शब्दस्य वैखरीनाम्नी तुरीया भूमिः चतुर्थी वागिति व्यपदिश्यते। यस्य संहारशीलस्य क्षयवर्धकस्य जगतोऽनुभवं विभावयन्ति वैयाकरणाः, तद्धि निखिलमपि वैखर्य्या एव विभूतिः । इत्थमत्र परा-पश्यन्ती मध्यमा-वैखरीति तन्त्रानुसारम् कामरूपपीठम्, पूर्णगिरिपीठम्, नित्यमण्डलजालन्धपीठम्, इतरलिंगम्, उड्डीयानपीठञ्चेति क्रमशो व्यपदिष्टम्भवति ।

**तिसृणां वाचामेव प्रणवरूपतया ऋग्यजुःसामाथर्वादिरूपतया निरूपणम्**

एतावतोक्तदिशा पश्यन्ती-मध्यमा-वैखरीणां वाचां शब्दात्मना यास्तिस्रोऽवस्थाश्चर्चितास्ताः प्रणवस्योंकारस्य क्रमशः अकारः, उकारः मकार एवेति । ता एव च ऋग्यजुःसामवेदात्मरूपतया ज्ञानिनो दृष्टिपथे समायांति ।

अत्रेयमपि भणितिर्यत् त्रिलोकः, त्रिदेवता, त्रिकालप्रभृतयोऽखण्ड-परावाक्स्फोटात्मकशब्दब्रह्मणस्तुरीयवाच एव परिणाममात्रभूता-स्सन्ति । परावाग्रूप बिन्दुगर्भितो यस्त्रिकोणः समस्तस्य ब्रह्माण्डस्य मूलरूपतया, बीजरूपतया शास्त्रेषु सुप्रतिपादितः सोऽस्यैव चतुर्विध-शब्दस्य सम्बन्धेन प्रकटितः प्रकाशितः सन्तिष्ठते । तस्य त्रिकोणस्य तिस्रो रेखाः पश्यन्ती-मध्यमा-वैखरीरूपाः वाचः ब्रह्मविष्णुमहेशात्मना प्रतिपादनम्, शब्दसृष्टिः स्थितिः, संहारश्च वामा-ज्येष्ठा-रौद्रीति ब्रह्माविष्णुमहेशाख्याः त्रिप्रकाराः, इच्छा-ज्ञानाक्रियारूपशा वा शक्तित्रयस्य प्रतिनिधिरूपा मन्यन्ते । तस्य त्रिकोणा मध्यबिन्दुरेव परावाक् यद्यपि बिन्दौ शिवशक्त्योरंशभावमापन्नताऽस्ति, त्रिकोण-तापि, तथापि बिन्दुः प्रधानतया शिवरूपे, तथा त्रिकोणोऽपि शक्तिरूपे योनिरूपे वा परिणतो भवति । तत एव बिन्दु समन्वितात् त्रिकोण-मण्डलात् समस्तं बाह्यं जगत् ह्याविर्भूतम्भवति ।

उपरि त्रिकोणविषये चर्चा चर्चिता, सा पश्यन्ती-मध्यमा-वैखरी रूपत्रिविधशब्दानां मिथः संश्लेषात्मकं सम्मिलितं स्वरूपमस्ति ।

तासां केन्द्रबिन्दुः, तासां स्वरूपस्य वा केन्द्रस्थितबिन्दुरस्ति, तस्य स्वरूपमहंरूपे वर्णितम्भवति। तत् परमातृकाया विकासक्षेत्रं सदा-शक्तितत्त्वस्वरूपं मन्यते।

मध्यबिन्दोः त्रिकोणात् समस्ततत्त्वानां पदार्थानामुत्पत्तिः सम्भवति। यस्याः कस्या अपिदेवतायाः, उत वा कस्यापि इतरप्रविभागस्य मूल-तत्त्वानुसन्धाने तस्य चरमावस्थायां लिंगयोनेः सम्बन्धरूपं त्रिकोण-मध्यस्थबिन्दुरथवा बिन्दुर्गभितस्त्रिकोणश्च दृष्टिगोचरो भवति। अतएव तन्त्रशास्त्रे यस्याः कस्या अपि देवतायाश्चक्रवर्णनं भवति, तत्र सार्वत्रिकरूपेण सार्वभौमरूपेण वाऽयं बिन्दुः त्रिकोणमूलस्थाने साधरण-तया वर्तमानो भवत्येव। किं बहुना स्थूलं जगद् यदनुभूयते दीपकर्णिकता कलिकातो वा विकोर्णप्रभामण्डलमिव। बिन्दोश्शब्दतत्त्वस्य बाह्य-प्रसारणे विकिरणमात्रमेव वा स्वीक्रियते।

इन्द्रियाणां प्रत्याहारेणेमां रश्मिमालामुपसंहृत्य बाह्यं जगन्नैसर्गतो बाह्यबिन्दौ विलीनं भवति। एवमेव लिङ्गात्मकमाभ्यन्तरं जगदपि विक्षुब्धस्यान्तःकरणस्य बाह्यविलासमात्रमवधार्यते, नान्यत्। तदपि विलीने सति तदनुरूपबिन्दुस्वरूपे अव्यक्तम्भवति। एवमेव कारण-जगदपि—उपसंहारं प्राप्य कारणबिन्दौ पर्यवस्थितम्भवति। जगत्त्र-यमिदं जाग्रत्-स्वप्न सुषुप्तिअवस्थानां द्योतकमस्ति। अतएव स्थूल-सूक्ष्मकारणभूतास्त्रयो बिन्दव एव त्रिकोणस्य त्रयाणां प्रान्तभागानां बिन्दवा बोजभूताः सन्ति।

### शैव-शाक्तसिद्धान्तानुरूपता शब्दब्रह्मणि

शाब्दिकसिद्धान्तस्य शैव-शाक्तसिद्धान्तेन सह साम्यता विषये-ऽस्मिन् प्रायः सर्वेषु क्रमेषु परिलक्ष्यते।

अनादिकालतः सृष्टेः प्राक् तत्तत्वमव्यक्तं पूर्णनिराकाररूपेण शून्यस्वरूपं वस्तु विराजमानं तत्त्वातीतं प्रपंचातीतं व्यवहारपथादप्य-तीतं च स्वीकृतं विद्यते। तदेव तत्त्वमेव शास्त्राणां महाशक्ति-श्शाक्तानां शैवानाञ्च परमशिवो भवति, वाङ्मनसोऽगोचरत्वात् तदनुत्तरत्वेनाभिहितं भवति।

वस्तुतो हि तस्य वर्णनं न कोऽपि कर्तुं समर्थः। अत एवायं परमशिवो विशुद्धोऽन्तर्लीनो विमर्शकारणतया प्रकाशमानः स्वयंप्रकाशभावो विशुद्धो विमर्शाख्यः स्वीकृतः। तत्त्वातीतावस्थायै अनुत्तरावस्थायै च शास्त्रेषु वाचकरूपेणादिवर्णोऽकारः प्रयुक्तो भवति। तत एव तयोरवस्थयोः सामरस्यावस्था वर्णिता। एतादृशशिवशक्त्योस्तादात्म्य-रूपतैव तत्रत्यसिद्धान्तः। अकाररूपप्रकाशेन सह हकाररूपविमर्श-स्य—अर्थात् अग्निना साकं सोमस्य साम्यभाव एव कामपदवाच्यो रविपदवाच्यो वा प्रसिद्धः। तत्र शास्त्रेषु यस्य अग्निसोमात्मक-स्य बिन्दोः वर्णनं लभ्यते, स एव शिवः। 'अः' तथा तच्छक्तिरेव 'हः' बिन्दुरूपतया—अहं पूर्णाहंतारूपेणानुभूयते योगिभिः। तयोः साम्य-भंगावस्थया स एव बिन्दुः प्रस्पन्दितस्सन् शुक्ल-रक्तबिन्दुरूपतया-ऽऽविर्भूतः। अनेन प्रस्पन्दनकार्येण योऽभिव्यक्तः, स एव शास्त्रेषु संवित्पदभाक्, उत वा चैतन्यनाम्नाभिहितो भवति। अस्यैवापरंनामम् चित्कलेति। यथाऽग्निसम्पर्काद् घृतं द्रवीभूतं धाराक्रमपथं भजति, स्पन्दमानं भवति, तथैव प्रकाशात्मकशिवसम्पर्काद् विमर्शरूपा परा-शक्तिः श्रुतिपथमवतरति। तस्य सकाशात् परमानन्दमयी भूताऽमृत-धारा स्रवति, सैव धारा प्रोक्तचित्कलायाः प्रकारान्तरेण ब्रह्मानन्दस्य स्वरूपं भवति, यतो हि निष्कले चैतन्ये कलाया आरोपो नैव सम्भवः, अतएवेयं चित्कलामहाशक्तेः स्वातन्त्र्योन्मेषवशाच्छिवशक्त्योरपेक्षित-वैषम्यादुत्पन्न शक्तिभावस्य प्राधान्यात् प्रकाशांशस्य विमर्शांशस्य च घनीभूतसंश्लेषेणोद्धृता सती व्यक्ता भवति। एवं शिव-शक्त्योः संयोगात् उत्पन्नामृतधारा प्रवाहिता सती लीलारूपतरंगरूपतां प्रतिपद्यते, सैव तान्त्रिकपरिभाषायां हार्धकलानाम्नाऽभिव्यज्यते। उपर्युक्त त्रिकोणविषयकं तत्त्वं यच्चर्चितं, तदेव पश्यन्ती-मध्यमा-वैखरीति त्रिविधशब्दानां परस्परं संश्लेषात्मकं स्वरूपं स्वीकृतं शाब्दिकानामप्यविरुद्धम्। स्थूलमिदं जगत् सर्वदाऽनुभूयमानं दीप-कलिकातो विकीर्णप्रभामण्डलमिव बिन्दोर्बाह्यप्रसारणं विकिरण-मात्रमेवेत्युक्तं पूर्वमपि।

शक्तिसाधनाया मूलसूत्रं नादानुसन्धानम् उत वा शब्दस्य क्रमिक-मुच्चारणमेव, नान्यत्। शाब्दिकसिद्धान्ते विन्दुरेव, शक्तियोगसिद्धान्ते कुण्डलिन्येव वा विक्षुब्धा सती नादं विकासयति, तद्रूपतां वा भजति।

वस्तुत: पूर्णपरमेश्वरस्य स्वातन्त्र्यशक्तिसकाशाच्छब्दतत्त्वरूपबिन्दोः विक्षोभकार्यं सम्पन्नं भवति। इमं चिदाकाशस्वरूपबिन्दुं क्वचिदपि निम्नभूमिस्था शक्तिः विक्षोभयितुं न पारयति । यदा खलु कुण्डलिनी मूलाधारस्याध: उर्ध्वमुखा सहस्राराकुलकमले विराजमाना सती तिष्ठति, तदा साऽव्यक्तनाम्न्या विश्वोत्तीर्णवस्थाया एवान्तर्गता भवति, परन्तु स्वातन्त्र्यवशात्तस्यानुभूतिर्भवति । सफलगुरुकृपावशात् ईश्वरानुग्रहवशाच्चैव सा निराधारा निरालम्बा सत्यपि कुण्डलिनी-शक्तिरुद्बोधिता भवति। इत्थं सकला, निष्कला तथा मिश्रिता तस्याः शक्तेस्त्रिधा अवस्था भवति । तेन शक्तेरुपासनापि स्वभावतः प्रोक्त श्रेणिसु एवान्तर्मुखा भवति। उपासनाक्रमानुसारं सकल-भावस्योपासना निकृष्टा मन्यते। मिश्रभावस्योपासना मध्यमा मन्यते। परं सामान्यजनकृतोपासना या मन्यतेऽस्माभिः, सा प्रोक्तश्रेणीषु नान्तर्मुखा भवति। यथा पूर्वमुक्तं यत् गुरुकृपावशादीश्वरानुग्रह-वशादेव कुण्डलिन्याः शक्तेरुद्बोधनं सुषुम्नामार्गप्रवेशश्च यावन्न जायते, तावदुपासनाधिकारस्योदय एव न भवति । मूलाधारत आज्ञा-चक्रपर्यन्तं चक्रेश्वरी रूपायाश्शक्तेरुपासनाऽऽराधना एव निकृष्टो पासना। यश्चाराधकः इन्द्रियगतिं प्राणगतिञ्चावरुद्ध्य कुलपथे प्रविष्टो न भवति, तदर्थं देव्या अधमोपासनापि न सम्भवा । अतः क्रमश एवाराधकः अधमभूमितो यथाविधि साधनाद्वारा निर्मल-चित्तो मध्यमभूमेरुपासनाया अधिकारी भवति । ततः परमेव प्राप्तोत्तमाधिकारः महत्तमायाः शक्तेर्भगवत्या अद्वैतोपासनया सिद्धिं लभते ।

यावद् मनुष्यो द्वन्दात्मके भेदराज्ये वर्तमानो भवति, तावत्तस्य निम्नैवोपासनाभूमिः अर्थान्निम्नभूमेरेवोपासना स्वाभाविकी। कर्मैव तद्रूपम् । चतुरस्रतो बैन्दवचक्रपर्यन्तं, उत्त वा मूलाधारतः सहस्रदलकमलपर्यन्तं देवतादिसहितायाः समग्रदेव्या उपासनैव कर्मात्मिका अपरा पूजा मन्यते ।

वस्तुतो यैः स्वदेहेषु समग्रदेवताया न्यासविधिर्ज्ञातः, तेषां साम-र्थ्यंमनुपमम्भवति । एवं विधाःसिद्धा यदि न्यासविधिविरहितां नमन्ति चेत्, तदा तेषां शरीरपातोऽवश्यम्भावी भवति ।

स्वयं भगवान् शिवः भगवत्या अपरां पूजां विदधाति स्मेति वचनं शास्त्रेषु लभते, तेन पराशक्तेः पराया वाचो महिमा पाञ्चरात्रादिष्वपि वर्णितोऽत्रविषये महत्प्रमाणम् ।

### पाञ्चरात्रागमानुसारं शब्दब्रह्मविमर्शः

पाञ्चरात्रागमे विशुद्धाच्छब्दतत्त्वात् यस्य तत्त्वस्यार्थविबोधो भवति, बिन्दुस्तस्यैव द्योतको मन्यते । तस्यैव विन्दोरेव नाम महामाया विद्यते । स एव बिन्दुः शब्दब्रह्मापरपर्याया कुण्डलिनी । विद्याशक्तितया व्योमनाम्ना विचित्रभुवन-भोग-भोग्यरूपेषु परिणतः सन् शुद्धो भूत्वा शुद्धस्य जगतः सृष्टिमारभते । यदा खलु शक्त्या आघातेनास्य बिन्दोः स्फुरणं भवति, तदा ततः कलाया उदयो भवति । कलापदार्थश्चात्रावयव एव । सैव कलासृष्टिसमये मूल प्रकृतिः अंशरूपिणी, कलारूपिणी, कलांशरूपिणोति भिन्नमभिव्यक्तं रूपं धारयति । तत्र दुर्गा-लक्ष्मी-सरस्वतीदेव्योंऽशरूपिण्यः । पुष्टिः, तुष्टिरन्या देव्यश्च कलारूपिण्यः । जगति च समस्ता नार्यः कलांशरूपिण्योऽभिहिता भवन्ति ।

इत्थमत्र वक्तुं शक्यते यन्मूलाधारे स्थिता शब्दब्रह्ममयी बिम्बी कुण्डलिनीशक्तिरेव वर्णमालिकां स्रजति । विषयेऽस्मिन् शारदातिलके प्रथमपटले (श्लो० १०८-११३) पर्यन्तं विचारः कृतो वर्तते । तत्रविषये मातृकाचक्रविवेकेऽपि सांगोपाङ्गवर्णनं विद्यते । कुण्डलिनी शक्तिरेव वर्णान् जनयति । अत्र गूढार्थदीपिकाकारमतानुसारं शक्तिर्नाम मूलकारणभूतशब्दस्योन्मुखीभवनावस्थाया नामान्तरं विद्यते । यथोक्तं तत्र 'शक्तिर्नाम मूलकारणस्य शब्दस्योन्मुखो कारणावस्थे' ति ।

### शक्तिसकाशाद् वर्णोत्पत्तिविमर्शः

तस्या एव शक्तेः सकाशाद् ध्वनेरुदयो भवति । ध्वनेश्च नादः । नादान्निरोधिकायाः, ततश्च तस्याः सकाशाद् अर्धचन्द्रस्य, ततो बिन्दोः, तस्मादेव बिन्दोः परा-पश्यन्ती-मध्यमा-वैखरीति चतसृणां वाचां= शब्दानां प्रादुर्भावो भवति । पराया वाच उदयस्थानं मूलाधार एव । ततः परमग्रे स्वाधिष्ठानचक्रे पश्यन्तीपदेन परैवोच्यते । हृदयदेशप्राप्ता मध्यमा भवति । मुखाच्च कण्ठताल्वादिस्थानतोऽभिव्यक्तैव

वाग् सा वैखरी भवति। यथा च राघवभट्टकृतशारदातिलक-टीकायामुक्तं वर्तते—

स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः।
मूलाधारे समुत्पन्नः पराख्यो नाद उत्तमः॥
स एवोर्ध्वंतया नीतः स्वाधिष्ठाने विजृम्भितः।
पश्यन्त्यामवाप्नोति तयैवोर्ध्वं शनैः शनैः॥
अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः।
तथा तयोर्ध्वं नुन्नः सन् विशुद्धो कण्ठदेशतः॥
वैखर्य्याख्यस्ततः कण्ठशीर्षताल्वोष्ठदन्तगः।
जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात्॥
कण्ठताल्वोष्ठकण्ठौष्ठा दन्तौष्ठा द्वयस्तथा।
समुत्पन्नान्यक्षराणि क्रमादाक्षिकावधि।
आदिक्षान्तरतेत्येषामक्षरत्वमुदीरितम्॥

—शायदातिलकम् मन्त्रवर्णक्रमनिर्देशः, रावबटीकाया पृष्ठ ६०

**शारदातिलकानुगतं योगशास्त्रानुगतञ्च मतं विमृश्यते**

वर्णास्त्रिधाः—सैम्य-सौर-आग्नेयभेदात् ॥ १. सौम्यो नाम चन्द्रमासम्बन्धी, २. सौरः सूर्य सम्बन्धी, ३. आग्नेयोऽग्निसम्बन्धी। तत्र वर्णेषु स्वराः सौम्यवर्णा प्रोच्यन्ते, सौम्यपदभाजस्ते। ते च षोडशसंख्यकाः—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः। प्रपञ्चसारस्य तृतीय पटलस्य ४-७ श्लोकानुसारं प्रोक्तेषु स्वरेषु अ इ उ (ं) विन्दुश्च पुंल्लिगाः सन्ति। दीर्घाः स्वराः आ ई ऊ तथा विसर्गश्च स्त्रिलिंगा मन्यन्ते। ऋ ॠ ऌ ॡ चत्वारो नपुंसकाः।

ह्रस्वस्वराणां स्थितिः पिंगलायां नाड्यां भवति। दीर्घस्वारा-णामिडायां भवति स्थितिः। नपुंसकस्वराणां तु स्थितिः सुषुम्नायाम्। अत्रापि शारदातिलकं (श्लो० २-७) प्रमाणम्—

पिङ्गलायां स्थिता ह्रस्वा इडायां संगता परे।
सुषम्नां मध्यमा ज्ञेयाश्चत्वारो ये नपुंसकाः॥

कादयो मावसानाः स्पर्शसंज्ञकाः व्यञ्जनवर्णाः सौरपदेनोक्ता भवन्ति। व्यापकावर्णा दशसंख्याका य र ल व श ष स ह क्ष त्रा आग्नेयाः प्रोक्ताः सन्ति।

कलोत्पत्तिविमर्शः

एभ्योस्त्रिप्रकारेभ्यो वर्णेभ्योष्टात्रिंशत्कलानामुत्पत्तिर्भवति। स्वरेभ्यः सौम्य चन्द्रस्य (१६) षोड्शकलाः स्पर्शयुग्मेभ्यः सूर्यकलाः द्वादश (१२) तथा यकारादि त्रपर्यन्त वर्णेभ्योऽग्नि-कलाः (१०) दशसंख्याका जायन्ते, सर्वमेतत्प्रपञ्चसारस्यंतृतीये पटले वर्णितं वर्तते—

| तत्र चन्द्रकलाः षोडश यथा | सौरीकलाः द्वादश यथा | आग्नेय्यः दशकलाः |
|---|---|---|
| १. अं अमृता, | १. कं भं तपिनि, | १. यं धूमार्चिः, |
| २. आं मानदा, | २. खं बं तापिनी, | २. रं उष्मा, |
| ३. इं पूषा, | ३. गं फं धूम्रा, | ३. लं ज्वलिनी, |
| ४. ईं तुष्टि, | ४. घं पं मरीचिः, | ४. वं ज्वालिनी, |
| ५. उं पुष्टिः, | ५. ङं नं ज्वालिनो, | ५. शं विस्फुलिंगिनी, |
| ६. ऊं रतिः, | ६. चं धं रुचिः, | ६. षं-सुश्री, |
| ७. ऋं धृतिः, | ७. छं दं सुषुम्ना, | ७. सं सुरूपा, |
| ८. ॠं शशिनी, | ८. जं थं भोगदा, | ८. हं कपिला, |
| ९. लृं चन्द्रिका, | ९. क्षं तं विश्वा, | ९. क्षं हव्यवहा, |
| १०. ॡं कान्तिः, | १०. ञं णं बोधिनी, | १०. त्रं कव्यवहा। |
| ११. एं ज्योत्स्ना, | ११. टं ढं धारिणी, | |
| १२ ऐं श्रीः, | १२. ठं डं क्षमा। | |
| १३. ओं प्रीतिः, | | |
| १४. औं अंगदा, | | |
| १५. अं पूर्णा, | | |
| १६. अः पूर्णामृता। | | |

इत्थं सर्वं खलु तत्त्वमत्रत्यं शाब्दिकमतसिद्धशब्दब्रह्मापरपर्याय-स्फोटज्ञानाय प्रक्रियाभूतं मन्यत एव ।

**ओंकार एव शब्द ब्रह्मेत्यपि विचारणीयो विशेषतोऽत्र**

जगति द्वौ पन्थानौ प्रेयः, श्रेयः, इति भेदात् । प्रेयः पन्थास्तु विषयादि सम्भोगाय संसारे प्रवृत्तिकरः, मोक्षावाप्तये श्रेयः पन्थाः स्वीकृतः। मोक्षपदार्थश्च बहुविधैश्शास्त्रवचनैर्विभिन्नैः शास्त्रवासनावद्भिर्बहुधा प्रतिपादितो विद्यते, परमत्र मोक्षपदार्थं आत्मानुभूतिब्रह्म ज्ञानं ब्रह्म-साक्षात्कारो ब्राह्मी स्थितिरेवेति विचार्यते । यथोक्तं श्रुतावपि—

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ।।[1] इति

तादृशो हि मोक्षः प्राप्यः, साध्यश्च, सुविचारपरैः शब्दब्रह्मोपासनयाऽनायासेन सुलभ एव । यतोऽक्षरविद्या हि पराविद्याऽभिहितावर्तते । नाम्नोपनिषदि[2] मुण्डकोपनिषदि यथा—"तस्मै स हो वाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा चेति[3]" तत्रापरा विद्यैव शास्त्रविद्यापरपर्याया शब्दविद्या हि प्राधान्येन वर्णिता । शास्त्रविद्या जागतिकविद्यापदवीमागता । अत्रापरा-विद्यापदेन ऋग्वेदोऽथर्ववेदः, शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः ज्योतिषमिति । परावस्थयाऽक्षरमेवावधार्यते, पराशब्देनाक्षरमेव ग्रहीतव्यं भवति । अक्षरविषये "उपनिषदि यथा वचनमिदम् तथा क्षरात्-सम्भवतीह विश्वम्" इति, तेनाक्षरादेव जगतः सृष्टिरभिहिता। कठोपनिषदि च तद्विषये प्रोक्तं विद्यते, यथा—

एतदेवाक्षरं[3] ब्रह्म एतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।।[4]

इत्थमत्राक्षरपेदनोंकार एव विषयीकृतो विद्यते यतो माण्डूक्योपनिषदि ओंकारस्याक्षरत्वं प्रतिपादितं—विद्यते ओमित्येतदक्षरमिदं सर्वं तस्योपासनाख्यानभूतं भवत् इति सर्वमोंकार एव[5]। अकारोकारमका-

१. कठोपनिषदिः २।२, २. मु० उ० १।४, ३. तत्रैव १।७,
४. कठोप० २।१६ ५. माण्डू० २।१५

रात्मकमिदमक्षरं कालत्रयातीतं, तुरीयावस्थास्वीकारेणाक्षरमिदं ब्रह्मतत्त्वबोधकमेव। अत्र प्रमाणञ्च तैत्तरीयारण्यके वचनमिदं यत्—

गौरीमिमां सलिलानि तक्षस्येकपदी द्विपदी सा चतुष्पदी।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥[1] इति

अस्य वचनस्यायमाशयः तात्पर्यरूपो विमृश्यते यत्सृष्टेः प्राक्-समये गौरवर्णा वाग्देवी परमाकाशे प्रतिष्ठिता सती जलतरंगन्यायेन वर्णान् पदानि वाक्यानि च विरचय्य शब्दं व्यसृजत्, अभि-व्यक्तीचकार वा। तत्रैकपदी द्विपदीप्रभृतिवचनानि प्रणवस्य वेद-वेदांगादीनां च प्रादुर्भावपरतया प्रोक्तानि। तत्रायं क्रमो यथा—एकपदी वाक्प्रणवात्मिका भूत्वा पुरुषस्य हृद्देशेऽभिभूता प्रकाशमलंभत, तदनन्तरमेव व्याहृतयः सावित्रीरूपेण द्विपदी बभूवु। ततः परं वेदाश्च-त्वारश्चतुष्पदीरूपेणाविर्भूताः। ततः षड् वेदांगानि—धर्मशास्त्राणि, पुराणानि चाष्टपदीविद्यारूपेणाविर्भूतानि। ततः परम्मीमांसान्याय-सांख्ययोगपाञ्चरात्रपाशुपतागमायुर्वेदधनुर्वेदगन्धर्ववेदादिर्नवपदीरूपे-णाऽभिव्यज्यमानो बभूव। इत्थमभिव्यक्ता सती वाग्देवी अनन्तानन्तवाक्सन्दर्भवती सर्ववर्णमयी, सर्वध्वनिमयी, सहस्राक्षर-परमे व्योम्निप्रादुर्भूता। तस्मादेवास्यावाग्देव्या प्रारम्भे ओंकारस्वरूपत्वं सहस्राक्षरात्मकत्वं च युक्तियुक्तं प्रकाशितम्। स च ओंकारः स्वय-मेवाव्यक्तोऽनादिश्च तथा परमात्मस्वरूपत्वाद् ब्रह्मपरमात्मादि-शब्दैर्वर्णितो भवति शास्त्रेषु।

वस्तुतो ब्रह्मणो वास्तविकबोधोऽप्योंकारेणैव जायते। यदा खलु श्रोत्रेन्द्रियादेर्बाह्यशक्तिर्विलुप्ता कुण्ठिता वा भवति, तदा ओंकारस्य सर्वार्थप्रकाशकाकारस्फोटतत्त्वस्य श्रवणे साधवः शाब्दिकाः समर्था भवन्ति। त एव शाब्दिकाः सुषुप्तौ समाधौ च समस्तान् भावानपि ज्ञातुं प्रभवन्तीति तथ्यम्। ओंकारपरमात्मनो विशुद्धस्वरूपः, स च स्वयं हिरण्यगर्भस्य परमेष्ठिनो हृदयाकाशे वेदवाण्याऽभिव्यक्तः। ओंकार एव वस्तुतो स्वाश्रयरूप परमात्मनःप रब्रह्मणो वा साक्षाद्

---

१. तै०आ० १।६।४

वाचक इति शास्त्रहृद्यम् वस्तु, तथा च स एवोंकारः समस्तवेदमन्त्राणामुपनिषदाञ्च सनातनं बोजमिति सर्वथा प्राशस्त्येनामनन्ति शास्त्रपारदृश्वानः। तस्मिनोंकारेऽकारोकारमकारेति वर्णत्रयं सत्त्वरजस्तमांसि ऋग्यजुस्सामवेदत्रयं भूर्भुवः स्वर्लोकत्रयं जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयं ज्ञाता-ज्ञेय-ज्ञानात्मकत्रिपुटिरूपञ्चाभिव्यक्तं मन्यत एव, नात्र कश्चनापि विवादः। ओंकारात्मके शब्दब्रह्मण्येवाभिनिवेशो विशेषतो वैयाकरणानां सिद्धान्तः। अत्र विषये न केवलं शाब्दिकानां युक्तिप्रमाण एवालम, अपि तु तद्विषये शारदातिलकग्रन्थेऽपि शब्दब्रह्मनाम्ना विचारः सम्यगभिहितः। यथा—

चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतम्।
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः।।
—शा० ति०–१।२

अतएव समाहितात्मनः परमेष्ठिनो ब्रह्मणो हृदयाकाशान्नाद आविर्भवतीति प्रोक्तमेव। यदा मुमुक्षुर्जीवो स्वमनोवृत्तिमवरुणद्धि, तदैव तन्नादमनुभवति। ततश्च श्रेष्ठयोगिनस्तस्यानाहतनादस्य सम्यगुपासनां विदधति, तदानीं तन्नादप्रभावेणैवाधिभूतम् (द्रव्यम्), अधिदैवम् (क्रिया), अध्यात्मम् (कारकम्), त्रिविधं मलं हि विधूय पवित्रान्तःकरणाः परमगतिमोक्षप्रदं भजन्ते=प्राप्नुवन्ति। अत्रत्यसिद्धान्ते हि सर्वभूतानाञ्चैतन्यं शान्तब्रह्म प्राणिनां देहेषु निवसति। प्राणिनांदेहमध्यगं शरीरान्तःकरणस्थं कुण्डलीरूपं सूक्ष्मं मण्डलीकाराव्यक्तं चैतन्य रूपं शब्दब्रह्म गद्यम्। छन्दोरूपं पद्यं गीतात्मकं तत्तद्भेदतो वर्णात्मना विर्भवति। न केवलं योगतन्त्रे शारदातिलके एव तथा प्रतिपादनं तस्य किन्तु श्रीमद्भागवतपुराणेऽपि जीवस्य चैतन्यं शब्दब्रह्मेति पदेन प्रतिपादितमस्ति। अत्राद्वैतपरतया अद्वैतविशिष्टाद्वैतपरतया च तत्तच्छास्त्रवासनावद्भिर्व्याख्यायते। अद्वैतपरकतया हि जीवस्य चैतन्यमेव परमेश्वरस्य चैतन्यमेकमद्वितीयमस्ति परन्तूपाधिभेदादेव भेदावगमः। तत्र जीवचैतन्याद् वर्णात्मकध्वनिरीश्वरचैतन्याच्च स्फोटात्मकध्वनिरभिव्यक्तो भवति। उभयोर्ध्वनिगतभेदात् स्फोटोऽपि द्वैतत्वापन्नः। वेदान्तसारे ईश्वरप्राज्ञयोः स्वात्मानुभवप्रकारेणनयो समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलजलाशययोरिव वा भेदाः

एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव वा भेदः ।

वस्तुतः ओंकारो बिन्दुनादयोः कारणमस्ति। ओंकारो ध्वनिरूपेण प्राणिमात्रस्य हृदि तिष्ठत्येव । अत्रविषयेऋग्वेदेऽपि प्रोक्तमस्ति । यथा—

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमुर्जं दधाना धेनुर्वागस्मानुप सुष्टुतैतु ॥[1]

मन्त्रेऽस्मिन् पशुपदं प्राणिमात्रवाचकं, तेन प्राणिमात्रस्य बोधो भवति । अत्र श्रुतिरपि—'वितिष्ठन्तां मातुरस्या उपस्थान्नानारूपा पशवो जायमाना[2]' इति पूर्वोक्त ऋग्वेदमन्त्रे 'पशवो वदन्ति तां वाचम्' इति वाक्येन ध्वनिमात्रस्य बोधो भवति । ध्वनिरपि व्यक्ताव्यक्त-योर्भेदेन द्विधा । अविक्रियाधर्मकं शब्दतत्वं ध्वनिं विक्रियाध-र्मिणमनुविक्रियते, सूक्ष्मैर्ध्वनिभिः करणैर्व्यापारेण प्रचीयमानैः परमाणु-भिरिव स्थूलं भौतिकं स्थूलो ध्वनिर्व्यंज्यते । ध्वनिर्विज्ञाने ध्वनि-तत्त्वविषये स्थूलसूक्ष्मभेदेन द्विधा भवति । स एव प्राकृतो वैकृतश्च द्विधा वर्ण्यते । प्राकृतविषये वैकृतविषये च पूर्वं प्रोक्तमेव । अत्र तदेवोच्यते येन विना स्फोटरूपमनभिव्यक्तं न परिच्छिद्यते, स प्राकृतो-ध्वनिः । येन चाभिव्यक्तं स्फोटरूपं पुनरविच्छेदेन प्रचिततरकालमुप-लभ्यते स वैकृतोध्वनिः । तद्विषये वाक्यपदीयादिषु प्रोक्तं यथा—

वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥[3] इति

शब्दाभिव्यक्तौ ध्वनेः प्रधानत्वात् सोऽव्यक्तो नादः कारणमात्रं स्वीकृतं भवति । यद्यपि वैकृतध्वनेः कारणं तु प्राकृत एव ध्वनिः, तथापि ध्वनिमात्रस्य बीजं नाद इति श्रीमद्भागवतपुराणे एकादश-स्कन्धे प्रतिपादितमस्ति—

---

१. ऋ० वे० ८।१००।११, २. ऋगवेदात्मदेवीसूक्तम्,
३, वा० प० १।४७ ।

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतं प्रतिपद्यते ।।

इत्यपि प्रमाणमत्र । वैयाकरणलघुमंजूषायाम् नागोजिभट्टैः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तेर्बिन्दुरूपमव्यक्तं त्रिगुणात्मकं जायते । एतदेव शक्तितत्त्वम्, अस्मादेव शक्तितत्त्वाद् बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोनादः, चिदंशो बिन्दुरिति । अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते । त्रिगुणात्मकसृष्टे प्राग् ब्रह्मणश्शक्तिद्वयमभिव्यज्यते । प्रथमा परा चिच्छक्तिः द्वितीया शक्तिः मायापदवाच्याऽचिच्छक्तिर्विशिष्टब्रह्मेश्वरो भवति । मायाशक्तिविशिष्टब्रह्मजीव उच्यते । अत्र प्रमाणञ्च श्वेताश्वतरोपनिषद् वचनमेव 'ॐ द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याऽविद्ये निहिते यत्र गूढे क्षरञ्च विद्या, ईशते यस्तु सोऽन्यः' इति । उक्तमेवंवचनमेव भगवद्गीतापि समर्थयति यथा—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते ।। १६।१५

तस्मादिह प्रकृतौ यच्छब्दब्रह्म तदेवात्राक्षरपदेनाभ्युपगम्यते । तत एव शब्दब्रह्मात्मकादक्षराद् वैखर्यादिशब्दा अभिव्यञ्यन्ते । एतद्विषये अमृतविन्दूपनिषदि वचनमिदं प्रमाणम् ।

शब्दाक्षरं परं ब्रह्म यस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वान् अक्षरं ध्यायेद् यदिच्छेच्छान्तिमाप्नुयात् ।।
—अमृत वि०-४।१

एतदनुरोधेनापि ओंकारे साध्य-सिद्धावस्थाद्वय सन्निहितमवगम्यत एव । लक्ष्यलक्षणञ्चोभयात्मक एवोंकारः । लक्ष्यन्तु—ओम् इति एकाक्षरं ब्रह्म, पञ्चान्यस्त्रिकालातीतं तद्य ओंकार एव । गुणत्रयातीततुरीयावस्थोंकारात्मिका विद्यते । तदेव लक्ष्यं, तदेव मोक्षपदं वर्तते । यतः अमात्राश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः इति राद्धान्तः पन्थाः आश्रयणीयश्च । एवञ्चोंकार परमात्मैव इति माण्डूक्योपनिषदि (१।११) प्रोक्तम् । वस्तुतोऽत्रैत्र लक्ष्यीभूत ओंकारस्य सूक्ष्मं वर्णनमस्ति । लक्षणात्मक ओंकारस्तु साध्यरूपो-

ऽस्ति, 'लक्ष्यं ब्रह्म लक्षणमोंकारः' इत्यपि सम्यगेव। अत ओंकारा राधनेन जीवो लक्ष्यं तादृशं शब्दब्रह्म प्राप्नोति। यथोक्तमपि श्वेताश्वतरोपनिषदि (श्वे० १।८)—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन बोद्धव्यं शरवत्तन्मयो भवेत् ॥

अर्थात् ओंकारो धनुः, शरो जीवात्मेति प्रकल्पनया ज्ञायतेयज्जीवात्मनो ब्रह्मणि लीनार्थमोंकाररूपं धनुः साधनत्वेन गृहीतम्, तस्मादत्रोंकारस्य साधनत्वं प्रख्यापितं भवति। यत ओंकारः सृष्टेः कारणमपि प्रोक्तः स एव सृष्टिरूपश्चापि, स एव व्यक्ताव्यक्तप्रकृतेः प्रारम्भरूपः। अतएव नामरूपात्मकमिदं जगदिति वचनं शब्दब्रह्मणः सकाशादेव सृष्टिविषयकं निखिलञ्च जातः स्फोटात्मकशब्दब्रह्ममयमिति समर्थितं सुसंगच्छते। स एवोक्त ओंकारः सृष्टेर्भर्ता, यतः—संयुक्तमेतत्क्षर मक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमोशः। भूतभविष्यवर्तमानात्मकं सर्वंखलु ओंकार एव।

ऋग्यजुःसामाथर्वंचतुर्वेदात्मकचतुष्पादशब्दब्रह्मणः प्रथमपादे जागरितस्थानो वैश्वानरो बाह्यज्ञानेन स्थूलं भुङ्क्ते। द्वितीयपादेतैजसरूपः स्वप्नस्थानत्वाद् अन्तःप्राज्ञः, तृतीये पादे तु कामस्वप्नादिवर्जितं सुषुप्तिस्थानमेतत्। प्राज्ञो हि आनन्दं भुङ्क्ते, तुरीये पादेशान्तं शिवं प्रपञ्चरहितमद्वैतम्। स एव आत्मज्ञेयविषयः। अत्र विषयेऽप्युक्तं माण्डूक्योपनिषदि—"सोऽयमात्माऽध्यक्षरोंकारोधिमात्रं पादमात्रश्च पादा अकारोकारमकाराः" इति। एवं छान्दोग्योपनिषदि चापि तद्वा एतद् वानुज्ञाक्षरं यद्धि किञ्चिदनुजानात्येवम्। इत्येव तदा ह्येषा एव समृद्धिः यदनुज्ञासमदेयिता ह वै कामानां भवति य एतदेवं विद्वान् अक्षरमुद्गीथमुपासत" इति। अर्थात् अकारोकारमकारात्मकोंकारो ब्रह्मकार्यंकारणत्वात् सूक्ष्ममविज्ञेयम्एवञ्चस्थूल प्रपञ्चात्मकं भवतीति प्रतिपद्यते सिद्धान्तः शब्दब्रह्मणः। व्याकरणदर्शने किमिदमक्षरमिति ? बिचारणायां सत्यमेवैतत् प्रबोधितं यदविनाशिस्फोटात्मकशब्दब्रह्मे वाद्वैतरूपेण वर्ण्यते। भगवान् भाष्यकारस्तु "अक्षरं न क्षरं विद्यात् अश्नोतेर्वासरोऽक्षरम् इत्युक्तवान्। तेन हि अक्षरशब्दस्य नित्यत्वं व्यपकत्वं च प्रसिद्ध्यति। एषोऽक्षरशब्दः शब्दतत्त्वेन

स्फोटात्मना स्फोटनाम्ना वा व्याकरणदर्शने सिद्धिपथमागतः । मनुस्मृतावपि (२।८३) प्रोक्तं यथा—

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ।। इति

तत्राक्षरपदेनोंकार एव गृह्यते परब्रह्मरूपः—शाब्दिकमते वाच्यवाचकयोरभेदात् ब्रह्मरूपतोऽङ्कारस्य सिद्धैवास्ति। इत्थं लक्ष्यलक्षणे व्याकरणमिति महाभाष्य वार्तिकमनुरुद्धय प्रवर्तते । तत्र लक्ष्यं शब्दसाधुत्वं लक्षणञ्च सूत्रम् । विशेषतो व्याख्यानं विधायेदं वक्तुं शक्यत एव यल्लक्ष्यमात्मात्मासाक्षात्कारः, सैव पराविद्या लक्षणं शब्दसाधनोपायोऽपरा विद्या चेति। उभे विद्ये ऽक्षरात्मकेऽपि तेनात्र विवादः। यथोक्तम्—

व्याकरणात् पदसिद्धिः पदसिद्धेरर्थनिर्णयः ।
अर्थात् तत्त्वज्ञानं तत्त्वज्ञानात्परं श्रेयः ।। इति

अत एवैतत्सर्वमोंकारात्मकमेकाक्षरं ब्रह्मेति गीयमानं स्तूयमानं ज्ञेयं ध्येयं सेव्यं सर्वं खलु । उक्तञ्चापि—

"अत ओम् इति ब्रह्मः ओमितीदं सर्वम्" (तैत्तिरीयोपनिषदि)। तस्मादेव भगवता भर्तृहरिणापि प्रोक्तं साधु सङ्गच्छते । यथा—

तस्माद्य शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ।। इति
—वा० प० १।१३१

अर्थाच्छब्दब्रह्मतादात्म्योपगमरूपा ब्राह्मणः प्राप्तिर्भवतीति। यथाऽऽहुरष्ट प्रकरणेपि—

शब्दतत्त्वमघोषा वाग्ब्रह्म कुण्डलिनी ध्रुवम् ।
विद्या शक्ति परानादो महामायेति देशिकैः ।।
बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि ।
चतस्रो वृत्तयस्तस्य याभिर्व्याप्तास्त्रिधाणवः ।।
वैखरी मध्यमाभिख्या पश्यन्ती सूक्ष्मसंज्ञिता ।
तत्र सा वैखरी श्रोत्रग्राह्या याऽर्थस्य वाचिका ।।

# उपसंहारः

**वस्तुतः समासत इदं वक्तुं शक्यते यत्**

स्फोटाऽपरपर्यायस्य शब्दब्रह्मणः शासनपरत्वं कथमभ्युपगम्यत इति विचारणायामिह तदेव तत्त्वं शास्त्रीमुपस्थाप्यते तद् यथा—शब्द शास्त्रं हि सर्वशास्त्रापेक्षयाविलक्षणं वैभवं विभर्तीति सत्यमेव, तत्र शास्त्रन्नाम शासनं तद्धि शास्त्रं शासनरूपेण विभिन्नं शासनमाधत्ते, सर्वाण्यपिशास्त्राणि प्रायः जन्मप्रभृति सर्वक्षेत्रेषु सर्वान् जनान् शरीरेन्द्रिय संस्काराधान पुरस्सरं जीवनाधानाऽऽचारपुरस्सरं वा कर्तव्याऽकर्तव्य विधिनिषेधात्मक वचनैः कुसंस्कारात् कुत्सितकर्मतोऽकर्तव्याच्चपृथक् प्रतिष्ठापयन्त्येवेति नात्रसंशयः। व्याकरशास्त्रं सर्वप्रथमन्वर्थं स्वनामधन्यं शब्दानुशासनं सर्वोत्कृष्टं विलक्षणं सविशेषमेव शब्दसंस्कारमादधाति। सर्वोऽपि शास्त्रीयोलौकिकश्च व्यवहारो तत्संस्कारमन्तरा न फलवत्तां लभते कदाचित्। न वा कश्चन जनस्तथा यशोभाग् भवति यथाऽपेक्ष्यतेऽतो व्याकरणस्य शब्दानुशासनस्य कियती महत्ताशास्त्रीयव्यवहारे वरीवर्तीति न तिरोहितम्। सर्वदोषप्रशमोपायः विभिन्नशास्त्रवचनानुसारं तत्तच्छास्त्राधीनः सत्यमस्तीतिनात्र विवादः परं वाङ्मलोपशमनन्तु केवलं व्याकरणाधीनमेव। व्याकरणं शब्दानुशासनं हि शब्दार्थयोरुभयोरपि परमार्थतश्शासनं विधत्ते येनान्यान्यपि शास्त्राण्युपकार्याणि भवन्त्येन। तस्माद् व्याकरणस्योपकारकत्वमतिशयेन चकास्ति।

सत्स्वपि—ऐन्द्र-चान्द्र-प्रभृतिषु व्याकरणेषु पाणिनीयव्याकरणस्यैव वेदाङ्गत्वं प्रथितं वर्णसमाम्नाय मूलकत्वात्। भगवान् पाणिनिरेव आशुतोषस्य भगवतो महेश्वरस्याऽऽराधनायां लीनस्तत्प्रसादाल्लब्धमाहेश्वराक्षर समाम्नायः तदनुसारञ्च प्रणीताऽष्टाध्यायी, सर्वविध लौकिकवैदिकशब्दसाधुत्वप्रक्रियस्सर्वातिशायी शाब्दिकेषु सञ्जात एव।

अत एवेदं वचनं साधु मन्यते शास्त्रज्ञैर्यत्—

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इति

'पाणिनीयं व्याकरणं हि वैदिकलौकिक निखिल लक्ष्य शब्दराशि-संस्काराय नित्यशब्द साधुत्वान्वाख्यानाय च स्मर्यंते विज्ञैः। परमार्थ-तश्शब्दस्य नित्यत्वेऽपि सकललोकस्य सारल्येन शब्दानुशासनप्रक्रिया-बोधाय शास्त्रप्रक्रियानिर्वाहकतया विलक्षणानि शास्त्रप्रक्रिया निर्वाहकानि सूत्राणि प्रकल्पितानि व्याकरणशास्त्रे कार्यवाद प्रवर्त-कान्यपि स्वीकृतानि सर्वैः। स्फोटस्यवास्तविकत्वं तज्ज्ञानञ्चव्याकर-णागमस्य मुख्यं वैदिकलौकिक तत्तच्छब्दलक्ष्यमभिलक्ष्य परि-कल्प्यैव शास्त्राणि सूत्ररूपाणि प्रणीतानि भगवता पाणिनिमुनिना, वास्तविकत्वन्तु स्फोटस्यैव, तज्ज्ञानमेव व्याकरणागमस्य मुख्यं प्रयोजनम्मन्यते, स च स्फोटः शब्दतत्त्वभूतः परब्रह्मात्मरूपएवेति शब्द-ब्रह्मापरपर्यायः स्फोटात्मा श्रोतव्यः शब्दशास्त्रेभ्यः स एव शब्दार्था-भिन्नतया मध्यमानादाभिव्यंग्यो मन्तव्यः वाङ्मलापसरणेन मध्यमा-पश्यन्तीवागाराधनरूपयोगेन निदिध्यासनतया तयोरात्मनासहाभेदा-ऽध्यवसायेन वशीकरणं ततः साक्षात्कारात्मकनिःश्रेयसाधिगमोऽपि सुकरः। एवं विधः स्फोटो विमर्शितव्यपथे समानेय एवेति प्रतिपद्ये, तद् यथा—

ऋग् यजुः सामवेदेभ्यो वेदाच्चाथर्वणः क्रमात्।<br>
पाठ्यञ्चाभि नयान् गीतं रसान् संगृह्य पद्मभूः।<br>
व्यरीरचत् त्रयमिदं धर्मकामार्थमोक्षदम्॥[1]

अत्रत्य त्रयपदं संगीतरत्नाकरस्थवाक्यगतं नाट्य-गीत-नृत्य परमेव, मोक्ष प्रदत्वादेव नारदादीनां रुचिरिति प्रकाश्यते।

एवमेवान्यदपि वचनं प्रमाणम्, यथा—

अपि ब्रह्मापरानन्दादिदमभ्यधिकं ध्रुवम्।<br>
जहार नारदादीनां चित्तानि कथमन्यथा॥[2]

यथोक्तदृशा मुनयो संगीतत्रयलीलायां मनो मोहं मोक्षाय प्रकल्प-यामासुस्तथैव व्याकरणस्यापि आन्तरस्फोटरूपस्य शब्दतत्त्वस्य शब्द-

१. संगीत रत्नाकरः १।७६-१०,        २. सं० र० १।१२

ब्रह्मापरपर्यायशब्दब्रह्मण आत्मरूपतया संविज्ञानेन मोक्षावाप्तिरिति प्रामुख्येन वस्तुतत्त्वं स्फोटं जानीयुर्त्योका इति सिद्धान्तः। यथोक्तं भगवताभर्तृहरिणा ब्रह्मकाण्डे वाक्यपदीये—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥[1]

शब्दब्रह्मोपासकस्य प्रयोक्तुरात्मानं शरीरान्तरवस्थितं हृदिदेशे-विभुत्वेऽपि समुपलभ्यं महान्तमृषभं प्रोचुश्शाब्दिकाः ।

चत्वारि शृङ्गात्रयोऽस्यपादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधाबद्धो वृषभो रोरवीति महादेवो मर्त्या आविवेश ॥[2]

स च स्फोटो बाह्याभ्यन्तरभेदेन द्विविधः, प्रथमम्, बाह्योऽपि जाति-व्यक्तिभेदेन द्विविधः, अद्य च निरंश एवाभिन्नो व्यक्तिस्फोटो-जातिस्फोटो वा वहीरूप आन्तरः शब्दार्थमयो वा बुद्ध्यनुसंहारो वाक्यमिति, वाचकतया शब्दागमेऽभ्युपगतः। यस्तु भेदप्रतिभास-पदवीमारूढः स उपाधिकृत एव। नैतावतालम् किन्तु उपांशु-परमो-पांशु-व्यक्तोव्यक्ततरश्च विलम्बितो पिवुम्बितरश्च, द्रुतो-द्रुततरश्चेति नानाप्रतिभासा न वास्तविकाः किन्तु अभिव्यञ्जकध्वनिकृता एव भासन्ते, तस्मादेव यः शब्दो व्यक्त उपांशकृत्वाऽभिधीयमानो भवति सोह्यभिव्यञ्जकध्वनिकृत् क्रमात् क्रमवान् नाना विधावस्थां गतः प्रतीतिपथमवतरति, परमार्थविचारशरणौ सत्यान्तु सोऽक्रम एव स्फोटात्मा-प्रतिभासः स्मृति-अनुभूतिपथि समाकलितो भवति ।

'तत्तदुपाधिवशादेव बुद्धिर्विततेवानुमन्यते' इति हेलाराजमतम् । वाक्यपदीयकारेणापि—

अव्यक्तः क्रमवान् शब्द उपांश्वयमभिधीयते ।
अक्रमस्तु वितत्येव बुद्धिर्यत्रावतिष्ठते ॥[3]

१. वा० प० ब्र० का० १,१३१
२. महाभाष्य प०
३. वाक्यपदीय वचनम्

तेनेदं व्यक्ति स्फोटस्यरूपमुपवर्णितम्भवति, यथा हि चित्रं हि रूपमवमविगतमनंशमेकमेव, तस्यैवावयवगतैर्नीलादिभिः पृथग् रूपैरेव प्रख्यापनं क्रियते, एवमेवैकस्यांखण्डस्यविभागानवस्थितस्य, निर्विभागस्य वाक्यस्य सर्वतः परिपूर्णस्य वाक्यैरन्यैः वाक्यान्तर्गतैः पदैः पदान्तरैरन्वाख्यानं विधीयते—अत्रापि हरिवचनं प्रमाणं यथा—

चित्रस्यैकत्वरूपस्य यथा भेदनिदर्शनैः ।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ।।
तथैवैकस्य वाक्यस्य निराकांक्षस्य सर्वतः ।
शब्दान्तरैः समाख्यानं साकांक्षैरनुगम्यते ।।[1]

एवमन्य प्रक्रिययापि तदुपपादनं क्रियते यथा मणिकृपाणादौ रूपमेकमेवानेकधा मुखादीनां तत्तदाश्रयोपाधिवशाद् भिद्यते—भिन्नं-भिन्नं प्रतीयते, चन्द्रपूर्यावपि चञ्चलजलतरंगे चञ्चलरूपौ खण्डित रूपौ जलाश्रयोपाधि वशात् प्रतीयेते एवमेव ध्वनिः स्फोट एकः सन्नपि कत्वखत्वादिविभिन्नोपाधिवशादनेकधा अभिव्यञ्जकध्वनि निष्ठकत्वादि धर्माणां तदभिव्यक्ते स्फोटे आरोपात् भ्रान्तिमूलका एव विभिन्नतया प्रतीयन्ते, यथोक्तम्—

यथामणिकृपाणादौ रूपमेकमनेकधा ।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते ।।[2]

अथ च जातिस्फोटो भिन्न प्रयत्नोदीरिति ध्वन्यभिव्यक्तौ विलक्षण एवाभ्युपगम्यते, यथा विशिष्ट प्रयत्नजनितेन विक्षेप-विशेषेणाभिव्यक्ता भ्रमणत्वादिजातिः प्रत्येक समाप्तापि न ग्रहीतुं शक्या, भ्रमणानामन्त्यवृत्तौ तु गृह्यते, एवं जाति स्फोट-लक्षणस्य ध्वनिरभिव्यञ्जकः सरूप इव प्रतीयते स्फोटस्य । एवंविध निर्गतांशस्य स्फोटस्य पूर्वापरभावोऽपि उपाधिकृत एव न स्वतः पूर्वापर भावो भवितुं शक्नोति तस्य नित्यत्वात् ।

१. वाक्यपदीय वचनम्
२. वा० प० ३।१३।८

वाक्यपदीये उक्तं हरिणा—यथा–

यथाक्षेपविशेषेऽपि कर्मभेदो न गृह्यते ।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः
वर्णवाक्यपदेष्वेवं तुल्योपव्यञ्जनाश्रुतिः
अत्यन्तभेदे तत्त्वस्य सरूपमेव प्रतीयते ।[1]

अर्थात् वर्णपदवाक्येषु श्रुतिः अभिव्यञ्जकोध्वनिरत्यन्तभेदे तत्त्वस्य वर्ण-पद-वाक्य स्फोट लक्षणस्य साश्रुतिरभिव्यञ्जिका सरूपा इव प्रतीयते, वस्तुतः सा परमार्थं दशायां भिन्नापि सती तुल्यः= सदृशः उपव्यञ्जनः स्थान करणाभिघातलक्षणो यस्याः सा तथेति, तेन भिन्न प्रयत्नोदीरित ध्वन्यभिव्यक्तोऽयं जाति स्फोटोविलक्षण एवेति वक्तुं शक्यते । जाति स्फोट निरूपण प्रक्रियाऽन्यापि दर्श्यते-

शक्यत्व इव शक्तत्वे जातेलघिवमीक्ष्यताम् ।
औपाधिको वा भेदोस्तु वर्णानांतारमन्दयत् ।।[2]

इत्यनया सिद्धान्तितं यथा – वर्ण नित्यतावादिनां मीमांसका-दीनां मते सन्त्येव वर्णाः किन्तु न वाचकाः अनन्तशक्ति-कल्पने गौरवात् आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद् वाचकत्वस्यापि युक्तत्वात्, यदि तत्रोच्यते तादृश जातौ मानाभाव इति तन्न समीचीनं यत इदं हरिपदमित्याद्यनुगत प्रतीत्या ह्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात् तदवच्छेदकतया च जातिविशेषस्यावश्यकत्वात् । न वा वर्णानुपूर्व्येव प्रतीत्य-वच्छेदकत्वयोर्निर्वाह इति वक्तुं शक्यते घटघटत्वादेरपि संयोगविशिष्ट मृदा आकारादिभिश्चान्यथासिद्धयापत्तेः । तस्मात्साजातिरेव वाचिका तादात्म्येनावच्छेदिका चेति । यद्युच्यते सरो रसो नदी दीनादौ अर्थो-पस्थापकजात्योरेकरूपतयाऽर्थबोधभेदो न स्यादिति तदपि न सम्यक् प्रतिभाति उपाधिप्रयुक्तज्ञानवैलक्षण्यात् वर्णानान्तारमन्दवत् । उपाधिरानुपूर्वीसैव जाति विशेषाभिव्यञ्जिकेति भेदः कारणीभूत ज्ञानस्येत्यदोषात् । जातेः प्रत्येकं वर्णेष्वपि सत्वात्प्रत्येकादर्थबोधो

---

१. वाक्यपदीय वचनम्
२. तथैव

नशंकनीयः अनेक व्यक्तिभिर्व्यंग्या जातिः स्फोट इतिस्मृता। कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिता इति सिद्धान्तात्: अतएव काव्य प्रकाशे बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूप व्यंग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः इत्युक्तम्, वाचकत्वेनाभिमता जाति केति जिज्ञासायाम् समाधानन्तु-सत्यासत्यौ तु यौ भावौ प्रति भावं व्यवस्थितौसत्यं यत्तत्र सा जातिरसत्थाव्यक्तयो मता इति तत्तद् व्यक्तिविशिष्टं ब्रह्मैव जातिरिति परमार्थः। ननु जगदुपादानस्य नित्यत्वेन तद्रूपाया गोत्वादिजातेरपि नित्यत्वात् ब्रह्मदर्शने च गोत्वादि जातेरप्यसत्वाद् नित्यत्वम् 'आत्मैवेदं सर्वमिति श्रुतिवचनादिति कैयटोक्तिः कथं संगता स्याद इति न वाच्यम् अविद्या आविधिको धर्मं विशेषोवेतिमतान्तरपरत्वात् किं तत्सत्यमिति चेच्छ्रूयताम्—इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनं, ब्रह्मैवेत्यक्षरं प्राहुः तस्मै पूर्णात्मने नमः इत्यवगन्तव्यमेव नाम रूपे व्याकरवाणि अनेन जीवेनात्मनाऽनुप्रविश्येति श्रुतिसिद्धा द्विविधा सृष्टिः तत्र रूपस्येव नाम्नोऽपि ब्रह्मैवोपादानम्। प्रक्रियांशस्तु अविद्या विजृम्भणमात्रम्। अतएव शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्यते, समारम्भासु भावानामनादिब्रह्मशाश्वतम्, ब्रह्मप्रतिपादकस्य स्वपरप्रकाश शब्दस्यस्फोट शब्दस्य च समानार्थत्वं स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या प्रकाशितम्।

अभेदमपि विचारणीयं यत् वर्णस्फोट-पदस्फोटाभ्यां जातिस्फोटस्य गतार्थत्व कथन्नोपपद्यते तत्रेयं समाधिर्यत् यद्यपि प्रकृति प्रत्यय निपातानामनेकवर्णानामर्थवत्वदर्शनान्मन्यामहेऽर्थवन्तो वर्णाः 'इत्यादिभाष्येण, लःकर्मणिच भावे चाकर्मकेभ्यः इत्याद्यनुशासने च वर्णस्फोटस्यैव वाचकत्वं युक्तं प्रतिभाति, वर्णपदेन प्रकृतिप्रत्यया एव गृह्यन्ते प्रकृति-प्रत्ययेष्वेय तत्रदर्थनिरूपिताशक्तिरस्ति, तथापि प्रत्येकादर्थबोधात् आनन्त्य प्रसक्त्य चार्थवत्वप्रयुक्तप्रातिपदिकसंज्ञोद्देश्यककार्यप्रसक्त्य च शास्त्रीयप्रक्रियामात्रनिर्वाहकत्वमेव तेषां मन्यते नतु कथञ्चिदपि वाचकत्वम्, नापि वास्तवत्वमपि तेषां सम्भवम् सर्वं खलु काल्पनिकमेव। अतएव शास्त्रेषु प्रक्रिया भेदैरविद्यैवोपवर्ण्यते इत्याद्युक्तिः सुसंगच्छते। अतश्च प्रातिपदिकार्थं विषयेऽपि—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥[1]

इति विकल्पवादः काल्पनिके यथेष्टसिद्धेः, एवं पदानां वास्तवत्वे कर्तरि कृत्–इत्यादीनामस्मदादीन् प्रत्येव बोधकत्वापत्तिः, समुदाय-शक्त्यैव बोधसम्भवात् शक्तिग्राहकशिरोमणेर्व्यवहारस्य वाक्यैः एव दर्शनाच्च, तस्मादेवोक्तिरियं चरितार्था—

अनेकव्यक्तिभिर्व्यंग्या जातिः स्फोट इति स्मृता ।
कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिता ॥[2]

ये खलु जातिलक्षणे मतान्तराणि सम्भावयन्ति तान्प्रत्यपि विचारणा प्रवर्तते यथा—एकाकारप्रतीतिजनकत्वे सति स्वरूपतः एकत्वेन सिद्धत्वं जातित्वम्, अतएव कथं पुनर्ज्ञायते एकाकृतिरिति ? प्रत्ययाऽविशेषात् नहि गौरित्युक्ते विशेषः प्रख्याते शुक्लोनील इति सम्यगुक्तं भाष्ये, तत्र प्रख्या बुद्धिः, तस्या अविशेष 'एकरूपता' इत्युक्तं कैयटेन, अनुगताकारप्रतीतिशब्देन 'एकाकार-प्रतीति शब्देन च बुद्धेरेकतैवोच्यते, तस्मादेव-काव्यप्रकाशेप्राणप्रदत्वं जातेः 'इत्युक्तं संगच्छते, यावत्स्थित्येकाकार प्रतीतिर्हिप्राणस्तत्प्रदत्वं जातेरेव न तु पाचकारेः, पाकक्रियायामाश्रयभेदेन भेदात् । अतः सामान्यं विशेष इति बुद्ध्यपेक्षम् 'इति कणादसूत्रव्याख्याने-अनुवृत्तिबुद्धिजनकत्वं सामान्यलक्षणमुक्तम्, व्यावृत्तिबुद्धिजनकत्वं विशेषलक्षणमुक्तम् ।

एवं द्रव्यगुणकर्मसु यतः सदिति व्यवहार प्रत्ययावतः सत्ता इति सर्वजातिषु प्रमाणमपि प्रतिपादितन्तमैव । किञ्च भिन्नेष्वभिन्नं छिन्नेष्वछिन्नं सामान्यमित्यनेनापि नित्यत्वमेकानेकगतमेकाकार-प्रतीतिजनकत्वसूचितम् । एवञ्च 'समान प्रसवात्मिका जातिः' इति गौतम सूत्रस्यापि समानः समानाकारो हि प्रसवो बुद्धिजननस्वरूपं

१. ससपाणामेकशेष विभक्ताविति भाष्यस्थमाशयमिमं कश्चन प्राचीन शाब्दिकः प्रोक्तवान् ।
२. प्राचीनशाब्दिकोक्तिः ।

यस्याः सा जातिः इति व्युत्पत्त्या यावत् स्थित्येकाकार बुद्धिजनन स्वरूपाः 'इत्येवार्थः, किञ्च-आकृतिर्जातिलिङ्गाख्या 'इति गौतमसूत्र-स्यापि जातिलिंगमित्याख्या यस्या इति व्युत्पत्त्या रूपादिष्वपि रूप-त्वादि जातिव्यञ्जकं यत्साऽऽकृतिर्जातिः 'इत्यर्थः व्यक्तिस्त्वाकार विशिष्टं समवायिकारणमेव। अतएव च भाष्ये मृत्कयाचिदाकृत्या युक्ता पिण्डोभवति 'इत्याद्युक्तम्, अतः सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ? इति चरकेऽप्युक्तमेव, अर्थात् सामान्यं यत एकाकार प्रतीति जनकत्वमतस्तदेकत्वकरम्। यथा सकलगवादीनांगोत्वम्, यतो विशेषोऽनेकाकारप्रतीतिजनको धर्मोऽतः स पृथक्त्वकृत्, यथा गवाश्वयोर्गोत्वाश्वत्वे इति, तेन-अतिशायने तमविष्ठनौ 'इतिसूत्रस्थेन जननेन यत्प्राप्यते सा जातिः इति भाष्येण तस्या नित्यत्वं बोध्यते। अद्वैतिवादिमते ब्रह्मातिरिक्तस्य सर्वस्य जन्यत्वात्। अयमेव भिन्नेष्व-भिन्नाभिधानं प्रत्यय निमित्तं जातिरिति स्वरूप सूत्रस्थ भाष्य-काराशयः। कारणत्वावच्छेदकत्वेनैव जातिरिति तु चिन्त्यमेव, रोग-नाशत्वेकार्यतावच्छेदकत्वस्य चूर्णत्वे कारणतावच्छेदकत्वस्य च सत्त्वेन व्यभिचारात्: घटत्वशरायत्वाद्यनेक कार्यतावच्छेदकत्वेनापि तस्याः सिद्धि स्वीकारे गौरवाच्चेति।

जात्याकृतिव्यक्तयस्तु पदार्थ इति गौतमसूत्रसिद्धाजातिः पदार्थं मात्रेप्रसिद्धा,

> व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।[1]
> रूप हानिरसम्बन्धो जाति बाधक संग्रहः।

इत्यभियुक्तोक्त्या जातित्वबाधकैकव्यक्तिवृत्तित्वस्याकाशादीनां सत्त्वेन कथं जातित्वमिति न शंकनीयम् यतः—

> संयोगि द्रव्यभेदेन देशे च परिकल्पिते[2]
> तेषु देशेषु सामान्यमाकाशस्यापिविद्यते।

इति भर्तृहरिवचनानुसारमाकाशजातिसमवायादेरप्यौपाधिकाने-कत्वात्—तथाहि अवकाशदानात्सर्वभूतानामधिकरणमाकाशमिति संग

१. न्यायसिद्धान्तमुक्तावल्याः प्रत्यक्षखण्डे विश्वनाथपञ्चाननेनोक्तम्
२. भर्तृहरिवचनम्

च्छते, तथा चेह देशे आकाशसंयोगः इति व्यवहारदर्शनात् संयोगिनां घटादीनां भेदवशादाकाशस्यौपाधिको भेदः। तथा च प्रतिदेशमाकाशम् 'इत्यभिन्नप्रत्ययाज्जातित्वसिद्धिः। एवञ्च तुल्यन्यायात् कालादीनामपि प्रदेशकल्पनया सामान्यं सिद्धमिति सुसामञ्जस्यम्।

रामादिसंयोगिभेदेन कालस्थानैकत्वात्, किञ्च दिक्पालादिसंयोगवशात् दिशोऽप्यनेकतया जातिसिद्धिः, एवं समवायस्यापि सम्बन्धि भेदादनेकत्वोपचारः प्रशस्तः सर्वत्रेह बुद्धयनुवृत्तेः जाति कल्पनम्। एवञ्च—

अर्थजात्यभिधानेऽपि सर्वेजात्यभिधायिनः।
व्यापारलक्षणा यस्मात् पदार्थाः समुपस्थिताः॥

इत्यपि हरिणैव प्रोक्तं संगच्छते। तस्माद् यदा विशुद्धा एवार्थजातयः शब्दैरभिधीयते 'इतिस्वीक्रियते तदा सर्वे जात्यभिधायिनोऽपिशब्दा जातिवाचिन एवेति।

यदि प्रोच्यते निःसामान्यानि सामान्यानीति सिद्धान्तात्कथं जात्यादि शब्दा जात्याधारे जातिमभिदध्युः इति ? तदुपरि समाधानंयत् हरिः— व्यापारलक्षणा इति प्रोक्तवान् अर्थात् व्यापारः प्रयोजनं तदेव लक्षणं हेतुर्येषां ते व्यापारलक्षणा इति अभिधारूपव्यापार लक्षणाद्धि शब्दार्थकल्पनम्। यथा द्रव्यादिशब्दानामनुगमकधर्मस्वीकारस्तथा गोत्वाश्वत्वे सामान्ये 'इत्यनुभवात् तत्राप्यनुगमधर्मं आवश्यक एव। शब्दस्यान्वयिरूपमवच्छेदकीकृत्याप्रत्यायकत्वनिगमेन यथा—घटादिषु घटत्वायिकमवच्छेदकीकृत्य बोधो भवती तयाजात्यादिशब्देऽपिजगतित्व सामान्यम वधेरकीकृत्यबोधो भवति।

अन्वयितावच्छेदक रूपास्वीकारे गोत्वाश्वादीनि सामान्यानीति शब्दस्य बोधकत्वासम्भवात् निःसामान्यानि सामान्यानि इति शब्द स्याप्रयोजकत्वमेवाङ्गीकार्यम्।

वस्तुतस्तु ब्राह्मण एव प्रमाणसिद्धतया सर्वे भावाः ब्रह्मणः शक्ति भूताः न तु ततो भिन्नाः। तत्र यथाव्यवहारं शक्तिकल्पना इति सर्वत्र जातिद्रव्यविभागः आकाशत्वं घटत्वमिति व्यवहारस्य तुल्यत्वात् 'तत्तत्कर्णशष्कुल्यवच्छिन्ननभस एवश्रोत्रत्वम् इति मते श्रोत्रत्वस्य जातित्ववत्।

अतएवोक्तं यथा–

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ।।

इति वाक्यपदीयोक्तहरिवचनं प्रमाणम् अर्थात्—आश्रयैर्भिद्यमानोपचरित भेदा गवादिषु ब्रह्मस्वभावा महासत्तैव गोत्वादिजाति-विवर्तः तस्यामेव शब्दावाचकत्वेन विद्यन्ते । अतो जातेर्नित्यत्वम् । उत्पत्तेः प्राङ्नाशे च सूक्ष्मरूपेत्त्वाश्रयेष्ववतिष्ठते 'इति सिद्धान्तात् । अनुगताकारप्रतीति जनकं व्यक्तीनां यत् किञ्चिद् रूपं तत्सर्वं जातिरेव । अतएव जातिः 'उपाधिरिति पर्यायौ 'इतिहेलाराजोक्तं संगच्छते ।

अतः सिद्धेशब्दार्थ सम्बन्धे 'इतिवार्तिकव्याख्यानावसरे बहुशो महाभाष्यकारविहितो विलासः प्रस्तुतः । यथाहि—अवयवसंस्थान रूपाया आकृतेराश्रयप्रवाहविच्छेदात् तद्धर्मस्याविधातः 'इत्यावश्यकः प्रवाह नित्यत्वसम्पादकः । अपि च नित्या वर्णाः नित्या वेदा, इति सम्प्रदायाविच्छेदात् नित्या पृथिवी नित्या पर्वताः इतिवत् तान्येव वेद वाक्यानि मन्वन्तरचतुर्युगान्तरेष्वपि तुल्यमिति न्यायवार्तिककारोऽपि प्रवाहनित्यतामाह । तस्मादेव सृष्टयन्तरेऽपि नामरूप । साम्यान्नित्यत्वस्याविरोधः 'इत्यर्थकस्य—'समाननामरूपत्वाच्चावृत्तावप्यविरोधः" इतिवादरायणसूत्रस्य, वेदस्य तदर्थानाञ्च नामरूपप्रवाहानुच्छेद एव नित्यत्वमित्यर्थवर्णनं सुसंघटते । तेनात्र जातौ स्फोटत्वव्यवहारो विविच्यविषयः प्रतिष्ठते । स्फुटत्यर्थो यस्मादिति व्युत्पत्त्या वर्णपद-वाक्यानां वाचकत्वेन भवतु नाम स्फोटत्व व्यवहारः, जातेस्तु वाचकत्वाभावेन कथं तद् व्यवहारः इति न शक्यं वक्तुम्–यतोऽनन्तावर्णाः उत्पादविनाशशालिनः, तत्समूहश्च पदं बोधकम् 'इति पक्षेऽपि पदानामप्यानन्त्यात् शक्तिग्रहासम्भवेनानुगताकारप्रतीत्या सिद्धायास्तत्तत्पदगत घटत्व पटत्वादि जातेः घटपटत्वादेः शक्यत्ववद्वाचकत्वस्यावश्यकत्वात् अतएव—शक्यत्वेऽइवे शक्येत्वे जातेर्लाघवमीक्ष्यतामित्यादिवचनं सिद्धान्ततया सम्पद्यते । यथा च भ्रमणत्वादि जातिश्चरम क्रिया प्रत्यक्षव्यंग्या, तथैव पदजातिरपि चरमवर्णप्रत्यक्षव्यंग्या, क्रियासमुदाये बौद्धेभ्रमणत्ववदेषाऽपि पदजातिस्तादृशे बौद्धेर्वर्ण समुदाये व्यासज्यवृत्तिः । तेन नैकवर्णोच्चारणेऽर्थाभिव्यक्तिः । अत

एव अनेक व्यक्ति—अभिव्यंग्या जातिः स्फोटरूपतयास्मृतिपथमायाति, यथाऽद्वैतवेदान्तिनां मते चैतनस्यैकत्वेऽपि मायाकृत औपाधिक आत्मभेदोऽस्त्येव, तत्रानुगमार्थं जातिकल्पना च दृश्यते, तथैवैकस्यैव वाक्यस्फोटस्य तत्तत्कालतत्तद् वर्णानुरागरूपोपाधि भेदेनानन्त्यात् तत्पक्षेऽप्यनुगतशक्तिग्रहाय जातिरावश्यकी, अतःसिद्धे शब्दार्थ सम्बन्धे इति वार्तिकं आविद्यकः पदार्थो जातिर्भविद्व्यवहारं नित्य प्रवाहनित्या वा द्विधैवाकृतेर्नित्यत्वमुक्तं संगच्छते।

**आन्तरस्फोटोपवर्णनम्**

बाह्यं व्यक्तिस्फोटं जातिस्फोटं निरूप्य सम्प्रति-आन्तरं स्फोटं निरूपयितुमारभते–अयं हि–अनवयं बोधस्वभावं शब्दार्थमयं निर्विभागं शब्दतत्त्वं यद्गीतं तदेव मुख्यं नादैर्बहिः प्रकाशितं वाक्यमाहुराचार्याः यथाहि—

> यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम्।
> तदाहुरपरे शब्दं तस्य वाक्येतथैकता ॥[1]

इत्युक्त्या तथाविधस्यान्तरस्य स्फोटलक्षणस्य शब्दस्य यथा विभागो नास्ति, तथा तद्वाच्यस्य प्रतिभासरूपस्यार्थस्यकुतो विभागो भविष्यति। यथाहि चित्ररूपावभासिनी प्रत्यक्षासंविद् अवयवगत नीलादिरूपभेदेऽपि नार्थान्तरगोचरतां जहाति, यतोहि अर्थान्तरसमवायि नीलानीलादिमात्रं चित्रन्न भवति यतोऽवयविनो द्रव्यस्य नीरूपतयाऽचाक्षुत्वप्रसंगात्। वस्तुस्थित्या तत्र ज्ञान आकार भेदो नास्ति तथाऽऽभ्यन्तरवाक्यवाक्यार्थयोः स्वरूपं बोध्यम्भवति। एवं विध स्फोटाभिव्यंग्यशब्दब्रह्म निरूपणेनस्वाभाविक्येव जिज्ञासासमुदेति यदत्र किं प्रमाणं चतुर्विधप्रत्यक्षानुमानोपमानशब्दप्रमाण्येषु शब्द प्रामाण्यं यावन्न स्यात्तावन्नस्य शब्दब्रह्मविषयस्य ख्यातिः सम्यज्ञापयितुं कथं शक्येत् तस्मादत्र शाब्दप्रामाण्यविषयकविचारः प्रस्तूयते।

---

१. कुत्रचित्पुस्तके स्फुटरूपेण लब्ध कस्य वचनमिति न तत्र लिखितमस्ति।

तथाहि व्याकरणेन गृहीतशक्तिकप्रकृतिप्रत्ययेभ्यः, उपमानेन सादृश्यबोधकवाक्यार्थस्य स्मृतिविषयकत्वेन गृहीतशक्तिकगवया-दिशब्देभ्यो व्यवहारेणानुमितशक्तिकेभ्यो घट-पदादिशब्देभ्यस्तदीय-स्मरणात्मकेभ्यो ज्ञानेभ्यो वृत्तिज्ञानसहकारेण तत्तत्पदार्थस्मृतिभ्यः खलेकपोतन्यायेन पदार्थसंसर्गबोधस्य संसर्गोपकृतवाक्यार्थबोधस्य जनकत्वेन (प्रयोजकत्वेन) वाक्यात्मकस्य शब्दस्य शाब्दप्रमाणजनक-त्वात् शब्दस्य प्रमाणत्वंसर्वथैवोपपद्यते। पदार्थमात्रज्ञानजनकतया शब्दप्रामाण्यं-नसम्यक्। यतः पदस्य पदार्थस्मारकत्वेनोद्बोधक त्वेनैवोपयोगात्। तदुद्बोधकानां प्रामाण्ये-स्वदृशा दृष्टचितादीनाम-प्युद्बोधकतया प्रामाण्यग्रहोपपत्तेः। करणं प्रमाणं तथा च प्रमाणकत्वं वा-प्रमाणम्-स्मृतीनान्न प्रामाण्यं प्रमाणत्वस्यानुभवत्वमाप्यत्वात्। अपूर्ण एव पदार्थसंसर्गाः स्वीक्रियन्तेविशेष्यविशेषणभावसापेक्ष-त्वात्। विशेष्य विशेषण भावस्यनियतत्वेन ज्ञातुमशक्यत्वात्, अव्य-वस्थितत्वाच्च। तस्मादेव श्लोका नो नवीनकविकृतानामपूर्वत्वमव्या-हतन्तिष्ठति। न तु नव्यप्राचीन कविकृतपद्यघटकपदार्थानामपूर्वत्वं मन्यते यतः तथा सति प्रकृति-प्रत्ययनिष्ठज्ञानजनकैकपाणिनीयव्या-करणजन्य शक्तिज्ञानाश्रयताया नव्यप्राच्यकवीनां समानतया तेषा-न्नव्यप्राच्यव्यवहारासंगतेः। अतएव विशेष्यविशेषणभावसापे-क्षाणां पदार्थसम्बन्धानामेवापूर्वत्वमुपपाद्यते। तद्बोधकशब्दयोज-नाश्रितत्वादेव नव्यकवोनांमभिनवत्वम् तस्मादेवाद्भुतरसाभिव्यञ्ज-कवाक्यार्थस्यानुभूतत्वेनापूर्णत्वमत्र—

> मुनिर्जपति योगीन्द्रो महात्मा कुम्भसम्भवः।
> येनैकचुलुकेदृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

इत्यादिष्टापूवार्थबोधकत्वत्वेनैबोक्तशब्दस्थ प्रामाण्यमधिगम्यते।

कः शब्द ? इति प्रश्ने घट इति प्रतिवचनात् कोऽर्थं इति ? प्रश्ने घट इति प्रतिवचनाच्छन्दंश्रुत्वाऽर्थं शृणोमि 'इत्यादिव्यवहारेण प्रत्यक्षविषयौषधविशेषोऽज्ञात इत्यपि व्यवहृतिपथमायाति। वचा इयमिति बोधित औषधविशेष इति व्यवह्रियते तेनशब्दार्थतादा-त्म्याङ्गीकारात् तत्तादात्म्यञ्च—

तद्भिन्नत्वे सति तद्भेदेन प्रतीयमानत्वरूपत्वात् पदस्यार्थं सम व्याप्तत्वेन शब्देनार्थानुमितेरेकसम्बन्धि ज्ञानमपरसम्बन्धिस्मारकम्भवतीति न्यायेनस्मृतेश्च, घटमानयेति वाक्यघटकपदार्थाः परस्पर-संसर्गवन्ताः आकांक्षादिमत्पदानुमितत्वात् आकांक्षादिमत्पदस्मारित-त्वाच्च । पदार्थाश्चैते अभेदवृत्तित्वस्वरूपादिसंसर्गवन्त एव । एवं शब्दार्थयोरभेदोप पादनेन तौ च शब्दार्थौ—अभिन्नौ-एकस्यान्तरस्य तत्त्वस्य सम्बन्धिनौ वस्तुतो वहिःस्थितौ भेदाविव प्रतिभासेते-तदुक्तं च हरिणा—

'एकस्यैवात्मनो भेदो शब्दार्थाविपृथक्स्थितौ' इति, न वात्र शब्दार्थौ वाच्यवाचकौ इति प्रसिद्धमतः कथं तयोरभेदः शंकनीयः, शब्दतत्त्व-स्यान्तरस्य ज्योतीरूपस्य भेदप्रतिभासो न विरुद्धयते शक्तिभेदात् अतएव वाक्यपदीये द्वितीयकाण्डे प्रोक्तम्—

प्रकाशकप्रकाश्यत्वं कार्यकारणरूपता,
अन्तर्भावात्मनस्तस्य शब्दतत्त्वस्य सर्वथा ।
तस्यैवास्तित्वनास्तित्व सामर्थ्ये समवस्थिते,
अक्रमे क्रमनिर्भासे व्यवहारनिबन्धने ।। इति

तथा च सर्वरूपविकल्पातीतमणिब्रह्मसमाविष्टसर्वशक्तित्वात् सर्वरूपेण च भासमानं कालाख्यस्वातन्त्र्यशक्तिसमाविष्टं मूर्तिप्रवि-भागमारचयति । एवञ्चाप्रविभागमपि देशकालाभ्यां प्रविभक्तमिव प्रकाशते इति तत्प्रविभागानुसारं जन्मनाशौ समस्तक्रियाभेदानु-यामिनौ व्यवहारिकौ प्रसिद्धौ स्तः ।

इत्थमेतावता स्टोऽपरपर्यायस्य शब्दब्रह्मणो नैकविधोनैकविधत्ते-त्रेषु नैकविधाप्रक्रिया नैकविधकार्यकारित्वन्नामरूपात्कं जगत्प्रति प्रस्तुतं यथामति समासतः । विशेषतो विशेष्य ज्ञाविद्वत्तलज्जास्स्वयं यथा तथ्यभवधार्येरनल्पमतिप्रस्तावकमेनञ्जनमनुग्रहीयन्तीति भूयोभूयः सम्प्रार्थयन्नयं सेवको विदुषां विरमति । शुभंविध्यान्ना-रायणः ।

आपरितोषाद् विदुषां न साधु मन्ये प्रयोग विज्ञानम्,
वलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः।
तं सन्तः श्रोतु मर्हन्ति सदसद्व्यक्ति हेतवः,
हेम्नः संलक्ष्यतेऽग्नौ विशुद्धिः श्यामिकापि वा ॥

इति सूक्तिमनुसृत्य विद्वान्सः सादरं प्रार्थ्यन्ते सद्विचारपद्मनाम ।

---

# संस्कृत भाषायामाध्यात्मिकप्रक्रिया पारमार्थिकी

अन्यासु भाषासु नैव कदाचनैकवर्णस्यवाचकता समुपलभ्यते। क्वचिदुपलभ्यते चेत् केषाञ्चिन्मते तदा सापि वाचकता व्याकरण प्रक्रियामनुरुद्धचैव, प्रायशः तेलगुतमिलादिभाषासु संस्कृतमयशब्दा अधिक्येन व्यवहारपथे श्रूयन्ते, तथा हिन्दीभाषायामपि केचन संस्कृतशब्दा सविभक्तिकाः केचन च निर्विभक्तिकास्तथैव प्रयुज्य-माना दृश्यन्त एव।

वस्तुतोऽत्र तथ्यमिदमेवास्ति यत् स्वात्मचैतन्यप्रकाशकोविशुद्ध-चैतन्यरूपो यः प्रणवात्मको भगवान् स्फोटः स यदिस्वयमेव ईश्वरे-च्छावशात् स्वात्मप्रकाशकशब्दरूपतया परिणत आविर्भूतो वा भवेत् तर्हि तादृशशब्दे स्फोटव्यवहार, युक्त एव संगच्छते, एवं विधायां-स्थितौ स्वात्मतत्त्वप्रकाशनाय वाचकरूपः प्रणवात्मको यो भगवान्-स्फोटः स एव त एव स्फोटा क ख ग घादिप्रभृतिमातृकावर्णापेक्षया विलक्षणरचनाविशेषैः अ इ उ ण् इत्यादिवर्णसमाम्नायरूपतया स्वयम् आविर्भूता इति शास्त्रे निरूपितं वर्तते। नैतादृशी संस्कृतेतर भाषासु सनातनी विलक्षणाध्यात्मिकी प्रक्रिया परिलक्ष्यते। यथोक्त-मत्र—

> असंख्या मूर्तयस्तस्य निष्पतन्ति शरीरतः।
> उच्चावचानि भूतानि सततं चेष्टयन्ति याः॥

इदं हि मनुवचनमुक्तविषये महत्प्रमाणम्। एतेनैव प्रतीयते यत् यथा प्रकार (श) वाच्यस्वरूपस्यपरमात्मनः शरीरादेर्वलिंगशरीरयुक्ताः असंख्येया क्षेत्रज्ञा (तैनसाश्चापि) अग्नेःस्फुलिंगवद् भासमानाः प्रादु-र्भवन्ति। पश्चात्तएवपञ्च कोशविशिष्टशरीरेण युक्तास्सन्तः धर्मार्थ-फलमनुभवन्ति तथैवप्रकार(श) वाचकरूपः प्रणयात्मको यः स्फोटोऽस्ति तस्मादपि नैकप्रकाराः अनेकप्रकाराः वाक्यस्फोटाः मन्त्रा अपर-

पर्याया: प्रकाशमाना: प्रादुर्भवन्ति । ये स्वरूपं स्फोटयन्त: प्रकाशयन्त एवं प्राणिनाम् धर्मार्थमोक्षसाधका भवन्ति ।

यथाहि येन रूपेणात्मा धर्मार्थफलभोगाय जडात्मकपृथिव्याद्य-पेक्षया विलक्षणमेव पञ्चकोशविशिष्टं शरीरं पञ्चभूतानि परिगृह्य प्रतिष्ठितो भवति । तथैवप्रकाररूपप्रणवात्मक स्फोटोऽपि धर्मस्य ब्रह्मणश्चस्वरूपप्रकाशनाय वर्ण-पद वाक्यविशिष्ट व्याहृत्या ओंका-रेण च सह मन्त्रब्राह्मणनामकमलौकिकं वेदस्वरूपं धारयति गृह्णाति च । अस्मादेव सिद्धयति यद् यथा पञ्चकोशविशिष्टशरीरे एव-चेतनत्वात्मत्वयोर्व्यवहारस्तथैवप्रणवविशिष्टवैदिकेषुवाक्येष्वेव स्फोट-व्यवहारो युक्त: प्रतीयते ।

महेश्वर: सकलसमष्टिं नियमनाप ब्रह्म-विष्णु-महेश्वर—इन्द्रादि दैवतरूपतया आविर्भवति आविर्भूतो वा समग्राया: सृष्टे: कारणं-भवति तथा समस्तचेतनसृष्टे: करणतां भजन् सर्वानपि प्राणिनो नियमयति, तथैव प्रणवात्मकस्फोटोऽपि परमार्थस्य वाचक: सन् अथवा वाचकतया वास्तविकोऽर्थवान् यो मन्त्रब्राह्मणात्मको वाक्यस्फोट: तस्याविर्भावाय स्फोटतत्त्वप्रकाशनाय तानेवंमातृकावर्णानादाय मातृकावर्णापेक्षया विलक्षण एक: विशिष्टरचनासमविष्ट: विशिष्ट-रचनां धारयश्च अक्षरसमाम्नाय नाम्ना अ इ उ ण् प्रभृतय: सार्थक वर्णरूपतया वर्णस्फोट नामनाभिदहित: प्रकाशित: आविर्भूत: जात: तस्मादेवाक्षरसमाम्नाय: अक्षररूपो वेदोऽभिभाष्यते ।

अत्र विषये प्रथमं प्रथमवर्णस्य अकारस्य इकारस्य च सार्थकता प्रकाश्यते—

अकारो ब्रह्मरूप: स्यात् निर्गुण: सर्व वस्तुषु ।
चित्कलाभि: समाश्रित्य जगद्रूपमुदीरित ।।

वर्णसमाम्नायस्य प्रथमसूत्रस्य प्रथमाक्षरस्य समस्त वर्णान् प्रति समस्तभुवनानि प्रति कारणता समुदीरिता वर्णिता वर्तते, समस्त भुवनानां समुद्भवरूपस्वात्मतत्त्वस्य उपदेश कृतो विद्यतेऽत्र । एतदर्थ-मेवप्रकाशयितुं समभिधातुञ्च अकारो ब्रह्मरूप: स्यादितिप्रोक्तम् ।

अ इ उण् इत्यत्रत्योऽकारो निर्गुणः परमात्मा इ चित्कलाया मायायाः आश्रयणं विधाय उण् अर्थात् सगुणः सर्वव्यापकरूपतया आविर्भूतः। अथवा निर्गुणेहि परमात्मा चित्कलाया इकार वाच्यायामायाया आश्रयणं विधायसगुणोव्यापकश्च भासते। प्रथमं सृष्टिक्रमे स्वराः अ इ उ ऋ लृ प्रभृतयः पञ्चैव स्वर आविर्भूताः। एभिरेव पञ्चस्वरैः पञ्च भूतानि पञ्चवर्गाश्चाविर्भूताः प्रकाशिताः। पञ्चभूतैः समस्तंरूपात्मकं जगत् तथा वर्णैं सकलं शब्दमयं जगच्च सृष्टमभूत्। एतेनेदं प्रतीयते यत् वर्णोत्पत्तिक्रमे प्रथममकारस्य प्रादुर्भावः अभिव्यक्तिरभवत् न तूत्पत्तिरिति। प्रणवेचापि प्रथमोवर्ण आकार एव। तस्मादेव हेतोर्गीताचार्यो भगवान्कृष्णोऽपि प्रोक्तवान् गीतायां यत् 'अक्षराणामकारोऽस्मि द्वन्दः सामासिकस्य चेति। अस्यैव विवेचनं गूढं विद्यते—यथा—

अकारः सर्ववर्णाभ्यः प्रकाशः परमेश्वरः।
आद्यमन्त्येन संयोगात् अहमित्येव जायते॥

एतदनुरोधेनैव आदिरन्त्येन सहेतेति सूत्रं पाणिनीयवर्णसमाम्नायमूलकं परमं प्रथमसंज्ञासूत्ररूपतया वर्णोपिदेशानन्तरं भाष्यवचनेनभिहितं सम्यक्। अत्रत्यवचनेन अ इ उण् इत्यकार आदिः अन्त्यो हलिस्यस्थहकारः एव मिलित्वा अहमिति प्रत्याहारसिद्धिः प्रथमा। अहमित्यत्र यावन्तो वर्णाः सर्वेऽपीश्वरवाचकाः ये प्रणवात्मकस्फोटवस्तुभूता एव नान्ये। तस्मादेवाविर्भूताः इदमेवाग्रेऽपि प्रोच्यते—

सर्वं परात्मकं पूर्वं ज्ञप्ति मात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम्॥
वक्त्रेविशुद्धि चक्राख्ये वैखरी सा मता ततः।
सृष्टयाविर्भावमाध्यात्मं मध्यमावाक् समायुतम्॥

अयमत्राशयो यत् आधारचक्रस्थितपराशक्त्यात्मकस्फोट तत्त्वमेव शब्दब्रह्मात्मनाभिधीयते। स एव परमात्मप्रकाशकः, स एव अनादिजोवोपाधिसमाश्रितः कर्मप्रेरितप्राणवायुव्यापारानन्तरं नाभिचन्द्रङ्गतः पश्यन्ती रूपे परिणतो भवति। ततस्तेनैव प्राणवायु-

सचिवेन हृदयस्थानाहतचक्रे मध्यमाशब्द वाच्योभवति अर्थात् मध्यमानादात्मनाभिहितो भवतिः पुनश्च तेनैव संस्कृतप्राणवायुसहाय्येन कण्ठस्थेविशुद्धिचक्रे प्रविष्टः वैखरी नाम्नाविभूषितः सन् सकलवेदशास्त्रपुराणादिसमस्तवाङ्मयं जगतः आकारात्मना परिणतो भवति। इयं मध्यमा वागेव शास्त्रप्रक्रियाव्यवहारे शब्दब्रह्मात्मना संप्रकाशते अत्र श्रुतिवचनमपि प्रमाणम् यथा वागेव विश्वा भूतानि जज्ञे अर्थात् या पराभिधा वाक्शक्ति समस्तविश्वस्य शब्दकाररूपतया भासिता प्रोक्तदिशा सा पारमार्थिकी एव। यथोक्तमत्रापि—

अकारं सन्निधिकृत्य जगतां कारणत्वतः।
इकारः सर्ववर्णानां शक्तित्वात् कारणं मतम्॥
जगत्स्रष्टुमभूद् वाञ्छा यदाद्यस्य सदाभवन्।
कामबीजमितिप्राहुः मुनयो वेदपारगाः॥
अकारो ज्ञप्तिमात्रः स्पाद इकारश्च कला मता।
अकारो विष्णुरित्याहुः व्यापकत्वान्महेश्वरः॥

ऐतेनेदं प्रमाणितं भवति यत् अ शब्दः कार्यंकारणरहितस्य परमात्मनो वाचकः, इकारस्तस्य शक्तिः, तद्धि—सैव सकलवाचां कारणम्, सकलजगत्कारणतया इकार एव आकार रूपिणश्चेतनस्य परमात्मनः सान्निध्यं प्राप्य समस्तवर्णानां कारणतां भजति। सृष्टिविषये परमात्मन इच्छामेव। वेदपारगा मनुयो नितरां कामबीजां प्रतिपादयन्ति। इत्थमेतदेवदृढ़ीकर्तुमग्रे भासते यत् अकार ज्ञप्तिमात्रंज्ञानमात्रमिति, इकारः कला, उकारश्चव्यापकतया विष्णुरूप स एव महेश्वर इति।

भगवतश्शंकरार्यमते वेदान्तदर्शने परमात्मा अद्वैत एवाभिहितः र्तिह इकारार्थं चित्कलां मायामाश्रित्य जगद्रूपतयाभिधानं यत् तदद्वैतसिद्धान्तविरोधस्यादिति चेन्न-समाधातुं प्रतिपादयति—

ऋलृक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत्॥

अर्थात् परमेश्वरः लृं मायानाम्नीमिच्छात्मिकां स्वीयांमनोवृत्ति-मेवप्राकाशयत्। ईश्वर इच्छात्मिकामनोवृत्तिमाश्रित्य जगदुत्पादयति। तन्त्रेषु चापि प्रोक्तं वर्तते—'ममचाभून्मनोरूपं लृकारः परमेश्वरी' इत्यादि अर्थात् मम मनोरूपः लृकार एव परमेश्वरी माया पदाभिहितास्ति। तस्मादेवऋलृवर्णयोः परस्परं तादात्म्यमभ्युप-गम्यते। ऋलृवर्णयोर्मिथः सावर्ण्यंवाच्यमितिवार्तिककारस्यात्रैव तात्पर्यमवसीयते। अथात्रापि प्रमाणमिदम्—

वृत्तिवृत्ति मतोरत्र भेदलेशो न विद्यते।
चन्द्रचन्द्रिकयोर्यद्वत् यथा वागर्थयोरिव॥

शक्तिशक्तिमतोर्भेदो नात्राश्रितः चन्द्रचन्द्रिकयोरिव। तथैव वागर्थयोरपि। केचन लेशतो भेदं वागर्थयोः स्वीकुर्वन्तिः। वृत्ति-वृंत्तिमांश्च शक्तिश्शक्तिमाँश्चैक एव पदान्र्थोऽत्रभिहितः। शक्ति-शक्तिमतोर्भेदलेशोऽपि नास्ति चन्द्रचन्द्रिकयोरिववागर्थयोरिवेति-भगवच्छंकराचार्यसिद्धान्तोप्युपपद्यत एव। अत एवोक्तमत्रविषये—

स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ।
वर्णानां मध्यमं क्लीवमृलृग् वर्णद्वयं विदुः॥

आशयोऽत्र यदसौ परमात्मा स्वेच्छाशक्त्यैवचिदाभासग्रहण-योग्यामिच्छात्मिकांचिच्छक्तिमाधारीकृत्य तस्यामेव विश्वमुत्पाद-यति। शास्त्रवचनमत्रापिप्रमाणम् यथा—

ममयोनिरभूद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।

प्रोक्त कारिकायां क्लीवशब्देन ब्रह्मस्वरूपस्यबोधनं भवति।

अत्रापि शंक्यते यत् जन्यजनकभावाङ्गीकारेऽपि—अद्वैत सिद्धान्त-भङ्गः, तत्र समाधानम्—तत्सृष्ट्वा तदेवानुप्राविशत्। एनमेवसिद्धान्तं पोषयितु प्रोच्यते—

ए ओङ् मायेश्वरात्मैक्यविज्ञानं सर्ववस्तुषु।
साक्षित्वात्सर्वभूतानां स एक इति निश्चितम्॥

अत्र जन्यजनकशब्दाभ्यां तत्तद् रूपतयानिर्वर्त्तनं भासनमेव प्रोक्तं वर्तते तस्मान्नात्र द्वैतहानिः ।

अत्र अकार-उकार-मकारैः निष्पन्नोंकारः तेनोंकारेणसगुण-निर्गुणयोः द्वयोरपि एकत्वबोधने सत्यपि तद् दृष्टान्तेन सर्वत्रैकबुद्धि-प्रसक्त्या द्वैत हानिरेव बोध्यते । समष्टि-व्यष्टिभेदेन पूर्वयुक्तद्वितीय-स्य द्वितीयवर्णयुक्ततृतीयस्य समन्वयबोधनमेव सूत्रवचनं करोति ।

---

# समासमीमांसा

समासप्रकरणारम्भात् प्राक्कारकप्रकरणस्य निरूपणङ्कृतम् तत्र स्वौजसमित्यादि सूत्रविहितस्वादिप्रत्ययानामर्थंविशेपस्यैव सम्यक् प्रतिपादनं कृतमिति सर्वंविदितमेव, तदनन्तरमेत्र प्रसङ्गसङ्गत्या सुबन्तशब्दानां सुबन्तैस्सह कयाचिद् वृत्या समन्वयं विधाय संक्षेपेण-केनाखण्डेन पदेनैकोऽखण्डोऽर्थः कथमुपपद्यत ? इतिधिया समास-संज्ञानिरूपणायैत्र समाससंज्ञाविधायकशास्त्राणां कांचित् सहयोगिनीं परिभाषापदवाच्यां सूत्रमुखेनावतारयितुमेव तदीय व्याख्यानमतीवो-पयोगिताम्भजति शब्दशास्त्रेः व्याकरणे, तदनुरोधादेव प्रथमं तामेवपरिभाषामुपस्थापयति ग्रन्थकारो भट्टोजिदीक्षित पादः समर्थः पदविधिरिति ।

यद्यपि समर्थंपदविधिरिति सूत्रघटकसमर्थंस्य समाससंज्ञारूप-पदविधेः साक्षाद्विशेष्यत्वन्न सम्भवमिति विज्ञायैव सामर्थ्याश्रिते लक्षणामङ्गीकृत्य तथैव सिद्धार्थः प्रतिपादितो भवतीति जानन्ति शाब्दिकाः । वृत्तौसमर्थाश्रितः समर्थाश्रितेऽस्मिन्नपि समर्थंपदं सामर्थ्ये लाक्षणिकम्मन्यते समसनं समासः भावेघञिविधानात् पदानां संक्षेप-करणम् वा अनेकानां सुबन्तादि पदानामेकीकरणमिति मतमपिकेषा-ञ्चित् प्रतिपाद्यते यत्रकुत्रापि। तत्र 'सम्उपसर्गपूर्वकासुक्षेपणे' इति धातोर्भावेघञि विधानं फलति ।

तच्चैकीकरणं संक्षेपीकरणकमप्युपायमन्तरा न सम्भवति, तदेव प्रतिपादनेच्छुः शास्त्रकारोहि सामर्थ्यमत्रविमर्ष्टुं प्रयत्नशीलोभवति, सामर्थ्यं द्विविधम् व्यपेक्षारूपमेकार्थीभाव रूपञ्चेति दिशा । यत्र हि वाक्येतद् घटकीभूताः शब्दाः स्वानर्थान् प्रतिपादयन्त आकांक्षा-योग्यता-आसक्ति-तात्पर्यवशाच्च परस्परं सम्बन्धापेक्षामपेक्षन्तेः (साकांक्षाः भवन्ति) तत्र तदा व्यपेक्षा कथ्यते । यत्र समासः कृत्प्रत्ययः तद्धितप्रत्ययः एकशेषः धातुसंज्ञा च तत्रैकार्थीभावसामर्थ्यमेत्राङ्गी-क्रियते । अतएव राजपुरुषं इत्यादिवाक्ये व्यपेक्षारूपं सामर्थ्यम् । राजपुरुष इत्यादौ चैकार्थीभावरूपं सामर्थ्यमुपपन्नं भवति ।

कथमेकदावाक्य मेकदासमस्त पदमुदाह्रियते व्यपेक्षैकार्थीभावयोः? इति विजिज्ञासायाम् विभाषेति सूत्रं सर्वत्रप्रायः समासं विधाय केषुसूत्रेष्वधिक्रियत एव तस्मादेवात्र समासाभावपक्षेवाक्यमवतिष्ठत एव तेन राज्ञः पुरुष इति व्यपेक्षारूपसामर्थ्यम्भजतेवाक्यम्, राजपुरुष इति त्वेकार्थीभावरूपं सामर्थ्यमाधत्ते । तत्रह्यपेक्षायां सत्यां यो यः संनिहितो भवति योग्यश्च तेन तेन सम्बन्धोऽभ्युपेयते । तथा राज्ञः पुरुषोऽश्वश्च । राज्ञोदेत्तस्य पुरुष इति । एकार्थीभावस्तु राजपुरुष इत्यादि वृत्तावेव । स चैकार्थीभावः प्रक्रियादशायां पृथगर्थत्वेन प्रथम-गृहीतस्य विशिष्टैकार्थत्वरूपः । अतएव राजपुरुष इत्यत्र राज्ञिऋद्ध-स्येति विशेषणं नान्वेति, पदार्थैकदेशत्वात् । न चैवं देवदत्तस्य गुरुकुलमि-त्यावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वक्तुं शक्यते यतो देवदत्तस्य प्रधानीभूत कुलेनैवान्वयात्, सम्बन्धस्तू-पस्थित गुरुद्वारक एवषष्ठ्यर्थे न तु तदितर इति तत्त्वबोधिनीकारोपि-प्रतिपादयति । उक्तञ्चापि यत् :

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ।।

यद्वा—ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः, अत्राप्युक्तम्—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्साव्यपेक्षाहि वृत्तावपि न हीयते ।।

अत्रापीत्थमाशंक्यते यत् राज्ञोऽपिनित्य सापेक्षत्वात् एकदेशत्वेऽपि-ऋद्धस्येति विशेषणेनान्वयोऽस्तु 'इति तदुपरि प्रोच्यते यन्नैवं वक्तुं शक्यते यतो राज्ञोहि ईशितुरीशितव्यंप्रति साकांक्षत्वेपि ऋद्धं प्रत्या-कांक्षत्वात् । यद्युच्यतेऽत्रवाक्येक्लृप्तयैवावयवशक्त्योपपत्तौ विशिष्टार्थ-विषयशक्त्यन्तरमेवमास्तु 'इति, सत्यमेतद्धि–'यतो बहूनां वृत्तिधर्माणां वचनैरेव साधने, स्यान्महद्गौरवमेकार्थीभाव आश्रितः' इति वाक्य-पदीयकार वचनानुसारमपि सर्वं सुप्रथितम् चकारादिनिषेधोऽथवा द्वुत्युत्पत्तिभञ्जनम्, कर्तव्यं ते न्यायसिद्धंत्वस्माकं तदितिस्थितम् । तेनहि धवखदिरौ रामलक्ष्मणावित्यादौ च वृत्त्यैव क्रोडीकृतार्थत्वात् तत्र

चाऽर्थे द्वन्द्व इत्यत्र चकारोनिश्चयतमेवेतरेतर योग-समहारयोर्बोधकः तेन धवखदिरावित्यादौ चकारो न प्रयुज्यते, तथाचित्रग्वादौ यत्पदम्। त्वयातु वचनं कर्तव्यम्, निरूढालक्षणा वस्तुतो विचारणायां शक्तितो नातीवभिद्यते। किञ्च प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषणप्रयोगः प्राप्तः स च वृत्तस्य विशेषण योगोनेति वचनेनैव वारणीयः, नामार्थयोरभेदान्वयः प्रत्ययार्थः प्रधानम्, इति व्युत्पत्तित्यागश्च। प्राप्तोदक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात्। एकार्थी भावेतु लाघवम्।

इत्थमत्र समास संज्ञाविधौ सामान्यतः सामर्थ्यं विमृष्टम्। यद्वलेन पृथगर्थानां पदानामेकार्थोपस्थितिजनकत्वं सिद्ध्यति। येन विभिन्नान्यनेकानि पदान्येकीभूयविशिष्टशक्त्याचैकमेवार्थं बोधयन्ति तदा तदेकमेव पदं परिनिष्ठितमेकमेवार्थं बोधगम्यं करोतीति समासमहिमा।

अतएव जयरामभट्टाचार्योऽपि समासवादे लघुग्रन्थे समासत्वं पूर्ववदेव व्याचष्टे—तथाहि—

विभक्तिशून्य पूर्वपदकनाम समुदायत्वमिति। अत्रहि विभक्तिशून्य पूर्वपदकत्वन्नाम विभक्तिशून्यपूर्वपदघटितशाब्दबोधप्रयोजकानुपूर्वीमत्वमेव। तदा च लौकिक-शास्त्रीयविग्रहवाक्य शब्द शरीराऽपेक्षया समासे महल्लाघवं प्रतिपद्यत एव। तेन न घट इत्यादौ नातिव्याप्तिः। घटो नेत्याद्यानुपूर्वीज्ञानत्वेनैव शाब्दबोधप्रयोजकत्वाद् शाब्दबोधहेतुत्वाद्वा। अघट इत्यादौ समासापन्नस्य नञस्तु पूर्ववर्तित्वनैव शाब्दबोधप्रयोजकत्वं समासा न शासनबलाद् घटः, अ इत्यादेरबोधकत्वाच्च। प्रोक्तं सर्वमपिवचनं पृथगर्थानामेकार्थोपस्थितिजनकत्वं विभक्तिशून्यपूर्वपदकनामसमुदायत्वञ्चापि समग्रेष्वव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वेषु सुसंगच्छते, न केवलं पृथगर्थानामेकार्थोपस्थिति जनकत्वमिति वचने समासमात्रे किन्तुवृत्तिमात्रे कृत्तद्धितसमास सनाद्यन्तधात्वादिष्वपि। अतोऽत्र समर्थः पदविधिरिति परिभाषा वृत्तिमात्रसहायिकासेत्स्यतीत्यवधार्यं तदीयं व्याख्यानं समाससंज्ञाविधायक शास्त्रोपयोगितया वैशिष्ट्यं विभर्तीति निश्चयः। तस्मादिहसपदकृत्यं व्याख्यानं शास्त्रानुरोधि प्रस्तूयते।

सूत्रेऽस्मिन् पदग्रहणप्रयोजनं वर्णविधौ समर्थपरिभाषा माभूदिति। तिष्ठतु दध्यानयतक्रम् इहस्यादेव यण्। अत्र विधिग्रहणन्तुपदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम्, पदस्येत्येकवचनीयविग्रहेतु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिस्स्यात्। द्विवचान्त-बहुवचान्त विग्रहेतु समग्रसमासविधायकेष्वस्योपस्थिवि-रितिसमीचीन पक्षः। सूत्रेऽस्मिन् समर्थशब्दोलाक्षणिकोविद्यत एव समर्थाश्रितेऽर्थे, अत्र यदि समर्थ ग्रहणन्नक्रियेच्चेत तदा पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णाश्रित इत्यादिषु समासः स्यात्। यथा-वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् माभूदिति तत्तात्पर्यम्। क्वचित्तु सापेक्षत्वेऽपि भाष्यानुरोधात् वृत्तिरङ्गीक्रियते, तद्यथा किमोदनं शालीनाम्, केषां शालीनामोदनमित्यर्थः। एवं सक्त्वाढकमापणीनाम्। आपणीयानां सक्तूनामाढकमित्यर्थः। इदं समर्थः पदविधिरितिसूत्रं परिभाषासूत्रमेधिकार सूत्रमपि तेन सर्वत्र समर्थोऽधिक्रियत एव, समासश्च प्राक्कडारादेव, अतएवोक्तं-प्राक्कडारात्समास इति कौमुदीकारेण। तत्रापि प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमिति फलीभूतोऽर्थो लभ्यते। तेना-व्ययीभावादिभिः समावेशः सिद्ध्यति अन्यथा पर्यायतापत्तिः स्यात्। समसनंसमासः भावेघञि प्रोक्तएव। वस्तुतोऽत्रविचारे सति 'अकर्तरि च कारके संज्ञायाम्' इतिसूत्रेण कर्मणिघञ् समुचितः। अन्यथा-सुबन्तं समस्यत इति वचनमितीत्युत्तरग्रन्थो न संगच्छेत्। प्रसंगतोऽत्र-समासे जाते सति वैयाकरणमते तार्किकमीमांसकादिमते च कीदृ-शोऽर्थबोधः ? तत्रशक्तिविषये च परस्परं विशेषाविशेषौ कथं निभाल-नीयाविति धिया विचारस्तद् विषयकोऽप्यारभ्यतेऽत्र।

### समासशक्तिविषये वैयाकरणमतम्

वैयाकरणैस्समासे समुदाय एव शक्तिः स्वीक्रियते नत्ववयवे तथाहि रथन्तरं सप्तपर्णः शुश्रूषेत्यादावयवार्थप्रतीत्यभावात् समासादि पञ्चसु विशिष्ट एव शक्तिः। अतएव व्यपेक्षापक्षस्योद्भावनं विधाय अथा-स्मिन् व्यपेक्षारूपसामर्थ्ये योऽसावेकार्थीभावकृतो स वक्तव्य इति प्रोक्तम्भाष्ये। अतएव च धवखदिरौ, निष्कौशाम्बिः गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णाऽलंकारः, द्विदशाः, सप्तपर्णः, इत्यादौ

साहित्याक्रान्तयुक्तयुक्त पूर्णमिश्रसंघातविकारसुच्प्रत्ययलोपवीप्साद्यर्था न वचनरूपेण वाच्या भवन्ति, अन्यथातत्तदर्थं वचनं कर्तव्यमेवस्यात् ।

## तार्किकमीमांसकमतम्

तार्किकमीमांसकादयास्तु राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनिलक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इतिबोधस्यादेव समासे शक्तिर्न स्वीकार्या प्रवदन्तीति युक्तम् अतएव राज्ञः पदार्थैकदेशत्वेन तत्र ऋद्धादि विशेषणान्वयो न भवति, पदार्थः पदार्थेनान्वेतीत्युक्तम् नतु पदार्थैकदेशेन, सविशेषणानां वृत्तिर्नेत्युक्तेश्च । धवखदिरावित्यादौन साहित्याद्यर्थं प्रत्यायकवचन कर्तव्यतापत्तिः लक्षणयैवोक्तार्थत्वात् उक्तार्थानामिति न्यायेन तद्प्रयोगात् ।

लक्षणया राजसम्बन्ध्यभिन्न इति बोधनेच्छायां समासस्य, राजसम्बन्धवानिति बोधनेच्छायां विग्रहस्य च प्रयोगसम्भवे विभाषेति सूत्रस्यापिनावश्यकत्वम् । न चोक्तस्थलेषूक्त प्रकारेण विशिष्ट शक्त्यनभ्युपगमेऽप्यवयवशक्त्यैव निर्वाहेऽपि पंकजशब्दात् पंकजनिकर्तृरूपार्थं लाभार्थं समुदाय शक्तिरावश्यिकेति वाच्यम् उक्तार्थस्य योगादेव लाभादिति प्रोचुः ।

## शाब्दिकमतेन तार्किकमीमांसकमतनिरसनम्

विशिष्टशक्त्यस्वीकारे विशिष्टस्यार्थवत्वाभावादेवप्रातिपदिकसंज्ञाया अप्रवृत्तेः, तस्मादेव भाष्येऽर्थवदधातुरितिसूत्रे अर्थवदितिकिमिति प्रश्ने—

आर्थवतां समुदायोऽनर्थकः, दशदाडिमानिषड्पूपाः कुण्डमजाजिनमिति प्रत्युदाहृतन्तत्र ।

एवञ्च तार्किक मीमांसकमते—राजपुरुषपदयोः प्रत्येकमर्थवत्वेऽपि समुदायस्यार्थवत्वाभावात् प्रातिपदित्वं नस्यात् । यद्युच्यते कृत्तद्धितसमासाश्चेत्युत्तरसूत्रेसमासग्रहणादेव प्रातिपदिकसंज्ञासिद्धिरिति, तन्न यतः समासग्रहणस्य नियमार्थंतैव भाष्यकारेणोक्तत्वात् । अन्यथासिद्धिविनानियमत्वाऽसम्भवाच्च । समासग्रहणस्य

नियमार्थत्वादेव राज्ञः पुरुषः देवदत्तः पचतीत्यादि वाक्यस्य मूलकेनोपदंशमित्यादेश्च न कथमपि प्रातिपदिक संज्ञासिद्धिः। किञ्च विशिष्ट शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भाल्लाक्षणिकार्थवत्वास्याप्यभावेन सर्वथाप्रातिपदिकत्वाऽभावस्य निश्चितत्वेन स्वाद्यनुत्पत्तौ अपदं न प्रयुञ्जीतेति भाष्यात्समस्तप्रयोगविलयापत्तिस्स्यात् ।

## पुनस्तार्किक मीमांसकमतेनाक्षेप

तथाहि समासवाक्यस्यार्थवत्वाभावेऽपि न प्रातिपदिकसंज्ञानुपपत्तिः कृत्तद्धितसमासाश्चेति सूत्रेणैव प्रातिपदिकत्व सिद्धेः। सम्भवतिविधित्वे नियमकल्पनाया अन्याय्यत्वात्। समासग्रहणमेव च समासएकार्थीभावाभावे वा प्रमाणम्। वाक्यस्यतु न पूर्वसूत्रेण प्रातिपदिक संज्ञासम्भवा अर्थवत्वाऽभावात्।

संसर्गस्याशक्यत्वेऽप्याकांक्षादिवशादेव तद्भानस्य सूपपादकत्वात्। एवं प्रकृतिप्रत्ययसमुदायस्यापि वस्तुतोऽनर्थत्वेनाऽप्राप्त प्रातिपदिकसंज्ञाविधानाय कृत्तद्धितसमासाश्चेति सूत्रे कृत्तद्धित ग्रहणं कृतमिति समस्तस्यैव सूत्रस्य विधायत्वसिद्धेः। अर्थवदधातुरिति सूत्रस्य तु अव्युत्पन्नसाधुशब्दस्वरूपमेव, नतु बहुपटुरित्यादि समुदायोऽप्युत्तरपदलाक्षणिकतादृशसमुदायस्यार्थवत्वाऽभावात्। कृदन्तानां केषाञ्चिदर्थवत्वेऽपि धातुत्वात्, एवं तद्धितानामपि इः इयानित्यादीनां प्रत्ययत्वेन तादृशसमुदायस्य त्वनर्थकत्वेनार्थवदधातुरिति सूत्राऽविषयत्वेन तत्र-तत्र प्रातिपदिकसंज्ञासिद्धये सूत्रकारेण द्वितीयं सूत्रं प्रणीतमित्येवाशयः, अत एवार्थवदिति नानुवर्ततेऽसम्भवात्प्रयोजनाभावाच्च तत्र कृच्छब्देन प्रत्ययग्रहणे यस्माद् विहितस्तदादेस्तदन्तस्येति परिभाषया तदन्तं ग्रहणं संज्ञाविधावित्यस्य प्रायिकत्वात्। यथाडतरडतमादिप्रत्ययानां प्रकृतिं बिना प्रयोगे न भवति तथैव कृत्प्रययानामपि प्रयोगाऽभावेन सूत्रे तदपादानं वैयर्थमेव। यद्यप्यत्रोक्तयुक्त्या तद्धित पदस्यापि तद्धितान्त परतयैव लम्भते तथापि बहुपटवइत्यादि संग्रहाय तत्स्वाव्यवहितोतरत्व सम्बन्धेन तद्धितविशिष्टप्रकृतिघटित समुदायतद्धितान्यतरपरतयाव्याख्यातुं शक्यत्वात्। प्रकृतित्वञ्च प्रत्ययविधानावधि-

त्वम्, इ : इयानित्यादौ तु प्रत्ययस्यैव व्यपदेशिवद्भावेन तदन्तत्वान्न दोषप्रसंग: । पचतक्यादि समुदायान्तर्गततद्धितप्रकृतेर्निरुक्त तद्धित वैशिष्ट्याभावान्न तत्राति प्रसंग:। कृद्ग्रहणपरिभाषाया अनन्तर-ग्रहणज्ञापिताया: असार्वत्रिकत्वाच्च, न मूलकेनोपदंशमित्यावति प्रसंग; कश्चन । एवमेव समासग्रहणेनाप्यप्राप्त प्रातिपदिकसंज्ञाविधानाद् राजपुरुष इत्यादि समुदायात् स्वादिप्रत्ययोत्पत्तिसम्भवेति तत्रविशिष्ट-शक्त्यभ्युपगमो वैयाकरणानां न युक्तिसंगत: प्रामणिकश्चाभाति। वाक्यस्य प्रातिपदिक संज्ञानेत्युक्तमेव पूर्वम् । तत्र कोशादिना शक्त्य-परिच्छेदात् । यत्र हि कोशादिकं परिच्छेदकं तत्र समासेपंकजादौ न प्रातिपदिकसंज्ञां निवारयाम: ।

एवञ्च वाक्यस्यार्थवत्वाऽभावेन प्रातिपदिकसंज्ञाऽप्रसक्तेस्तद् प्रवृत्तिरूपफलाऽभावेन समासग्रहणस्य नियमार्थत्व प्रतिपादनं न युक्ति-युक्तम् । भाष्ये तस्य नियमपरतयावर्णनं तु संसर्गस्य वाक्यत्वमित्येक-देशि मतमनुरुद्ध्यैवेति ।

**वैयाकरणमतेन तार्किकमीमांसकमतनिरास:**

समासेऽतिरिक्त शक्तिस्वीकाराभावे चित्रगुमानयेत्यादौ कर्मत्वा-द्यनन्वयापत्ति: प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वव्युत्पत्ते: । विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैवप्रकृतित्वात् अर्थात् विशिष्ट-शक्त्यस्वीकारे कर्मत्वाद्यनन्वयापत्तिरित्यस्य गवादिपदार्थं स्वामिनि विभक्त्यर्थकर्मत्वस्यान्वयो न स्यादित्यर्थ:। चित्रगोरिति समुदायात् विभक्तेरुत्पत्त्या तांप्रति चित्रगुसमुदायस्यैव प्रकृतित्वात् । यद्युच्यते प्रत्यय: सन्निहित पदार्थेऽन्वयंलभमानस्सन् स्वार्थंप्रतिपादनं करोतीति तन्न समीचीनम् । अतएव सन्निहित पदार्थगतस्वार्थबोधकत्व व्युत्पत्ति-रेवकल्प्यत इति शंकासमाधानाय कौण्डभट्टपादैर्वैयाकरणभूषणसारे तन्नेति खण्डयद्भिरित्थमुक्तं यत् उपकुम्भम् अर्धपिप्पलीत्यादौ पूर्व-पदार्थे विभक्त्यर्थान्वयेन व्यभिचारादिति । तत्र सन्निहितत्वञ्चा-व्यवहितपूर्वत्वेनानुसन्धीयमानत्वम् । तस्य च चित्रग्वादिपदे भवादौ-सत्वान्नोक्ताऽनुपपत्तिरितितात्पर्यम् । व्युत्पत्तिरेवेत्येवकारणे पूर्वोक्त-प्रकृतित्वघटितव्युत्पत्तिव्यवच्छेद:, उपकुम्भादौ व्यभिचारोद्भावनं तु प्राचीनमते । नव्यनये तु उत्तरपदे लक्षणाभ्युपगमेन तदप्रसक्ते: ।

यद्युच्यते उपकुम्भादिस्थलेऽपि सन्निधानमेव तदपि न तत्रानुशासनिक-सूत्रबोधितसन्निधानमेव विवक्षितम्। सन्निहितत्वन्नाव्यवहितपूर्वत्वम् सत्त्वेनानुसन्धीयमानत्वम्वा । धवखदिरावित्यादौ धवादि पदार्थे विभक्त्यर्थानन्वयप्रसंगात् किन्तु सन्निहितत्वेनानुशासनबोधितत्वम्। तच्चधवादिपदार्थानमिवोपादिपदार्थानामस्तीत्याशयमाह भूषणे तथा चेत्यादि—तथा च यत्पदोत्तरं याऽनुशिष्टा सा तदर्थगतं स्वार्थं बोधयति।

समासे समस्यमान पदोत्तरमेवानुशासनमिति न वाच्यम्। अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्तरमेवविभक्त्यनुशासनात्। अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वयः इत्येव कल्प्यत इति चेत् र्तहि पंकजमानय, दण्डिनं पश्य, शूलिनं पूजय इत्यादौ पंकदण्डशूलेष्वानयनदर्शनपूजनादेरन्वयप्रसंगात्। 'अघटमानय' इत्यत्र घटेऽप्यानयनान्वयापत्तेश्च। न च दण्डादीनां विशेषणतया न तत्र नयनाद्यन्वयः, पाकान्नीलः धर्मात् सुखी 'इत्यादौ पाकधर्मादिजन्यतायारूपसुखादावानन्वयप्रसंगात्। यच्चप्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रम्। तच्चात्रविरुद्धमिति तन्न। घटं पश्येत्यत्र घटपदात् समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्वस्यावश्यकत्वात्।

यद्युच्यते प्रत्ययप्राग्वर्तिपदजन्योपस्थिति विशेष्यत्वं प्रकृत्यर्थत्वमिति चेत् न गामानयति कृष्णो दण्डेन—'इत्यत्र कृष्णे तृतीयार्थान्वयप्रसंगात्।'

अथ समस्यमान पदार्थगतस्वार्थबोधकत्वं समोत्तरविभक्तेः कल्प्यत इति चेन्न 'अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागञ्चापेक्ष्य समुदाय शक्तिकल्पनस्यैव युक्ति युत्त्वादित्येव शाब्दिकराद्धान्तः।

इत्थमेतावता संक्षेपेण समासशक्तिविषये तार्किक मीमांसकादि कृताक्षेप निरसनपूर्वकं वैयाकरणसिद्धान्तो व्यवस्थापितः। सम्प्रति समास विषये प्रचलितविचारप्रसंगेऽपेक्षिता विचारा इह विमृश्यन्ते, तत्राचैकार्थी भावरूपसामर्थ्यविषयकोविचारः समर्थः पदविधिरिति सूत्रतात्पर्यं भाष्यकारानुरोधिसमुपस्थाप्यते तथाहि—विधिरिति कोऽयं शब्दः ? इति जिज्ञासायामुक्तन्तत्र यत् विपूर्वाद् धात्रः कर्मसाधनइकारः

विधीयते विधिरिति । किं पुनर्विधीयते ? समासो, विभक्तिविधानं पराङ्गवद् भावश्च। किं पुनरयमधिकार: ? आहोस्वित् परिभाषा ? कः पुनरधिकार परिभाषयोर्विशेषः ? अधिकारः प्रतियोगं तस्यानिर्देशार्थं इति योगेयोगे उपतिष्ठते। परिभाषा पुनरेकदेशस्था सती सर्वशास्त्रमभिज्वलयति प्रदीपवत् । तत्र समासशब्देन संज्ञा प्रोच्यते ? समुदायो वा संज्ञी ? विभक्तिविधानशब्देन सामान्य विहितानांविभक्तीनां कर्मणि द्वितीयेत्यादिना यो नियमः स उच्यते। एवं हि पदविधिर्भवति, अथाप्येक वाक्यताश्रयणेनविभक्तीनां विधानं तथापिपदान्तरसम्बन्धेन यासांविभक्तीनां विधानमन्तराऽन्तरेण युक्त इति तिङविभक्तीनांनेर्विश इति, तदाश्रयेण पदविधित्वमस्त्येव। तथा चोक्तमत्रनिरपि पदं विशिरपि पदमिति, तत्र विभक्त्यवच्छिन्नत्वाद्विशिष्टं विधानं कर्म सामान्य विधानक्रियाया भवति, इत्थमुक्तदिशा भाष्यकारमते चैकार्थीभावे सामर्थ्येऽधिकारे च सति समास एकः संगृहीतो भवति, विभक्तिविधानं पराङ्गवद् भावश्चाऽसंगहीतः। व्यपेक्षायां पुनः सामर्थ्ये च सति विभक्तिविधानंपराङ्गवद् भावश्च संगृहीतो भवति समासस्त्वेकोऽसंगृहीतः। अन्यत्र खल्वपि समर्थग्रहणानि युक्तग्रहणानि च कर्तव्यानि भवन्ति, क्वाऽन्यत्र ? इसुसोः सामर्थ्ये 'न चाह्य ह'हैवयुक्ते' इति व्यपेक्षायां पुनः सामर्थ्ये परिभाषायाञ्च सत्यां याव न् व्याकरणे पदगन्धो नाम स सर्वः संगृहीतो भवति समासस्त्वेकोऽसंगृहीतः।

**कैयटमतेन विचारः**

अत्र कैयटेनोक्तं यदेकार्थीभावः सामर्थ्यमधिकार एकः पक्षः, व्यपेक्षायां सामर्थ्यमधिकार इति द्वितीयपक्ष इति। द्विविधं सामर्थ्यमधिकार इति तृतीयः पक्षः, एवं परिभाषायामपि त्रयः पक्षाः 'इति षट्पक्षीसम्भवे 'एकार्थीभावः परिभाषा चेति' निर्णय', अभिन्नतत्त्वं भवति उभयविधेसामर्थ्ये 'आश्रीयमाणेऽर्थस्यभेदात्सूत्रभेदः स्यात् यतोऽर्थ भेदाच्छब्दो विभिद्यत एव। भिन्नेन सामर्थ्येन भिन्नेषु वाक्येषु उपस्थानात्। व्यपेक्षायामपि सामर्थ्ये यद्यपिसूत्रमभिन्नं भवति, तथाप्येकार्थी भावे सामर्थ्ये दोषाभावात् प्रकर्षं योगादभिन्नतरकमित्युच्यते। तत्र परांगवद् भावे तन्निमित्तग्रहणाद् दोषाभावः।

अथ समाससमीक्षा जिज्ञासापूर्वमप्युक्तमत्रस्मृतिपथं प्रसंगत आनीयते । तत्र समासत्वं नामविभक्तिशून्यपूर्वपदकं नाम समुदायत्वरूपम्, अत्रापि च विभक्तिशून्य पूर्वपदकत्वं नाम विभक्ति-सत्ताऽभावपूर्वपदघटितशाब्दबोध प्रयोजकानुपूर्वीमत्वम् । तस्मादेवात्र न घटः न पट इत्यादौ नोक्तलक्षणातिव्याप्तिः, कथमिति चेत् ? 'घटो न पटो, मठो नेत्यादौ' आनुपूर्वी ज्ञानत्वेनैव शाब्दबोध हेतुत्वात् । न घटः, अघटः न पटोऽपटः नमठोऽमठइत्यादौ समासापन्नस्य नञः पूर्ववर्तित्वेनैव शाब्दबोधप्रयोजकत्वम् 'नञ' इति समाससंज्ञा विधायकशास्त्रस्यप्रवृत्त्या घटः अ इत्यादेरेव बोधकत्वाच्च ।

'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इत्यादौ श्रुतेरर्थं स्मृतेरिवेति योजनया सम्यग् बोधः सम्पद्यते । तेनेवार्थमित्यादौ तल्लक्षणस्य नातिव्याप्तिः । एवमाराद् ब्रह्मविदामशेषविषयब्रह्मैक्यमुद्दीपयन् ब्रह्मैक्यमुदीपयन्नारादुज्जृम्भते इति योजनयैव बोधः । अत आराद्ब्रह्म इत्यत्रापि नातिव्याप्तिः सम्भाव्या । अत्र द्वितीयमपिलक्षणं यथा—

संकेतविशेषसम्बन्धेन समासपदवत्वमेव समासत्वम्, अथवा पाणिन्यादिसंकेतसम्बन्धेन समासपदवत्वरूपं वा एकार्थीभावापन्न पदसमुदायविशेषत्वम्वा, यद्यत्र पदशब्देन शक्तपदस्य ग्रहणं स्यात्तदा कृदन्ते तद्धितान्ते प्रत्येकं प्रकृति-प्रत्यये पदे चापिलक्षणप्रवृत्तेरति-व्याप्तिः, सुबन्ततिङन्तयोर्ग्रहणे कुम्भकार-कट्प्रूइत्यादिष्वव्याप्तिः, तत्र कृदन्तधातुभ्यामेव समासविधानेन तादृशविपद समुदायत्वाभावा-दिति चेन्न तत्र पद पदेन पदत्वयोग्यस्य ग्रहणं विवक्षितम्, पदत्व-योग्यत्वञ्च पदत्वप्रयोजक प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यता-बच्छेदक धर्मवत्वरूपम् । तथा सति कारशब्दे तादृशधर्मस्य प्राति-पदिकत्वस्य प्रूशब्दे धातुत्वस्य च सत्वेना दोषात् ।

केचित्तु शक्ति सम्बन्धेन समासपदवत्वमेव ब्रुवते, एकार्थीभावा-पन्नपदसमुदायविशेषो वा । तत्रैकार्थीभावे मानञ्च—किं पुनः समर्थन्नाम ? पृथगर्थानामेकार्थीभावः समर्थवचनम् । क्व समर्थं वचनम् ? क्व पुनः पृथगर्थानि ? क्वैकार्थानि ? वाक्ये पृथगर्थानि-राज्ञः पुरुष इत्यादौ । समासे पुनरेकार्थानि, राजपुरुष इत्यादौ इत्येवं

विध समर्थसूत्र भाष्यम् तन्मूलिका विभिन्नायुक्तयश्चापि, प्रमाण-मत्र। तत्रैकार्थत्वमेकोपस्थितिविषयार्थकत्वम् न त्वेकार्थशक्यत्वमभ्युपगन्तव्यम् 'तथा सतिघटादिपदानामपि घट-घटत्व-तत्तत्सम्बन्धरूप-नानार्थशक्तत्वेनैकार्थाऽनापत्तेः । नानाउपस्थिति विषयार्थकत्वं-पृथगर्थकत्वम् । यथा वाक्ये पृथक् पदानामाकांक्षादि सहकारेण विशिष्टार्थमानम्, तथा न वृत्तौ, किन्तु तत्रावयव शक्त्यैव समुदाय शक्ति सहकृततया जायमानापदार्थोपस्थितिरेव विशेष्यविशेषणभावा-पन्न विशिष्टार्थमवगाहते संसृष्टार्थं समर्थमिति भाष्यप्रमाणात्। अत्र भाष्यवचने समर्थपदमुपात्तं वर्तते तच्च समर्थः पदविधिरि-त्येननैवमतः समर्थपदार्थं विवेचनीयं वर्तते एव। उक्तसूत्रमधिकार-रूपतया सर्वसमाससंज्ञाविधायकेष्वधिक्रियत एव। तस्मातत्सूत्रार्थ-विचारः आवश्यकः ।

इत्थमत्र परमार्थतः 'समर्थः पदविधिरिति' पाणिनीयसूत्रं संज्ञा च परिभाषा चेत्यादि षड्विधसूत्रेषु परिभाषा सूत्ररूप-तयापश्चाच्चाधिकारसूत्ररूपतया प्रक्रियायामुपयोगिताम्भजति। सूत्रेऽस्मिन् समर्थः पदविधिरिति पदद्वयं विद्यते, पदविधिरित्यत्र-समासतः पूर्वं वाक्यावस्थायां पदद्वयं पदस्य विधिः तत्र विधिशब्दश्च-भावसाधनः कर्मसाधनश्च द्विधा सिद्धिं भजते । भावसाधनपक्षे विधानमितिविधिः विपूर्वकाद् धात्रः धातोः 'उपसर्गे धोः किः' इति सूत्रेण सोपसर्गाद् घुसंज्ञकात् तस्माद् धा धातोः कि प्रत्यये ककारस्य लशक्वतद्धित इति सूत्रेणेत्संज्ञायाम् तस्यलोप इत्यनेन लोपे च कृते आतोलोप इटिचेत्यादिनाऽऽकारलोपे कृतद्धित समासाश्चेत्यनेन प्रातिपदिक संज्ञायाम्, ततस्सुषुत्पत्तौस्वादि कार्ये रूपसिद्धिः, भाव-साधने पदानां विधीयमानत्वात् कर्तृकर्मणोः कृदिति सूत्रेण कर्मणि षष्ठी, कर्मसाधनपक्षेतु विधायत इतिविधिरितिव्युत्पत्तौ प्रोक्तसूत्रेणैव-कि प्रत्यये तद्वत्सकलसाधुत्वविधिजातै रूपसिद्धिः। कर्मसाधनपक्षे शेषेषष्ठीतिसूत्रेण शेषेऽर्थे सम्बन्धसामान्ये षष्ठी भवति। तत्र 'येषा-मर्थभेदाच्छब्दवद् 'भेदः' 'इतिदर्शनं सादृश्यनिबन्धना च प्रत्यभिज्ञा, तद्दर्शने क इति प्रश्नो विशिष्टशब्दनिर्धारणाय, येत्वर्थभेदेऽपि शब्दस्यैक्यमिच्छन्ति तत्पक्षेऽर्थभेदाच्छब्दभेदमारोप्य क इति प्रश्नः। विध विधाने 'इत्यौणादिकेन प्रत्ययान्त निवृत्यर्थं विपूर्वाद् धात्रः

इत्युक्तम् स्वरे चोभयोर्भेदः, इन् प्रत्ययस्याद्युदातत्त्वम्, किं प्रत्यय-स्यान्तो दात्तत्वमेव तयोर्विशेषः।

अतएव भाष्यकारः विपूर्वकाद् धात्रः कर्मसाधनइकारो-विधीयत इति विधिरिति प्रोक्तवान्। तत्र किं पुनर्विधीयत इति जिज्ञासायां कृतं समाधानं तत्र, तथाहि-समासः विभक्तिविधानम्, पराङ्गवद् भावश्चेति। तथा सति स्वभावतश्चायमपि प्रश्न उदेति यत् क्व समासः ? तत्र समाहितमेव यत्र सामर्थ्यं भवति, तदेवहि सामर्थ्यं भगवान् पाणिनिमुनिस्तत्सूत्रे समर्थपदेनैवोद्भावितवान्, तदेव च समर्थं पदं व्याख्यातृभिः पृथक्पृथग्रूपेणैत्रानेकधा व्याख्यातम्। परं तेषु परमव्याख्यातभगवान्भाष्यकारो विशेष्यत एव सर्वं व्याख्यानवैशिष्ट्यात्। तथा-च वार्तिककारः कात्यायनमुनिरपि तद् भाष्यवार्तिककारानुयायिनश्च कैयट-हरदत्तभट्टोजिदीक्षित-नागोजीभट्ट प्रभृतयः। प्रायः सर्वेऽपि समर्थं पदं समर्थाश्रिते लाक्षणिकं स्वीकृतम्। तच्च सामर्थ्यमेकार्थी भावरूपं पृथगर्थानामेकार्थोपस्थिति-जनकत्वाऽपरपर्यायं 'राजन् ङस् पुरुष सु' इत्यादावालौकिके शास्त्रीये विग्रह वाक्येऽसम्भवमिति, तस्मादेव समर्थं पदं पृथगर्थानामेकार्थोप-स्थिति जनकत्ववति परिनिष्ठिते राजपुरुषे प्रयुक्तं सत् राजपुरुषनिष्ठ-तादृशैकार्थीभावरूप सामर्थ्यस्य 'राजन' ङस् पुरुषसु' इत्यलौकिके प्रक्रिया वाक्ये समारोपः = उपचारो वा क्रियते।

यतो यावदुपचारोऽत्र न विधीयते तावत् समासविधायकं शास्त्रं न प्रवर्तते। लाकेऽर्थावबोधो लौकिकवाक्येन राज्ञः पुरुषः इत्यादि उत वा राजपुरुष इति समस्तेनैव पदेन भवति न तु राजन् ङस्-पुरुषसु इत्यनेन शास्त्रीयवाक्येनालौकिकेन। येन परिनिष्ठितेन राज-पुरुषेण बोधो जायते तत्रैवेकार्थीभावरूपसामर्थ्यं भवति परन्तत्र समासविधायकशास्त्रस्य न प्रवृत्तिः, यत्र चालौकिके शास्त्रोयेविग्रहे शास्त्रप्रवृत्तिस्तत्र नास्ति सामर्थ्यमतः समर्थपदं समर्थाश्रितेलाक्षणिकं संगतमेव। एत्र मन्यत्रापिअव्ययीभावे तत्पुरुषीये लक्ष्ये, बहुव्रीहौद्वन्दे चापि समासविधायकशास्त्रप्रवृत्तितः पूर्वं सामर्थ्यस्य परिनिष्ठित-शब्दाश्रितस्याव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वादि समासादिष्वपि तदुक्त सामर्थ्यारोपव्यवहारः प्रचलति।

अत्र समाससमीक्षा शृङ्खलायां सामर्थ्यस्य महतीभूमिकोप-योगिता समाराधिता वर्तते, सम्यक् सामर्थ्यनिर्वचनमन्तरा समास

समीक्षा दीक्षा न पूर्णतां भजति । अत एव सामर्थ्यमेकार्थी भावरूपं न समास समीक्षातोऽविषयान्तरतामुपैतीति विभावनीयम् । समर्थपदविधिरित्यत्रापि पदस्य विधिः पदविधिशब्दः परिनिष्ठितः समासाद् ऋते कथं सिद्धेत् । विधिशब्दस्य भावसाधनपक्षे 'कर्तृकर्मणोः कृति' इत्यनेन कर्मणि षष्ठी, कर्मसाधनपक्षे शेषेषष्ठीति सूत्रेण शेषेवा षष्ठी, उभयोः समासविधायकयोः शास्त्रयोरपि पदविधिसम्पादकत्वेन प्रवृत्तिकालेऽपेक्ष्यत एव सामर्थ्यमेकार्थी भावरूपम् । तदैव पदसम्बन्धी योविधिः समर्थाश्रितो बोध्य इति भट्टोजोदीक्षितस्यव्याख्यानं संगच्छते. तत्रोक्तरीत्या समर्थपदं समर्थाश्रिते लाक्षणिकमित्यवधारणीयमेवास्ति । एवम्भूतोऽर्थः कथमपि समर्थपदस्य समर्थाश्रितेऽर्थेलाक्षणिकत्वमन्तरा न सेत्स्यतीति सामर्थ्यन्तद्भाष्यकारानुरोधि विचारणीयमेव भाष्यकारेण संसृष्टार्थं समर्थं, संसृष्टार्थं समर्थवचनम्, संगतार्थं समर्थञ्चेति नानास्वरूपमवधारितम् ।

तदनुयायिभिरपि यथापूर्वं संसूचितमेव क्व पृथगर्थानि ? क्वचैकार्थानि ? इत्यादि जिज्ञासायाम् सम्यक् समाहितञ्च यत् वाक्ये पृथगर्थानि, यथा राज्ञः पुरुष इत्यादौ समासे पुनरेकार्थानि यथा राजपुरुष इत्यादौ । एतेनापि प्रमाणितं भवति यल्लोके प्रवृत्तिनिवृत्युपकारकार्थावबोधो वाक्येन समस्तेन पदेनैव नत्वलौकिकेनेत्यादिना । तत्रैकार्थीभावरूपं सामर्थ्यञ्चचर्चित बहुविधन्तत्रतत्र, प्रशस्तं स्वरूपमिदमपि भवति यथा—यत् किञ्चित् पदजन्य पृथगुपस्थितिविषयार्थकत्वेन लोकेदृष्टानां शब्दानां विशिष्टविषयैक शक्त्यैवोपस्थितिजनकत्वमेकार्थी भाववत्त्वम् । अथवा—विशेष्य विशेषणभावापन्नानामेकार्थोपस्थिति जनकत्वम् । अमुमेवार्थं नागेशभट्टपादैरपि शब्देन्दुशेखरे विशेष्य विशेषणभावावगाह्यु पस्थिति जनकत्वमितिदिशा सुस्पष्टमवतारितम् । तैरपि संसृष्टार्थं समर्थमिति भाष्यमुपादायैवैकार्थीभावरूपसामर्थ्यं समर्थितम् ।

अतएव राजपुरुषैकदेशे राज्ञिऋद्धस्येत्यादि विशेषणान्वयो न भवति पदार्थः पदार्थेनान्वेति न तु पदार्थैक देशेनेति व्युत्पत्तेः, सविशेषणानांवृत्तिर्न, वृत्तस्य विशेषणयोगोने' तिशाब्दिकन्यायानुरोधाच्च, तेन समासादिवृत्तौ विशिष्टशक्तिस्वीकर्तृवैयाकरणनये न्याय-

सिद्धमेव। अतएव च प्रोक्तमथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति भाष्यकारोक्तिरपि सुसंगच्छते। एकार्थीभावरूपसामर्थ्यं पक्षे तादृशविशेषस्यावक्तव्यत्व सूचनात् तद् भाष्यमिह महत्प्रमाणमादधाति। समर्थः पदविधिरितिसूत्रे पदसम्बन्धी विधिरेवैकार्थीभावरूपसामर्थ्यंमपेक्षते चेत्तर्हि इच्छार्थक सनादि विधायकशास्त्राणां पदविधित्वाभावेन सामर्थ्यापेक्षाया अस्वीकारेण दोष प्रसक्त्या पदविधिशब्देन पदविधिसहचरितस्यापि ग्रहणं कर्तव्यं भवति। तथा सति तत्सहचरितत्वन्नामस्वघटितपदघटकशास्त्रविधेयत्वं सहचरितत्वमेव।

तेनोक्तसूत्रे पदविधिशब्देन सामान्यतया पदसम्बन्धिविधिमबोधयित्वा लक्षणया विशेष एव संकेतितार्थोबोध्यते, अर्थात् पदविधि शब्दो विशिष्टसंकेतितार्थप्रतिपादको भवति, येन कृत्तद्धितैकशेष सनाद्यन्तधातुरूपपञ्चवृत्तीनां पदविधित्वसिद्धिः स्यात्।

यासु वृत्तिसु एकार्थी भावरूपं सामर्थ्यं स्यात् तत्रैव समास संज्ञादिः, तस्मादत्र पारिभाषिकशब्दार्थंज्ञानाय प्रथमन्तस्य सारभूतोऽर्थनिर्देश आवश्यक एव।

तद् यथा—पद संज्ञायाः प्रवृत्र अर्थात् पदोद्देश्यकविधौ प्रकृत्यासह सुप्तिङ् प्रत्ययावपि, तेन सुप्तिङ् विधायक शास्त्रञ्च क्रमशः स्वौजसमौडिति, तिप्तस् झिसिप्थसित्यादिः प्रातिपदिक संज्ञा-धातु संज्ञाविधायकयोः शास्त्रयोः प्रवृत्तिः स्वादि-तिवादिविधानाय भवति अर्थात् स्वादि-तिवादि प्रत्ययविधिप्रवृत्युद्देश्यता प्रातिपदिकसंज्ञानिष्ठा, धातुसंज्ञानिष्ठाच क्रमशः, प्रातिपदिकसंज्ञोद्देश्यिका—धातुसंज्ञोद्देश्यिका स्वादि प्रत्ययविधिप्रक्रिया तिङ् प्रत्यय विधिप्रक्रिया, तादृश्य सुप्तिङ् प्रत्ययान्तस्य पदसंज्ञा। प्रातिपदिकसंज्ञायाः धातुसंज्ञायाश्चोद्देश्यं क्रमशः स्वादिप्रत्ययविधिः तिङ प्रत्ययविधिश्च, पदसंज्ञाविधिस्तदन्तस्येति। समासंज्ञाविधिः, कृदन्त तदाति, तद्धितान्ततदादि, समासः सनाद्यन्ततदादिश्चान्यतमः। एषु-विशेषणतया प्रतीयमानाः कृत्प्रयय-तद्धितप्रत्ययसमासः सन् क्यच् प्रभृतयो द्वादश प्रत्ययाः सन्ति, तेषां विधायकशास्त्राणि कृत्प्रत्यय-

विधायकानि निखिलानि सूत्राणि तद्धितप्रत्ययविधायकानि निखिलानि निखिलानिच समाससंज्ञाविधायकानि, द्वन्द्वापवाद एकशेषश्चापि । एतावता पदविधयः पञ्चसंख्याकाः सन्ति ।

एतदेव पूर्वोक्त संकेतानुसारं यद् विधिपदार्थो विशिष्ट-उच्यते तथाहि—पदत्व प्रयोजक प्रत्ययनिष्ठ विधेयतानिरूपितोद्दे श्यतावच्छेदक संज्ञीयोद्दे श्यताऽवच्छेदकीभूता-संज्ञा=प्रातिपदिक संज्ञा-धातु संज्ञा च, तादृश संज्ञानिष्ठ विधेयतानिरूपितोद्दे श्यतावच्छेदकं कृदन्तत्वम्, तद्धितान्तत्त्वम्, समासत्वम्, सनादिभेदभिन्नत्वमर्थात् सनाद्यन्यतमत्वम्, तत्सम्पादकशास्त्रं कृद्विधायकम्, तद्धितविधायकम्, समासविधायकम्, सनादिविधायकम्, तद्विधेयत्वं कृत्तद्धितसमाससनादीनाम्, इत्थं पदविधित्वेन सामर्थ्याश्रितत्वं समेषाम् ।

अतस्सर्वत्र वृत्तावेकार्थी भावरूपं सामर्थ्यमपेक्ष्यते। तेनैव राजपुरुष इत्यादौ विशेषणीभूत राजाद्यर्थे पदार्थान्तिरस्य ऋद्धादेर्विशेषणतयाऽन्वयो न भवति तत्पूर्वमुक्तं स्मार्यतेऽत्र यद्यपि देवदत्तस्य गुरुकुलमित्यादौ देवदत्तपदार्थस्य निरूपितत्व सम्बन्धेन पदार्थैकदेशे गुरुत्वेऽन्वयो दृश्यते तथापि तत्र सापेक्षस्थले—एवान्य पदार्थस्य विशेषणतया एकदेशार्थेऽन्वयः क्रियते, तत्र नित्य सापेक्षत्वन्नाम स्वनिरूपकांक्षा व्याप्यज्ञानविषयत्वं नित्यसापेक्षत्वम् अत्र स्व पदेन गुरुत्वं गृह्यते तन्निरूपिकाऽऽकांक्षा यत्र यत्र गुरुत्वं तत्र तत्र तन्निरूपकः क इत्याकांक्षा उदीयमाना तिष्ठत्येव, तादृश्या आकांक्षाया यद् ज्ञानं=तदीयाकांक्षाज्ञानस्य व्याप्यज्ञानं गुरुत्वज्ञानं तद् ज्ञानंविषयः तादृशन्नतद् गुरुत्वन्नित्यसाकांक्षम् । स्वपदेन योहि नित्य सापेक्षो विधीयते तस्य ग्रहणं भवति यथा प्रकृते गुरुत्वम् । अथवा देवदत्तस्य गुरुकुलमित्यत्रापि देवदत्तस्य पदार्थैकदेशे गुरुत्वे नान्वयः किन्तु परम्परासम्बन्धेन देवदत्तस्य विशेष्यकुले एवान्वयः स च परम्परासम्बन्धः स्वनिरूपितोत्पाद्यत्ववत् सम्बन्धोऽत्र ।

अत्र स्वपदेन देवदत्तस्यग्रहणं तन्निरूपित गुरुत्वान् गुरुः तदुत्पाद्यंजन्यं तत्कुलम् अर्थात् देवदत्तनिरूपित गुरुत्वान् गुरुस्तवज्जन्यं कुलम् । पूर्वं समर्थः पदविधिरिति सूत्रं परिभाषारूपं

वर्णितम् यतस्तस्य लक्षणं विद्यते स्वदेशे लक्ष्य संस्कारक बोधा जनकत्वे संज्ञा-विधि शास्त्राद्यन्यतत्वेन लक्ष्य संस्कारक बोध-जनकत्वम् ।

सम्प्रति तत्सूत्रमधिकाररूपतया प्रोच्यते यतः उत्तरोत्तरं सूत्रेषू-पस्थितं सत् बोधयति यत् यत्र यत्र पद विधित्वन्तत्र तत्र समस्तं कार्य-जातमेकार्थीभावरूपसामर्थ्ये सत्येव स्यात् नान्यथा कथमपि ।

समासश्चायं समर्थः पदविधिरिति सूत्रानुसारं पदसम्बन्धियो विधिः समर्थाश्रित इत्यभिप्रायकः कतिविधः इति विचारणायाम् षड्-विधः समास इत्यभिधीयतेऽत्रेत्यम् :

सुपां सुपातिङां नाम्ना धातुनाथतिङां तिङ ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥

अत्र सुप्पदं सुबन्त परम्, एवं तिङपदं तिङन्त परम्, येनविधि-स्तदन्तस्य, यः प्रत्ययो यस्माद् विहितस्तदादेस्तदन्तस्येति क्रमशः सूत्र-परिभाषाभ्यां परिभाषणात् । तेन सुबन्त प्रतियोगिकसाहित्य-विशिष्ट सुबन्त निरूपित वृत्तित्व विशिष्टः समासः एकः एवं तिङन्त प्रतियोगिक साहित्यविशिष्ट सुबन्त निरूपित वृत्तित्व विशिष्टो-द्वितीयः, तथैव नाम प्रतियोगिक साहित्यविशिष्ट सुबन्तनिरूपित वृत्तित्वविशिष्टस्तृतीयः । एवं धातु प्रतियोगिक साहित्यविशिष्ट सुबन्तनिरूपित वृत्तित्वविशिष्टश्चतुर्थः, एवन्तिङन्त प्रतियोगिक साहित्यविशिष्ट तिङन्तनिरूपित वृत्तित्वविशिष्टः पञ्चमः । एवं सुबन्त प्रतियोगिक साहित्यविशिष्ट तिङन्तनिरूपित वृत्तित्व-विशिष्टः षष्ठः । अत्र साहित्यञ्चापि संकेतसम्बन्धेन समासशब्दत्व-रूपगुणकृतम् ।

अतएव सकारोत्तराकारोत्तरमकारोत्तराकारोत्तरसकारोत्त-राकारानुपूर्वीकः समाससंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताश्रयो भवति ।

यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्त स्वार्थानि वा, प्रधानार्थो-पादानात् व्यर्थानि, अर्थान्तराऽभिधायीनि वा पदानि स एकार्थी

भावः, उपसर्जनभूत स्वार्थानि—इतर विशेषणभूत स्वार्थोपस्थकानीत्यर्थः, न तु स्वार्थोपस्थकानीति तात्पर्यम् एवञ्च तत्पुरुषादौ एकं पदं तादृशम्, बहुव्रीहौ द्वन्द्वे च पदद्वयमपीति। सामर्थ्यं द्विविधं प्रोक्तमेकार्थीभावव्यपेक्षालक्षणञ्चेति । यद्यपि शाब्दिकसिद्धान्ते कृतद्धित समासैकशेषसनाद्यन्तधातुरूपाः वृत्तय इतिप्रसिद्धिर्विद्यते तत्रोपपदं सप्तमीस्थमितिसूत्रे उपपदसंज्ञायां समर्थवचनमिति वार्तिकं प्रणयन् वार्तिककारोऽत्र समर्थः पदविधिरितिशास्त्रोपस्थितिन्नाङ्गीकरोति । समासपदं वृत्तिमात्रोपलक्षणम्, समुदायोवेति, स हि अवयवभूतपदानां कार्यः समूहस्यावयवातिरिक्ताया अपि स्वीकारात्। विभक्त्यन्तस्य पदत्वात् विभक्तिविधानस्य कथं पदोद्देश्यकविधित्वम् ? इति शंकामुपस्थाप्यसमाधीयते विभक्तीति=समासोविभक्तिविधानं परांगवद्भावश्चेति, तत्र समासशब्देन संज्ञा वा उच्यते, समुदायो वासंज्ञी, विभक्तिविधानशब्देन सामान्यविहितानां विभक्तीनां कर्मणिद्वितीयेत्यादिना यो नियमः स एवोच्यते। एवं हि-पदविधिर्भवति, अथाप्येकवाक्यताश्रयणेन विभक्तीनां विधानं तथापि पदान्तरसम्बन्धेन यासां विभक्तीनां विधानमन्तरान्तरेणयुक्त इति। तिङ्विभक्तीनां नेर्विश इति, तदाश्रयणेन पदविधित्वमस्त्येव । तथा चोक्तं निरपिपदं विशिरपिपदम् । तत्र विभक्त्यवच्छिन्नत्वात् विशिष्टं विधानं कर्म सामान्यविधानक्रियाया भवति।

इत्थमत्र सुस्पष्टमेव यत् यत्र देवदत्तस्य गुरुकुलमित्यादौ वृत्तिर्भवति तत्र सापेक्षमसमर्थवदिति वार्तिके येन सम्बन्धेन नित्यसाकक्षत्वं तदितरसम्बन्धेन साकांक्षमसमर्थवद् भवतीति संकोचः कर्त्तव्यः। यत्र देवदत्तस्य गुरुकुलमित्यादौ वृत्तिर्मन्यते गमकत्वात् तद् गमकमपि यथा—शिवस्यभगवतोभक्त इत्यर्थे शिवभागवतः इति अयः शूलेति सूत्रे भाष्ये प्रयोगः, परन्तत्र वृत्तिरेव, न तु शिवस्य भागवतः इति वाक्यं साधुमन्यते। तत्र भगवच्छब्दादण् शिवशब्देन भगवच्छब्दस्य समासश्च युगपदेवेति। एवं हि एकार्थीभावेऽलौकिके विग्रहे कल्प्यते यथा शत्रादौ द्वितीयासामानधिकरण्यं दृष्ट्वा लकारेऽपितत्कल्पना तथाऽन्यपदार्थे। 'समर्थश्चार्थे' इत्यनुवाद बलात् तत्र तत्र कल्पना क्रियते सा चोपचाररूपैव, तथा शतृविधायके भाष्यम्—यथा

तस्य प्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिस्तस्य क्वापि प्रयोगाभावात् 'इत्याशंक्यादेशसमानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं प्रकृतेरपि तद् भवति' इति तत्र च कैयटः—सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्य इत्यादि प्रयोगदर्शनात् स्थानिनोऽपि लटः प्रक्रियार्थं विहितस्याप्रथमा समानाधिकरण्यमनुमीयते । अत्रानुमाने सौत्रानुवाद एव मूल तर्कः ।

अत्र प्रक्रियार्थं विहितस्येत्यनेनान्यस्यापि प्रक्रियार्थं कल्पितस्य लोकेऽबोधकत्वं सूचितम् । तेन सर्वत्र परिनिष्ठितनिष्ठवृत्तेः कल्पनमलौकिके विग्रहे भवत्येव ।

अस्तु सम्प्रति समर्थः पदविधिरित्यत्र पदविधिशब्देन समास संज्ञादिर्गृहीतः । तत्र कीदृशं हि पदविधित्वम् ? पदनिष्ठोद्देश्यतानिरूपित विधेयताश्रयत्वं पदविधित्वं राजपुरुषः समासस्य तत्वञ्च= पदविधित्वम्, पदं नाम सुबन्तं तिङन्तञ्च, तेन सुबन्तपदनिष्ठोद्देश्यतानिरूपित विधेयता श्रयत्वाद्बोध्यम् । एवं सति 'धातोः कर्मणः' इत्यादिना विहितस्य सनः पदविधित्वन्नस्यात् तथा च तत्र सामर्थ्याभावेऽपि सन् स्यात् अत आह पदविधिसहचरितोऽपि पदविधिशब्देनगृह्यत इति । तत्र पदविधिसहचरितत्वञ्चपूर्वमुक्तमेवात्र विशेषतः परिभाष्यतेऽत्र, तथाहि पदविधिसहचरितत्वन्नाम—स्वविधायकशास्त्र घटित पादघटकशास्त्रविधेयत्वम् यथा स्वं क्यच् तद् विधायकं शास्त्रं सुप आत्मनः क्यचिति तद् घटकस्तृतीयाध्यायस्य प्रथमः पादः तद्घटकं शास्त्रं धातोः कर्मणः समान कर्तृकादिच्छायां वासन्निति तद्विधेयत्वं सन इति सनः पद विधिसह चरितत्वेनतत्रापि समर्थ परिभाषोपस्थितः, अथवा—

पदविधिसहचरितत्वञ्च :— पदत्वावच्छिन्नोद्देश्यतानिरूपित विधेयताश्रयीभूत प्रत्ययविधायकशास्त्रघटित पादघटकशास्त्र विधेयत्वम्, पदत्वावाच्छिन्नोद्देश्यतानिरूपित विधेयताश्रयः क्यच् प्रत्ययविधायक सुप आत्मनः क्यच् इतिशास्त्रघटित तृतीयाध्याय प्रथमपादघटकधातोः कर्मण=इति शास्त्र विधेयतासनः पदविधित्वमेवाहुः । वस्तुतस्तु पदत्वप्रयोजक प्रत्ययप्रयोजक संज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदक धर्मसम्पादकत्वं पदविधित्वम्' ।

एवञ्च 'क्यच्' इव सनोऽपि न दोषः इति सहचरितत्वादिनाऽऽश्रयणीयं भवति । तेन सनः समासादेश्च पदविधित्वं सिद्धम् । तथाहि बुभूषतीत्यत्र पदत्व प्रयोजकस्तिङ् प्रत्ययस्तिप् तत्प्रयोजिका संज्ञा सनाद्यन्ता धातव इति धातु संज्ञा, तदीयोद्देश्यतावच्छेदकं सनाद्यन्तत्वं तत्सम्पादकं शास्त्रं धातोः कर्मणः इति तद् विहितत्वं सनः, एवं राजपुरुष इत्यत्र पदत्वप्रयोजक सुप्प्रत्ययः सु इति तत्प्रयोजिका कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञा तदीयोद्देश्यतावच्छेदकं समासत्वं तत्सम्पादकं शास्त्रं षष्ठीति सूत्रम् तद् विहितत्वं समासस्यास्तीति पदविधि सहचरितोऽपीतिकथनस्य नोपयोगः कश्चित् ।

एवमेवान्यात्रापि कृत्तद्धितादिषु समन्वयः शक्यः । नागोजीभट्टपादैः शब्देन्दुशेखरे—

यद्धि एकार्थीभावस्वरूपमुक्तं विशेष्यविशेषणभावावगाह्युपस्थिति जनकत्वं संसृष्टार्थं समर्थमिति भाष्योक्तेः तेन घटपदस्य घटत्व विशेषण घट विशेष्योपस्थिति जनकत्वेन घटपदेऽपि एकार्थीभावः स्यात् इति शंकायाम् पदविशिष्टत्वं विशेष्यविशेषण भावावगाह्युपस्थिति जनकत्वम्, तत्र वैशिष्ट्यञ्च स्वघटितत्व स्वप्रयोज्या या शक्तिज्ञानीय मुख्यविशेष्यता समानाधिकरणा उपस्थितीया विषयता तादृश विषयता निरूपिताया शक्तिज्ञानीय मुख्य विशेष्यता समानाधिकरणा विषयता तत्प्रयोजकपदघटितत्वस्वप्रयोज्योपस्थितीय विषयत्वानिरूपित विषयता प्रयोजकपदाः घटितत्वेनस्त्रितय सम्बन्धेन । राजपुरुष इत्यादि समासेहि राजपुरुषादि पदेन राजत्वावच्छिन्न विषयतानिरूपितपुरुषत्वावच्छिन्न विषयकोपस्थितिर्भवति, तत्र राजपदस्य राजत्वावच्छिन्न विषयता प्रयोजकत्वं पुरुषपदस्य पुरुषत्वावच्छिन्नविषयता प्रयोजकत्वमिति लक्षणसमन्वयो भवति ।

तथाहि—स्वं राजपदं तद् घटितत्वं राजपुरुष इत्यस्य, एवं स्वं राजपदं तत्प्रयोज्या तादृशी विषयता राजनिष्ठा, तन्निरूपिता पुरुषनिष्ठा विषयता, तत्प्रयोजकत्वं पुरुषपदस्य, तद् घटितत्वं राजपुरुष इत्यस्य, एवं स्वं राजपदं तत्प्रयोज्या उपस्थितीया राजनिष्ठा विषयता

तद् निरूपिता उदासीनघटनिष्ठाविषयता तत्प्रयोजकं घटपदं तद् घटितत्वं राजपुरुष इत्यस्य, राज्ञः पुरुषः इति वाक्ये तु राजनिष्ठ पुरुषनिष्ठ विषयतयोः शाब्दबोधीययोः निरूप्यनिरूपकभावेऽपि उपस्थितीययोस्तयोः निरूप्यनिरूपकभावाभावेन नातिप्रसंगः ।

घटपदेऽपि स्वं घटपद तत्र घटत्वनिष्ठ घटनिष्ठविषयतयोर्निरूप्य-निरूपकभावेऽपि घटत्वनिष्ठविषयतायाः शक्तिज्ञानीय मुख्य विषयता-समानाधिकरणत्वाभावान्नातिव्याप्तिः । द्वितीय सम्बन्धास्वीकारेतु घटपदेऽपि एकार्थी भावः स्यात् । तृतीयसम्बन्धघटकविषयतायामुपस्थि-तीयत्वविशेषणताऽस्वीकारेतु पुरुषनिष्ठविषयता निरूपितत्वेन सुन्दर-परप्रयोज्यविषयतायाः शाब्दबोधीयायास्तत्रातिव्याप्तिः स्यात् । द्वितीयसम्बन्ध घटकविषयतायामुपस्थितीयत्वानिवेशे वाक्येऽप्यति-व्याप्तिः स्यात् । द्वितीयसम्बन्धे विषयतयोः शक्तिज्ञानीयमुख्यविशे-ष्यता समानाधिकरणत्वनिवेशे घटत्वनिष्ठविषयतानिरूपित घटनिष्ठ-विषयताप्रयोजकघटपदघटितत्वाद् घटपदेऽतिव्याप्तिः स्यात् । एवं मुख्यत्वानिवेशे लोमवत्वनिष्ठप्रकारतानिरूपितलांगूलनिष्ठविशेष्यता-मादाय पशुपदेऽतिव्याप्तिः स्यात् । प्रथम सम्बन्धास्वीकारे राजपुरुष इति समास घटकपुरुषपदेऽप्यतिव्याप्तिः स्यात् राजपदप्रयोज्यविष-यतानिरूपित विषयताप्रयोजकत्वात् ।

अथवा—

पदत्वप्रयोजक प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदक संज्ञीयोद्देश्यतावच्छेदक सम्पादकशास्त्रविधेयत्वरूपं पदविधित्वम् । एवञ्च पदत्व प्रयोजकप्रत्यय सुप्तिङ् रूपः तनिष्ठविधेयता निरूपितो-द्देश्यतावच्छेदकीभूतसंज्ञा प्रातिपदिकसंज्ञा धातुसंज्ञाचेति तादृश संज्ञा-निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकं, कृदन्तत्वं तद्धितान्तत्वंसमा-सत्वं-सनाद्यन्तत्वञ्च, तत्सम्पादकशास्त्रं कृद्विधायकं तद्धितविधायकं समासविधायकं सनादिविधायकञ्चेति, तद् विधेयत्वं कृत्तद्धिसमासा-दीनामिति पदविधित्वेन सामर्थ्याश्रितत्वन्तेषाम् । एकशेषेतादृशोक्तपद-विधि वाऽभावेऽपि अपवाद एकशेषो द्वन्दं वाधिष्यते 'इतिभाष्येण द्वन्द-विषयकतयासामर्थ्याश्रितत्वलाभेन वृत्तित्वव्यवहारः । अतएव समासे-ऽङ्गुलेः संगः इत्यत्र समासग्रहणस्य पदान्तवद्वा इत्यत्रान्त ग्रहणस्य च

न वैयर्थ्यम्। एवञ्च न पदान्ताट्टोरनाम् 'इत्यादीनामसामर्थ्येऽपि प्रवृत्तिः सिद्धयति, वृत्तावेकार्थीभावरूपसामर्थ्यं स्वीकारात् राजपुरुषादि वृत्तिघटकराजादिपदार्थे न ऋद्धस्येत्यादि विशेणान्वयः पदार्थः पदार्थे-नान्वेति नतु पदार्थैकदेशेनेति अनुभव सिद्धान्तात्।

पदार्थश्च स्वीयवृत्तिग्रहविशेष्य एव, एवञ्च सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगोनेति पूर्वमेवप्रोक्तमित्यादि समासादि वृत्तौ विशिष्टशक्तिस्वीकारे वैयाकरणनये न्याय सिद्धमेव। अतएव अथैत-स्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थी भावकृतो विशेषः स वक्तव्यः इति भाष्यकारोक्तिः संगच्छते।

एकार्थीभावरूपसामर्थ्यंपक्षे तादृशविशेषस्यावक्तव्यत्वसूच-नात्। इत्थमत्रनाशकनीयं यत् देवदत्तस्यगुरुकुलम् चैत्रस्य दास भार्या इत्यादौ देवदत्तस्यगुरुत्वे, चैत्रस्य दासत्वे चान्वयदर्शनेनोक्त न्याय-विरोधात् तादृशवाक्यानामप्रामाण्यापत्तिः, यतस्तत्र स्वनिरूपकां-कांक्षाव्याप्य ज्ञानविषयत्वरूप नित्यसाकांक्षत्वानाक्रान्तपदार्थैक देशान्वयस्थलेऽनित्यत्वेन तन्न्यायाप्रवृत्तेः। न च समाससमुदाय शक्त्या बोधकत्वेऽवयवस्यानर्थकतयाऽर्थवन्महदादीनामात्वादिविधायकशास्त्रा प्रवृत्त्यामहादेवः अष्टाकपालः इत्यादावात्वानुपपत्तिरिति न शंक्या यतः सूत्रारम्भसामर्थ्येन भूतपूर्वगत्याश्रयणेनादोषात्। तथा च वृत्तौ सत्यामुपस्थित्यजनकत्वेऽपि व्यपेक्षाकालिकार्थवत्वमादायाऽऽत्वादि-कार्ये दोषा भावादिति भावः।

समर्थः पदविधिरिति सूत्रे सामर्थ्यमेकार्थी भावात्मकं तच्चैकधर्मा-वच्छिन्नशक्तिमत्वम्, तथा च समासवृत्तौ शक्तिरवश्यमभ्युप-गन्तव्येति राजपदस्य सम्बन्धिनि लक्षणाभ्युपगमो नैयायिकानां व्यर्थं एव, शक्त्यैव राजसम्बन्धि पुरुषस्य बोधसम्भवात्। एवं समास विग्रहवाक्ययोः समानार्थकत्वमप्युपपद्यते। नापि नामार्थयोरभेदेन नियमभंगः, न च समासावयव प्रत्येकं पदात् क्लृप्तशक्तिकाच्छक्त्या लक्षणया वा बोधसम्भवेऽतिरिक्तशक्तिर्न कल्प्या।

अनन्य लभ्यो हि शब्दार्थं इतिन्यायाद्धिति वाच्यम्, शक्त्यभावे हि प्रातिपदिक संज्ञा-प्राचीन ( प्रातिपदिकावयव ) विभक्तिलोपोविभ-क्त्यन्तरोत्पत्ति कार्यञ्च न स्यात्।

अर्थवदिति सूत्रेऽर्थवत्वस्य प्राचीनवैयाकरणमते वृत्तिमत्वलक्षणस्यैव सद्भावादिति चेन्न-अर्थवदितिसूत्रेऽर्थवत्वन्नवृत्तित्त्वं किन्तु वृत्तिमद्विषयकप्रतीत्यविषयत्वम्। वृत्तिमत्संघातरूपे समादौ वृत्ति विनैवार्थवत्वोपपत्तेः प्रातिपदिक संज्ञाऽनुपपत्त्यभावात्। न च निषेधद्वयप्रवेशोव्यर्थः वृत्तिमद् विषयक प्रतीतिविषयत्वस्यैव सम्यक्त्वादितिवाच्यम्। समूहालम्बनमादाय निरर्थकेऽपि अर्थवत्वं स्यादतो निषेधद्वय गर्भतासम्यक्। न चैवं घनं वनमित्यादौ प्रत्येकं वर्णस्य प्रातिपदिकसंज्ञास्यात् नकारलोपश्च स्यादिति वाच्यम्, अर्थवत्वं हि समुदाय शक्त्या विवक्षितम्? अवयव शक्त्या वा? नाद्यः तादृशशक्तिमत्समुदाय विषयक प्रत्येकं विषयक प्रतीतिविषयत्वात् प्रत्येकस्य, न द्वितीयः शाब्दबोधानुकूलपदार्थोपस्थितिजनकवृत्तेरेव प्रवेश्यत्वात् समुदायघटकप्रत्येकवर्णशक्तेः शाब्दबोधानुकूल पदार्थोपस्थित्यजनकत्वात्। अत्रेदं बोध्यं।समासे राजसम्बन्धिनि पुरुषादौ शक्तिपक्षे विशिष्टस्य शशशृंगादि पदार्थस्यालीकतया शक्त्यसम्भवेन समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वरूपैकार्थीभावविरहेण समासानुपपत्तिः प्रातिपदिकसंज्ञानुपपत्तिश्च सिद्धान्ते स्वार्थे पर्यवसायिनां पदानामाकांक्षादिवशात् परस्परसम्बन्धरूपव्यपेक्षारूपसामर्थ्यमादाय समासादि रूपपद्यते। न अन्यथाख्यात्युपनीते शशशृंगशक्तिसम्भव इति वाच्यम्, असत्पदार्थे ज्ञानकरणेन्द्रियव्यापाराभावेनासत् ख्यातेरस्वीकारात् किञ्च शक्तेरज्ञाताया अनुपयोगित्वेन तस्याज्ञानमपेक्षितम् तच्च न सम्भवति अलीके व्यापाराभावात् परबुद्धेरप्रत्यक्षत्वाच्च। न च शशशृंगादिशब्द उच्चारयितृ तात्पर्यको बालशुकादिशब्दभिन्नवाक्यत्वादित्यनुमानेन तात्पर्यसिद्धौ तात्पर्यं सविषयकमित्यनुमानेन तात्पर्यविषये सिद्धे शशशृंगशब्दसंकेतग्रहात् सामान्यत उपस्थितिरितिवाच्यम्, तादृशसंकेतग्रहस्य शब्दानुपयोगित्वात् शाब्दबोधानुपयोगित्वाच्च। अन्यथा गोत्वविशिष्टेशक्तिमजानतः सामान्यतः शक्तिग्रहात् शाब्दबोधप्रसंगात्। न चान्यत्र तात्पर्यविषयत्वेन सामान्यतः संकेतग्रहस्य शाब्दबोधानुपयोगित्वेऽपिप्रकृते निर्धर्मकेऽलीके तात्पर्यं विषयत्वोपलक्षित एव शक्तिग्रहः शाब्दबोधोपयोगी, अतो विशेषधर्मं विनैव कल्पनामात्र विषयः शशशृंगादि पदवाच्यः इति वक्तव्यम् कूर्मरोमशशविषाणयोः ज्ञानस्य निर्विषयकतया तद् विषयस्य व्यावर्तकाऽभावेन

कूर्मरोमशशशृंगादि पदजन्यबुद्धेर्वैलक्षण्यस्यानुभवसिद्धस्यापलापापत्तेः तत्र शक्ति ग्रहस्यैवासम्भवात् ।

अत्र समर्थः पदविधिरिति सूत्रविषये भाष्यकारीय विचारसरणि-रुपस्थाप्यते, तथाहि-समर्थः, पदविधिरितिसूत्रं भाष्यकारेणप्रत्याख्यातम्, प्रत्याख्याय च फलैक्ये प्रत्याख्यानं न तु फलभेदे 'इतिदिशा क्रियमाणेऽपि समर्थग्रहणे समर्थमित्युच्यते किं नाम समर्थमितिऽविचारणायाम् वार्तिकानामुपोद्घातः प्रदर्शितः तद् ग्रहणाऽग्रहणविषयकः तत्र कैयटेन प्रदीपेनागोजीभट्टेनोद्योते च समर्थसूत्रमबुधबोधनार्थमित्युक्तवन्तौ । सर्वत्रागमकत्वाऽगमकत्वे लक्षणैकचक्षुष्कै दुर्ज्ञेये अतस्तदर्थं सूत्रमावश्यकमेवाभाति, तस्मादेव शब्दनित्याऽनित्यत्ववादोऽपि च समर्थितो भवति ।

शाब्दिक राद्धान्ते नित्यवादे तु लक्ष्यभूताः कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः समस्ताश्चापिशब्दा नित्याः असमस्ताश्चापि शब्दा नित्याः परन्तत्रतत्र वृत्तिसु वृत्तितरवृत्तितमेष्वपि च यथालक्ष्यं प्रक्रियाः सर्वा अपि काल्पनिकताम्भजन्ते, येन शब्दानित्यत्ववादोऽपि सुस्थिरीकृत इवाभाति तत्तच्छास्त्रप्रवर्तकाचार्याणां सूत्रकार-वार्तिककार-भाष्यकारस्तदनुयायिनाञ्च विविधप्रक्रियाघटितशास्त्रवचनमभ्युपगम्यैव ।

इदं खलु तात्पर्यं शास्त्राकाराणां पाणिनिप्रभृतीनामेव, तेनैवार्थाभिधानस्य स्वाभाविकत्वपक्षे महाविभाषा न कर्तव्या, नित्यं क्रीडाजीविकयोरित्यादौ नित्यग्रहणञ्च न कर्तव्यम्, समासनिषेधशास्त्राणिच न कर्तव्यानि, इत्यादिप्रसंगे एतानि सर्वाणि कथन्न कार्याणि ? इति जिज्ञासायाम् व्यपेक्षायां वाक्यस्य, एकार्थीभावे तु समास्येष्टत्वात् । तदैव शाब्दिकानां कार्यवादे महाविभाषादिकं सर्वं खलु कर्तव्यं भवति । तदतिरिक्तानि तु सर्वाण्यपि सौत्राद्यात्मकानि रूपाणि नित्यान्येव । शास्त्रकारैः अनूद्यमानाः शास्त्ररूपशब्दैः तद्घटकशब्दैश्च सर्वेऽपि शब्दार्थाश्च अनूद्यमाना नित्यताम्भजन्ते ।

वस्तुतश्शास्त्रकारैश्शास्त्ररूपशब्दैः तद्घटकशब्दैश्च नित्या एव शब्दाअर्थाश्च अनुद्यमानाः प्रोच्यन्ते, इत्येवतात्पर्यमत्रा अर्था-

देशश्च विधेय एव भवति महर्षिभिराकल्पं प्रति कल्पञ्चानुभूयते। अत एव पक्षोऽत्र प्रदर्श्यंते परार्थाभिधानं वृत्तिरिति, अन्य ये वृत्तिं वर्तयन्ति किं त आहुः? भाष्ये कार्यशाब्दिकानामेव, कार्यशाब्दिका वाक्यादेवविकल्पेन वृत्तिं निष्पाद्यां भज्यमानाः किं वृत्तेर्लक्षणं कुर्वन्ति? इति प्रश्नः न इत्यशाब्दिकास्तु वृत्तिं वाक्ये नित्यविविक्त-विषये मन्यन्ते इति कैयटेन प्रत्यपादि।

अत्रभाष्य कैयटयोरयं भावः ये हि एकार्थीभावरूपां वृत्ति शास्त्रैक-समधिगम्यां न तु स्वाभाविकीं मन्वते, तेषां कार्यशाब्दिकानां मते सुबन्तं सुबन्तेनसामर्थ्यवद्-भवति, समर्थञ्च समाससंज्ञम्, एवञ्च-विभाषाधिकारादि सर्वं चारितार्थमेव, समासादौ वृत्तिव्यवहारस्तु वृत्ति वृत्तिमतोरभेदोपचारात्।

शब्दस्य नित्यत्वे तदर्थं सम्बन्धस्यापि नित्यतया तन्मते उभयोरपि लोकत एव विभिन्नविषयत्वेन सिद्ध्या एकोपस्थितिजनकतावत् सामर्थ्यं लोकतः सिद्धम्, परन्तत्र शास्त्रेण धर्मनियमः क्रियते। अत्र स्वाभाविकत्वमते नैत्यशाब्दिकानां मते, एकार्थीभावरूपावृत्तिर्लोकतः सिद्धेति। अतोऽत्र न किञ्चिद् वक्तव्यम्, ये तु शास्त्रनिष्पाद्यां मन्वते किन्ते तत्स्वरूपं शास्त्रविधानयोग्यमाहुः इतिप्रश्नतात्पर्यमत्र।

तथा च कार्यशाब्दिकानां मते शब्दानां शास्त्रकार्यत्वात् तेषां लोके सिद्ध्यभावात्, अर्थसम्बन्धस्य लोकतो ज्ञानासम्भवेन तस्यापि शास्त्र-विधेयत्वमेव वाच्यम्। एवञ्च तदा तद् विकल्पादिबोधकतया विभाषा पदादि चरितार्थमपि सम्यक्। सामर्थ्यं रूपवृत्ते लक्षणापि बोधनीया भवति। तेषां कार्यं शाब्दिकानां मते परार्थाभिधानवृत्तिरिति वृत्ते-र्लक्षणं कृतम्।

इत्थमत्र परार्थाभिधानवृत्तिविषयकश्चर्चाचर्च्यते। पूर्वमपि कृत्तद्धितैकशेष सनाद्यन्त रूपावृत्तय उक्ता परमत्रसमाससमीक्षा प्रसंगे का संगतिः? इतिविचारणायां समासरूपायां वृत्तावस्यास्साक्षा-दुपादानन्नैवापलपितुं शक्यतेऽत्र पारिभाषिकं यदस्यास्स्वरूपं युक्ति-रूपपत्तिश्च सर्वं विमर्शं यथाऽऽश्रयितमेवास्ति। तथाहि—

**परार्थाभिधानंवृत्तिः**

परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सावृत्तिरित्यर्थः, यथा राजपुरुष इत्यत्रसमस्ते=परिनिष्ठिते (राजपुरुषपदे), राजपदे वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते अर्थात् प्रधानार्थक शब्दस्य, उपसर्जनशब्दस्य च यत्र समासादिषु वृत्तिव्यवहारादितिभावः, एवञ्च तन्निष्ठशब्दान्तरकरणकपदार्थाभिधायकत्वं तेषां स्वाश्रयत्वेन वृत्तिव्यवहारप्रयोजकं सामर्थ्यमिति फलीभूतन्तथ्यम्। तच्च स्वार्थविशेषणक पुरुषार्थोपस्थितौ राजपदशक्तिज्ञानस्य सहकारित्वात् सम्यग् बोध्यमस्त्येव।

भाष्ये वृत्तिवर्तनवादिनामित्यर्थकानां तेषां तत्रत्य पदस्य व्यावृत्त्यर्थं दर्शयति यथा—

अथ तेषामेवं ब्रुवतां किं जहत्स्वार्था वृत्तिः? आहोस्विदजहत्स्वार्था वृत्तिर्भवति? यद्युच्यते जहत्स्वार्थावृत्तिरिति तर्हि राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति औपगवमानय, इत्युक्तेऽपत्यमात्रस्यानयनं प्राप्नोति, नित्यशब्दवादि पक्षेतु राजपुरुषादीनि वाक्यविषय पदस्वरूपाऽवयवानि वर्णवदनर्थकोपलभ्यमानाऽत्रयवानितत्त्वतो निरवयवान्येव। केवलमसत्यप्रक्रियाऽऽश्रयेणान्वाख्यापन्ने, जहातपदानिस्वार्थंयस्यां सा जहत्स्वार्था, तत्पक्षे पुरुषमात्रबोधे राजपदोपादानमनर्थकम् इति चेत् तदा पर्यायत्वं पुरुष-राजपुरुषशब्दयोर्यावियावकशब्दयोरिव स्यादित्ययंदोषः।

यदि अजहत्स्वार्थवृत्तिस्तदा उभयोर्विद्यमानस्वार्थयोः द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति प्लक्षन्यग्रोधाविव यथा, दशायामस्यां का पुनर्वृत्तिर्न्याय्या? इत्यत्रविचारस्तु करिष्यत एव ततः पूर्वं केचिन्नित्यशब्दवादेऽपि उपलभ्यमानावयवानां नैरर्थक्ये समुदायस्य निरवयवत्वे च भानाभावं प्रोक्तवन्तः तथा तत्र न नित्यत्वहानिः शास्त्रनिष्पाद्यत्वरूपनित्यतायास्तथाप्यनपायात्। न चेदं वक्तुं शक्यं यद्भाष्ये तेषामेवं ब्रुवतामित्यत्र तेषामित्यसंगतं स्यादिति, यतः शास्त्रनिष्पाद्यत्वमत्रद्विधा सावयवस्यैव लोकसिद्धत्वेनाऽनादितया निरवयवतया वा स्वीकारात्। तत्र सावयवस्यैव लोक सिद्धत्वेनानादितयेत्य-

त्राद्यपक्षेऽजहत्स्वार्था, एव, द्वितीये निरवयवतापक्षे तु तेषामर्थभाव एवेति जहत्स्वार्था एवेति वाक्यवदेव मतभेदेननियमनात् सन्देहाभावेन तदुक्तिरितिवक्तुं योग्यत्वात्। तत्राप्यन्त्यपक्षे आरोपितमर्थवत्वादि शास्त्रप्रवृत्तिमात्रफलकं, तेन महासुन्दर इत्यादावात्ममित्यन्यवेतत्। अर्थत्यागेतु पुरुषमात्राद्यानयनापत्तिः। अत्रेत्थं व्युत्पद्यते-जहतीति-शत्रन्तं पदं बहुवचनञ्चात्र प्रयोगबहुत्वात् तदभिप्रायेण, स्वार्थं तत्त्वतः प्रसिद्धम्, जहति स्वानि पदानि यामिति जहत्स्वः एवमेतस्मिन्नुभयतो व्यवच्छिन्ने यदि स्वार्थं जहातिकामं जहातु न जातुचित् पुरुषमात्रस्यानयनं भविष्यति, एतदुक्तमुश्चरितनं यद् भाष्यवचनं जहत्स्वार्थाऽजहत्स्वार्थाविषये तस्याशयः कीदृशः ? प्रकाश्यतेऽत्र तथाहि-यदा राज्ञा तक्षा दौत्यादिकर्मणि नियुज्यते तदास्वकंकर्म जहात्येव, परं राजपुरुषमानयेत्युक्ते पुरुषमात्र स्यानयनं प्राप्नोति, औपगवमानयेत्युक्तेऽपत्यमात्रस्यानयनं प्राप्नोति, तत्रोच्यते भाष्यकारेण नैषदोषः। यदप्यसौ स्वार्थं नात्यन्ताय जहाति–'इति तत्रत्यं तात्पर्यं कैयटेन प्रकाशितं यत् त्यागमात्रमभिसन्धौ जहत्स्वार्थेत्युच्यते, न तु सर्वात्मनात्यागः परोपकाराय तस्योपादानात्। सर्वथा च स्वार्थत्यागे परोपकाराऽसम्पादनादनुपादानमेव प्रयोजनाभावात् तस्य स्यादित्यर्थं हिक्कित हसितादिकन्नजहाति तेषां प्राणिधर्मत्वात्। तत्त्यागे राजकर्मैवविच्छिद्येत्। स चार्थः परार्थविरोधी न भवति अतस्तस्यत्यागोऽपि न भवति।

राज्ञः पुरुषः इतिवाक्येऽपि राजार्थस्य विशेषणत्वात् कस्तस्यवृत्तौ विशेष इति चेत् ? वाक्ये स्वविशेषणक सम्बन्ध प्रतिपत्तौ सामर्थ्याभिघातः। समासेवृत्तावुपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्य = पुरुषरूपार्थस्य उपकारात् स्वविशेषणप्रतिपत्तौ सामर्थ्यहानिः। यदुक्तं सर्वात्मनात्यागो न भवति परोपकाराय तस्योपादानादिति तेन राजपुरुष इत्यादौ पुरुषादेरितर सम्बन्धव्यवच्छेदरूपोपकारायेत्यर्थः। हिक्कतादीनां-तक्षवृत्ति गुणानांराजकर्मानुपकारकत्वात् स विषमउपन्यासः तद्विषये-आह तेषामिति, प्राणत्यागे = प्राणापगम एव तत्त्यागात्।

अस्तु राजपुरुष इत्यादौ राजपदेन परार्थस्य पुरुष रूपार्थस्यास्कन्दने तद्विशेषणत्वेन राजपुरुषार्थोपस्थितौ राजरूपोऽर्थः स्वतो न विरोधी किन्तु स्वगतं विशेष्यत्वमेव विरोधिभूतं त्यजतीत्यर्थः। तदेव

ध्वनयन्नाचष्टे भाष्यकारो विशेषणं नामेति। अन्यथा विशेषण-विशिष्ट पुरुषोपस्थितिर्नस्यात् इत्येव तत्तात्पर्यमत्र। अमुमेवार्थं शंकोत्त-राभ्यां विशदयति वाक्येपीत्यादिना। अत इदमेवात्र वक्तव्यं यत् राजशब्दः स्वार्थनिमित्तं पुरुषार्थे विशेषमाधाय स्वार्थं जहाति न च तन्निमित्तं विशेष दर्शनं निवर्तते पुरुषे। यथाऽग्निसम्बन्धजनित पाकज-रूपादि निवृत्तिर्घटे अग्निसंयोगे निवृत्तेऽपि न भवतीत्यर्थः।

विशेषः पुरुषगतो भविष्यतीत्यर्थः। तत्र भाष्यप्रदीपे कैयटेन वृत्तावुपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्योपकारात् स्वविशेषण प्रति-पत्तौ सामर्थ्यहानिरित्युक्तम्। तत्र स्वविशेषणेति-उपलक्षणं संख्या विशेष सम्बन्धप्रतीत्यप्रतीत्योः। एवं पुरुषपदमपीतरान्वितमेवस्वार्थ-मुपस्थापयति न केवलम् अतो न भार्याया इत्याद्यन्वयस्तत्र।

अत्रायमभिप्रायो यत् पदानां तत्तद्विषयताविशिष्टेऽर्थे शक्तिः, अतएव बोधे विषयतानियमः। एवञ्च राजपदादे राजत्वनिष्ठ-प्रकारतानिरूपितविशेष्यत्वावच्छिन्नं स्वार्थः तत्र समासे विशेष्यत्वांश-त्याग इत्येतावताजहत्स्वार्थत्वमिति। अत्र च बीजंसमुदाय शक्तिरेव, एवञ्च वयवशक्ति सहकृत समुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्रत्य तथ्यम्। विशेषणं विशेषक इति सारभूतोऽर्थः अर्थादितरव्या-वर्तक इत्यर्थः। अतएव व्याचष्टे राजशब्द इति वाक्य दृष्ट स्व-जन्योपस्थित विषयार्थ निमित्तं विशषं राजसम्बन्धरूपं पुरुषपदं जन्यो-पस्थितिविषये पुरुषे आधाय पुरुषं तद् वैशिष्ट्येन पुरुषपदेनोपस्थिति-विषयं कृत्वा स्वार्थम् तस्य स्वार्थत्वं स्वजन्योपस्थितिविषयत्वं जहाति तद्वाक्यानिष्पन्नवृत्तावित्यर्थः। अयं हि वाक्याद् वृत्तेर्निष्पत्ति मन्यते। एवञ्च राजशब्दात् तदर्थ प्रतीत्यभावेऽपि तच्छब्दान्वयमात्रेण वाक्ये यादृशाविशेषणविशिष्टः पुरुषः शब्दात् प्रतीतः तादृशस्यैवात्राप्यु-पस्थितिरिति, अनुमानात्पुरुषपदस्य तथा शक्तिग्रह इति। तेन राजपद-कृतो वाक्ये पुरुषगतविशेषो भविष्यत्येव न तु निर्वत्स्यत इति। एवञ्च राज्ञो राजादि पदजन्योपस्थितिविषयत्वाऽभावेनजहत्स्वार्थ-त्वमितिबोध्यम्। यथापुष्पाणामभावेऽपिगन्धान्वयमात्रेण पूर्वतनीं पुष्पसत्तामनुभूय अनुमाय मल्लिकापुटइत्यादि व्यवहारः तथावृत्तौ-राजपदार्थाऽभावेऽपि वाक्यदृष्टसार्थक राजशब्दवर्णानुपूर्वीसत्तामात्रेण

वाक्ये यथाराजसम्बन्धवतः पुरुषस्यैव प्रतीतिस्तथा समस्ते ( राजपुरुष इत्यत्र ) इहापि राजसम्बन्धवतः पुरुषस्यैव पुरुष पदात् प्रतीतिः । तत्सादृश्यमात्रेणैवार्थंवत्त्र प्रतीत्याऽऽत्वाद्यपीति न दोषः ।

अथवा 'समर्थाऽधिकारोऽयं' वृत्तौ क्रियते इतिप्रसंगे कैयटमतमुपस्थाप्यते, तथाहि-तत्र सामर्थ्यंपदेन भेदः संसर्गौच प्रोक्तौ वर्तेते, यदि च वृत्तौभेद संसर्गौं न स्यातां तदा सामर्थ्यमेव न स्यात् तदात्मकत्वात्सामर्थ्यस्येत्यर्थः । तत्र भेदः संसर्गाविनाभावित्वादनुमीयमानसंसर्गः सामर्थ्यं संसर्गोवा भेदाविना भाव्यनुमेयभेदः, उभौ वा यौगपद्येनाश्रीयमाणौ सामर्थ्यमित्यर्थः । सामर्थ्याभावेतु राज्ञः पुरुषोऽश्वश्चेतिराज्ञः पुरुषोभार्यायाश्चेत्यपि स्यात् ।

अत एवैकार्थीभावरूपं स्वाभाविकं सामर्थ्यमाश्रयतापीदं त्ववश्यं वक्तव्यम्-भेद संसर्गवानेवार्थोवृत्त्या उपस्थाप्यते 'इति तदाहृतदात्मकत्वादिति । तेन भेद संसर्गवदर्थप्रतिपादकत्वमेवैकार्थी भावसामर्थ्यमिति । अतस्स्वत्र समानाधिकरणो राजभिन्न स्वामिक भेदो राजसंसर्गव्याप्यः । एवं वृत्त्युपस्थाप्य राजसम्बन्धाद् व्यक्तिगत राजसम्बन्धो राजभिन्न स्वामिक भेदव्याप्य इति भावः । एवञ्च भेद व्यक्तिबोधे सा राजसंसर्गवतीत्यपि तद्वती व्यक्तिरपि बुद्धैव ।

अथवा पुनरस्तु जहत्स्वार्थावृत्तिः, युक्तं पुनरिदं यदजहत्स्वार्था नाम वृत्तिः स्यात् । वाढं युक्तम्, एवं हि दृश्यते लोके भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्णं न जहाति सञ्जमायैव प्रवर्तते ।

ननु चोक्तम् उभयोर्विद्यमानयोर्द्विवचनं प्राप्नोतीति कस्याः पुनर्द्विवचनम् ? प्राप्नोति ? प्रथमायाः तर्हि न प्रथमासमर्थो राजा, षष्ठ्यास्तर्हि प्राप्नोति न षष्ठी समर्थः पुरुषः, प्रथमाया एव तर्हि ननु चोक्तम् न प्रथमा समर्थो राजेति, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः तत्र-प्रातिपदिकार्थे प्रथमेति प्रथमायाः द्विवचनं प्राप्नोति तर्हि समाधानमिदं यत् संघातस्यैक्यार्थान्नावयव संख्यातः सुषुत्पत्तिः संघातस्यैकत्वमर्थं तेनावयवसंख्यातः सुषुत्पत्तिर्न भविष्यतीति ।

अत्रेदानीं समासस्य भेदा-उपभेदाः सोदाहरणम्; तथाहि—

षोढ़ा समासः सक्षेपादष्टाविंशतिधा पुनः ।
नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ।। १ ।।
तत्राष्टधा तत्पुरुषः सप्तधाकर्मधारयः ।
सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ।। २ ।।
द्वन्दो द्विविधोऽज्ञ्योऽव्ययीभावो द्विधाम तः ।
तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् । ३ ।।
चकार बहुलो द्वन्दः स चासौ कर्मधारयः ।
यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः ।। ४ ।।
कर्तृकर्मक्रियाः युक्तः प्रयोगः स्यात्सकर्मकः ।
अकर्मकः कर्मशून्यः कर्मद्वन्दोद्विकर्मकः ।। ५ ।।

समासाः षड्विधाः तत्पुरुषः कर्मधारयोबहुव्रीहिर्द्विगुर्द्वन्दोऽव्ययीभावश्चेति भेदात् । तथाचापरमपि वचनम्—

सुपां सुपातिङानाम्ना धातुनाथ तिङांतिऽण ।
सुबन्तेनेति विज्ञेयः समासषड्विधो बुधैः ।।

समासस्तु चतुर्विधा—तथाहि

समासस्तु चतुर्धा प्रायोवादस्तथापरः ।

इत्यादिना प्राचोनोक्तसमासभेदात् तल्लक्षणानि च अव्याप्त्यतिव्याप्तिदोषैर्निराकृत्य, जहत्स्वार्थाऽजहत्स्वार्था द्वेवृत्ती तेषु नस्त्रिधा, भेदः संसर्गः, उभयञ्चेति वाच्यव्यवस्थितेरित्यनेन वृत्तिभेदान् दर्शयन् अजहत्स्त्रार्थवृत्तिपक्षे प्राचीनोक्त विलासं स्थिरीकृत्य समासे खलु भिन्नैव शक्तिः पंकजशब्दवत् बहूनां वृत्तिधर्माणां वचनैरेव साधने, स्यान्महद् गौरवमेकार्थं भावआश्रितः इत्यनेन वचनेन शाब्दिक मते-वृत्तिमात्रे एकार्थीभावात्मिका शक्तिराश्रिता मतान्तराणि खण्डितानि तथाहि—

पंकजस्थकारादि पदे यथा समुदायशक्त्या विशेषार्थस्यैव बोधः सर्वसिद्धः तथा समासादिपञ्चवृत्तिष्वपि समुदायशक्तिरवश्यंस्वीकार्या

तदैव सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगोनेति, विभाषा-वचनञ्च नापूर्वम्। अन्यथा ऋद्धस्य राज्ञः पुरुषः इतिवत् ऋद्धस्य राजपुरुष इति स्यात्। वैयाकरणमते तु राज्ञः पदार्थैक देशतया न तत्रान्वयप्रसक्तिः। किञ्च घवखदिरादौ इतरेतरयोगाद्यर्थं प्रतीतये तेषां प्रयोगनिषेधावश्यम्भावेन गौरवमापतेत्। अषष्ठ्यर्थ बहुव्रीहौ प्राप्तोदकादौ अभिमतान्वयसिद्धये नामार्थधात्वर्थयोर्भेदेनान्वयो व्युत्पन्न इत्यादि व्युत्पत्तिभञ्जनञ्च न कार्यं भवतीति समासशक्ति-रेवाभ्युपगन्तव्या, अत एव समासे प्रातिपदिककार्याणि सिद्धयन्ति। अस्त्वत्र समास विषयको विचारो यथामति शास्त्रानुरोधिप्रकाशितः। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्दसमासानां चतुर्णा भेदोपभेदाश्चापि विवेचनीयाः सन्त्येव। तत्र तत्र यल्लक्षणं पूर्वपदार्थप्रधानोऽव्ययीभावः उत्तरपदार्थप्रधानस्तत्पुरुषोऽन्यपदार्थप्रधानोबहुव्रीहिः उभयपदार्थं प्रधानः समस्समान समस्तपदार्थ प्रधानो वा द्वन्द इति लक्षणं सर्वत्र प्रायिकत्वं विवक्षितमेव।

अत्र प्रत्येकं समासभेदः समीक्ष्यते। द्विगुः कर्मधारयो तत्पुरुषभेदौ, समासार्थावियवबोधकं वाक्यं विवक्षितम् इति, तत्राष्टधा तत्पुरुषक्रमः, प्रथमा तत्पुरुषः द्वितीया तत्पुरुषस्तृतीयातत्पुरुषश्चतुर्थीतत्पुरुषः पञ्च-मीतत्पुरुषः षष्ठीतत्पुरुषः सप्तमीतत्पुरुषो नञ् तत्पुरुषश्चेति। तत्र प्रथमा तत्पुरुषो यथा अर्धं पिप्पल्याः अर्धपिप्पली, पूर्वं कायस्येति पूर्वकायः, द्वितीया तत्पुरुषो यथा कृष्णश्रितः कृष्णश्रि इत्यादि। तृतीया तत्पुरुषः शंकुलया खण्डः शंकुलाखण्डः इत्यादि—चतुर्थी तत्पुरुषो यूपाय दारु यूपदारुः इत्यादि। पञ्चमी तत्पुरुषो यथा अर्थात् अपेतः अर्थापेत इत्यादिः। षष्ठीतत्पुरुषः कृष्णस्य भक्त कृष्णभक्त इत्यादिः। सप्तमी तत्पुरुषो यथा कर्माणि कुशल कर्मकुशल इत्यादि। नञ् तत्पुरुष यथा न ब्राह्मणः अब्राह्मण इत्यादि।

तत्र कर्मधारयो यथा—

स च कर्मधारयो विशेषण पूर्वपदो, विशेष्य पूर्वपदो विशेषणोभय-पद उपमानपूर्वपद उपमानोत्तरपद सम्भावनापूर्वपदोऽवधारणा पूर्वपश्चेति भेदात् सप्तविधः। विशेषणपूर्वपदो यथा कृष्णश्चासौ सर्पश्च कृष्णसर्पः, एवं कृष्णौ च तौ सर्पौ कृष्णश्च ते सर्पाश्च कृष्णसर्पाः रक्तश्चासौ लता च रक्तलता प्रभृतयः।

विशेष्य पूर्वंपदः कर्मंधारयो यथा-वैयाकरणश्चासौरवसूचिश्च वैयाकरणरवसूचिः। गोपालश्चासौबालश्च गोपालवालः इत्यादयः। विशेषणोभयपदः कर्मंधारयो यथा-शीतञ्चतप्त उष्णञ्च शीतोष्णम्। उपमानपूर्वंपदः कर्मंधारयो यथा मेघ इव श्यामः मेघश्यामः। कम्बुवत् ग्रीवा कम्बुग्रीवा। उपमानोत्तरपदः कर्मंधारयो यथा पुरुषः व्याघ्र इव पुरुषव्याघ्रः, नरः सिंह इव नरसिंहः, सम्भावनापूर्वंपदः कर्मंधारयो—

यथा गुण इति, बुद्धिः गुणबुद्धिः, अवधारणा पदः कर्मंधारयो-यथा विद्यैव धनं विद्याधनम् अविद्याधनम् अविद्यैवश्रृंखला अविद्या-श्रृंखला, मध्यमपदलोपीसमासो यथा शाकप्रियः पार्थिवः शाकपार्थिवः

अथ बहुव्रीहिं

स च द्विपदः, बहुपदः, सहपूर्वंपदः, संख्योत्तरपदः, संख्योभयपदो, व्यतिहारलक्षणो, दिगन्तरालक्षणश्चेति भेदात् सप्तविधः ? द्विपदबहु-व्रीहिर्यंत् चित्रागावो यस्य स चित्रगुः, गोपः, प्राप्तमुदकं यत् सप्राप्तोदको ग्रामः भुक्तमोदनं येन स भुक्तोदनो देवदत्तप्रभृतयः। निर्जितः कामो येन निर्जितकामः, विभक्तं धनं यैस्ते विभक्तधनाः, बन्धवः, उद्धृतं धनं यस्मात् तत् उद्धृतधनं कुण्डलम्। चक्रं पाणौ यस्य स चक्रपाणिर्हरिः। इत्येवं द्विपद बहुव्रीहि परिनिष्ठितानि उदाहरणानि।

बहुपदो बहुव्रीहिर्यंथा—अधिकउन्नतोंऽशो यस्य अधिकोन्न-तांसः, सहपूर्वो यथा—सहकृष्णेनवर्तत इति सकृष्णः, सहपुत्रेण सपुत्रः। संख्योत्तरपदो यथा—दशानां समीपे ये सन्ति ते उपदशाः, संख्योभय-पदो यथा द्वौ वा त्रयो द्वित्राः। व्यतिहारलक्षणे यथा केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तंमितिकेशाकेशियुद्धम्। दिगन्तराललक्षणो यथा-दक्षिणस्याः पूर्वस्याश्चदिशोऽन्तरालम्, दक्षिणपूर्वा प्रभृतयो बहुव्रीहि-रुदाहरणानि।

द्विगुसमासो यथा—

स द्विविधः एकद्भावी, अनेकवद् भावी चेति एकवद्भावो द्विगुर्यंथा त्रयाणां श्रृंगाणां समाहारस्त्रिश्रृंगम्। पञ्चानां फलानां समाहारः पञ्चफली।

अनेकवद्भावी द्विगुर्यथा सप्त च ते ऋषयश्च सप्तर्षयः।

**अथ द्वन्द्वः**

द्वन्दोहि द्विविधः इतरेतरयोगसमाहारभेदात्।

इतरेयोगोनाम इतरस्य इतरस्मिन् योगः सम्बन्ध इतीतरेतरयोगः यथा रामश्च लक्ष्मणश्च रामलक्ष्मणौ, प्लक्षश्च न्यग्रोधश्च प्लक्ष-न्यग्रोधौ। समाहार द्वन्दो यथा–हरिश्च हरश्च गुरुश्च एषां समाहारः हरिहरगुरुः, प्रणितूर्यसेनाङ्गानां द्वन्दैकवद्भावो यथा प्राण्यंगे यथा पाणो च पादौच मुखञ्च पाणिपादमुखम्।

तूर्यगे यथा—मार्दङ्गिकश्च वैणविकश्च मार्दङ्गिकवैणविकम्।

शंखश्च पटहश्च शंखपटहम्। सेनांगे यथा—राजन्याश्च रथाश्च अश्वाश्च राजन्यरथाश्वम्।

**अव्ययीभावः**

स यथा—तटं-तटं प्रत्यनुतटम्, गिरि-गिरि प्रत्यनुगिरि, कृष्णस्य समीपे उपकृष्णम्।

अलुक समासो यथा—

वने चरतीति वनेचरः पङ्के रोहतीति पंकेरुहः।

लुकसमासश्च तनुरेव लता तनुलता।

कृष्णा एव मेघाः कृष्णमेघाः, मत्वर्थीयो यथा—बुद्धिरस्यास्तीति बुद्धिमान्, धनमस्यास्तीति धनवान्। धीरस्य भावो धीरता।

जनानां समूहो जनता। इत्थमत्र विमृष्टं यथामति विज्ञानां सेवायै।

उदाहरणानि तु यथासमासं यथाग्रन्थं बहुत्र्वर्तंते। संकेत मात्रमत्र प्रस्तुतम्।

कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाश्चतस्रो वृतयो वर्तन्ते तत्रत्यमेव-तत्त्वमिह सोपोद्घातं विचारयितुं यथामति। उपस्थाप्यते यथा–तत्रपो-

पदं सप्तमीस्थम् 'इति सूत्रे उपपदसंज्ञायां समर्थवचनमिति वार्तिकं सूत्रयन् वार्तिककारः समर्थः पदविधिरिति सूत्रानुपस्थितिं मनुते। उपपदसंज्ञाविधायकस्यास्य सूत्रस्य पदविधित्वाभावात् समर्थः पदविधिरिति शास्त्राविषयत्वात्।

चतस्र एव वृत्तयः सिद्धान्तसिद्धाः। अत्र विषये भगवान् भाष्यकारः पक्षमेनमुपस्थापयन्नभिभाषते यत् समर्थ ग्रहणं कर्त्तव्यम्? न कर्त्तव्यम्। धातोरिति वर्तते, धातोः कर्मण्यण् भवति तत्र सम्बन्धादेतद्गन्तव्यं यत् धातोर्यत् ग्तकर्मेत्यादिना। यावता चेदानीं पदगन्धोऽस्ति (अर्थात् पदसम्बन्धः) पदविधिरयं भवति। पदविधश्च समर्थानां भवति तत्रासामर्थ्यान्न भविष्यति 'इत्यादिनाच तद्वार्तिकं प्रत्याचख्यौ। तथा च आहर कुम्भं, करोति कटम् इत्यत्र यद्धातोर्यत् कर्म तस्मिन्नुपपदे इत्यर्थ स्वीकारेण कुम्भरूपकर्मणः करोतिनासामर्थ्याभावात् अण् प्रत्ययाभावे च उपपद संज्ञापि फलाभावान्नेति। 'उपपद संज्ञायां समर्थवचनमनर्थकम्' इति च तत्रोक्तम्। एवं सत्यपि च्यवन्तस्थले अकुम्भं कुम्भं करोति-कुम्भी करोति मृदमित्यत्र अण् प्रत्ययोत्पत्तिमाशंक्य न भवितव्यम् किं कारणम्? प्रकृतिविवक्षितत्वात्। प्रकृतिविपक्षायां च्विर्विधीयते। तच्च सापेक्षम् सापेक्षञ्चासमर्थं भवति-इति भाष्योक्तया विकारेण प्रकृतेरपेक्षणात् सापेक्षत्वेऽसामर्थ्यात् प्रत्ययोत्पत्तिर्न भविष्यति।

यद्युच्यतेऽत्र नित्य सापेक्षत्वेनासामर्थ्यादत्र अण्प्रत्ययः स्यात्, प्रकृतेरनपेक्षायाँ च्वेरभावेन च्व्यन्तस्य नित्यसापेक्षताया उपपादनादिति चेन्न नित्यसापेक्षत्वस्य वृत्तावप्रयोजकत्वेन गमकत्वस्यैववृत्तिप्रयोजकत्वात्। अतएव कुम्भीकरोति मृदमित्यत्र अण् प्रत्ययाभावमुपपाद्य तत्समकक्षस्थले काशकटीकारमित्यत्र अण् प्रत्ययो भगवता भाष्यकारेणोपपादितः। उभयोः साम्येऽपि मृत्कुम्भीकारः इत्यनयोरगमकत्वात् प्रत्ययानुत्पादः। काशकटीकार इत्यस्य तथा बोधजनकत्वेनसंग्रहीतत्वात् तत्समानार्थकस्य काशानां कटीकार इत्यस्य तु अगमकत्वादसाधुत्वमेव। उक्तञ्च तत्र भाष्ये—न तर्हीदानीमिदं भवति इच्छाम्यहं काशकटीकारमिति। इष्टमेवैतद् गोनर्दीयस्येति। तथा च काशान् कटीकरोति इत्यत्रत्विष्ट्या अण् प्रत्ययो भवति। तस्मिन्नुपपदे काश शब्दात् कृद्‌योगे षष्ठी, तस्याः षष्ठीति समासः समास

रूपस्यैव च इष्टत्वेनोपात्तत्वात् काशान् कटीकारः इति काशानां कटीकारः इति च न भवति इति कैयटोपि प्रदीपे प्रोक्तवान् ।

यद्यपि सनः पदविधित्वाभावः पदोद्देश्यक विधित्वा भावात् तथापि वा वचनानर्थक्यं च तत्र नित्यत्वात्सनः इतिवार्तिके वा वचनं चानर्थकम् किं कारणम् ? तत्रनित्यत्वात्सनः, इह द्वौ पक्षौ, वृत्तिपक्षश्चावृत्तिपक्षश्च स्वभावतश्चैतद् भवति । वाक्यञ्च प्रत्ययश्च, तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्तो वा वचनेन किमन्यच्छक्यमभिसम्बन्धमन्यदतः संज्ञायाः, न च संज्ञायाः भावाभावाविष्यते ? तस्मान्नार्थेन वा चनेन इति भाष्ये वावचनानर्थक्यञ्चेति प्रतीकमादाय **वृत्तेरेकार्थीभावविषयत्वात्** व्यपेक्षाविषयत्वाच्च वाक्यस्य, भिन्नार्थत्वात् बाध्यबाधकभावाप्रसंगात् इति प्रदीपे वृत्तेरितिप्रतीकोपारिनन्वस्य पदविधित्वाभावात् समर्थं परिभाषानुपस्थितौ कथमस्यैकार्थीभाव विषयत्वम् ? इति चेन्न भाष्यप्रामाण्यादस्याप्येकार्थीभाव एव प्रवृत्तेः इति उद्योतवचनेन नागेशीयेन सनादीनामपि पदविधित्वमभ्युपगतमेव ।

नैतावताऽलं विमर्शेन किन्तु तस्य भावस्त्वतलौ इत्यादिषु तद्धितेषु सामर्थ्यस्योपगमात् तद्धितस्यापि वृत्तित्वमुपपादितम् विषयेऽस्मिन् वाक्यपदीये मूले—न हि कृत्तद्धिति समासैक-शेष सनाद्यन्तधातु रूपाः पञ्चवृत्तयो निर्दिष्टाः सन्ति अपितु-वृत्तिविमर्शप्रकरणसमालोचनया तद्धितसमास सनाद्यन्त धातुरूपास्तिस्र एववृत्तयः प्रतीयन्ते ।

अत्र भाष्यसम्मतिरप्येतादृशी एव प्रतीयते । यद्यपि नागेशभट्ट प्रभृतिभिश्चतस्रोवृत्तयः प्रदर्शिता एकशेषं विहाय, तथापि तत् भाष्यासम्मतत्वात् सर्वथा हेयमेव ।

वस्तुतो भाष्यसूचितदिशा कृद् वृत्तिः परित्यक्ताः, तस्य समासेनैव गतार्थत्वात् । एवंसति तद्धितसमास सनाद्यन्तधातुरूपास्तिस्रो वृत्तयोऽभ्युपगताः तथासति पार्थक्येन गणनमयुक्तमेव प्रतिभाति । मूलकेनोपदंशं भुंक्ते इत्यादौ समासाभावेऽपि कथं वृत्तित्वम् इति कैश्चिदुच्यते । वृत्तिसमानार्थकतया आरोपितवृत्तित्वमादाय तद्व्यवहारः । कुम्भकारादिष्वेव सामर्थ्यस्यापेक्षितत्वात् । तस्य

च समासेनैव गतार्थत्वात् ।

**भाष्यकृत: तुसमर्थ:- पद्विधि: इतिसूत्रं प्रत्याख्यातम् प्रत्याख्याय** च-अथक्रियमाणेऽपि समर्थग्रहणे समर्थमित्युच्यते, किं समर्थन्नाम ? इत्यादिना वार्तिकानामुपोद्घात: प्रदर्शित:। इत: पूर्वं भाष्यग्रन्थो गोनर्दीयस्य स्वत्वम्। कैयटीय प्रदीपे नागेशीयोद्योते चापि समर्थ सूत्रमवुधबोधनार्थमपेक्ष्यते। सर्वत्रागमकत्वागमकत्वे लक्षणैकच क्षुष्कैर्दुर्ज्ञेये, अतस्तदर्थं सूत्रमावश्यकमेवाभाति। तस्मादेवप्रदीपोद्यो तयोस्तु इतो हि पूर्वो ग्रन्थो वक्ष्यमाण ग्रन्थस्य सम् भूतोऽर्थं इति स्थिरीकर्तुं शक्यत एव।

**वक्तव्यो विषय:**

अर्थाभिधानस्य स्वाभाविकत्वपक्षे महाविभाषा न कर्तव्या। नित्यं क्रीडाजीविकयो:। इत्यादौ नित्यग्रहणञ्च न कार्यम् समास-निषेधशास्त्राण्यणि न कर्तव्यानि। कथमितिचेत् व्यपेक्षायां वाक्यस्य, एकार्थी भावेतु समास्येष्टत्वात्। तथा शाब्दिकानां कार्यवादे महाविभाषादिकं कर्तव्यं भवति। अर्थादेशश्च विधेय एव पक्षोऽत्र प्रदर्श्यते तथा चोक्तम् अद्य ये वृत्ति वर्तयन्ति किं त आहु: भाष्ये, कार्यशब्दिकानामेव-कार्यशब्दिका वाक्यादेव विकल्पेन वृत्तिनिष्पाद्यां मन्यमाना: किं वृत्तेर्लक्षणम् कुर्वन्तीति प्रश्न: ? नेत्यशाब्दिकस्तुवृत्ति वाक्ये नित्ये विविक्तविषये मन्यन्ते इति कैयटेनप्रत्यपादि।

अत्र भाष्य कैयटयोरयं भाव: ये हि एकार्थी भावरूपां वृत्ति शास्त्रैक समधिगम्यां न तु स्वाभाविकीं मन्यन्ते तेषां कार्यशाब्दिकानां मते सुवन्तं सुबन्तेन सामर्थ्यवद् भवति, समर्थञ्च समास सञ्ज्ञम्। एवञ्च विभाषाधिकारादि सर्वं चरितार्थम्। समासादौ वृत्ति व्यवहारस्तु वृत्ति वृत्ति मतोरभेदोपचारात्।

शब्दस्य नित्यत्वे तदर्थसम्बन्धस्यापि नित्यततया तन्मते उभयो-रपिलोकत एव विभिन्न विषयत्वेन सिद्धया एकोपस्थिति जनकता-वत्समुदायस्यैव वृत्तित्वेन तद् गतैकोपस्थितजनकतावत् सामर्थ्यंल्लोकत: सिद्धम्।

स्वाभाविकत्वमते ( नैत्यशाब्दिकानांमते ) एकार्थीभाव रूपावृत्ति-लोकत: सिद्धेति अतोऽत्र, न किञ्चित्तत्र वक्तव्यम्, ये तु शास्त्रनिष्पाद्यां मन्यन्ते, किन्ते तत्स्वरूपं शास्त्रविधानयोग्यमाहु: इति प्रश्न तात्पर्यम्।

तथा च कार्यशाब्दिकानां मते शब्दानां शास्त्रकार्यत्वात् तेषां लोके सिद्धचभावाद् अर्थं सम्बन्धस्य लोकतीज्ञानासम्भवेन तस्यापि शास्त्र-विधेयत्वमेव वाच्यम्।

एवञ्च तद्विकल्पादि बोधकतया विभाषापदादि चरितार्थम्। तथा च शास्त्रैक गम्यत्वात् सामर्थ्यं रूपवृत्तेर्लक्षणमपि वाच्यम्। तन्मते = कार्यशाब्दिकानां मते परार्थाभिधानं वृत्तिरिति वृत्तेर्लक्षणम्।

महाभाष्येतु परार्थाभिधानं वृत्तिरिति वृत्तेर्लक्षणं कृतम्। तदर्थस्तु परस्य शब्दस्योपसर्जनार्थकस्य यत्र शब्दान्तरेण प्रधानार्थक पदेनार्था-भिधानं विशेषत्वेनग्रहणं सावृत्तिरिति। यद्वा–परार्थस्य प्रधानार्थस्य-अप्रधान पदैर्यत्र स्वार्थं विशेष्यत्वेन ग्रहणम् सा वृत्तिरितिलक्षणस्य-परार्थाभिधानं वृत्तिरिति भाष्योक्तस्य वृत्तेर्लक्षणस्यार्थद्वयं स्फुटीकृतम्।

तथा च राजपुरुष इत्यत्र परस्य शब्दस्य उपसर्जनार्थकस्य राज-रूपस्य शब्दान्तरेण प्रधानार्थकपदेन पुरुषरूपेण अर्थाभिधानं विशेष्य-त्वेन ग्रहणम् सा वृत्तिरित्यर्थः।

यद्वा—परार्थस्य प्रधानार्थस्य पुरुषपदार्थस्य अप्रधानपदेराजादि-पदैर्यत्र स्वार्थं विशेष्यत्वेन ग्रहणं सा वृत्तिरितिः एतावतैवैकार्थी भाव इति व्यवहारः।

तथा च परार्थाभिधानं वृत्तिरिति–अनन्तरं भाष्ये 'अथ तेषाम्, वृत्तिवर्तनवादिनाम्' एवं ब्रुवतां किं जहत्स्वार्था वृत्तिर्भवति? आहो स्विदजहत्स्वार्था भवति? किञ्चातः–यदि जहत्स्वार्थावृत्तिः राजपुरुषमानयेत्युक्ते पुरुष मात्रस्यानमनं प्राप्नोति औपगवमानयेत्युक्ते अपत्यमात्रस्येति, अथाजहत्स्वार्था वृत्तिः उभयोर्विद्यमानस्वार्थयोर्द्वयो-र्द्विवचनमिति द्विवचनं प्राप्नोति, तत्र तर्हि का पुनर्वृत्तिर्न्याय्या? जहत्स्वार्था इत्याद्युक्तम्।

अत्र पक्षत्रयं सम्भाव्यते तद्यथा—

तत्रास्मिन् पक्षे राजपुरुष इत्यत्र राजपदेन परार्थस्य पुरुषरूपार्थ-स्याविरोधित्वेन स्वगतविशेष्यत्वस्यैव विरोधित्वात् स्वगतं विशेष्य-त्वमेव त्यज्यते न तु राजरूपोऽर्थः? एवं पुरुषपदस्यापि इतरान्वितमेव

स्वार्थमुपस्थापयति न केवलम् अतो न भार्य्याया इत्याद्यन्वयस्तत्र कदाचित्।

अर्थात् पदानां तत्तद्विशेष्यताविशिष्टे शक्तिः अतएव बोधे विषयता भानम्, एवञ्च राजपदादे राजत्वनिष्ठप्रकारतानिरूपित विशेष्य-त्वावच्छिन्नोऽर्थः स्वार्थः, तत्र समासे विशेष्यत्वांशत्याग इत्येतावता जहत्स्वार्थत्वमिति। अत्र च बीजम् समुदायशक्तिरेव। एवञ्चावयव-शक्ति सहकृत समुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्त्वम्। अयं प्रथमः पक्षः।

भाष्येहि तक्षदृष्टान्तेन जहत्स्वार्थमुपपाद्य अथवेत्यादिना घृतघट दृष्टांतेन समाधानान्तरं कृतम्। राजपुरुष इत्यत्र राजपदं वाक्यदृष्ट-स्वजन्योपस्थिति विषयार्थं निमित्तं राजसम्बन्धरूपं विशेषं पुरुषपद-जन्योपस्थिति विषये पुरुषे आद्यम् (पुरुषं तद् वैशिष्ट्येन पुरुषपदेनो-पस्थितिविषयं कृत्वा) राजरूपार्थस्य स्वजन्योपस्थिति विषयत्वं तद्-वाक्यनिष्पन्नवृत्तौ जहाति, एवञ्च राजशब्दात्तदर्थं प्रतीत्यभावेऽपि-तच्छब्दार्थान्वियमात्रेण वाक्ये यादृश विशेषण विशिष्टः पुरुषः शब्दात् प्रतीतः तादृशस्यैवात्राप्युपस्थितिरित्यनुमानात् पुरुषपदस्य तथाशक्ति-ग्रहः। राजपदकृतो वाक्ये पुरुषगतो विशेषो भविष्यति, न निवर्त्यत इत्यर्थः। एवञ्च राज्ञो राजादिपदजन्योपस्थितिविषयत्वाभावेन जहत्स्वार्थत्वमिति। भाष्ये घृतघट दृष्टान्तं विषय उपन्यास इत्यादिना प्रत्याख्यायः चम्पकपुट दृष्टान्त उपस्थापितः अयं द्वितीयः पक्षः।

ततश्च—अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते इत्या दिनासमा-धानान्तरं कृतम् अयं तृतीयः पक्षः—अत्र पक्षे भेदः संसर्गं वा सामर्थ्यम्। अर्थात् समभिव्याहृत पदार्थनिरूपितः संसर्गः समासेन प्रत्याय्यते, तथाच संसर्गपक्षे राजसम्बन्धवान् पुरुषः इति राजपुरुष इत्यस्माद् बोधः। तादृश पुरुषाद्युपस्थितौ राजपदं तात्पर्यं ग्राहकम्। राजकी-यान्यनिरूपित भेदवान् अर्थात् अराजकीय भिन्न भेदपक्षे बोधः।

समर्थः पदविधिरित्यस्य परिभाषात्वेऽधिकारत्वेवा लाघवात् शास्त्रोपकारकात्वातिशयोवा।

अधिकारे सति स्वरयितव्यम् = स्वरितगुणयुक्तं समर्थग्रहणं कर्तव्यम् = पठितव्यमित्यर्थः, तत्र स्वरितो गुणः क्रियारूपेण स्वरयितव्यमितिनिर्दिष्टम् । यथा श्वेतो गुणः श्वेतते, पदविधिग्रहणञ्चात्र पक्षे न कर्तव्यम् भवति ।

परिभाषायां सत्यास्तु सर्वमपेक्ष्यते–यावन्तिपदकार्याणि तानि सर्वाण्यपेक्ष्य पदविधि शब्दोपादानेन च परिभाषा कर्तव्या भवति, अन्यास्वपिपरिभाषासु यल्लिंगमुपादीयते तल्लिंगयुक्ताऽपेक्षा क्रियते । तथासति द्वैतमापद्यते एकार्थी भावो वा सामर्थ्यं व्यपेक्षा वा ।

एकार्थीभावे सामर्थ्येऽधिकारेच सति समास एकः संगृहीतो भवति, विभक्तिविधानम्, परांगवद भावश्चासंगृहीतः व्यपेक्षायां पुनः सामर्थ्याधिकारेचसति विभक्ति विधानंपरांगवद भावश्च संगृहीतो भवति समास्त्वेकोऽसंगृहीतो भवति ।

एकदेशस्थिता शास्त्र भवने याति दीपताम् ।
परितो व्याप्ततां भाषा परिभाषां परिचक्षते ।।

———

# राष्ट्रं प्रति चारित्रिक दायित्वम्

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।"

इति मनुवचनमेव जगतो रचनं चर्चितचारित्रेण चरितार्थं सत् सुप्रथितमभवत् । यद्यपि देशराष्ट्रशब्दौ पर्यायवाचिनौ तथापि सम्प्रति राष्ट्रशब्दप्रयोगो विशेषरूपेण स्वतन्त्रदेशाय व्यवह्रियते । विश्वस्मिन् शासनस्य राजतन्त्रप्रभृतयोऽनेकविधाः पद्धतयो बहोः कालादद्यावधि दृष्टिगोचरी भूयन्ते । परन्तु तत्राधुना प्रजातन्त्र-पद्धतिरेवापेक्षाकृता बहुमान्या प्रतिभाति । प्रजातन्त्रस्य व्यक्तिनिष्ठ-म्महद् दायित्वं राष्ट्रं प्रति सम्भवति यत् खलु नाधुनापि सुव्यवस्थित-मभूत तत्र किं कारणमिति विचारणायामिदमेवाभिधातुं शक्यते यद् राष्ट्रस्य चारित्रिकदायित्वमादर्शभूतमुत्कर्षतया नाभ्युपगतमिति ।

किं कोऽपि जनो राष्ट्रसम्पत्तिं स्वसम्पत्तिवद् रक्षणे दत्तावधानो बद्धपरिकरो विद्यते ? किं राष्ट्र गौरवानुरूपं देशे विदेशेभ्य आयात-निर्यातविषये दूरदर्शिताऽवधार्यते ? किं वर्णाश्रमधर्मप्रधाने धर्मप्राणे स्वदेशे धर्मनीतिसमर्थितचारित्रबलमस्माकं सुरक्षितुं प्रयासो भवति ? तथाचरणम्भवति ? किं कल्याणप्रदराज्यानुरूपस्वाधिकार-स्य कर्तव्यपालनस्य च सत्यतया निर्वाहः क्रियते ? किमस्माकमाचरण-मद्यतनीयमन्यत्रापेक्षयाऽऽदर्शन्मन्यते ? तत्र नैतिकताया आभा-सोऽपि भवति ? किं वयमधुना स्वराष्ट्रस्य प्राचीनगौरवमभ्युपगम्य सम्मुखमुपस्थाप्य च छल-छद्मदम्भेर्ष्या द्वेषपाखण्डासत्यताऽहिंसा-प्रभृति दुर्गुणैर्मुक्ता वर्तामहे ? किन्तु खलु राष्ट्रगौरवमैक्यञ्चापकर्षता-न्नेतुमुत्कोचान्यायात्याचारभ्रष्टाचार - पापाचारशोषणानुचितदिशा-नयेन वा धनसंचयाधिकृत प्रच्छन्नायातनिर्यातप्रभृति कुत्सिताऽनैतिका-चरणैः समाजं राष्ट्रमवनतिपथमानेतुन्नोत्तरदायिनः ? यद्ये-

तत्सर्वं नास्ति तर्हि कुत्रप्रवृत्तावयमितिसम्यग् विचारयेम, यद् राष्ट्रस्य चारित्रिकमुत्थानं पतनम्वेतिविभाव्य यतः प्रभृत्यपि साध्वनुशासनमाचरणञ्चाङ्गीकृत्य लोकाः प्रबुद्धाः लब्धनैतिकाधिकाराः समारब्धसदाचाराः परसुखदुःखादिषु स्वात्मसंवेदनशीलाः मर्यादितचरित्राश्च कथमभ्युपगच्छेम सुशान्तिं परस्परं भ्रातृभावं देशराष्ट्रभक्तिमपि।

तदेव गत्यर्थंक चर् धातुः 'इत्र प्रत्यसंयोगेनोक्तार्थेषु चारितार्थंम्भजते। अत्र चरित्रशब्दः चरित्रं वृत्तं पद्यरूपार्थञ्च द्योतयति—वृत्तं पद्ये-चरित्रे च (ह्यनेकार्थं संग्रहकोशे) वृत्त शब्दोऽपि वृतु वर्तने धातुतो निष्पन्न उक्तार्थंमेव दृढीकरोति—तत्र कोशकारैश्चरित्रं वृत्तमेव मन्यते। पद्यमपिवृत्तमुक्तमेव। यथापद्ये वर्णमात्रादीनां सुनियोजितो व्यवहारस्तथा चरित्रेऽपि पद्यवत् सुनियोजितो व्यवहारः प्रथितः। उक्तनियममुलंघ्य पद्यमिव स्वच्छन्द स्वेच्छाचारमयजीवनेन चरित्र-हननमेव भवति यतः सुनियोजित जीवनचर्यैव हि चरित्रंम्भवति। तदेव मानवजीवनस्य महन्मूल्यं सत्यं पवित्रा गतिरपि। चरित्र संरक्षणं हि सद्विचारसदाचारपरिधावेवसम्भवम्। तेनैव शास्त्रेषु चरित्रस्यैव ऋत्-सत्यशब्दभ्यामिधानङ्कृतमस्ति। ब्रह्मापि सृष्टिसामर्थ्यं चरित्रेण तपसा च लब्ध्वा कृत्यकृत्यो बभूव। अनादिकालस्य सृष्टिप्रवाहो जड़चेतनमयब्रह्माणोऽखिलच्छन्दोमय-वृत्तमेव। सृष्टेः समस्तंकार्यंकलापोऽनादिकालतः समान-गत्यैव परिलक्षितः। दिन-सप्ताह-पक्ष-मास-वर्ष-युग-मन्वन्तर-कल्पादयः कालानुसारमेव स्वतः स्वभावानुसारं घटमानो दृश्यते। लेशमात्रमपि न परिवर्तनन्तत्र, यतः समस्तं जड़चेतनं हि काल-गतौ छन्दोमयरूपेणानुस्यूतं विद्यते। तस्मादेव कैश्चिद् वैष्णवैश्चिद-चित् कालात्मकं तत्त्वत्रयमपि स्वीकृतम्। गीतायामपि भगवता श्रीकृष्णेनार्जुनं प्रतिप्रोक्तं यत् शारीरिक-वाचिक-मानसिकेषु त्रिषु तपस्सु देव-द्विज-गुरु-विद्वज्जनानां सत्कारः पूजनं पवित्राचरणञ्च-शारीरिकं तप उदीरितम्। तथा—अनुद्वेगकरं सत्यं, प्रियं, हितकरं वाक्यं शास्त्राभ्यासो मन्त्रजपश्चवाङ्मयन्तपः। मनः प्रसादः मौन-भावेव मनसः शान्तिकरणं भावशुद्ध्यादयश्च मानसं तपः समीरितम्। प्राणिमात्रेण सह सौहार्द्रंभावनयाचरन् समस्तमपि विश्वं भगवद् रूपं

प्राणिनश्च भागवतानात्मरूपान् जानन् सर्वान् प्रसादयँश्च साधु पथे-वर्तयन्नात्मानं सात्त्विकं सत्यं ज्ञानं सुचरित्रनिर्माणाय प्रकल्पते नात्र सन्देहः। यथा च भगवान् कृष्ण उद्धवं बोधयति—

सर्वंभूत सुहृच्छान्तो ज्ञानविज्ञाननिश्चयः।
पश्यन् मदात्मकं विश्वं न विपद्येत् वै पुनः॥

(श्रीमद्भागवत् ११।७।१२)

इत्थं भगवद् वाक्येन निश्चितमेतत् यच्चरित्रनिर्माणे दयादानतप प्रभृतय उपायास्तदैव सफलतामासादयन्ति यदा भगवद्-भागवत् भक्तिभावनायाः पुटकदम्बः स्यात् तदैव चरित्रवृक्षः पुष्पितः फलित-श्च सम्वर्धनशीलो भवति, भगवद्भक्तिमन्तरा प्राणिमात्रं प्रति-करुणाया, दयायाः प्रेमभावनाया आत्मीयतायाश्चाभावे मानव-चरित्रस्य समुत्थानन्नैव सम्भवम्। तस्मादेव वैयासकिश्शुकदेवमुनि व्यहिरति—'स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे' इति। अतोऽत्र जागतिकसृष्टिप्रवाहे यत् किमपि घटितमिव दृश्यते तत्र काल एव कारणमित्यपि सत्यम्। यथा भागवते (११-२८-१८)—

ज्ञानं विवेकोनिगमस्तपश्च
प्रत्यक्षमैतिह्यमथानुमानम्।
आद्यन्तयोरस्य यदेव केवलं
कालश्च हेतु स्तदेव मध्ये॥ इति

तस्मान्मानवैर्जीवने हताशैर्न भाव्यम् न वाऽधीरताऽऽनेया, न वा व्याकुलतासादनोया, जीवानां चिरन्तनगतिमनुभूय धैर्येणानासक्त-भावेन च जीवनयापनं परिणामतः परहितचिन्तनपुरस्सर-मेव वरम्। भक्तिमार्गे सम्प्रदायः जातिः धर्मः कश्चनाश्रमश्च न प्रत्यवायतया समुपतिष्ठते। तत्र चरित्रोत्थानस्य प्राणिमात्रकृते महत्यावश्यकता, वस्तुतः प्राणिमात्रान्तर्यामिनः परमात्मनो भक्ति-रेव प्राणिमात्रस्य चरित्रोत्थाने कल्याणमयः पन्थाः। स यदि संरक्ष-णीयश्चेत् कथमपि न कोऽपि वैरी कस्यचिदपि भवितुमर्हति। अत-एवोक्तमपि भागवते—

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥

अर्थात् ये सहनशीलाः प्राणिमात्रं प्रति प्रेमस्वभावाः दयालवः, निज-कामक्रोधादिदुर्भावनामुक्ताः शान्ताः परोपकारिणस्ते महान्तः पुरुषा इति । अयमेव चरित्रस्य महान् मापदण्डः यत् 'ज्ञेयः स नित्य संन्यासी यो न द्वेष्टि न कांक्षति' इति किमधिकं वक्तव्यम्—यथाह भगवान् स्वयम्—

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद्दानमानाभ्यां मैत्राभिन्नेन चक्षुषा ॥

इति सूक्त्या—स्वार्थभावनामुक्ता भेदभावविरहिता सर्वैः सह मैत्रीभावं वर्धयन्तः सर्वेषां प्राणिनामादरं सत्कारञ्च कूर्युरिति चरित्रनिर्माणौषधम् ।

---

# परमपुरुषार्थः

जगति जगन्नियन्तुर्नियमानुसारं समेऽपि पदार्थाः जगल्लीला-लीलायिता बालकन्दुकक्रीडेव सर्वसुखसाधनीभूता मन्यन्ते शास्त्रकारैः, परब्रह्मापि लीलाविभूतावस्यामवतरति लीलायै, राम-कृष्ण-नरसिंह-वामनादि विविधलिङ्गैः। शास्त्रेषु धर्मार्थकाममोक्षाख्याश्चतुर्धा पदार्थाः पुरुषार्थतया प्रकीर्तिता नात्र संशयलेशः, तेषु मोक्ष एव परम-पुरुषार्थतया विगणित इत्यपि प्रथितः, मोक्षपदार्थश्च—

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदध्यासितव्यः'

इत्यादि श्रुतिवचनात्—श्रवणमननध्यानानि दर्शनक्रमेण मोक्षोपाय-भूतानि सन्ति। श्रोतव्यः श्रुति वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः मत्वा च सततं ध्येय इति दर्शनहेतवः।

प्रायः सर्वासूपनिषत्सु विधेयतया प्रोक्तानि विविधान्युपासनानि ज्ञानोत्पत्तिक्रमेणैव मोक्षप्रापकानि वर्णितानि। यथोक्तं सम्यग्गी-तायामपि गीताचार्यैः—

'वेदैश्च सर्वैरहमेव वेद्यः', इति

अतएव योगिनोऽपि ध्यानयोगानुगताः ध्यानयोगस्य मुक्तिसाधनत्वे श्रद्धावन्तः, अतस्ते—

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्यान निर्मथनाभ्यासात् तं देवं द्रष्टुमर्हति॥

'इत्याद्याः श्वेताश्वतरादिश्रुतय एव तत्साधनत्वे प्रमुखं प्रमाणम् तरति शोकमात्मवत्। विद्वान् नामरूपाद्विमुक्तः तमेव विदित्वाऽति-मृत्युमेति नान्यः पन्था विद्यते अयनाय इत्यादिषु श्रुतिष्वमृतत्वं नामरूपविमुक्तिः शोकस्यैकान्तात्यन्तनिवृत्तिश्च मोक्षः, तथाविधस्य त्रिविधस्याप्यभावस्याधिष्ठानात्मकत्वात् सच्चिदानन्दात्मरूप एव मोक्षः, अतएव सपुरुषार्थतमः सर्वथाऽद्वैतवादे व्यवहृतः। वस्तुतः—

तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छता भयम् ।।

इत्युक्त वचनानुसारं वैधी या भक्तिस्तस्याः कृते भगवतो नारायणस्यैश्वर्यमयरूपं शास्त्रेषु प्रतिपादितम् । यद्यपि भगवतो नानारूपता प्रोक्ता तथापि परविभुविभवान्तर्याम्यर्चावतारभेदेन पञ्चैव भेदाः तेष्वेव प्रायः सर्वंविधावतारोऽन्तर्भूतः । अतोऽपि स्वल्प भेदास्त्रिविधः, उक्तोऽवतारः—निर्गुणनिराकारः, सगुणनिराकारः, सगुणसाकारश्चेति, यथोक्तमत्र——

स्वाराज्य लक्ष्म्याप्त समस्तकामः
स्वयं त्वसाम्यातिशयस्त्र्यधीशः ।
बलिं हरद्भिश्चरलोकपाल——
किरीट कोटीडित पादपीठः ।।

स्वयं राजते=शोभते इति स्वराट् आत्मा तस्य भावः—स्वाराज्यम्, तदेव लक्ष्मीस्तया आप्ताः समस्ताः कामा यस्यासौ स्वाराज्यलक्ष्म्याप्तकामः । इत्थं——भगवान् स्वयं स्वसत्तया आप्तसमस्तकामः । साम्यञ्चातिशयश्च, न विद्यते यस्यासौ असाम्यातिशयः । तथा च न कोऽपि भगवतः साम्यं भजते नाधिक्यञ्च, समानताया अतिशयस्य च स्थितिस्तदा वक्तुं शक्या यदा द्वावीश्वरौ स्याताम्, परन्तौ कदापि कयापियुक्त्या कथमपि न सिद्ध्यतः, यतो द्वावपि सत्यसङ्कल्पौ सर्वशक्तिमन्तौ स्वीकर्तव्यौ भविष्यतः तस्मादेक एवेश्वरः सिद्ध्यति, श्रुतावपि प्रोक्तं यथा——

'न तत्समश्चाभ्यधिकः कुतोऽन्यः' इति ।

स ईश्वर एवाध्यात्म, अधिदेवः, अधिभूतः, सर्वरूपोजगतः कारणम् । जगतः स्वामी, नियामकः-अनन्तकल्याणगुणगणनिलयः, मधुरो मनोहरः सौन्दर्यसुधासिन्धुः, मंगलमयः सगुणसाकार-विग्रहः । तस्मादेवजगद्रचनारुचिरीश्वरः भगवदर्चनारुचिर्भक्तश्चातिशयेनोपवर्णितौ । अत एव यद् यद् रूपं ध्यायति भक्तः—तत्तद्रूपं धारयति भगवान्नारायणोऽपि भक्तजनहिताय, वस्तुतः सगुणसाकाररूपेण भगवान् वैकुण्ठधाम्नि

विराजते, तस्यैव रूपस्यानन्तगुणाश्रयत्वं महैश्वर्यसम्पन्नत्वं वर्ण्यते— 'बलिं हरद्भिश्चिरलोकपाल-किरीट कोटीडित पादपीठ' इत्यादि वचनैः।

भगवतोनारायणस्य चरणारविन्दयोश्शोभालोकोत्तरा-अनन्तकोटि कन्दर्पदर्पदलन पटीयान्। इति वचनेन सुव्यक्ता सुप्रथिता च।

कथं भगवान् साकारः सगुणः स्वीक्रियते ? तत्र प्रथमं कारणन्तु- महामुनीन्द्रान् परमहंसान् विधातुमेव तथोक्तावतारः यथोक्तम्—

तथा परमहंसानां मुनीनाममलात्मनाम्।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥

इति, अत इदं सत्यमेव यत् रावण-कुम्भकर्ण, कंसादि राक्षसानां संहाराय न तदीयोऽवतारः नहि मशकविनाशाय परमास्त्रस्याणुशक्ति कस्यायुधस्योपयोगः प्रहारोहि क्रियते।

अनन्तकोटिब्रह्माण्डाधिपतिर्यदा कामयते तदैवानन्तब्रह्माण्डस्य स्रजनं संरक्षणं संहारश्च तस्य भ्रुकुटिविलासेन मायानटी नृत्यन्ती सती विदधाति।

तदैवोक्तं यत् तस्य शत्रुहनने कपयः सहायाः इति। य ईश्वरो भूतलवासिनो यक्षराक्षसगन्धर्वानखिलान् लीलयाऽङ्गुल्यग्रभागेन नाशयितुं समर्थः स ईश्वरो नैवासुराणां संहारायावतरति प्रत्युत् तस्य रामकृष्णप्रभृतयो मानवावताराः जगतः समग्रमानवजातीय शिक्षणाय सद्व्यवहाराय, सर्वैः सह-प्रेम्णा व्यवहारायैक्याय च जायन्ते।

भगवता श्रीकृष्णेन गीतायामुक्तं यत—

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥

तेन भगवतोऽवताराविशेषतः साधूनां परित्राणाय प्रकीर्तिताः प्राधान्यतया, दुष्कृतां विनाशस्तु आनुषङ्गिकः प्रोक्तस्तत्र।

धर्मसंस्थापनपदार्थश्चात्र यतोऽभ्युदयनिःश्रेयस-सिद्धिरेव, अभ्युदयश्चनिःश्रेयसतया सतां न लौकिक राज्यसमृद्धि सम्पादनेन स्वर्गादि सुखबाह्या चात्राभिप्सितः कथञ्च न किन्तु भगवत्साक्षात्कार एव, यतः गीतोक्त परित्राण पदार्थश्च इष्टप्राप्तिरनिष्ट निवृत्तिरेव। साधूनामिष्टन्तदतिरिक्तम्भवति, भगवद् वैमुख्यं= दर्शनाभावः, सत्स्वपि प्रभूतराज्यसुखसाधनेषु अनिष्ट एव, लौकिक राज्यसमृद्धि. स्वर्गीय सर्वं सुखसमृद्धिश्च नैवेष्टा साधूनाम् उक्त समृद्धचभावेऽपि भगवति रतिस्तदोयन्दर्शनञ्चैवेष्टम्भवतोति सिद्धान्तः।

तस्मादेव सर्गस्थितिसंहारं सत्यसंकल्पेन लीलया प्रवर्तितुं समर्थस्सन्नपि प्रभुः साधूनामिष्टसाधनाय मानवविग्रहेण लोकेऽवतरति स्वं दर्शनमेवेष्टं तेभ्यः प्रयच्छति। तदवसरे च स्वयं सदाचरति, सद्व्यवहरति, भृशमनुरागञ्च सर्वविधेषु मातृ-पितृभ्रातृ-गुरुजन-प्रजाजनेषु च करोति प्रथयति वर्द्धयतिच। अयमेव महान् धर्मः यतः प्रेम्णा-सद्व्यवहारेण सदाचरणेन सर्वजनत्राणकर्मणा च प्राणिनः प्रसन्नाः सुखसाधनोपेता लक्ष्यप्राप्तौ लब्धाधिकारा जायन्त एव, 'धर्मो धारयति प्रजाः' इति वचनेन वेदपुराणधर्मशास्त्रा नुसार च सर्वैस्सह सद्व्यवहाराचरणमात्मनः प्रतिकूलानां कर्मणामन्यैस्सहापि परित्यागः सर्वप्राणिनांहितचिन्तनमेव च प्रमुखो धर्मः यं स्वयं संस्थापयति सर्वैस्सह सद्व्यवहरन्नीश्वरः, तदानोमेवानुषाङ्गिक रूपेणासुरसंहारमपि विदधाति।

साधवो जना गृहस्थाश्रमिणोऽपि गार्हस्थ्येऽपि सदाश्रमे निवसन्तः योगक्षेमनिर्वाहाय परमावश्यकान्यपि वस्तूनि न कामयन्ते। यदिच्छालाभसन्तुष्टा इव भगवद् भागवत सेवाबुद्ध्या परिजनसेवां कुर्वाणा निःस्पृहा भवन्ति। कर्त्तव्यबुद्ध्यैवनिखिलमपि कर्मसम्पादयन्ति भक्ताः सततमनासक्तमनसः। एवं विधा भक्ता एव साधु पदैव्यंवहृता भवन्ति येषां मनांसि न लौकिक-पारलौकिकविभूतो संसक्तानि किन्तु सदाऽहर्निशमीश्वरमेव द्रष्टुकामाः-तच्चरणारविन्दकैः कर्मे दत्तावधाना लोके सामान्य जन इव जीवनयात्रायां वर्तमाना जीवनधारणायैव किञ्चिद् भगवत्-प्रसादरूपेण

गृह्णन्ति । तस्मादेव ते कैवल्यमुक्तिमपि पाषाणकल्पं मन्वाना न ताङ्कामयन्ते कदाचिदपि ।

अतएव तेषां विचारे तु यत्र भगवतो लीलामयी मङ्गलमयी काचिदनुभूतिः परमाह्लादकारिणी स्फुरति तामेव परमपुषार्थतया मन्यमानास्तत्रैव रमन्ते सुचिरम् । तेषान्तु मुक्त्यपेक्षया भगवद् भक्तिरेव गरीयसी, यथोक्तं स्वयं भगवतापि—

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥

केचन तु भगवतश्चरितामृताब्धि परिवर्ततः सर्वश्रमविनिर्मुक्ताः सन्तोऽपि नापवर्गं वाञ्छन्ति यथा—

न परिलषन्ति केचिदपवर्गमपीश्वरते ।
चरितमहामृताब्धि परिवर्त परिश्रमणाः ॥ इति प्रमाणम् ॥

वस्तुतो भक्ता भक्तिमाब्धिमन्थनोद्भूताह्लादवैभवेन समं मुक्ति कथमपि न विगणयन्ति । भक्तेर्वैशिष्ट्यमतिशयेन-सर्वापेक्षया-स्वीकुर्वन्त्येव नात्र सन्देहः । उक्तञ्चात्र विषयेऽपि—

ब्रह्मानन्दो भवेदेष द्विपरार्थ गुणीकृतः ।
नैति भक्ति रसाम्भोधेः परमाणु तुलामपि ॥

संसारेऽस्मिन् यावद् भुक्ति-मुक्ति वासनापिशाची प्राणिनोऽनुधावति तावद् भक्तिभागीरथी भक्तिभावोदयो वा न सम्भवः कथमपि । अत एव तेषामयं सिद्धान्तः प्रवर्तते, यत्—

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ इति ।

अतः कृष्णावतारे गोप्योहि कालिन्दीतटे श्रुतिपारायणं कुर्वतो मुनीन् प्रोक्तवत्यो यत् "श्रुतयो पलालकल्पा उपनिषदर्थं ऊलूखले बद्ध"-इति तदानीमेव मुनयश्श्यामसुन्दरं श्रीकृष्णचन्द्रं विष्णोः पूर्णकला-

वतीर्णं मत्वा भक्तिभावान्विता जाताः। इत्थं भक्तिमार्गे निमग्नानां रसो वै सः, इत्यादि श्रुतिसिद्धः रसस्वरूपपरमात्मा सर्वंजगतः कारणं भवति। कारणं हि समस्तं कार्यंजातं व्याप्य तिष्ठति, अतो रसात्मिका भक्तिः स्वभावतः सर्वंगता सर्वंजनोपास्या मन्यते। कश्चैदद्वैतवादभिरपि प्रतिपादितोऽयं सिद्धान्तोऽतीव हृद्यः प्रतिभाति यथा—

न निरोधो न चोत्पत्तिर्नवद्धो न च साधकः।
न मुमुक्षुर्नं वै मुक्तः इत्येषा परमार्थता॥

इति रीत्यापि जीवस्य कृते किमपि कर्तव्यन्नावशिष्यते तथापि जन्मगृहीत्वाऽविद्या निवृत्तये स्वरूपानुभवाय स्वरूप प्राप्तये किमपि वर्तितव्यमेव भवति, तच्च वर्तितव्यं कर्मलोके किं स्यात् परमार्थ तः सेवातिरिक्तं स्वरूपानुसन्धानातिरिक्तम्वा, सेवाच भक्तिरेव स्वरूपमपिज्ञानानन्दात्मक ब्रह्मातिरिक्तं न सिद्धयति, तस्यानुभूतिरपि भाव एव भावश्चात्र भक्तिपदेनापि प्रोच्यते। अस्तु समेषां सिद्धान्तवादिनां मते सार्वत्रिकी सार्वभौमिकी सर्वविधा प्रगनिरेव प्रकीर्तिता भवति सा च कर्म परित्यागान्न सम्भवा, कर्म च यत् क्रियते तदवश्यमैहिकामुष्मिकफललाभायैव। ऐहिकामुष्मिक फलबुद्ध्या कृतं कर्म न मोक्षसाधकं सिद्धान्ततः स्वोक्रियते। निःस्वार्थ भावेनैव कृतं कर्म भगवते समर्पण-प्रसादनबुद्ध्या मुक्तिप्रयोजकं मन्यतेऽतोऽध्ययनाध्यापनमपि सत्कर्मतया सेवाबुद्धया यथार्थतो यदि क्रियते तदा शास्त्रसेवारतानामुत्तमोत्तमभक्तेषु गणनाकृत विद्यता एव। शास्त्रञ्च विधिनिषेधात्मकमनुभूय तद्वदाचरणाय प्रथितं मन्यते।

---

# वर्णाभिव्यक्तिस्थानविमर्शः

या सा मित्रावरुणसदना दुश्चरन्ती त्रिषष्ठि–
वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धि संस्थां
वाचं चक्रे करणविशदां वैखरीञ्च प्रपद्ये ॥

मानव देहदरीषु षट्चक्राणि कल्पितान्याचार्यैः तद् यथा—

मूलाधारः, स्वाधिष्ठानम्, मणिपूरः, अनाहतम्, विशुद्ध आज्ञा चेति, एषां विषये प्रोक्तमिदमपि–

मूलाधारः स्वाधिष्ठानं मणिपूरकमेव च ।
अनाहतं विशुद्धाख्यमाज्ञाषट् चक्रमुच्यते ॥
मूलाधारे लिंगमूले नाभीच हृदिकण्ठके ।
भ्रुवोर्मध्येब्रह्मरन्ध्रे चक्राणि चिन्तयेत् क्रमात् ॥

तस्मान्मूलाधारादयो यानि षट्चक्राणि प्रतिपादितानि तेषां ध्यानंकर्तुं तत्तत्स्थानेषु विधिरभिहित आचार्यैः ।

प्रथमपद्यगत मित्रावरुणसदना पदेन हि मूलाधारस्थ पराख्याया वाच एव बोधनं भवति, एतद्धि द्वितीयपादान्तप्रसूते 'इति क्रियापदस्य कर्तृपदम् अर्थात् मूलाधारमधितिष्ठन्ती परावाक् शक्तिरेव प्राणवायुसचिवा तत्सहितैव समुत्तिष्ठन्ती त्रिषष्ठिवर्णान् जनयति समभिव्यक्तीं करोतीत्यर्थः तत्र प्रथममुत्पन्ना नाभिदेशाधिष्ठानाभिव्यक्तासती पश्यन्ती पदवाच्या, हृदयदेशेऽभिव्यक्ता मध्यमा, आस्यान्तर्गत कण्ठताल्लादि स्थानेष्वभिव्यक्ता परश्रवणगोचरा वैखरीवाक् प्रशस्ता । तत्र त्रिषष्ठिवर्णाः प्रोक्तास्ते च के ? कथन्तथोक्ताः ?

अत्रविषये पाणिनिमुनिर्वदति—

यथा तदनुसारमेव वैयाकरणाः प्रतिपादयन्ति-तद् यथा—

स्वराः विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृताह्यष्टौ चत्वारश्च यमास्स्मृताः ॥
अनुस्वारो विसर्गश्च ≍ क ≍ पो चापि पराश्रयौ ।
दुस्पृष्ठश्चापि विज्ञेयो लृकारः प्लुत एव च ॥

स्वर्यंते=शब्द्यते व्यञ्जनमनेनेति स्वरः स्वृधातोः करणेऽर्थेऽच् प्रत्ययविधानात् स्वरशब्दः सिद्धयति। यत्साहाय्येन व्यञ्जनानि समुच्चारितानि भवन्ति सुस्पष्टं स एव स्व अथवा स्वेन राजते इति व्युत्पत्त्या स्वयमन्यसाहाय्यमन्तरा समुच्चारणविषया एव स्वराः। ते च एकविंशतिः, तद् यथा—अ इ उ ऋ एते ह्रस्व-दीर्घ-प्लुतभेदात् द्वादशसंख्याकाः लृकारो न दीर्घो भवति तस्य द्वौ भेदौ ह्रस्वप्लुतौ कथं वक्तव्यौ ? दोर्घाभावात्कथं प्लुतावाप्तिः ? मतेऽस्मिन् केवलं ह्रस्व एव लृकारः, ए ऐ ओ औ एषां ह्रस्वाभावात् अष्टौ भेदाः सङ्कलनया एक विंशतिः, कादयो यावसानाः स्पर्शाः पञ्चविंशतिः। इमे च कण्ठ-जिह्वामूल-तालु-मूर्धा-दन्त-ओष्ठादि स्पर्शाभिव्यक्ताः स्पर्शसंज्ञका-व्यवहृताः। स्पर्शसंज्ञक वर्णानाम् उष्मासंज्ञक श ष स ह प्रभृतीनामन्त राले मध्येवर्तमाना यरलवा अन्तःस्थ संज्ञका उच्यन्ते। चत्वारश्च यमाः अनन्त्यानन्त संयोगे मध्ये यमः पूर्वगुणः अर्थात् क ख ग घ एभ्यो-वर्णेभ्यः परा=यदि ञ म ङ ण न वर्णाः स्युर्यदि तदा मध्ये पूर्ववर्ण सदृश एव एकोवर्ण आगच्छति तमेव यमं व्यवहरन्ति, इदं हि औदव्र-जिमतमस्ति। नारद मतमपि विषयेऽस्मिन् प्रमाणं यथा यमविषये—

अनन्त्यश्च भवेत् पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः ॥
वर्णान्त्यान् शषसैः सार्द्धमन्तः स्थैर्वापि संयुतान् ।
दृष्ट्वा यमा निवर्तन्ते आदेशिक मिवाध्वगाः ॥

अर्थात् अनन्त्य कखादयोः वर्णाः पूर्वम् ङ आदिवर्णाः परा यदि तदा मध्ये पूर्वं वर्ण सदृशो वर्णो यम नामा आगच्छति। परं यदि शष-

सहादिवर्णैः सहवर्गान्त्या ञमङ णनाः स्युश्चेत् अथवा यरलवैः सहान्त्यवर्णा ञमङ णनादयस्तदा तान् वर्णान् दृष्ट्वा यमा तथा निवर्तन्ते यथा आदेशिकं दृष्ट्वा पान्थो निवर्तते । मतद्वयेऽस्मिन् यम आगम स्वरूपः स्वीकृतः। परन्तु पाणिनिमते वर्णातिरिक्ता इमे स्वीकृताः । तेनाष्टपञ्चाशदवर्णाः सम्मिलिताः, एतदतिरिक्त वर्णेऽपि-स्वरमनुसरति=अनुभवति वाऽनुस्वारः इति व्युत्पत्त्या अनुस्वार-पदार्थः स्वरानुसरणकर्ता यो हि तमन्तरा न तिष्ठतीति ।

'दन्त्यमूलः स्वरानुग' इति दिशाऽनुस्वारलक्षमपि प्रोक्तम् ।

विसर्गो नाम=विविधं सृज्यते=क्षिप्यते इति विसर्गः 'सृज्विसर्गे' इति धातुः विसर्गो नाम सृष्टिः उत्पत्तिरभिव्यक्तिर्वा तात्पर्यमिदमत्राव-धेयमस्ति यत् यस्मिननेकप्रकारेण हस्तप्रक्षेपो भवति, वैदिक मन्त्रो-च्चारणप्रसगे विसर्गोच्चारणे नैकविधो हस्तः प्रक्षिप्यते, एवम् ≍क ≍पौ चापि पराश्रयौ अर्थात् अकारः पकारः एव श्रयौ यस्येति व्युत्पत्त्या≍क≍पौ शब्दाभ्यां जिह्वामूलीयोपध्मानीययोर्ग्रहणम्भ-वति । केषाञ्चिन्मते प्लुतलृकारोऽपि भवति तेन सम्मिलय चतुः-षष्ठिरपि वर्णाः सन्ति । अतएव त्रिषष्ठिश्चतुःषष्ठिर्वा वर्णाः शम्भु-मतेस्थिता (मताः) इति वचनं लभ्यते । इमे निखिला अपि वर्णास्त-स्यैव शब्दब्रह्मरूपस्फोटस्य-परिवार सदस्याः, वस्तुतस्ते वर्णाः पराश-क्त्यपरपर्यायस्य तस्यैव शब्दब्रह्मणः स्फोटस्य परिणामभूता एव । प्रकारान्तरेणापि=यथा योगशिखोपनिषद्यपि प्रोक्तम्—परावाचः—सकाशादेव वाङमयजगतः सृष्टि परवचनम् ।

यन्नस्यं चिदाख्यातं यत् सिद्धीनाञ्च कारणम् ।
येन विज्ञातमात्रेण जन्मबन्धात्प्रमुच्यते ॥१॥
अक्षरं परमोनादः शब्दब्रह्मेति कथ्यते ।
मूलाधार गता शक्तिः स्वाधाराविन्दुरूपिणी ॥२॥
तस्यामुत्पद्यते नादः सूक्ष्मबीजादिवाङ्कुरः ।
तां पश्यन्तीं विदुर्विश्वं यया पश्यन्ति योगिनः ॥३॥
हृदये व्यज्यते घोषो गर्जत्पर्जन्यसन्निभः ।
तत्र स्थिता सुरेशान मध्यमेत्यभिधीयते ॥४॥

प्राणेन हि स्वराख्येन प्रथिता वैखरी पुनः ।
शाखा पल्लवरूपेण ताल्वादिस्थानघट्टनात् ।।५।।
अकारादिक्षकारान्तान्यक्षराणि समीरयेत् ।
अक्षरेभ्यः पदानि स्युः पदेभ्यो वाक्यसम्भवः ।।६।।

सर्वे वाक्यात्मका मन्त्रा वेदशास्त्राणि कृत्स्नशः पुराणानि काव्यानि भाषाश्च विविधा अपि सप्तस्वराश्च गाथाश्च सर्वे नाद-समुद्भवाः ।

एषा सरस्वती देवी सर्वंभूत गुहाशया—

वायुनावह्नियुक्तेन प्रेर्य्यमाणा शनैः शनैः ।
तद् विवर्तं पदैर्वाक्यैरित्येवं वर्तते सदा ।।

एवमेव भगवान् व्यासो भागवतमहापुराणे द्वादशस्कन्धे प्रोक्तवान्—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृदाकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ।।
ततोऽभूत्त्रिवदोंकारो योऽव्यक्त प्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ।।
शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ।।
स्वधाम्नो ब्रह्मणः साक्षात् वाचकः परमात्मनः ।
स सर्वं तन्त्रोपनिषद् वेदबीजं सनातनम् ।।
तस्य ह्योसंस्त्रयोवर्णा अकाराद्याकुरुद्वह ।
धार्यन्ते यैस्त्रयो भावाः गुणानामार्थवृत्तयः ।।
तेनाक्षरसमाम्नाय मसृजद् भगवानजः ।
अन्तःस्थोष्म स्वर स्पर्श ह्रस्वदीर्घादि लक्षणम् ।।

तेनासो चतुरो वेदान् चतुर्भिवदनैर्विभुः ।
सव्याहृतिकान् सोङ्कारान् चतुर्होत्र विवक्षया ॥

आगमशास्त्रेऽपि-यथा—

स्वराः षोडश विज्ञेयाः स्पर्शास्तु पञ्चविंशतिः ।
अन्तःस्थाश्चापि चत्वारः उष्माणश्चापि तन्मिताः ॥
जिह्वामूलीयकश्चैक इत्येवं वर्णं संहतिः ।
एवं वर्णा द्विपञ्चाशन्मातृकायामुदाहृताः ॥
सकारान्तमागमाचार्याः बीजार्थमधिकं विदुः ।
तच्चोपलक्षणं ज्ञेयं षङ्जज्ञानामपि ध्रुवम् ॥[1]

---

१—'वर्णज्ञानामपि ध्रुवं' मितिपाठभेदः ।

मानिषाद प्रतिष्ठां त्वमगम शाश्वतीः समाः
यत्क्रौञ्च मिथुनादेकमवधीः काममोहितम् ।

इति श्लोक विषयमध्ययनम् ।।

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ।।
तदुपगतसमाससन्धियोगं सम मधुरोपनतार्थं वाक्यवद्धम् ।
रघुवर चरितं मुनिप्रणीतं दशशिरश्चवधं निशामयध्वम् ।।

इत्यादि वाल्मीकिरामायणस्योपोद्घातरूप सद्वचनानुसारन्नि-श्शंयमयमुपरिर्चाचितः पुण्यश्लोको न शापपर एव भगवतो वाल्मीके-र्भवितुमर्हति, यतः सम्पूर्णमपि रामायणमस्यैव पुण्यश्लोकस्य महद्-व्याख्यानं वक्तुं शक्यते । परमकारुणिको भगवान्वाल्मीकिर्निखिल-वेदान्त विदितपरतत्त्व निर्धारयिषया यदृच्छयोपगतं हिरण्यगर्भभुवं-नारदं सुसत्कृतं संप्रार्थ्य पृष्ट्वा चावगतपरतत्त्वस्वरूपस्तदनुप्रसन्ने विधिनादत्तंसकलसाक्षात्कारप्रवन्धनिर्माणसक्तिः वेदोपबृंहणमारभ-माणः तस्यार्थप्रधानसुहृत्सम्मितेतिहासतां, व्यंग्यप्रधानकान्ता-सम्मित काव्यताञ्च पुरस्कुर्वन् 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च निर्धारयन् स्वग्रन्थे प्रेक्षावतां प्रवृत्यर्थं तदङ्गानि दर्शयामास ।

'इष्टं हि विदुषां लोके समासव्याससाधारणम्' इत्युक्तरीत्या संक्षेपेणोक्तं श्रीरामचरितं पुनर्विस्तरेण प्रतिपिपादयिषुस्तत्र प्रेक्षाव-त्प्रवृत्यर्थं वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं प्रतिपाद्यवैलक्षण्यञ्चेति वैलक्षण्यत्रयं दिदर्शयिषुर्वक्तृवैलक्षण्यन्तावत् लोके प्रथमश्छन्दोमयी वागभिव्यक्ता, क्रौञ्चमिथुनादेकस्य वधं दृष्ट्वा शोकाकुलस्य तस्य-महर्षेर्वाल्मीकेः शोक एव श्लोकत्वमापद्यत—मानिषाद इत्यादिरूपम् ।

स ब्रह्मर्षिर्भगवान् श्वाल्मीकिमुनिर्माध्यन्दिनसवनप्रवर्तनाय नदीं तमसां तामुपससाद यत्र हि युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन

वध्यमानं ददर्श, अत्र माध्यन्दिनसवनायविषये काचनेयमप्युक्त कस्यचिन्महाकवेः प्रमाणीभूता संगच्छत एव यथा—

तामभ्यगच्छद् रुदितानुसारी
कविः कुशेध्माहरणाय जातः।
निषाद विद्धाण्डजदर्शनोत्थः
श्लोकत्वमापद्यत यस्य शोकः" ॥

इति सदुक्तिमधिकृत्यापि प्रतिपादितम्भवत्येव यदाकस्मिक प्रत्यवभासां देवीं वाचमनुष्टुभेनछन्दसा परिणतामभ्युदैरयत। इत्थमत्रापाततस्तु मानिषाद इत्युक्तिश्शापपरैव मुनेः प्रतिभाति येन हि वाल्मीकिरामायणे करुणरसप्राधान्यमभिव्यज्यतेऽपि विदुषांमतेन। सत्यपि शापपरत्वे पद्येऽस्मिन् सर्वोऽपि काव्यशास्त्रीयप्रसादःगुणालङ्काररसादिरूपोऽभिव्यज्यत एवेति न सन्देहः कश्चन। परन्तथापि मानिषाद इतिश्लोकः पुण्यश्लोकत्वमापन्नः सम्भाव्यते। अतोऽस्य सर्वथा सर्वांशविमर्शेनैव शापपरत्वं वरप्रदत्वं पुण्यप्रदत्वम्वा वक्तुं शक्यते। यतोहि निखिलस्य काव्यजगतस्स्रष्टा प्रथमःप्रजापतिर्भगवान्वाल्मीकिः कस्य सचेतसोहृदि नावतरति हृद्यो वा नास्तीति विभाव्य—तदीये आदिकाव्ये आदिकवौ च को न श्रद्धधाति ? काव्यमित्यन्वर्थन्नाम वस्त्वलङ्काररसादिध्वनिभिः न धुनोति सचेतसामज्ञानम् ? नातिशयेनाह्लादयति सहृदयान् ? समस्तस्य काव्यजगतो न भूमिः काव्यमिदम् ? काव्योदधिपारप्रयाणाय काव्यमिदं कथन्नोडुपः ? यदयं पुण्यं श्लोको 'मानिषाद प्रतिष्ठांत्वमगमःशाश्वतीः समाः। यत् क्रौञ्चमिथुनादेकेमवधीः काममोहितम्' इति पुण्यश्लोको महाकविना वाल्मीकिना समस्तकवीनां काव्यानाञ्च मंगलायतनभूतः काव्यतत्त्वनिदर्शनायालंकारशास्त्रनिदर्शनकल्पतरुरेव मन्यते विज्ञैः सहृदयैः। तस्मात् मानिषाद इतिवचनं काव्यसूत्रमेव सप्तकाण्डात्मकं रामायणमहाकाव्यं व्याख्याति महर्षिरादिकविप्रजापतिः। एकस्यैव मंगलस्वरूपस्य पुण्यश्लोकस्य सम्पूर्णरामायणस्य मंगलानुशासनपरस्य माङ्गलिकेनाचार्येण मुनिना व्याख्यानभूतं कवीनां काव्यानाञ्च बीजरूपं व्याहृतन्तिष्ठति, नान्यत्। यथा निखिलमिदम्मायिकं जगन्मायया प्रकृत्या लक्ष्म्या वा कृपाकटाक्ष-

समधिकृत्य सृजति स्वयञ्चावतरति, प्रकृतिं स्वामधिष्ठाय 'सम्भवामि युगे युगे' इति गीतावचनानुसारं तथैव मानिषाद इति काव्यप्रकृति बीजं मायिकमेवार्थतो मायाकृपाकटाक्षायितुमेव, माया लक्ष्मीस्तत्प्रतिपादकतया तत्सम्बलितमेवात्र मा पदेनापि लक्ष्मीरूपोऽर्थः संसृष्टः।

तथाहि =मा लक्ष्मीर्निषीदत्यस्मिस्तत्सम्बुद्धौ मा निषाद! यद्यस्माद्धेतोः क्रौञ्चमिथुनान्मन्दोदरीरावणरूपादेकं काममोहितं रावणमवधीर्हतवानसि तस्मात्त्वं शाश्वतीः समाः वहुसम्वत्सरान् अनुपमामद्वितीयां प्रतिष्ठाप्रखण्डैश्वर्यावाप्तिमवगमः प्राप्नुहि। अयञ्चाप्रस्तुतोऽर्थः शापपरकप्रस्तुतार्थशक्त्युपस्थाप्योऽपीति वक्तुं शक्यः। अतोऽत्रार्थतश्शब्दतश्चापि मनाक् काव्यार्थसूचनामित्युक्तेः श्रीरामकृतरावणवधरूपकाव्यार्थः काव्यादौ चावश्यकर्तव्यताशीर्वादश्च भूयसासंसूचितो भवति।

रामायणमिदं सत्यमितिहासरूपतामापन्नं सदपि रामचरितसम्बन्धि समस्तवस्तुप्रकाशकं निखिलकाव्यतत्त्वावधारणपरत्वेनाखिलप्रेक्षावताङ्कवीनां काव्यानाञ्च सहृदयहृदयमनोहारि कलार्थप्रकाशकमपि मन्यत एव।

तेनोक्त पद्ये मापदेन लक्ष्मीमुपस्थापयता कविना सीता समवाप्ति सारा वालकाण्डकथासमभिव्यक्ता राजतेतराम्। तत्र वारणार्थकेन च तेन श्रीराघवेन्द्रस्य उपपन्नाया अपि राज्याभिषेकप्राप्तेर्वारणादयोध्याकाण्डकथा समुपजृम्भते। ततः परं रक्षोभिर्मुनिजनक्षोभणस्यतन्निवारणपरक प्रतिज्ञानिर्वहण परायणस्य श्रीरामस्य प्रतिष्ठाप्राप्तिमभिदधति-अरण्यकाण्डकथा प्रस्तुता प्राशस्त्यम्भजति। तत्रैवोक्तपुण्यश्लोके क्रौञ्चशब्दः प्रयुक्तो वैशिष्ट्यं विभर्ति, तद् यथाक्रुञ्च गति-कौटिल्याल्पीभावयोः इत्यस्माद्धातोः ऋत्विग् दधृगित्यादिना क्विन्निपालनात् न लोपः संयोगान्त लोपश्चापि निपानादेव न। अथवा क्रुञ्चेव क्रौञ्चः स्वार्थेऽण् विधानमपि महत्त्वमादधाति। तथा च क्रौञ्चयोः कुटिलयोः तिरश्चोः दम्पत्योः ताराबालिनोर्मिथुनादेकं काममोहितं सुग्रीवाङ्गनायहर्तारं बालिनमवधीरिति दिशा किष्किन्धाकाण्डकथाऽवतारिता विभाव्यते। ततः क्रौञ्चौ अल्पीभूतौ कृशाविति यावत्-तयोरन्योऽन्यविरह क्लेशकृशीयसोः सीतारामयोः एकमेव-

सीतारूपमवधीरितिभृशं पीडितवानसि 'इति सीताविरह दुःखातिशय वर्णनपरा सौन्दर्यमङ्गलायतन सुन्दरकाण्डकथाऽऽकलिता भवति।

अर्थात् सीतान्वेषणार्थं लङ्कां तारासुग्रीवद्वाराप्रेषयः, तस्माच्छाश्वतीः समाः बहुकालं रक्षणामेकं मुख्यं काममोहितं काममोहितत्त्वम् अवधः न्यवर्तयः, मिथुनादित्यत्रल्यब्लोपे पञ्चमी। प्रतिष्ठा इत्यत्र विच् प्रत्ययः अगम इत्यत्र गमिरन्तर्भावितणिजर्थः इति सुन्दरकाण्डकथासंकेतः प्रतिफलति यद्धि वाल्मीकिरामायणस्य प्रमुखकाण्ड रूपतया प्रशस्तम्।

वस्तुतो मानिषाद इत्यादेः समग्रस्य पद्यस्य कृच्छ्र कल्पना, उपचारायणम्, परस्परविरुद्धाश्रयणञ्चाङ्गीकरणीयं भवत्येव, प्रकृत पद्यस्य सम्पूर्णरामायणाभिधेयोपनायकत्वन्तु तथापेक्षितत्त्वमेव चेत् प्राथमिके माशब्दे 'एवालम्' तथाहि-इन्दिरालोक माता मा क्षीरोदतनया रमा इति, मास्म मालं च वारणे इति चाभिधेयद्वयीमभिदधौ कोशकारोऽपि।

एवमपि कथयितुं शक्यते यत् नितरां सदेवर्षिगणं त्रैलोक्यं सादयति पीडयतीति निषादस्तस्य सम्बुद्धिर्हेनिषाद रावण! यद्यस्मात् क्रौञ्चमिथुनात् अल्पीभावार्थकक्रुञ्चेः पचाद्यचि सति क्रुञ्चमेव क्रौञ्चस्वार्थिकाण्कृतः राज्यक्षयवनवासादिदुःखेनात्यल्पीभूतं परमकार्श्यं गतं यन्मिथुनं सीतारामरूपं तस्मादेकं सीतारूपं यस्मादवधीर्वधाभ्यधिकपीडां प्रापितवानसि तस्मात्त्वं प्रतिष्ठां यालंकार्या पुत्रपौत्रभृत्यवैशिष्ट्येन ब्रह्मणा प्रतिष्ठा दत्ता तामतः परं मागमः इति रीत्या रावणसम्बोधनपरतया पद्यमिदमनवद्यं व्याख्यायते।

अथवा मा निषाद इति नैकमेव पदं न मन्ये अपितु अमाशब्दस्य लक्ष्म्यभिधानानामन्यतमत्वेऽपि निषादपदस्य लोके वेदयोश्चाण्डालेऽर्थे रूढ़तया मायाँ लक्ष्म्यां सीताविषये (विषयसप्तम्यासमासे) चाण्डाल इति जुगुप्साश्लीलानुचितार्थयोरापत्तेः। इत्यपि केचिद मानन्ति।

प्रस्तुतोहि श्लोको वाल्मीकिरामायणकथासाधनसंरम्भः सोऽने-कटीकावृद्धिरपि समर्थित एव। यथा च—मा इत्यस्य मानिनां गर्व-विशिष्टानां षः श्रेष्ठः परशुरामः तमासमन्ताद् भावेन द्यति खण्डयति वैष्णवधनुः सज्जी करोति इत्यादिनैव गर्वं निर्वतयतीति मानिषादः तत्सम्बुद्धौ मानिषाद परशुरामाभिमान निवर्तक ! त्वं शाश्वतीः समाः प्रतिष्ठामगमः प्राप्स्यसि यद्यस्मात् क्रौञ्चमिथुनीभूताः क्रौञ्च-मिथुनाः जनक धनुर्यागसमागताः अविवेकिनो भूपाः तेष्वततति व्याप्नोति इति क्रौञ्चमिथुनात् त्वमेवं केवलं काम मोहितमविवेकी-भूय काममोहितत्वम् अवधीः न्यवर्तयः, षः कीर्तितो बुधैः श्रेष्ठे तथा गम्भीरलोचने इत्येकाक्षर कोषात् ष शब्दः श्रेष्ठपरः आशंसायां भूतवच्चेति सूत्रेणात्रलुङि काममोहितमितिभावे निष्ठा क्त प्रत्यय-स्तदन्तं पदम् इति दिशापि बालकाण्डकथा सूचिता। एवं विलक्षणया प्रक्रियया काण्डान्तर कथानामपि संग्रहः यथा तन्निर्दिश्यते दिङ्मात्रमत्र—हे मानिष ! मानो देवकर्तृकपूजा अस्ति येषान्ते मा निषानः ब्रह्माविष्णुमहेश्वराः तेभ्योऽपि षः श्रेष्ठः तत्सम्बोधने हे मानिष ! अन्ते ब्रह्मादिश्रैष्ठयहेतु भूतेत्यर्थः अत्र पक्षे ष शब्दो भाव प्रधान निर्देशः तद् विशेषणं शेति मंगल प्रदेत्यर्थः काममोहितमत्य-न्तमोहं प्राप्तं यत् रक्ष. कुलं समाः सर्वत्र समदृष्टयः ये दण्डकारण्य-वासि ऋषयः तानाद भक्षयामास तद्रक्षकुकलं क्रौञ्चमिथुनात् क्रौञ्चं वनगमन प्रतीपमानाल्पत्वं यन्मिथुनं मिथुनत्वं मिथुनधर्मोविलास-वचनादिस्तमतति प्राप्नोति इति क्रौञ्चमिथुनात् त्वमाशुशीघ्रमेक-मल्पमश्रममिति यावत् यथाऽवधीः। अतः प्रतिष्ठां मुनिजनकृताम-गमः प्रायः अतएवातीः अत्येति सर्वानतिवर्तत इत्यतीः सर्वश्रेष्ठो-ऽसीत्यर्थः। एवंविधयाप्यरण्यकाण्डकथाप्रसंगसूचनम्।

अथवा हे क्रौञ्च प्रतीयमानसीता विरहहेतुक प्रतीयमान कृशताविशिष्ट ! यद्यस्मान्मिथुनात् तारासुग्रीवमाज्ञार्थं मया लक्ष्म्या सह निषीदति नित्यं तिष्ठति जनकजया सौमित्रकृतरेखोत्क्रान्तेः, दशाननेन जनकतनयानयनस्य च वारणमुपदधताऽरण्यकाण्डकथापि व्यक्ता भवति।

मा लक्ष्मी राज्यश्रीरिति यावत्। सुग्रीवेण तदधिगतिरिति किष्किन्धाकाण्डकथोदयः, मा लक्ष्मीः जनकजात्मिका, तस्या अधि-

गतिश्च पवनतनय कर्तृका सुन्दरकाण्डार्थः सम्पद्यते, रामकर्तृका लंकाश्रियो वैदेह्याश्च प्राप्तिः पुनर्युद्धकाण्डार्थः सूचितः। उत्तरकाण्डाभिप्रायश्चापि स्वात्मभुवः (सीतायाः) आत्मसात्करणपरायाः भुवो राघवेन्द्र कर्तृक वारणाशयकतामाश्रित्य शक्यते संग्रहयितुं सारग्रहणविज्ञैः। इदमत्र न शंकितुं शक्यते यत् प्रकरणमतिक्रम्य कथमिदं मा शब्दस्य कृतं व्याख्यानं कथमादर्तव्यमिपूर्वोद्धृतव्याख्यानपक्षेऽपि समत्वात्। न वा चतुर्मुखप्रसादेन वाल्मीकिमुखात् प्रथमोदितोऽयं श्लोकः केवलं न भवितुमर्हति इति भगवन्मंगलानुशासनपरतया मंगलमाचरणपरोऽयं प्राथमिकश्लोकः इति गोविन्दराजोक्तरीत्याऽस्यपद्यस्य मंगलपरत्वमिति वाच्यम्।

चतुर्मुखप्रसादेन वाल्मीकिमुखारविन्दात् प्रथमं निष्पन्न निष्यन्दोऽयं मा शब्दो न केवलं निषेधपरो भवितुमर्हति इत्यस्यापिसुवचनेन मावर्णस्य रामायणकथावर्णनपरत्वस्या वरणात्। न चैकस्य पदस्य क्वचिल्लक्ष्यार्थत्वं क्वचिच्च प्रतिषेधार्थकत्वम् कथं सम्भवमिति वाच्यम् समानस्य मा निषादेत्यादिः क्वचिदेकपदत्वम् क्वचिच्चार्थेभिन्नपदत्वं कथं सम्भवतीति मनाग्दीयतां दृष्टिः।

वस्तुतस्तु मानिषाद इत्यनयोरेकपद्यं नोपपद्यत एव। अनुचितार्थाश्लीलाख्ययोर्दोषयोराश्लेषात्। तदेकपद्यलब्धपदानि चोद्धृतचराणि सर्वाण्यपि व्याख्यानानि। ततस्तदपेक्ष्य यथास्थितं भिन्नपदत्वमुररीकृत्यैव सप्तकाण्डीप्रतिपाद्यस्य मापदेन प्रतिपादनस्य सुतरामौचित्योञ्चितत्वात्।

---

# शाब्दिक मतेन शब्दो ज्ञानस्य परिणाम इति विमर्शः

शाब्दिकाः शब्दो ज्ञानस्य परिणाम इति मन्यन्ते सिद्धान्ततः। यथा 'आख्यातोपयोगे' इति सूत्रभाष्ये भगवता भाष्यकारेण प्रोक्तं यत् 'अयमपि योगः शक्योऽकर्तुम्' कथमुपाध्यायादधीत इति? अपक्रामति तस्मात्तदध्ययनम्। यद्यपक्रामति किन्नात्यन्ताय अपक्रामति? सन्ततत्वात् अथवा ज्योतिर्वज्ज्ञानानि भवन्ति इत्युक्तम्। तत्र च कैयटः यद्यपक्रामतीति प्रतीके—यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे तद् भवति, एवं शब्देऽपि प्रसङ्ग इति प्रोक्तवान्। शब्दस्य व्यञ्जकताध्वनयः उपाध्येनोत्पाद्यमानाः भिन्ना अपि सादृश्यात् तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्र प्रदेशं गच्छन्तः व्यक्तिस्फोटरूप जातिस्स्फोटरूपं वा शब्दमभिव्यञ्जयन्ति। अथवा ज्वालारूपं ज्योतिरविच्छेदेनोत्पाद्यमानं सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततं तथैवोपाध्याय ज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततानि प्रोच्यन्ते।

ज्ञानस्य शब्दरूपतापत्तिरिति दर्शनमत्र भाष्यकारस्याभिमतं केनापवार्यताम्? स एव ज्ञाता (अन्तःकरणमर्थं बुबोधयिषया) मनो रूपतामुपैति सांख्यवत्। तथा च जठराग्निना संयुतः पाकमाप्नोति, तथा प्राणवायुमाहृत्य तदनन्तरमेव वृत्ति मनोभ्यां सहप्राणवायुरुर्ध्वं गच्छति, तदैवान्तःकरणतत्त्वस्य मनसः समाश्रयतां गतो भवति स वायुः। यत्र प्राणवायुर्नास्ति तत्र मनो नैव तिष्ठति यथा मृतशरीरे अत एव प्राणवायुर्मनस आश्रय उच्यते। तदैव मनो धर्मेण दाहेन ज्ञानरूपशब्देन वा समाविष्टः तेजसा एवं जाठराग्नि सहकारेणैव विवर्तते वहिः शब्दरूपो भवति। तादृशदाहवशादेव प्राणः सवृत्तिक मनोरूपान्तःकरणयुक्तः स्वात्मनो ग्रन्थीन् कादि वर्णरूपान् विभज्य भिन्नैश्श्रुतिपथैः श्रूयमाणैर्ध्वनिभिः वर्णान् अभिव्यज्य वर्णेष्वेव उपलीयते। अर्थात् स प्राणः वर्णतः पृथङ् न तिष्ठति किन्तु

वर्ण रूप एव भवतोति सवृत्तिक मनोरूपान्तःकरणयुतस्य वायो र्यः शब्दभावेन परिणामः स ज्ञानस्य शब्दत्वापत्तिरित्यर्थः प्रोच्यते । यथा पाणिनीय शिक्षायामपि-सम्यगभिहितमत्र विषये ।

स एव क्रम उक्तः शब्दोत्पत्तौ—

आत्मा बुद्ध्या समेत्यर्थान् मनोयुङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यमिहतो वक्त्रमापद्य मारुतः ।

वर्णान् जनयते इत्यादिरूपेण । अर्थात् अत्र आत्मा अन्तःकरणं न चैतन्यं तस्य निर्विकारत्वेन वृत्तिपरिणामाऽसम्भवात् । अन्तःकरण-विशिष्टस्य तत्सम्भवेऽपि चित्सन्निधौ अन्तःकरणस्यैव कर्तृत्वम् । अयः कान्त सन्निधानेऽयसः सक्रियत्वमेवेति सांख्यमतेन सचान्तः-करणरूपात्मा संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्य नाम एक बुद्धि विषयान् कृत्वा तद्बोधनेच्छया मनोयुक्तं करोति । तदिच्छावन्मनः कायाग्नि माहन्ति, स कायाग्निर्मारुतं प्रेरयति, स मारुतः उदीर्णः शब्द प्रयोगेच्छयोत्पन्न यत्नाऽभिहताग्निना नाभि-प्रदेशादूर्ध्वं प्रेरितो वेगान्मूर्धपर्यन्तं गतः प्रतिनिवृत्तश्च वक्त्रमापद्य तदुक्त यत्नसाहाय्येनैव तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्था-नान्याहत्य पराद्याख्यमन्तःस्थितं शब्दं वर्णत्वेनाभिव्यञ्जयति । उत वा स्वात्मानं वर्णत्वेनाभिव्यञ्जयति ।

विषमीकारास्तु केचन विद्वांसः आत्माऽन्तःकरण मित्यपव्याख्यानं वदन्ति । तन्मतानुसारमात्मपदस्य जीवपरत्वे बाधकाभाव एव, अतो जीव एवात्मपदवाच्यो भवति । तस्मादत्राऽयं सिद्धान्तो वाक्यपदीय-कारेण सम्यक् समर्थितः यथा–

तस्य प्राणे च या शक्तिः या बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥
(वा०ब्र०का० ११७)

तेनात्र शब्दो द्विविधः स्वीकार्यः प्राणाधिष्ठानः, बुद्ध्यधिष्ठानश्च । स प्राणः बुद्धि शक्तिभ्यां प्रतिलब्धाऽभिव्यक्तिरेवार्थमवबोधयति । तत्र

प्राणे बुद्धितत्त्वेनान्तराविष्ट ऊर्ध्वमभिप्रवृत्तः तत्तत्स्थानेषु विवर्तमानः आकारादिरूपेण भिन्नतयाभासमानः अक्रमे शब्दात्मनि भेदानुराग-मात्रं सन्निवेशयति। समस्तस्य प्रपञ्चस्य निबन्धनी या काचन शक्तिः सा व्यवहारकारणभूता शक्तिः शब्दाश्रितावाच्यवाचक भावरूपा सूक्ष्मं वाक्तत्त्वं गवादिपदार्थं गोशब्दादिरूपेण च विवर्तते इति तदधिष्ठानस्य वाक् तत्त्वस्य पिण्डपरिणामे नाभिव्यक्ता गोत्वादि-जातयो वाच्याः गोवृक्षादि शब्दपरिणामेन गोशब्दत्वादि जातयो वाचिकाः तदेवमाश्रयस्योत्पत्तौ जातीनाभिव्यक्त्या वाच्यवाचक-रूपस्य व्यवहारस्य वाक्तत्त्व निबन्धनमिति। यः शब्दो नेत्रं ज्ञापकं यस्य स यन्नेत्रः प्रतिभात्मा प्रतिभाविषयत्वात्प्रतिभा अयं भेदरूपो व्यवहारः प्रतिपुरुषं प्रतीयते। अत एवोक्तं श्रुतिषु यत् वागेवार्थं पश्यति वाग् ब्रवीति, वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुंक्ते, इति वाक्तत्त्वमेव भोक्तृभोग्य भोगरूपेण विवर्तते न वाह्यं वस्तुकिञ्चिदपि।

केषाञ्चिदिदमपि मतं यत् यः अजस्रवृत्तिश्शब्दः वहिरन्तश्च वर्तमानः अन्तः सकल्परूपः ध्वनिरूपः शब्दः सूक्ष्मत्वान्नोपलभ्यते स एव व्यञ्जयन्त्यनेनेति व्यञ्जनं तालवृन्तकमित्यमरकोशप्रमाणेन अजगतिक्षेपणयोः करणेऽर्थेल्युटि सति 'वायौ 'इति पक्षे वी भावाभावः तस्माद् व्यञ्जनाद् वायुरिव, यथा सर्वत्र वायुपरमाणवो व्यस्ताः सन्तः व्यञ्जनात् संहता भवन्ति। एवं स्वनिमित्ताद् वक्तुः प्रयत्नवशादेव-श्रोत्रदेशं प्राप्तः प्रतीयते। एकस्यैवात्मनो भेदौ शब्दार्थौ अपृथग् रूपेण व्यवस्थितौ सतौ स्थितौ। तस्मादेव तस्य शब्दस्य प्राणे बुद्धौ वृत्तिविशिष्टान्तःकरणे च या शक्तिः अर्थाद् वहिः शब्द भवनशक्तिः व्यवस्थिता वर्तते सैवेषा स्थानेषु कण्ठादिषु विवर्तमाना सती कादि भेदं प्रतिपद्यते। स एष स्फोटः प्रणवस्योंकारस्यैवापरो हि शब्दात्मको भेदः। यश्च प्रणवः समाहितात्मनो ब्रह्मणः हृदयाकाशा दुद्भूतान्नादाद्भिव्यक्तस्तद्रूपतां भजति। यथोक्तमत्र भगवान् वेद व्यासः—

ततोऽभूत् त्रिवृदोंकारो योऽव्यक्त प्रणवः स्वराट्।
यत्तल्लिङ्गम्भगवतो ब्रह्मणः परमात्मनः॥ इति भा०पु० १२।६।

सूत संहितायामपि प्रोक्तं वर्तते—

परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम् ।
प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः ॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ॥ इति ।

शारदातिलकेऽपि सम्यक् प्रतिपादितं वर्तते यथा—

नित्यानन्दवपुर्निरन्तरगलत् पञ्चाशद्वर्णैः क्रमात्
व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदुचिरे सुकृतिनश्चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशांक सदनं वाचामधीशं महः ॥ इति ॥

तथा च तै० उ० २ । १ । ४१, उपनिषदि सत्यं ज्ञानम् (आनन्दं ब्रह्म) एवं बृ० आ० उ० अपि (३ । ६ । २८) इत्थं श्रुतिप्रदिपादितं यद् ब्रह्मज्ञानानन्दादिरूपं यथा प्रकर्षेण नवं निखिलविकाररहितं तथा कूटस्थं तथा प्रकर्षेण नवस्तत्प्रतिरूपो यस्मादिति विग्रहवलेन शब्दोऽपि प्रणव एव प्रोच्यते । यथा—योगदर्शने (१ । ३५) विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति निबन्धनीति सूत्रेण नासिकाग्रेधारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः, जिह्वाग्रे रससंवित् तालूनिरूप संवित् जिह्वामध्ये स्पर्श संवित्, जिह्वामूले च शब्द संवित् इत्येताः प्रवृत्तयः उत्पन्नाः चित्तं स्थितौ निबन्धन्ति, तस्मादेव ता विषयवत्य उच्यन्ते । ततो विशोका वा ज्योतिष्मती (यो० द० १ । ३६) इति सूत्रेण विगत शोका ज्योतिष्मती प्रकाशरूपा प्रवृत्तिरुक्ता । सा च उदरोरसोर्मध्ये यत्पदमधोमुखं तिष्ठति-अष्टदलं रेचकप्राणायामेन तदुर्ध्वमुखं कृत्वा तत्रालम्बने चित्तं धारयेत् । तन्मध्ये हि सूर्यमण्डलमकारो जागरितस्थानम् । तदुर्ध्वं चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तदूर्ध्वं वह्नि मण्डलं मकारः सुषुप्ति स्थानम्, तदूर्ध्वं ब्रह्मव्योमात्मकं नादस्तुरीयस्थानम् यार्ऽधमात्रेति । योगिनां तत् कर्णिकायां विष्वग् व्यापि शाखा सहस्रवत्या मनोवहाख्या नाड्या मूलं तिष्ठति तस्या ऊर्ध्वमुखी शाखा एका सुषुम्नाऽऽख्याऽन्तरे सूर्यादि मध्यगा । तथा

वाह्यान्यपि सूर्यंमण्डलानि प्रोतानि । सैव मनोवहानाडी चित्तस्थानं प्रोच्यते । तस्यामेव ध्यानधारणासमाधिभिश्चित्तसाक्षात्कारो भवति । सोऽयं प्राणिमात्रस्य हृद्देशस्थोऽर्धमात्रारूपस्तुरीयोंशोऽर्धं-मात्रा रूपो नादः स्फाटाऽपरपर्यायः उच्यते । उक्ततदाशयकं वचनं श्री दुर्गा सप्तशत्यामपि प्रकाशितं (यथा अ० १, श्लो० ७४) ।

---

# अहिंसैव महामन्त्रश्शाश्वतः परिकीर्तितः

अनादिकालत एव प्रतिकल्पमधुनातनं यावदपि लोकाभ्युदय-कारिषूपायेषु मनीषिणो नैकसिद्धान्तप्रवर्तका निष्ठिता वाऽभूवन् । किन्तु यथाकालं यथादेशं यथाप्रकृति मर्यादापालनपरैस्तैः पात्रतां विचार्य जगति नाना धर्मा भौतिकाऽध्यात्मिकोन्नत्यैप्रसूताः प्रवर्तिताः लोकांश्च तत्र तत्र यथानियमेवाबद्धीकृत्य सरलाः कठिनाः स्वल्पकाला-ऽऽयाससाध्याः, दीर्घकालायाससाध्याश्च नियमोपनियमा विभिन्ना व्रतविधयश्च समुदीरिताः सम्यक् ।

प्रतियुगञ्च तत्तद्धर्मोपासका अपि कठिनातिकठिनक्रियाभिः साधका अपि सिद्धिपन्थानमाश्रिता एवेत्यपिनिश्चयः । परमधुना-कलिदावानलेनाद्य साधनं भष्मतांगतमिति भागवतपुराणमाहात्म्य-वचनेनेत्थं प्रतिभाति यत् ते युगानुसारमेव प्रवर्त्याः । अद्य सत्यन्नास्ति दयानास्ति नास्ति शास्त्रविवेकतेत्यादि वचनमक्षरशश्चरितार्थमेव दृष्टिपथे समेषाम् ।

अतोऽस्यां परिस्थितौ कः सरलोपायः ? सर्वजनहिताय साधु पन्थाः ? यम-नियमाश्चातोव क्रियाकाठिन्येन न सर्वजनपालन-पराः, श्रवण-मनन-निदिध्यासनानि चापि महता पुण्यौघेन सत्संस्कार-वतामेव सुलभानि सन्धारितानि फलप्रदानि । अल्पायुषामज्ञानां संस्कारहीनानां विषमपरिस्थितावापन्नानाञ्चकृते वेदितव्येषु विभिन्नधर्मेषु सरलतमो देशकालपरिस्थित्यनुकूलतामासाद्य सर्वथा-स्वल्पायासेनाहिंसाव्रतस्य विधिरतीवसुगमः प्रशस्तश्चेति मन्यते ।

अतस्सत्यमिदं यत् यावद्धिंसा न हिंस्यते जनैस्तावदत्रकल्याणन्न वास्तविकं प्रतिपद्यते । अहिंसाव्रते कियद्बलमित्यत्र भगवतः पतञ्जले-र्वचनमेव प्रमाणं यथा—

**अहिंसा प्रतिष्ठायां सन्निधो वैरत्याग इति ।**

शाश्वतिक वैरभावमापन्ना अपि सिंहव्याघ्रादयो हिंसावृत्ति-स्वभावाः पशवोऽपि गो हरिण्यादिभिः सहत्यक्तवैरभावाः सहैवोटजेषु-महर्षिणामाश्रमेषु प्रेम्णाविचरन्तो व्यवहरन्तश्च श्रूयन्ते पुराणादिषु। महर्षिणां जटाजूटेष्वपि विभिन्ना खगा अपि विहितनिवीडा अपि-शास्त्रेषु वर्णिताः । एतत्सर्वं हि धर्मोत्तमस्याहिंसाव्रतस्य प्रभावकारि-माहात्म्यमेव । यदा हिंसकाः पश्वादयो विजिता भवन्ति तर्हि मानवा-कथन्न जेतुंशक्या अहिंसाव्रतैः ।

बहुकालतो जातपारतन्त्र्ये भारतवर्षे स्वातन्त्र्यलाभायापि महा-मन्त्रमनुभूयाहिंसां महात्मागान्धी सर्वैः सहान्दोलनप्रक्रियां च यथा शास्त्रमेवावधार्य तदहिंसाव्रतपरायणो बभूव, येन भारतभुवः स्वा-तन्त्र्ये साफल्यमधिगम्य तन्महत्त्वं प्राकाशयत् । महात्मनोऽहिंसा-ऽऽन्दोलनं हि बहुराष्ट्रेषु नैतिकोधार्मिकश्च महान् पन्था इति प्रथितोऽभवत् । सम्प्रति भारतस्य प्रायः प्रतिप्रान्तं प्रतिग्रामं नगरञ्चा-शान्तिपिशाचिनी व्यावृतमुखा लोकान् ग्रसितुमुद्यता वर्तत एव, ततो मुक्तये नु सत्यमहिंसैव सबलः पन्थाः कल्प्यते ।

पञ्जाबप्रान्तस्यासामप्रान्तस्यान्यस्यापि च प्रान्तस्य भयावहा दुःखदायिनी विषमापरिस्थितिः सर्वैरप्यनुभूयते । स्थितेस्तस्याः समाधानाय सर्वे भारतीया भारतस्याखण्डतामेकताञ्च कामयमानाः प्रयतमानाश्च सन्ति । नैकवारं कृतप्रयासास्तथापि सत्समाधान पन्था न गोचरीभूत इति सम्भाव्यते । स्वार्थंपरायणा जनाः वा काश्चन समितयो दलानि वा यदि वेदमूलकशास्त्राणामभ्यनुज्ञामु-पास्य व्यवहारे प्रवृत्ता भवेयुश्चेदवश्यमत्र सफलतामाप्नुयुरेव । प्रति-प्रान्तं नेतारः शासकाः केन्द्रियशासकाश्च यदर्थं चिन्ताकुलाः निष्फल-प्रयासाः तेऽपि यशोभाजो भवेयुः प्रशस्तस्याहिंसाव्रतस्य श्रीगान्धी-महात्मनः प्रियस्य सर्वत्र प्रचार-प्रसाराभ्याम् । एषा खलु सूक्तिरपि वर्तते—

"आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।"

यदस्या उपासका अद्यापि भवेयुश्चेत्तर्हि—सम्प्रति-यत्र कुत्रापि श्रूयते—क्वचिन्नार्योहन्यन्तेपुरुषैः, क्वचित्पत्न्या पतिरेवहतः क्वचिद् भ्रात्रा भ्रातैव हन्यते, पुत्रः पितरं हन्ति, सेवकाः स्वामिनं घ्नन्ति, शाश्याः शासकमेव, विभिन्नैर्दलैर्विभिन्नदलगताजनाः क्वचिद् हन्यते । दस्यवो ग्रामान् नगराणि च भष्मसात्कुर्वन्ति, निरपराधिन एवाधिक्येन पञ्चत्वं प्राप्यन्ते इति दशा कदापि न श्रूयेदितिप्रयत्नोयम् ।

स्थितावस्यां कथमात्मा रक्ष्यः ? कथं परिवारजना रक्ष्याः ? गृहसम्पदः कथं रक्ष्याः ? शासकैः प्रजाः कथं रक्ष्याः ? भारतभूः कथं-रक्ष्या ? इति चिन्ताऽऽकुलो लोकोदृश्यतेऽधुना ।

अतस्तच्छमोपायोऽहिंसैव महद् व्रतम् । अहिंसा का ? कथं तस्य ज्ञानं प्रचारश्च शक्यः ? अत्र शास्त्राणि रक्षितव्यानि प्रचार माध्यमेन । हिंसापि न केवलं शरोरात् प्राणवियोग एव किन्तु मनसा-वाचा-कर्मणा कथञ्चिदपिकस्यचित्कुत्रापि कष्ट प्रदानमपि । तस्मादहिंसा-विषये यथा शास्त्रमाप्तवचांसि समवधार्यशिक्षणसंस्थासु सूक्तीनां तासामहिंसांपराणां निर्धारणमतीवावश्यकं भाति । धर्मशास्त्राणि पुराणेतिहासादीनि तत्तद्धर्मव्रतानि बोधयन्ति । सदा येन स्वस्मिन् स्वपरिवारजने-नगरे-प्रान्ते सम्पूर्णे च भारतेऽहिंसाव्रतस्य-महात्मनो गान्धिनोऽतिप्रियस्य प्रचारः प्रसारः सूक्तिमाध्यमेन सर्वासु शिक्षणसंस्थासु नैतिकदृष्ट्यापि परमोपयोगितयाऽनिवार्यः प्रतिभात्येव । अहिंसाव्रतेन सर्वविधधर्मरक्षणं सम्भवं येन कोऽपि सम्प्रदायः समाजो वा न कथमपि-विरोधी तस्य । यत्र कुत्रापि साम्प्रतं दुःखप्रदाः स्थितयोऽद्यश्रूयंते तत्र प्रायोहिंसामूलका एव । तस्मादहिंसाव्रतस्य शिक्षया अपि राष्ट्रियनैतिकधर्मरूपतया सार्वत्रिकं पालनमर्हन्ति । पुरापि यदा सुखप्रदाः परिस्थितयोऽनुभूतास्तत्राहिंसैव मूलरूपेण विद्य-तेस्म । एतदपि सत्यमेव येऽन्ये धर्मास्तेऽप्यहिंसापेक्षया शास्त्रानुरोधि-क्रियाकलापाधिष्ठितमार्गेणातोवकठिना सर्वैरनुष्ठातुमशक्याश्चेति ।

अहिंसायां न तथा क्रियाविस्तारः शास्त्रमूलको यथाऽन्यधर्मेषु । किन्तु केवलमियमेकैव भावनामूलभूता यत्स्वार्थपरैर्यथा मनसा-वाचा-कर्मणा वयं कष्टमनुभवामः-हिंसायां प्रवृद्धायां सर्वे मत्सम्बन्धिनः पीड्यन्ते दुःखमापन्नाश्च भवन्ति, तथाऽस्माभिरपि परेजनाः ।

आत्मनः कष्टमिवाऽन्येषामपिकष्टानुभवोनुभवनीयः सर्वैरपि। अहिंसा न खलु वहिरेव जगति सर्वत्रविजयप्रदा शान्तिप्रदा च, किन्तु स्वस्मिन्-स्वपरिवारेऽपि, येन पारस्परिकः प्रेमभावोदयः सर्वसुखसम्पादन-हेतुरपि सिद्ध्यति।

अहिंसया सर्वे नैतिका-दैशिकाः क्षेत्रीयाः प्रान्तीयाः विवादाश्चापि सुतरां परिहृताः सुसमाहिताश्च भवन्ति। वस्तुतोऽहिंसायामेव प्रवृद्ध-मानायां वसुधैव कुटुम्बकमितिसद्भावोदयः स्थायी स्यात्। यदि सर्वत्र राष्ट्रधर्मतया राज्यधर्मतया चाहिंसाव्रतस्य शिक्षा प्रवर्द्धयेत्—तर्हि सारल्येन स्वल्पकालेनावश्यं सर्वे विवादाः विषमता च परि-हीयते। हिंसया तु कदापि किमपि स्थायिसमाधानं नाऽभूत् न भविष्य-त्यपि। हिंसया लब्धा सर्वा-अपि भौतिकाः सिद्धयः क्षणस्थायिन्यः दुःखप्रदाएवादावन्ते च। अहिंसया तु प्राप्तसुखसम्पदः सदा स्था-यिन्यः सुखप्रदा इह परत्रापि च।

वेद एव सर्वशास्त्राणां मूलो मन्त्रराशिः। मन्त्रश्च-मननकर्तृणां त्राता भवतीति निश्चितम्। तस्मादेव-वेदस्य मन्त्रताऽन्वर्थताम्भजति। स च वेद एकः सन्नपि चतुर्धाजातो वेदव्यासेन। तन्मूलकान्येव-धर्मशास्त्राणि—वेदोपवृंहण पराणि पुराणेतिहासादीनि च लोक-कल्याणाय एव प्रवर्तितानि भगवद् विभूतिभिराचार्यप्रवरैर्यथा युगं यथाकालमेव। वेदोऽपि परब्रह्मणो निःश्वासरूप एव तस्यनिः-श्वसितं वेदा इति वचन प्रामाण्यात्।

भगवदवतारेषु भगवान् कृष्णः पूर्णं ब्रह्ममन्यते, कृष्णस्तु भगवान् स्वयमिति भागवतपुराणवचनात्। कृष्णरूपेणावतीर्य जगति परब्रह्मैव जगति महत्यो धर्ममर्यादास्तदीय प्रक्रियापथमपि प्रावर्तयदेव। तस्मादीश्वराणां वचः सत्यं चरित्रन्तु-क्वचित्क्वचिदिति सूक्तिमनुरु-द्ध्य भगवतः श्रीकृष्णस्योपदेशवचांसि पुराणेतिहास धर्मग्रन्थै-रुद्धृतानि सर्वथा लोकहितकारिण्येवेति निश्चयः।

अत्र विस्तरभयादेव स्वभाषाऽपेक्षया प्रोक्तं—शास्त्राणां भाषा सूपदेशपरा यथा शास्त्रमेवाहिंसा-माहात्म्य संप्रकाशयितुकामेन मयो-पस्थाप्यन्तेऽत्र यथामतिप्रतिपादिमत्र विद्वद्भिरवधारणीयं स्वयम्।

---

# अनुसन्धेय विषयः

व्याकरणदर्शने सर्वशास्त्रोपजीव्य, 'अध्यात्मवादविमर्शः' वर्गीय विषयसूची—

(अ) देहली दीपन्यायेन सर्वशास्त्रोपजीव्यत्वस्य व्याकरणदर्शने—'अध्यात्मवादे' चोभयत्रान्वयविषयकविचारपुरस्सरं व्याकरणस्य दर्शनत्वमध्यात्मवादस्यचोपपत्तिप्रयोजन प्रतिपादनम् ।

(इ) व्याकरणे 'अध्यात्मवादप्रक्रिया' शब्दसाधुत्वप्रक्रियाया उपजीव्यभूता, तयोरुपजीव्योपजीवकभावत्वे पारमार्थिक-व्यवहारस्वरूप निर्णयः ।

(उ) अन्यदर्शनेषु व्याकरणस्योपजीव्यत्व विचारः ।

(ऋ) अन्य दर्शनापेक्षया व्याकरणदर्शने 'अध्यात्मवादस्य वैलक्षण्यम्' ।

(लृ) अन्यमतेन अध्यात्मवादस्य वैयाकरणमतेन समन्वयात्मकम-समन्वयात्मकञ्च विवेचनम् ।

(ए) व्याकरणसिद्धान्तेनाध्यात्मवादविवेचनम्महत्वप्रतिपादनञ्च ।

(ऐ) जगतः प्रक्रियायां शब्दसाधुत्वविधेः वैज्ञानिकतानिरूपणम् ।

(ओ) जगतो निमित्तोपादानकारणत्वं शब्दब्रह्मण्येवेति व्याकरणस्याध्यात्मिकम् मुख्यन्तात्पर्यम् ।

(औ) लोकोपयोगितायै भारतीयसंस्कृतिरक्षायै च व्याकरणस्य महत्वपूर्णयोगदानम् ।

(ह) उपसंहारः ।

अधस्तादनुसन्धेयविषये समासतः कश्चन विचारः प्रस्तूयते। सत्स्वपि बहुषु व्याकरणान्तरेषु पाणिनीय व्याकरणस्यैव वेदाङ्गत्वम् 'अन्यव्याकरणेषु लौकिकवैदिकोभय शब्दसाधुत्वस्यानुपलम्भात्, पाणिनीयव्याकरणस्यैव वेदमूलकत्वाच्च। अ इ उ ण् इति सूत्रमुपक्रम्य ऋक्तन्त्रव्याकरणे उक्तम् 'वर्णं समाम्नायमेवाभिलक्ष्य इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं ब्रह्मा वृहस्पतये प्रोवाच, वृहस्पतिरिन्द्रायेत्यादि तं खल्विममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं ब्रूयाद् ब्रह्मराशिः इति वेदानां वेद इति श्रुतेरस्यैव वेदमूलकत्वम् वर्तमान-काले शब्दसाधुत्वासाधुत्वव्यवस्थापि पाणिनीयव्याकरणानुसारेणैव-ग्राह्येति पराशरपुराणे यथोक्तम्—

पाणिनीयं महाशास्त्रं पदसाधुत्व लक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥

पाणिनीय व्याकरणस्य न केवलं शब्दसाधुत्वमेव प्रयोजनमपि तु साक्षात्कैवल्यमपि, कैवल्यञ्चैतदखिल दर्शनेषु सिद्धान्ततोऽध्यात्म-तत्वमुपजीव्यैव सिद्ध्यति, यथाह—भगवान् भाष्यकारः—

अत्रा सखायः सख्यानि जानते, चत्वारि शृङ्गा इत्यारभ्य महा-देवो मर्त्या आविवेश इत्यादिवचनम् एतेन पाणिनीयतात्पर्यज्ञो-भगवान् पतञ्जलिरेव, तदभिप्रायज्ञश्च भगवान् भर्तृहरिरिति नात्र संशयः, तेन हि ब्रह्म, वाक्यपदात्म क्काण्डत्रयं वाक्यपदीयं व्यधायि। तदवगाहनेन व्याकरणशास्त्रस्याध्यात्मिकत्वे प्रभूत सम्पदः सम्प्रका-श्यन्ते। भगवता भर्तृहरिणापि—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥

इति वचनेन कैवल्यसाधनाय व्याकरणमेवाध्यात्मसोपानरूपतया प्रख्यापितम्।

अनादि निधनं ब्रह्मेति कारिका ब्रह्मकाण्डस्यादिभूताऽनादिब्रह्म-निरूपणपरा, समग्राणां दर्शनशास्त्राणामाध्यात्मिकवाद प्रशस्तौ तद्वाद

संस्थापनविधौ चोपजीव्यत्वेन दृष्टिपथायते। तस्यां कारिकायां द्वाभ्यामनादिनिधनविशेषणाभ्यां प्रागभाव प्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं नित्यत्वमेव शब्दब्रह्मणि बोध्यते। एतदेव नित्यत्वं संकोच विकासपरैर्वचोभिरन्यैरपि दार्शनिकैर्ब्रह्मणि बोध्यते। तेन च दैशिक-कालिक परिच्छेदराहित्यं सूचितम्भाति ब्रह्मणि। तत्र हि यतो वा इमानि भूतानि जातानि, जन्माद्यस्य यत इति श्रुतिभ्यां बोधितं ब्रह्मणोलक्षणमनुरुद्धयैव भर्तृहरिः कारिकायामस्यां प्रक्रिया जगतो यत इति वचनम्, नामरूपात्मकमिदमखिलञ्जगत् यस्मात्सकाशात् सृज्यते, स्थीयते, प्रलीयते चेत्यर्थकम् प्रयुज्य मोक्षाख्य-पुरुषार्थलाभायैवाध्यात्मवादसोपानं लोकोपकारकमप्रतिमञ्चकार। 'शब्दस्यपरिणामोऽयमित्याम्नाय विदो विदुः' (का० १-१२१) प्रत्यक् चैतन्ये ज्ञानरूपेऽन्तरविद्यया सन्निवेशिताः पदवाक्यरूपावर्णाः परप्रत्ययनार्थं प्रयत्नेनाभिव्यज्यन्ते। सेयं वर्णव्यक्ति वर्णसंघातरूपा, वर्णरूपस्यात्मनोऽभिष्यन्द इत्युच्यते। अत्रत्यं शब्दब्रह्मेत्थमुच्यते–

> यः सर्वपरिकल्पनामाभासेऽप्यनवस्थितः।
> तर्कागमानुमानेन बहुधा परिकल्पितः॥

मुमुक्षुभिरूपास्यमानञ्चापि—

> अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते।
> सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षिभिरुपास्यते॥

ततोऽग्रेऽपि-'एकमेवाद्वितीयं ब्रह्म प्रणवएवैकास्त्रिधाऽभिव्यज्यते' इत्यादि श्रुतिवचनैः सजातीय विजातीय स्वगतभेदशून्यं यच्छब्दतत्वमेकमेव पौनः पुन्येनाम्नातम् एकमेव यदाम्नातमित्यादि वचनं वेदानुगामितयाऽध्यात्मिकां प्रत्याययति। अथ च विम्व प्रतिविम्वयोर्यथा न भेदः तथा शब्दार्थयोरभेदाद् ब्रह्मवेदयोरपि न भेद इति व्याकरण शास्त्रीयाध्यात्मवादः सर्वशास्त्रीयाध्यात्मवादा —

# व्याकरणदर्शने सर्वशास्त्रोपजीव्य-अध्यात्मवादविमर्शः

वर्गीय विषयसूची—

(क) व्याकरणस्य दर्शनत्वस्थापनम् प्रयोजनप्रतिपादनञ्च ।

(ख) व्याकरणे 'अध्यात्मवाद प्रक्रिया' 'व्याकरणाध्ययनेऽधिकारिणां प्रवृत्तिपरामर्शश्च ।

(ग) अन्य दर्शनेषु व्याकरणस्योपजीव्यत्व स्थापनम् ।

(घ) अन्य दर्शनैः सह व्याकरणस्य सप्रमाणमुपयोगित्व प्रतिदानम् ।

(ङ) अन्य दर्शनापेक्षया व्याकरणदर्शने 'अध्यात्मवादस्यवैलक्षण्यम् ।'

(च) मतान्तरीयाध्यात्मवादस्य वैयाकरणमतेन समन्वयात्मकमसमन्वयात्मकम्वा विवेचनम् ।

(छ) व्याकरणसिद्धान्तेनाध्यात्मवादविवेचनम्महत्त्वप्रतिपादनञ्च ।

(ज) वैज्ञानिकदृष्ट्या लोकोपकाराय व्याकरणदर्शनस्य महत्त्वपूर्णं स्थानम् ।

(झ) भारतीय संस्कृति संस्काराणामुन्नायकं व्याकरणदर्शनम् ।

(ञ) उपसंहारः ।

सावतरणमनुसन्धेयविषयकः संक्षिप्ताकारः—

'प्रयोजनमनुद्दिश्य न मन्दोऽपिप्रवर्तत' इतिवचनानुसारमेव प्रतिपाद्ये विषये-किमपि प्रयोजनेन भाव्यमिति विचार्यं पूर्वन्तदेवावधार्यते,

जगतिलब्धजन्मनां जनानाभीष्टसाधनत्वप्रकारकं ज्ञानं प्रथमं प्रवृत्ति प्रयोजकम् 'इदं मदोष्ट साधनम्' ततः परञ्च कृतिसाध्यत्वप्रकारकं ज्ञानं तदभीष्टकर्मणि प्रयोजकं भवति, इदं मत्कृति साध्यमितिवचनात् । तदेवमिष्टपदार्थः कः ? इति जिज्ञासायाम् धर्मार्थकाममोक्षाख्याः पुरुषार्था एवावधार्य्यन्ते सुतराम् । पुरुषार्थचतुष्टय साधकानि शास्त्राण्येवेत्यपिनिश्चितम् । शास्त्राण्येव समेषां सदुपदेशद्वारा लौकिक पारलौकिक श्रेयस्कराणि, सत्स्वपि नैकविधेषु शास्त्रेषु पदवाक्य प्रमाणानामेवप्राधान्यम् । तत्राणि च पदस्यैव प्राथम्यं सर्वोपकारकत्वात् ।

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्', 'पाणिनीयं महाशास्त्रमित्यादि वचनमेव पदशास्त्रस्य व्याकरणस्य महत्त्वं ख्यापयति । शब्दशास्त्रस्य व्याकरणस्य न केवलं शब्दसाधुत्वमेव प्रयोजनम् किन्तु साक्षाद्कैवल्यमपि कैवल्यञ्चैतदखिलदर्शनेषु सिद्धान्ततोऽध्यात्मतत्त्वोपजीव्यमेवाधारीकृत्य सिद्धयति । यथोक्तम्भगवताभाष्यकारेण 'अत्रा सखायः सख्यानि जानते', 'चत्वारि शृङ्गा त्रयोऽस्य पादा, द्वे शीर्षे सप्तहस्तासो अस्य, त्रिधाबद्धो वृषभोरोरवीति, महादेवो मर्त्या आविवेश' इत्यादि वचनम् । अत्रैव भगवान् भर्तृहरिरपि व्यवहरति—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ।।

अथ च 'तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्' इत्यादिवचनैर्व्याकरणदर्शनेऽध्यात्मवादोपपत्तिः सुतरां संगच्छते ।

यद्यपि व्याकरणानि बहूनि सन्ति तथापि तेषु लौकिकवैदिकोभयशब्दप्रतिपादकतया पाणिनीयमेव विशिष्यते वर्णसमाम्नायमूलकत्वात् । पाणिनीयतात्पर्यज्ञो भगवान् पतञ्जलिरेव, तदभिप्रायज्ञश्च भगवान् भर्तृहरिरिति नात्रसंशयः । तेन हि ब्रह्म-पद-वाक्यात्मकं वाक्यपदीयं व्यधायि । तदवगाहनेनापि व्याकरणशास्त्रस्याध्यात्मिकत्वे लोकहिताय प्रभूतसम्पदः सम्प्रकाश्यन्त एव ।

अनादिनिधनं ब्रह्मेति कारिका ब्रह्मकाण्डस्य समग्राणां दर्शन-शास्त्राणामाध्यात्मिकवादप्रशस्तौ तद्वादसंस्थापनविधौ चोपजीव्य-त्वेन दृष्टिपथायते सताञ्चेतस्सु। तस्यां कारिकायाम् द्वाभ्यामनादि-निधन विशेषणाभ्यां प्रागभाव प्रतियोगित्वेसति ध्वंसाप्रतियोगित्वरूपं नित्यत्वमृब्रह्मणि बोध्यते। एतदेव नित्यत्वं सङ्कोचविकाशपरैर्वचोभि-रन्यैरपि दार्शनिकैर्ब्रह्मणिबोध्यते, तेन च दैशिक, कालिक परिच्छेद-राहित्यं सूचितं भवति ब्रह्मणि। तत्र हि ब्रह्मेति नाम सङ्कीर्तनं शब्द-तत्त्वमिति स्वरूपकथनमिति सम्यगवधार्य वक्तुमिदं शक्यते यत् यतो वा इमानि भूतानि जातानि, जन्माद्यस्य यत' इति, इतिश्रुतिभ्यां बोधितं ब्रह्मणो लक्षणमनुसन्धायैव भर्तृहरिः कारिकायामस्यां प्रक्रिया जगतो यत इति वचनेन नाम रूपात्मकमिदञ्जगद् यस्मात् सकाशात् सृज्यते, स्थीयते, प्रलीयते चेत्यर्थकं प्रयुज्य मोक्षाख्य परमपुमर्थलाभाय तदध्यात्मवाद सोपान लोकोपकारकम् प्रतिमञ्चकार। तच्च ब्रह्म शब्दतत्त्वम् शब्दात्कमित्यर्थः। 'शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः' (का० १-१२१) इति। शब्देष्वेवाश्रिताशक्तिः' (का० १-११९) इत्यादि च। प्रत्यक् चैतन्ये ज्ञानरूपेऽन्तरविद्यया सन्निवेशिताः पदवाक्यरूपा वर्णाः पर प्रत्ययनार्थंप्रयत्नेनाभिव्यज्यन्ते। सेयं वर्ण व्यक्तिर्वर्गसंघातरूपा ब्रह्मरूपस्यात्मनोऽभिष्यन्द इत्युच्यते। अत्रत्यमेव शब्दब्रह्मेत्थमुच्यते—

> यः सर्वपरिकल्पनामाभासेऽप्यनवस्थितः।
> तर्कागमानुमानेन बहुधा परिकल्पितः॥

इदमेवब्रह्ममुमुक्षूणाङ्कृते परममाराध्यम्—यथा—

> अन्तर्यामी सभूतानामाराद्दूरे च दृश्यते।
> सोऽत्यन्त मुक्तो मोक्षाय मुमुक्षुभिरुपास्यते॥

अनादि निधनमिति कारिकायां ब्रह्मेति शब्दतत्त्वविशेषणेन सांख्य-मतं प्रधानमपि व्यावर्तितम्। तेन हि 'क्षरमम्बरान्तधृतेरिति', सूत्र-बोधितं सर्वाश्रयत्वं शब्दतत्त्वस्य संसूचितम्, विवर्ततेऽर्थभावेनेति वचनेनारम्भवाद परिणामवादौ निरस्तौ। द्वितीय कारिकायाम्—

'एकमेवाद्वितीयं ब्रह्म' 'प्रणव एवैकास्त्रिधाभिव्यज्यते' इत्यादिश्रुतिजातैः सजातीय विजातीय स्वगतभेद शून्यं यच्छब्दतत्त्वं ब्रह्म एकमेव पुनः पुराम्नातम् । अथ च यथाबिम्बप्रतिबिम्बयोर्न भेदस्तथा शब्दार्थयोरभेदाद् ब्रह्मवेदयोरपि न भेद इति व्याकरणशास्त्रीयाध्यात्मवादः सर्वशास्त्रीयाध्यात्मवादाऽपेक्षया सर्वथा विलक्षण एव । दर्शनान्तरेषु ब्रह्मणः प्राप्तिर्दशधाविकल्पिताः शोधप्रबन्धे विवेचयिष्यन्ते, एव तत्र । व्याकरणदर्शने ब्रह्मप्राप्तिस्तद् विलक्षणेत्यपि प्रबन्धे निवेदयिष्यन्ते ।

सत्स्वपि विभिन्नदर्शनेषु तत्र तत्राध्यात्मवाद विचारविशेषेषु च व्याकरणदर्शनन्तत्रत्यश्चाध्यात्मवादः सर्वातिशायी विलक्षणो विशिष्यते । सर्वेषु च दर्शनेषु परस्परं विवादास्पदो विभिन्न प्रक्रियात्मकोऽध्यात्मवादस्तथापि व्याकरणशास्त्रीयाध्यात्मवादे न खलु तथा विवादोऽध्यात्मवादविषयकः प्रायः । नाम रूपात्मकस्य जगतः प्रतिभानं शब्द ब्रह्मणो विशिष्टाख्यातिश्च लोक व्यवहारेऽपि समान रूपेण सर्वैरपि स्वीक्रियते । कस्तावद् दार्शनिकः ? तदीयः सिद्धान्तश्च ? यत्र शब्दानुविद्धज्ञानोपजीव्यत्वन्नस्यात् । अथ चाद्वैतवादिवेदान्ति मतं तु शब्दब्रह्मवादिवैयाकरणसिद्धान्तेनैवानुस्यूतं प्रसज्यमानं दृश्यते ।

वस्तुतस्तु चतुर्थो मोक्षाख्य पुरुषार्थं एव मुख्योदर्शन जगति, स च सर्वैरुपायैः प्राप्तव्य एव, तद् विषये व्याकरणदर्शनस्य यथा साक्षात्सम्बन्धो लाघवेन प्रतिपादितस्तथान्नान्य दर्शनेषु, अन्येषु दर्शनेषु च प्रक्रिया-उपप्रक्रिया द्वारा परम्परया साध्यत्वेन गौरवमाहृति । तेन व्याकरणदर्शनस्य वैशिष्ट्यं सुतरां संगच्छते ।

प्रथमेश्लोके यद्ब्रह्म नित्यं बृंहणशीलमनादिनिधनं तत् 'शब्दतत्त्वमेव । अत एवाक्षरम् यतो जगतः प्रक्रिया । अत्र खलु वेदान्त शैलीमधिकृत्य समस्त व्यापारस्य मूलं रहस्यमवबोधयितुमेव प्रयत्नोभर्तृहरेः । यतो हि ब्रह्मनादरूपं विन्दुरूपमेवानादिनिधनमक्षरञ्चास्त्येव । ब्रह्मणो विवर्तनशक्तिरेवनिखिल संसारस्य सम्पूर्णलीला-

विस्तारस्याधारभूता मन्यते । वेदान्तेऽपि विवर्त पदेन न केवलं प्रलयबोध: 'किन्तु जगत: समग्र प्रक्रिया एव बोध्यन्ते। अत्र वाक्यपदीये हरिर्ब्रह्मविषये; नैतावदभिदधाति, अपितु जगत्स्रष्टु: नियामकस्य ब्रह्मण:स्वरूपेण सह सूक्ष्मतयादृष्ट्या शब्दतत्त्वमपि सन्दिशति यस्माद्धेतोः अद्वैतवादि वेदान्तिनोऽध्यात्मवादि ब्रह्मण: समकक्षं शब्द-ब्रह्म मन्वते, अथवा तुरीयं ब्रह्मापि नादरूपं विन्दु रूपं ब्रह्मैवाङ्गी कुर्वन्ति ।

एतेनापि व्याकरणदर्शनं तत्रत्याध्यात्मवादश्चान्य दर्शनानान्त-त्रत्याध्यात्मतत्त्ववादानाञ्चोपजीव्यत्वेन नियतमितिनिश्चितमेव । व्याकरण दर्शनसिद्धान्ते शब्दनित्यता स्वीक्रियते 'अन्यच्चाखिलंशब्द-साधुत्वलक्षणङ्काल्पनिकमेवेति निष्कर्षः । तेन शब्दानित्यत्ववारणाय शब्दसाधुत्व प्रक्रियाया: काल्पनिकतया शब्दत: पश्चाद् भावित्वेन-शब्दस्य तत: पूर्वमपि सिद्धत्वेनाध्यात्मवादस्योपजीव्यत्वं शब्दसाधुत्व प्रक्रियाया उपजीविकत्वं प्रशस्तमेव । अत एव साधुत्वान्वाख्यानस्य व्यवहारिकत्वमखण्डवाक्यस्फोटात्मकस्य शब्दब्रह्मण एव पारमार्थि-कत्वमिति सिद्धान्तः । शब्दब्रह्मणि निष्णात: परंब्रह्माधिगच्छतीत्यु-क्तया शब्दब्रह्मज्ञानं वेदान्तिनां ब्रह्मज्ञाने उपजीव्यमेव । तेन व्याकरण शास्त्रीयाध्यात्मवाद: शास्त्रान्तरीयाध्यात्मवादज्ञानाय कारणतया-कल्प्यते मन्यते चापि ।

---

# पाणिनीय शिक्षा

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ।

शास्त्रानुपूर्व्यं तद्विद्याद्यथोक्तं लोकवेदयोः ॥१॥

प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ।

पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥२॥

प्रसिद्धमेवैतद् यत् समस्तमपिलौकिकं वैदिकं च शब्दमाहित्यं संप्रति पाणिनीयव्याकरणमूलतयासम्यगवधारितुं शक्यं लाघवेन, पाणिनीयं महाशास्त्रं शब्दसाधुत्वलक्षणमितिवचनात्, प्रथमतः पाणिनीय व्याकरणस्यैव वेदाङ्गत्व प्रतिपादनं नागोजिभट्टादिपादैः सम्यग् विहितम् यतोहि भगवता पाणिनिमुनिना समेषां स्वपूर्ववर्तिनां वैयाकरणानां प्रमुख प्रक्रियाया पदसाधुत्वोपायाः सुव्यवस्थितास्स्मृतिपथमानीता एव विभिन्नेषु सूत्रेषु यथायथम् । तत्र पदसाधुत्वविषयकस्य साधुशब्दान्वाख्यानस्य यावत्यः प्रक्रियाः प्रवर्तिताः तावतीसु प्रथमं निःसन्देहं यथासर्वेशब्दाः धातुमूलास्तथैव वाक्य-पदादीनामपिस्वरूपाणि वर्णमूलान्येवेत्यभिप्रेत्यते वर्णाः के ? कथं तेषामुच्चारणं तन्मूलकानां वैदिकानां लौकिकानाञ्च पदानां कथमुच्चारणदृष्टाऽदृष्टफल प्रयोजकतया प्राशस्त्यं भजत इति सर्वं तथ्यं पाणिनीयशिक्षानुसारमवधारणीयं सुविचार्य्यसर्वैः प्रयत्नीयमेव विद्यते ।

तदनुरोधादिह यथामति विचारः प्रस्तूयते येन विद्वद्भिः पर्यालोचनेन कियती तस्यानिवार्यता स्वयं स्पष्टं भविष्यतीति विचार मिष्यते ? वर्णा अपि वस्तुतः शब्दागमानुसारं त एव ये वर्णमालासु अनादिकालतः सृष्टिक्रमे आविर्भावतिरोभावक्रमेण जीववद् यथाकालं ज्ञेयज्ञापक पदवीका जायन्ते ।

**अथ पाणिनीय शिक्षा**

प्रथमं प्रत्यासत्या-प्रोच्यते—

शिक्षालक्षणम्—शिक्ष्यतेऽनया वर्णोच्चारणमितिशिक्षा, वर्णोच्चारणञ्च स्वराधीनम् अर्थात् उदान्तानुदात्तस्वरित प्रचयाख्यस्वर-ह्रस्वदीर्घप्लुत-अनुनासिकाननुनासिकादिभेद भिन्नवर्णं समुदायात्मक पदोच्चारणप्रकारकबोधको ग्रन्थविशेषः शिक्षा पदार्थः—

त्रिषष्ठिः चतुःषष्ठिर्वा वर्णाः शंभुमते मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥

प्रथमं, तत्र प्रकृतेः स्वभावत एवागतं, प्रकृतेरिदं वा प्राकृतं तस्मिन् प्राकृते अपभ्रंशादिरूपाया प्राकृत भाषायाम्। प्राकृतभाषैव प्रकृतिः प्राक्तनी नैकरूप आपामरं। स्वभावतस्तस्या उच्चार्यमाणत्वात् ततः सस्कृत्य प्रकाशिताः च संस्कृत भाषा इति मते इदम्। द्वितोयन्तु संस्कृत भाषैव प्रकृतिरिति यते च प्रकृतेः ( अर्थात् संस्कृतभाषातः ) आगतं प्रकृतौ भवम्बा प्राकृतमित्यपि, अपभ्रशादि भाषान्तरम्। तस्मिन् प्राकृते संस्कृतं सर्वभाषाणां प्रकृतिभूतमिति व्युत्पद्यते वस्तुतः तथ्यमेव। तस्मिश्चापिसंस्कृतेऽपि ( संस्कृतभाषायामपि ) स्वयम्भुवा विधात्रा स्वयं प्रोक्ता अत्यादरणैवोक्ताः, भ्यधिका षष्ठि त्रिषष्ठिरेवं चतुरधिकाः षष्ठि चतुः षष्ठिर्वावर्णा अक्षराणि सम्भवती लोकवेदयोरेतेषामेव सम्भवात्=प्रसिद्धत्वात् मताइष्टाः इतोऽधिकावर्णा नेष्टा इति प्रोक्तकारिकायाँ द्वितीयचरणे यदा सम्भवतो मता इति पाठस्वीक्रियते तदैव, यदातु शम्भुमते मता इति तत्रपाठस्तस्मिन् पक्षे शिवानुसारिण्यस्मिन् पाणिनोये मते इत्यर्थः संगच्छते।

संस्कृतभाषातः प्राकृतापभ्रंशादिभाषोद्भवाश्चाभिधातृ वैगुण्यादेवेति सुस्पष्टं मन्तव्यमेव, तेनैवोक्तं भर्तृहरिणा वाक्यपदीयेब्रह्मकाण्डे प्रयुक्तम्—

'पारम्पर्यादपभ्रंशा विगुणेष्वभिघातृषु' इति।

तत्रोक्ता त्रिषष्ठिश्चतुःषष्ठिर्वा वर्णाः के इत्याशंकायाम्—प्रोच्यतेऽत्र—

स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥

अत्र स्वरा इति स्वृ शब्दोपतापयोः स्वर्यंते शब्द्यतेऽनेन व्यञ्जनमिति करणेऽच् प्रत्ययः तेन स्वरशब्दसिद्धिः, नाचं विनाव्यञ्जनस्योच्चारणमपि भवतीति भाष्यवचनस्यात्रैव तात्पर्यम्।

परमत्र कथन्ते एक विंशतिरिति ? ततश्चतुरो यथास्मृति विवृणोमि—अ इ उ ऊ एते चत्वारो ह्रस्वदीर्घप्लुतभेदेन द्वादश लृकारस्य दीर्घादयो न सन्तीति स्मरणात् ह्रस्व एवोपदिश्यते अतएवैते त्रयोदश, ए ऐ ओ औ सन्ध्यक्षराणि तेषामपि ह्रस्वा न सन्तीति स्मरणात् दीर्घं प्लुता एव गृह्यन्ते। ते एतेऽष्टौ पूर्वैस्त्रयोदशभिः सहैकविंशतिः। यद्यपि वैयाकरणसिद्धान्तकौमुद्यां हि लृवर्णस्य द्वादशभेदा भट्टोजीदीक्षितैः प्रदर्शिताः परन्ते भेदास्तु-उदात्तानुदात्त स्वरितत्वमनुगम्यैव न तु दीर्घप्लुतत्वेनेति। कादयो मावसानाः स्पर्शः पञ्चविंशतिः इति जिह्वामूलतालुमूर्धदन्तोष्ठादिभिः परस्परं स्पर्शेऽभिनिष्पत्य आविर्भवन्तीति स्पर्शाः। पूर्वया एकविंशत्या सहषट्चत्वारिंशत्। यादयश्च स्मृता ह्यष्टाविति यकारादयश्च अष्टौ (य र ल व श ष स ह) इति।

अत्राद्याश्चत्वारोऽन्तःस्थसंज्ञाः उपरितनाः शषसहाश्चत्वारः ऊष्माणः, पूर्वोक्तेन षट् चत्वारिंशता सहचतु पञ्चाशत्। चत्वारश्च यमास्मृताः इति यच्छन्तीति यमाः स्वयमेवोपरमेरन् के ते यमाः ? लोके कुं खुं गुं घुं इति यमाः अनन्त्यान्त्ययोगे मध्ये यमः पूर्वं गुणः इत्यौदव्रजिः; तथा च—

ह्रस्वादिभेदैश्चत्वारः प्रथमा द्वादशस्मृताः।
लृकारो ह्रस्व एवैचोऽष्टौ स्वरा एकविंशतिः॥१॥
पञ्चविंशतिरष्टाब्धिः स्पर्शाः स्युर्यादयो यमाः।
अनुस्वारोविसर्गश्चः ᳲकः ᳳपौ प्लुतलृकारकः॥२॥

त्रिषष्टिरेवंवर्णाः स्युर्ह्रस्वदोर्घादिभेदतः ।
अनुस्वार द्वयावर्णाः चतुःषष्ठिरितीरिता ।।३।।

तथा च नारदः—

अनन्त्यश्च भवेत् पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्वं वर्णयोः ।।१।।
वर्गान्त्यान् शषसैः सार्धमन्तःस्थैर्वापि संयुतान् ।
दृष्ट्वा यमा निवर्तन्ते आदेशिकमिवाध्वगाः ।।२।।

इति नारदौदव्रज्योर्मतेन् यमो वर्णागम इति विधीयते । अस्मात् शास्त्र त् चत्वारश्च यमास्मृताः इति वर्णान्तरत्वेनोपदेशः संयोग-शास्त्रात् । अथ चतुरक्षराणामुदाहरणमिति प्रकृत्य अग्निरिति यमोग-कारो द्वौनकार इकारश्चेति ।

अन्येतु यमं वर्णापत्ति मन्यन्ते । तथा च शौनकः—

स्पर्शा यमाननुनासिकान् स्त्रान् परेषु स्पर्शेष्वनुनासिकेषु इति, पूर्वया चतुष्पञ्चशता सहाष्टपञ्चाशत् ।

अनुस्वारो विसर्गश्च=क=पौ चापि पराश्रितौ (पराश्रयौ) ।
दुःस्पृष्टश्चेतिविज्ञेयो ऌकारः प्लुत एव च ।।

स्वरमनुभवत्यनुस्वारः वक्ष्यति च दन्त मूल्यः स्वरानुगः इति । विसर्ग इति विविधं सृज्यते=क्षिप्यते इति विसर्गः सृविसर्गे, विसर्गो नाम सृष्टिरिति ।=क=पौ च पराश्रयौ परौ ककारपकारौ आश्रयः स्थानं ययोस्तौ पराश्रयौ, तथाच वक्ष्यति । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः इति ।

अपरोऽपि पाठः=क=पाविति (पावपि) परौ स्मृतौ ।
अनुस्वार विसर्गयोः परावित्यर्थः=क=पौ चापिकपाश्रयौ ।

ककार पकारौ आश्रयः स्थानं ययोस्तौ कपाश्रयौ, च शब्दानुस्वार-विसर्जनीयावपि पराश्रयौ; दुःस्पृष्टश्चेति, ईषत्स्पृष्टो वर्णधर्मो न वर्णान्तरमिति भावः। वक्ष्यति च यथाशेखरे अचोऽस्पृष्टा यणस्त्वीषत् इति।

यण्भक्तिश्च लकारो विद्यते, अतोलकारो दुःस्पृष्ट धर्मा च शब्दात् लृकार इति। इति शब्दः पादपूरणार्थः लृकारस्य दीर्घादयो न सन्तीति पूर्वं परमतमुपन्यस्तम्। अत्र स्वमतं=पाणिनीय मत-मुच्यते=लृकार प्लुत एव। अर्थात्त्रिमात्रः च शब्दात् ह्रस्वश्च, अत्र शंकाभवति यत् वर्णानां प्रयत्नमुपरिष्ठात् वक्ष्यति चेत्तर्हि किमर्थम-प्रस्तुतः प्रयत्नः प्रोच्यत इति? तदुपरि उच्यते प्लुतविधानार्थं तावल्लृकारः उच्चारयितव्यः, उच्चारिते च लृकारे लाघवार्थमप्रस्तु-तोऽपि प्रयत्नः उच्चारितः दुःस्पृष्टचेति। अनुस्वारादयः प्लुतान्ता पञ्च। पूर्वैरष्टपञ्चाशद्भिः सहत्रिषष्ठिः। पुनरत्रापि शंक्यते यत् चतुषष्ठिः कथमिति? अनुस्वारो विसर्गश्चेतिपाठान्तरात् कथं पुनर-नुस्वार द्वयमिति?

ह्रस्वदीर्घं भेदेनेतिब्रूमः तथा चौदब्रजिः अनुस्वारावं आं इत्यनु-स्वारौ ह्रस्वदीर्घौ दीर्घंह्रस्वौ वर्णौ इति अतएव चतुषष्ठिः।

इत्थमेतावतावर्ण संख्या परिज्ञानोत्तरकालमेव चिन्त्यते क एषामु-च्चारयिता कथञ्चोच्चारयति केन क्रमेण चेत्यादि? तदुपपत्तिरि-त्थम्—

आत्मा बुद्धया समेत्यर्थान् मनो युंक्ते विवक्षया।
मनः कामाग्निमाहन्ति स प्रेरयति मारुतम्॥

अर्थात्—आत्मा शरीरेन्द्रीयमनोबुद्धि व्यतिरिक्तः। स आत्मा शरीरेन्द्रीयमनोबुद्धि व्यतिरिक्तः कथमव गम्यते चेति?

अत्र समाधानम्—द्रष्टृत्वात्। द्रष्टाहि दृश्याति व्यतिरिक्तो भवति प्रयोजकत्वात् बुद्धयादीनि कर्तृ प्रयोज्यानि करणत्वात् कुठारवत् इति न्यायात् श्रुतेच तद व्यतिरिक्तात्मसिद्धिः। न्यायस्तावत् अग्निहोत्रं

जुहुयात् स्वर्गकामः इति स्वर्गादि फलसाधनानि कर्माणि श्रूयन्ते। स्वर्गश्च वायुशरीरोपभोग्यः तद् व्यतिरिक्तः आत्मा शरीरादेरित्यनुमीयते। श्रुतिश्चात्र—तस्य हैतस्य हृदयस्याग्रं प्रद्योत्यते, तेन प्रद्योतनेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेहेभ्यः इति। शरीराय क्रमणाय शरीरादि व्यतिरिक्त आत्मा।

छान्दोग्यश्रुतिश्च एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इति।

पूर्वोक्तस्थले—क एषामुच्चारयितेति पृष्टे—तस्योत्तरन्तत्र दत्तमेवात्मेति, कथमुच्चारयति केन क्रमेणेति प्रश्नद्वयस्योत्तरं दीयते स आत्माबुद्ध्या सह बाह्यानर्थान् समेत्य = सम्यगवगम्यार्थंप्रत्ययनाय यदि शब्दा उच्चार्यन्ते तदा मनोयुङ्क्ते विवक्षया = वक्तुमिच्छा विवक्षा तया तच्च मनो नियुंङ्क्ते आत्मा। मनः कायाग्निमाहन्ति इति तच्च मनो नियुंक्त सत कायाग्निमाहन्ति = कायाग्निं शरीराग्निम्। आभिमुख्येनाहान्ति स प्रेरयति मारुतम्। सोऽग्निरभिहतः सन्मारुतं वायुं प्रेरयति। मारुतस्तूरसि—

मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्।<br>
प्रातः सवन योगं तं छन्दो गायत्रमाश्रितम्।

अर्थात् मारुतो वायुरूरसि चरन् मन्द्रं स्वरं जनयति उत्पादयति। मन्द्रमिति मन्देरक् प्रत्ययः। प्रातः सवनयोगमिति = प्रातः सवनेन सह योगोऽस्यप्रातःसवन योगस्तम्। तथाचैतरेयब्राह्मणे—

अथ मन्द्रं तपति तस्मात् मन्द्रयावाचा प्रातः सवने शंसेत् इति। गायत्रं छन्दोऽस्याश्रयः। गायत्रं गायतेः स्तुतिकर्मणः आच्छादयति छन्दः।

रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति भाष्यात् ब्राह्मणेन निष्कारणो धर्मोषड्ङ्गोवेदोध्येयोगेयश्चेति श्रुतेश्च कृत्स्नस्यैव व्याकरणस्य

वैदिकशब्द साधुत्वार्थं प्रवृत्ततया लोके पद पदार्थौ यौ न तौ यौ वेदे न तौ लोके रूपभेदात्। यथोक्तम्—

वर्णैकत्वात् पदैकत्वं क्वाचित्की रूप भिन्नता।
प्रायिकेण पदैक्येन तदर्थैक्यन्तथाविधम्।।

इति जैमिनीय मालोक्तरीत्या वैदिक शब्दानां लौकिकशब्दा भिन्नतया च स्वरवैदिक प्रक्रिययोः लौकिक प्रक्रियातो भेदः कथमित्यत्र बहुविचारः।

---

# अनुसन्धेयविषयकं संक्षिप्तस्वरूपं संकेतमात्रम्

संसारेऽस्मिन् सत्स्वपि नैकविधेषु शास्त्रेषु पदवाक्यप्रमाणानामेव प्राध्यान्यम् । तत्रापि च पदशास्त्रस्य व्याकरणस्यैव प्राथम्यं सर्वशास्त्रोपकारकत्वात् काणादंपाणिनीयञ्च सर्वशास्त्रोपकारकमितिवचनात् । बहुषु व्याकरणान्तेषु सत्सु पाणिनीयव्याकरणस्यैव वेदाङ्गत्वम् वर्णसमाम्नाय मूलकत्वेन वेदमूलकत्वात् । व्याकरणान्तरेषु लौकिकवैदिकोभयशब्दसाधुत्वस्यानुपलम्भात् पाणिनीयव्याकरणे च तदुपलम्भात् तदुपज्ञ एवाध्यात्मवादो विचिकित्साविषयः । वर्णसमाम्नायमेवाभिलक्ष्य, ऋक्तन्त्रव्याकरण उक्तम्—

इदमक्षरछन्दो वर्णशः समनुक्रान्तं ब्रह्मा वृहस्पतयेप्रोवाच, वृहस्पतिरिन्द्राय, इत्यादि समनन्तरं तं खल्विममक्षर समाम्नायभिव्याचक्षते न भुक्तवा न नक्तं प्रब्रूयाद् ब्रह्मराशिरिति वेदानांवेद इति श्रुतेः पाणिनीयस्यैव वेदमूलकत्वं प्रशस्तम् ।

पाणिनीयव्याकरणस्यैव शब्दसाधुत्वव्यवस्थापकत्वे वर्तमानकालेपराशरपुराणमपि प्रमाणयति यथा—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।<br>
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ।

प्रकृतमनुसरामः——अध्यात्मवादः इत्यत्राध्यात्मपदार्थः क इतिजिज्ञासायाम्—आध्यात्मिकदुःखनिवृत्यै शास्त्रेषु मुख्यतयाध्यात्मतत्त्व विवेचनं क्रियते, आध्यात्मिकन्नाम-आत्मानं-देहम् 'अधिकृत्य जायमानं यन्नैसर्गिकमशनायादिकं यच्च धातुप्रकोपजन्यं ज्वरातिसारादि, यच्चात्मानम्-अन्तःकरणमधिकृत्य जायमानं कामादिनिबन्धनं दुःखं तत्सर्वमाध्यात्मिकमित्यर्थः, प्रायः सर्वेविकारा मनस्येवाविर्भूतास्सन्तो नरं दुःखयन्तीत्येतन्निबन्धनं दुःखं मानसमित्युच्यते । एवमाधिभौतिकं-

माधिदैविकञ्चापि सर्वं प्रशमनीयमस्ति। प्रशमनञ्च शास्त्रेष्व-ध्यात्मतत्वज्ञानेनैव, शास्त्रेषु वैमत्येनाध्यात्मवाद प्रक्रियालभ्यते सत्सु-विविधाध्यात्मवादेषु व्याकरण शास्त्रीयाध्यात्मवादो विलक्षण एव। न केवलं शब्दसाधुत्वमेव पाणिनीय व्याकरणस्य प्रयोजनमपितु साक्षात्कैवल्यमपि । कैवल्यञ्चैतदखिलदर्शनेषु सिद्धान्ततोऽध्यात्म-वादतत्वज्ञानमुपजीव्यैव।

यथाह भगवान् भाष्यकारः—अत्रा सखायः सख्यानि जानते। 'चत्वारि शृङ्गात्रयोऽस्य पादा-इत्यारभ्य महादेवो मर्त्या आवि-वेश इत्यादि वचनप्रमाणत्वेन। पाणिनीय तात्पर्यज्ञोभगवान् पतञ्ज-लिरेव, तदभिप्रायज्ञश्चभगवान् भर्तृहरिः। तन्निर्मित काण्डत्रयात्मक-वाक्यपदीयं व्याकरणशास्त्रस्याध्यात्मिकत्वे प्रभूतसम्पदः प्रकाशयति। यथा—

अपिप्रयोक्तु रात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥

इत्येद्वचनं व्याकरणमेवाध्यात्मसोपानरूपतया कैवल्यसाधनाय प्रख्यापितम् । भर्तृहरिप्रोक्ताऽनादिनिधनं ब्रह्मेति कारिका ब्रह्मकाण्ड-स्यादिभूताऽनादिब्रह्मनिरूपणपरासमग्राणां दर्शनशास्त्राणामाध्या-त्मिकवादप्रशस्तौ तद्वादसंस्थापनविधौच 'उपजीव्यतया' परिलक्ष्यते।

अनादि निधनविशेषणाभ्यां प्रागभावप्रतियोगित्वेसति ध्वंसाप्रति-योगित्वरूपत्वं नित्यत्वमेव शब्दब्रह्मणि बोध्यते। तदेव नित्यत्वं संकोचविकासपरैर्वचोभिरन्यैरपिदार्शनिकैर्ब्रह्मणि बोध्यते। तेन च दैशिक-कालिकपरिच्छेदराहित्यं सूचितं भवति ब्रह्मणि। तत्रहि 'यतो वा इमानि भूतानि जातानि, जन्माद्यस्य यत्' इति श्रुतिभ्यां बोधितं ब्रह्मणोलक्षणमनुसन्धायैव प्रक्रिया जगतो यत इतिवचनं हरिणाप्रत्य-पादि । नामरूपात्मकमिदं जगत् यस्मात् सकाशात्सृज्यते, स्थीयते-प्रत्नीयते चेत्यर्थमेव तात्पर्यं हरेः। मोक्षाख्य पुरुषार्थरूपेणशब्दब्रह्म-साक्षात्कारोहि ब्रह्मणोऽध्यात्मवादसोपानं लोकोपकारकमप्रतिमम-ञ्च-कारभर्तृहरिरपि।

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः। (का० १-१२१)
प्रत्यक् चैतन्ये ज्ञानरूपेऽन्तरविद्यया सन्निवेशिताः पदवाक्यरूपावर्णाः परप्रत्ययनार्थं प्रयत्नेनाभिव्यज्यन्ते। सेयं वर्णव्यक्तिः वर्णसंघातरूपा-ब्रह्मरूपस्यात्मनोऽभिस्यन्द इत्युच्यते। तद्धि शब्द ब्रह्म सर्वैरपि प्रथम-मुपास्यम्-यतः--

यः सर्वं परिकल्पनामाभासेप्यनवस्थितः।
तर्कागमानुमानेन बहुधा परिकल्पितः॥

प्रस्तुते प्रस्ताविते विषये क्रमशश्चत्वारः पदार्थाः सम्प्रति सम्यग-नुसन्धेयाः, तथाहि—

(क) व्याकरणमेव विषयः तद्धिव्याकरणमष्टविधम् दशविधन्त-तोप्यधिकम्वान मामकीनो विषयो यद्यपि तथापि प्रसङ्गत-स्तेषां परिगणनं विधेयमेव।

आपिशलि-काश्यपस्-गार्ग्य-गालव-चाक्रवर्मण-भारद्वाज शाक-टायन-शाकल्य-सेनक-स्फोटायनादीनां व्याकरणेषु भगवतः पाणिनेः प्राक् सत्स्वपि साम्प्रतं भारतीयशब्दविद्यायाः पुरातनतमं व्याकरणमेकं पाणिनीयमेवाभ्यर्हितमतिशयेन महतीयं व्याकरण परम्परा वैयाकरणानां विराजते।

वर्ण समाम्नाय मूलकत्वात्पाणिनीयव्याकरणस्यैव वेदाङ्गत्वमपि सुप्रथितमभूत्। पाणिनीयव्याकरणस्यैवाभ्यर्हता वेदाङ्गताचेति विषये समुदेति समस्या कापि या विचारयिष्यते, इदानीमियमपि समस्या नाभिनवा यत् कस्य व्याकरणस्य कियत् क्षेत्रमिति ? प्रोक्तेषु-व्याकरणेषु इन्द्रचान्द्रंब्राह्म वार्हस्पत्यादिव्याकरणानां परिगणना न कृता तेषामुक्त व्याकरणापेक्षयातिप्राचीनत्वेऽपि, तेषां काल निर्धा-रणमपिमहती समस्या, तावत्सु व्याकरणेषु सत्सु पाणिनीय व्याकरण-प्रणयन प्रवर्तन प्रवृत्ति विषयिकापि समस्या, तदनन्तरं पाणिनीय व्याकरणस्यैव सम्प्रत्युपयोगितावेदाङ्गताचापरामहती गवेषणात्मिका गभीरा समस्या।

---

# अथर्ववेदे राष्ट्रभक्तिः

ॐ शन्नो देवीरभीष्टये आपो भवन्तु पीतये शन्नो अभिश्रवन्तु नः ।

सो चिन्नु भद्राक्षुमती यशस्वत्युषा उवास मनवे स्वर्पती ।
यदि मुशन्त मुशतामनु ऋतुमग्निं होतारं विद्थाय जीजनत ।

—अ० वे० १८।१।२०

वेदेषु सर्वांगपूर्णं मानवजीवनं सुखसमृद्धिमयं धर्मार्थकाम-मोक्षाख्यचतुर्विधपुरुषार्थाधिगमाय परंनिदानम्मानवहिताय सर्वं-मपि भौतिकाऽऽध्यात्मिक सुखशान्तिकरं च तत्त्वमुपवर्णितं लभ्यते । यदि विशेषतो विचारः क्रियेच्चेत्तर्हि वर्तमानयुगानुसारि परमं साधन-मथर्ववेदेऽभिहितन्दरीदृश्यते लोककल्याणाय । यथा यदि मुशन्त-मित्यादि मन्त्रार्थेनाप्यवधार्यतेऽत्र—सा वेदवाणी निश्चयेन कल्याण-करी, अनन्तवती, यशस्विनी व्यापकमुखी (वेदवाणी) सुप्रभातवेलेव मनुष्यहिताय प्रकाशमानावतरदभिव्यक्ताऽजायत । यतोऽहि वेदवाणीमेनां प्राप्तये विद्वान्सोऽभिलाषिणः सत्पुरुषाः सद्बुद्धि-समुपेता एव श्रीमन्नारायणेन-पुरुषोत्तमेन सृष्टा सर्गे प्रतिबोधिताः । अयं मंगलप्रदोमहामन्त्रस्तदर्थश्च ।

परब्रह्मपुरुषोत्तम श्रीमन्नारायणस्योपदेशरूपतया धृतावताराः प्रकटिताः विश्वकल्याणाय समग्रज्ञानराशयः ऋग्यजुः सामाथर्व-रूपतया निखिलब्रह्माण्डस्याखिलतत्त्वानां निर्वचनं प्रकाशनं प्रवचनं-प्रवर्धनञ्च कुर्वंत्यो वेदवाचो मंगलमय्यः युगयुगान्तरात्कल्पकल्पान्त-राच्चाविच्छिन्नधाराप्रवाहप्रथया ऋषिभिर्मुनिभिश्च सादरं साक्षात्कृता अभवन्नेव नात्रसंशयलेशः ।

वेदानां माहात्म्यं पूर्णरूपेण पूर्णब्रह्मपरमेश्वरो वर्णयितुन्न प्रभवति चेत्तर्हिमानवास्तदीयपारावारम्माहात्म्यं कथं वर्णयेयुः ?

मादृगामशक्रवन्निखिलनभोमण्डलावगाहनाऽसम्भवं व्यापकं वस्तु-तत्त्वङ्कथमवगच्छेयुः ? प्रतिकल्पं प्रतियुगञ्च युगपुरुषः प्राणिनां प्रारब्धानुसारमेव शरीरधारिणां देवदानवमानवयक्षगन्धर्वकिन्नरादि प्रभृतीनां समग्रमानवानां प्राणिनाञ्च सर्वविधकल्याणदृष्ट्या-मानवानां धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थान् सरलतया सौलभ्या-यैव परमपवित्रभावनया कल्याणमय्या कामनया कर्मज्ञानोपासना-दिसम्पादनाय च विविधतथ्यमय निदानस्य सर्वविद्या, विज्ञानस्य, सर्वशक्तिनियामकस्य चभगवतो वेदराशेः शब्दमूर्तिधरावतारो-धरित्र्यां धरणीधरेण प्रधानसचिवेन परब्रह्मणैवाभवत् । अयं हि धर्म-प्रधानोदेशोभारतवर्षमिति सनातनधर्मस्य सनातनसंस्कृतेस्सभ्यता-याश्च सत्संस्काराणां सद्धर्मणाञ्च परिपालनसम्वर्धन सरक्षण प्रचार-प्रसारादीनाञ्चसदात एव समुपदेष्टा जगद्गुरुरितिपवित्र नाम्नाभि-हितोऽभिवन्दिश्चाभवत् ।

भारतीयेयं मनीषा शक्तिशुद्धोपहित परमभक्तिभागीरथ्या— पुण्यप्रवाहेण विश्वस्य महद्त्राजंविश्वबन्धुत्वं वसुधैवकुटुम्बकम् प्रभृतिकंसिञ्चन्तीव परमप्रेमसद्भावानामालबालानां केदाराणाञ्चा-द्यापि सेचनस्रोतसा ऋषिमुनीन् सिद्धेश्वरान् तपस्विनश्चात्मसात्कु-र्वन्तोभगवतो हि मंगलमयीयं वेदवाणी सृष्टिरूपांक्तिपिपच्यां पुष्पितां फलिताञ्च विदधतीव सत्यमेव चरितार्थाऽभवत् । धन्येयं भारतीया मनीषासमग्रभौतिकाध्यात्मिकसुखशान्तेः पराकाष्ठायाः पूरिका, संरक्षिका, सम्वर्धिका, समस्तज्ञानविज्ञानानां कलाकौशलानाञ्च पराणामपराणां-सर्वासां विद्यानाञ्च मूलस्रोतोरूपा चकास्ति । वेदोऽ-खिलो हि धर्ममूलमिति शास्त्रवचनानुसारं सात्त्विकधर्मयज्ञयागादेः यजनयाजनादिनाध्ययनाऽध्यापनादिना दानप्रतिग्रहेण चोत्पन्नोऽदृष्ट एव पुण्यविशेषोधर्मपदवाच्यः । यश्च सत्कर्मकर्तृणामात्मनि संस्कार रूपतया सदा तिष्ठति । स एव धर्मः—धर्म संस्थापनायावतरितभगव-तापि धारितो भवति । सदा सर्वैरपि यथाकालमवतारविशेषैर्हि दिधृत एव स धर्मः कल्याणाय जीवात्मसु निहितो भवति तत्तदवतारात्मना-परमात्मना, तदैव धर्मो धारयति प्रजाः प्रकृतिरपिधर्मस्वभावाऽपर-पर्याया स्वयं धृता भवति, प्राणिमात्रमपि धर्मेणैव धृतं भवति, धर्मएव-

समस्तप्रजानामधिपानाञ्चापिधारकः सम्पूर्णविश्वस्य च धारकः सन्नेवेह वेदप्रणहितोधर्मः, इति वचनं सुसंगच्छते। स्वयमेव भगवान् नारायण धराधाम्नि धृतावतारः सुप्रतिष्ठापितवर्णाश्रमानुकूल धर्मस्तदनुसारञ्च विधि-वदाचरिताचरणो धर्ममर्यादां प्रतिष्ठापितवान्।

विश्वस्मिन् विविधमतप्रचलितधर्मेषु सनातन धर्म एव समस्तधर्माणां मूलरूपो मन्यते तस्यैववेद मूलकत्वात्। तस्मादिह वर्णाश्रमधर्मरक्षैव सनातनधर्मस्यरक्षा प्रख्यापिता। वर्णाश्रमानुकूल धर्मरक्षणेनैव भारतीयाः संस्कृतेः सभ्यतायाश्चानादिरूपायाः सुसंरक्षा प्रतिपादिता। वेदानामध्ययनेन प्रवचनेनैव सर्वं प्रमाणितं भवति।

भारतवर्षमिदं तदैव जगद् गुरुपदं प्रष्ठिापयितुं संरक्षितुं समर्थं यदा संस्कृतिः संस्कृतञ्च संरक्षिते भवेताम्। समस्तविद्यानां मूलस्रोतोवेदएवास्ति, यत्र च वेदांगादिषड्काः व्याकरणादयः षट्शास्त्राणि (षड्दर्शनानि = पुराणेतिहासादीनि) निखिलान्यपि वेदोपवृंहणभूतानि तदीयानाशयानेवाधारीकृत्य प्रवृत्तानि लोके। अत एवोक्तमत्र **भारतस्य प्रतिण्ठे द्वे संस्कृतिः संस्कृतं तथा**। अद्यापितयोर्महती समुपयोगिता विषाक्तेवातावरणे, लोकव्यवहारस्तु प्रतिक्षणं येन केनापिरूपेण यज्ञयागादिमय एवास्ति। वुभुक्षूणां कृते भोजन दानम्, रोगिणांकृतेसदौषधदानम्, वस्त्रावासरहितेभ्यवस्त्रावासादिदानम् दुर्बलानां रक्षादानम् भयभीतानामभयदानम् सर्वं खलु दानमेतन्महायज्ञ रूपमेव।

वस्तुतो वेदविद्यासेवनेन धारणेन सदाऽऽचरणेनैव मानवोवास्तविको मानवो भवति लोके। सम्प्रति प्रतिसमाजं प्रतिवर्गं प्रतिपरिवारञ्च प्रतिक्षणमिथ्यार्द्वेषदम्भाहंकारहिंसाप्रभृतिभिः सुग्रसितंदृष्ट्वा विचार्यं च तत्परिहाराय कोह्यु पायः समर्थः? इति विचारणायामिदमेव शिष्यते सच्चरित्रं सद्व्यवहारः सदाचरणञ्चेति। परमेतत्सर्वं कथं निःशेषेण सरलतयाऽनायासेन ज्ञायताम्? इति जिज्ञासायामुक्तमेव वेदानुरोधाचरणम्। वेदाश्च ऋग्यजुःसामाथर्वभेदेन

चतुर्धा महान्शब्दराशिः कथमद्यज्ञायताम् ? सत्यमेव न सर्वथा सम्भवं सम्पूर्णं वेदज्ञानं सम्पूर्णव्यहाराचरणाञ्च वेदानुसारम् । परं यथाशक्ति यथासमयं कोऽप्येक एवांशः सत्यादिरूपः परस्परं वा प्रेम भावनारूपः सर्वं प्राणिसु आत्मवद् भावः आत्मबुद्धिर्वा यदि पालनीयो भवेत् तर्हि सर्वसुलभं स्यादेव ।

## वेदोहि सम्पूर्णवाङ्मयस्य बोधको वर्तते

तत्र मानवमात्रकल्याणकृते किं कर्तव्यम् ? किं हेयम् ? इति विधिनिषेधात्मकदृशा पुण्यवचनानि मन्त्र-ब्राह्मणारण्यकेषु वेदशिरो-भागासूपनिषत्सु च वेदेषु यानि समुपलभ्यन्ते निश्चितमेव तानि परम-विशुद्ध प्रेमभावयुक्त समाजनिर्माणे, मानवेषु सदगुणाधाने, सुहृद्-भावोत्पादने, मैत्रीभावप्रवर्तने, सर्वत्रदायदानवितरणे प्राणिमात्रं प्रत्यहिंसाभावानयने च समर्थानि । एवत्सर्वं तत्त्वमन्यत्र नोपलब्धुं शक्यम् । समग्रवेदत्रयीतएवाथर्ववेदो लोकहिताय प्रवर्तितः ।

अयञ्चाथर्व वेदोऽधुनाऽन्यवेदापेक्षया लोकहितायात्यन्तमुपयोगितां भजते । अयञ्चाथर्ववेदो न कथमपि संशयकोटिमाटीकते यतोऽस्य वैशिष्ट्यं हि तदाऽवधार्यते सम्यग् यदाखलु भगवतः कृष्णद्वैपायनस्य वेदव्यासस्य वैशिष्ट्यं समग्रमवबुध्यते यथा ह्यत्रायं विवेको विशेषः यत् कलौ समग्रप्रतिभाया मानवेषु सर्वथाऽभावमेवानुभूयैत्र स्वयं भगवान्नारायण एव सर्वजनकल्याणभावनया विश्वमगलकामनया च वेद वेद्योनारायणः कृष्ण द्वैपायनपाराशररूपेणावतीर्ण जगतीतले 'निश्चितमेव एकमन्त्रमयीशब्दमूर्तिरेव वेदवृक्ष इति विभाव्य भावि-ऋषिमुनिविदुषां सामान्यबुद्धिस्मृतिञ्चावधार्य तमेकमेव वेदवृक्षं ऋग्यजुःसामाथर्वरूपतया चतुर्धा व्यभजदिति तथ्यम् । तत्रापि चतुर्ष्वपि यस्य भागविशेषस्य य ऋषिः साक्षात्कारकर्ताऽभूत तन्ना-म्नैव तत्तच्छाखाभिधयाऽभिधानमजायत । अतएव भगवतो नारा-यणस्य कृष्णद्वैयापनरूपधारिणोनाम वेदव्यास इति सार्थक्यमन्वर्थं-ताञ्चाभजदिति प्रसिद्धिः । नैतावता मनस्तोषोऽभवद्वेदव्यासस्य ऋग्यजुःसामाथर्वणं विभिन्न शाखोपशास विभागेनापि वेदानां

तदपि मन्त्रारण्यक ब्राह्मणानांयथार्थं ज्ञानाभावं च लोकानां न सम्यगभवेदिति विचार्य्यं पुनः पुनः 'इतिहासरूपस्य महाभारतस्याष्टादशपुराणानाञ्चापि प्रणयनं भगवताव्यासेनाकारि।

तत्र तत्र विधिनिषेधात्मक विविध वाक्यानुसारं हि कर्म कलापादिनाञ्च साधुवर्णनं तदीय माहात्म्यञ्चातीवपवित्रभावनया सविस्तरमुपनिबध्य धर्मस्य पन्थानः सरली कृता व्यासेन । सत्पात्रमुद्दिश्य वेदानामत्यन्तमुपयोगिभागविशेषमृग्यजुःसाम्नां पद्य-गद्य-गीतिरूपतया च प्रकाशमानीय वेदानामुपयोगिता महत्ता च सरल सरस विधया-समुद्भाविता । वेदोऽयं सम्पूर्णवाङ्मयस्य बोधकः कल्पविशेषे लोकपितामहब्रह्मणा प्राप्तः परब्रह्मसकाशादतिशयकृपया । क्रमशः कालक्रमानुसारमेवैक मन्त्रसमूहात्त्रिधावेदत्रयी ततश्चैवाथर्व वेदश्चतुष्टयंतुर्थोऽभिजायत एव । यो हि सम्प्रति तु लोकहिताय महत्त्वपूर्णं वैशिष्ट्यं भजति । विलक्षणैषा महामाया प्रकृतिर्लीलायिता भगवतो नारायणस्य यत् समस्त मानवीयमर्यादानां गुणानां स्रोतोरूपाः सर्वोपनिषदः मानवमात्रस्य कल्याणाय कर्तव्याकर्तव्यसर्वविधिनिषेधात्मक पुण्यवचांसि मन्त्रब्राह्मणारण्यकाश्चापिवेदशिरोभागोपनिषदैःसह समवचारितानि लीलापुरुषोत्तमेन विविधविचित्रविशिष्टलीलाविभूतिमाध्यमेनैव । तेषु वेदेषु प्राशस्त्यं सममजनयमथर्ववेदोलोकेसामयिकः परमोपयोगी च समभवदेव नात्रसंशयः । यतोऽह्यस्मिन्नथर्ववेदे समस्तज्ञानविज्ञान कलाकौशलानामस्त्रशस्त्रनिर्माणविधीनामौषधविज्ञानविविधप्रक्रियाणां विविधविधानाञ्चायं कल्पतरुरेवामन्यत । सर्वकामनासाधकः, सर्वविधैषणापूरकश्चायं सन्नपि ब्रह्मविद्याया मुक्तेरूपाय भूतायाः ब्रह्मप्रापणस्य च परमनिदानभूतोऽपि ।

वस्तुतो हि वेदो नामेश्वरीयज्ञानमेव । ज्ञानार्थकाद् विद् धातोः वेदशब्दः सिद्ध्यति । ज्ञानशब्दोऽपि व्यापकर्थस्य सम्पादक एव । यथाकालमेवर्षिमुनिभिरेव प्रबलयोगवलेन तपश्चर्यया च वेदानां साक्षात्कारकर्तारोऽभवन् ऋषयो मन्त्रद्रष्टार इति सूक्ति चरितार्थयन्तश्च लोके समभिवन्दिताः ।

एवमेव दिवादिगण पठितान्मनुधातोरपि मन्यते ज्ञायते 'ईश्वरीय:' आदेशो येनेति ष्ट्रन् प्रत्ययेनापि वेदशब्दसिद्धिः। तथैवतनादिगणपठितादपि मन् धातोःष्ट्रन् प्रत्ययविधानात् ईश्वरीयादेशानां मननं विचारणायाथर्ववेदशब्देन ज्ञायते।

एवमेव सत्कारार्थकान्मन् धातोरपि तथैव ष्ट्रन्प्रत्ययविधानात् मन्यते—सत्क्रियते यज्ञयागादिर्हवनक्रियादिर्वेति वेदः देवता विशेषो वा स एववेदः। मनु वचनानुसारं यज्ञसिद्धये ऋग्यजुःसामवेदत्रयी लक्षणलक्षित गद्य पद्य गेयात्मना सनातनान् वेदान् स्वयं परमात्मनैव अग्निवायुसूर्यदेवानुद्दिश्य प्रकटीकृतवान्। परन्तु ब्राह्मणग्रन्थेषु इदमपि वचनमुपलभ्यते यत् अग्निवायुसूर्यदेवाश्च स्वयमेवतपस्तद्वा वेदमयीं प्रकाशितवन्त इति। अत्र विविधवृत्तिविषय परिहारो वेद भाष्यकारानुसारं वर्तते यत्परमात्मा स्वयमेवाग्निवायुसूर्यं रूपेणावतीर्य तान् प्राकाशयत्। शतपथब्राह्मणे (११ अ० ५)।

यजुर्वेदे मन्त्राणां चत्वारो भागाः वर्णिताः। अथर्ववेदस्य च सत्ता यजुर्वेदे सुव्यक्ताचकास्ति। तस्माद् यज्ञात्सर्व हुतऋचः सामानि यज्ञिरे अथर्ववेदेऽपि चतुर्णवेदानां सत्तानिरूपणमपि प्रतिपादितं वर्तते, तद् यथा—

यस्मादृचोऽपातक्षन् यजुर्यस्मादयाकषन् सामानि यस्य लोमान्यथर्वांगिरसो मुखम्। स्कम्भं तं ब्रूहि कतमः स्विदेव सः? (अ० वे० का० १० प्रवा० २३ अ० ४ म० २०।)

अर्थात् हे विद्वन्! जगदाधारयितुर्वर्णनं कुरु यस्मात्सकाशात् ऋषयोमुनयो हि ऋग्यजुः इति प्राप्तवन्तः। यस्य लोमवत्सर्वव्यापक एव सामवेदः, मुख सदृशमेव ज्ञानोपदेशकमथर्ववेदः सो हि किन्तत्त्वम्? एवमेवानेकविधंमहत्त्वपूर्णविचारोऽथर्ववेदत एव तैर्लब्ध इति।

अथर्ववेदे विषयविशेषो वर्ण्यते—राष्ट्रहिताय परमोपयोगिनोऽथर्व वेदस्य नाम—अथर्वाङ्गिरसः, भृग्यंगिरसः ब्रह्मवेदः, छन्दस इति,

ऋग्वेदस्य शतपथब्राह्मणे तैत्तरीयसंहितायां तैत्तरीयारण्यके च श्रौतसूत्रे चाथर्ववेदस्यस्थितिः ऋग्यजुःसामसमानैषाभिहिता विद्यते । महर्षिणोऽथर्वणः सम्बन्धिते गोपथब्राह्मणे कथैकावर्णिता वर्तते । यदाधारेण प्रमाणितमस्ति पुराकल्पे ब्रह्मैवसृष्टिखननोद्देश्येन कठिनं तपश्चकार इति । तपः प्रभावादेव ब्रह्मणस्तपःपूतशरीरादेवः च तेजस्वरूपाधारद्वयी समुद्भूता । एकस्या एव धाराया अथर्वन् द्वितीयधाराया अंगिरा समजायताम् ।

अस्मादेवाथर्वाङ्गिरसामुद्भवोऽभवत् । एभ्य एव ऋग्वथर्वाङ्गिरेभ्योत्र । तद्वंशजेभ्य एव ये मन्त्रा दृष्टिगोचरीभूता एभिरेव ते मन्त्रा साक्षात्कृताः अतएव तेषामेव नामकरणमथर्वदरूपतया समजायत । (गो० ब्रा० १ । ४ । १। ६ । ३ । ४) । विषय दृष्ट्याऽथर्ववेदमाङ्गिरसोथर्वन् रूपतया द्विधाविभक्तं मनुते । ये च मन्त्राः तन्त्रादयश्चौषधीनां प्रतिपादकाश्च तानेवाथर्वन् भागे निरूपितवन्तः । तथा चासुरीभूतान् प्राकृतिक शत्रूणां मारणमोहनस्तम्भनोच्चाटनादि विषयकान् मन्त्रान् सम्यक्तयाऽऽङ्गिरसभागे पठितवन्तः ।

एवमत्रोभयविधमन्त्रान् संस्थाप्य प्रकृतिदेव्याः प्रसन्नतायै प्राणिमात्रस्य कल्याणाय च दिव्यौषधीनां प्राकृतिकौषधीनाञ्च सम्बन्धिता मन्त्रा स्तथाऽथर्ववेदस्य काश्चनर्चोयज्ञसम्बन्धिन्यः स्मर्यन्ते । तथा वह्व्यश्च ब्रह्मविद्याविषयिण्यो मन्यन्ते । ब्रह्मविद्या प्रतिपादकत्वेनायमथर्ववेदो ब्रह्मवेदनाम्नाभिहितो भवति । अथर्ववेदे लोककल्याणार्थं शान्त्याशीर्वादस्तुतिपरका मन्त्रा ब्राह्मणनाम्नापि समभिहितास्सन्ति । तस्मादेवाथर्ववेदस्यब्रह्मवेदत्वेनाभिधानं पूर्णसंगतमभिधीयते । वस्तुतोऽयं वेदो लौकिकपारलौकिक समग्रसाधनानां सिद्धीनां ऋद्धीनां विद्यानां चाकरो मन्यते स्रोतस्स्मर्यंते । येनहि समग्र राष्ट्रस्य सत्यमय्याःशक्तिभक्तिभावनायाः पूर्णप्रतिपादनमत्रसुलभम् । एतेन ब्रह्मविद्या मोक्षस्य च प्रतिपादनमपि सम्यग्भवत्येव । यदधारेण-सामान्योऽपि जनः स्वल्पेकाल एव स्वपरिवारस्य ग्रामस्य नगरस्य प्रान्तस्य राष्ट्रस्य च क्रमशः उत्तरोत्तरं परस्परं राष्ट्रोद्धारचेतनां चेतयन् सर्वं कल्याणमयं कर्तुं प्रभवेत् । इत्थमथर्ववेदे वस्तुतो यथार्थतो

राष्ट्रभक्तिः पूर्णतः प्रतिपादिता विद्यते । सर्वविधकल्याणस्रजनं संरक्षणं सम्बर्धनञ्चात्र विद्योतते ।

अथर्ववेदे विंशतिः काण्डानि नवशाखाश्च सन्ति । शाखानामानि यथा पैप्पलाद-शौणकीय-दामोदतोत्तायन-जामल ब्रह्मपालासक्तुनरवा-दैवदर्शीचरणविद्येति । सम्भवतः कृतप्रयासेऽप्यद्य शौनकपिप्ललादशाखाद्वयी समुपलभ्यते । अत्र ७६ सूक्तानि, ६००० पर्यन्तं मन्त्राः संग्रहीताः सन्ति ।

वेदोहि भारतभुवो महती सम्पत्तिरितिधिया ज्ञानकर्मोपासनारूपसम्पदा राष्ट्रं सततं समभ्युदयपथे नेतुं पूर्णतः समर्थः । अयं राष्ट्रस्य महान् निधिरस्ति तस्मादयं सर्वप्रयत्नेन रक्षणीय एव राष्ट्रभक्तैः सच्चरित्रात्मबललाभाय ।

अनेन हि राष्ट्रस्य प्राकृतिकवस्तूनां तथा प्राणिमात्रस्य यथार्थं ज्ञानमाधकेन सहैव समग्रस्य जडचेतनात्मकस्य कथं स्थापनं संरक्षणं संवर्धनमित्यादि समस्त प्रक्रियोपायानां साधुसम्पादनं कृतमस्ति । समस्त राष्ट्रीयवस्तूनां जनमानसस्य च सुसंस्कारं विधाय तदभ्युन्नति समभिवृद्धिकारकत्त्वेन राष्ट्रभक्तिभावनाया ज्ञानसागररूप समस्त गुणानामा नन्दसन्दोह जनकानामाकर एव वेदः ।

राष्ट्रं वेदसत्तयाऽतिगौरवमनुभवत्येव । अथर्ववेदे युगानुरूपमस्त्रं विमानादि निर्माण प्रक्रिया च वर्णिता यद्धि यथाकालं राज्यतन्त्र प्रजातन्त्रञ्च समभिरक्षितवती । प्राकृतिकविपदामपहाराय सत्सम्पदाराष्ट्रं समग्रमुपकर्तुमथर्ववेदः समर्थः । येनहि राष्ट्रैकताऽखण्डतासर्वशक्तिमत्ताच सम्भाव्यते । अथर्ववेदीयविभिन्न सूक्तैः भूसूक्तादिरूपैस्तथान्यसूक्तैरपि प्राणिनां सर्वविधकल्याणकामनायाः प्रेरणाभावनाशक्तिसमुद्भावनासच्चरित्रताप्रभृतयो दरीदृश्यन्ते । पर्यावरण सम्बन्धि सुधारात्मकाः संस्कारकाः सुगमोपायाः सम्यङ्निर्दिष्टा सन्तत्यथर्ववेदे । समस्त पशुपक्षिणांजीवजन्तूनामभिवृद्ध्ये सुरक्षायैच वर्णिता विषयो मनोरमाः सरलाश्चमितव्ययपराः । एतेन राष्ट्रकल्याणाय यदपेक्षितं तत्सर्वमुपलभतेऽथर्ववेदे

तेनास्य कियन्महत्त्वमिति को वक्तुं प्रभवेत् ? वेदेऽस्मिन् साक्षात्परम्परया च राष्ट्रभक्तिसन्देशः विधिश्च प्रचारप्रसाराय वर्णितः सर्वान् प्राणिनः परस्परं प्रेमभावनायां बद्धुं सर्वथा समर्थः सामयिक उपयोगी चास्ति। यदा खलु राष्ट्रं ग्रामोनगरं प्राणिनो भक्त्या युज्यन्ते चेत्तदा राष्ट्रान्तर्गत समग्रप्राकृतिसामग्रयो मंगलमय्यो भवन्ति। राष्ट्रशब्दो राष्ट्रान्तर्गत प्राणिषु समग्रवस्तुसु लाक्षणिकः। राष्ट्रसम्पत्तिसम्पन्नानुकूलेषु सर्वतुं कालेषु चापि राष्ट्रशब्दप्रयोगो भवति। राष्ट्रहितं हि प्राणिमात्रस्यैवहितम्। स्वस्थं राष्ट्र समृद्धराष्ट्रत्वेन प्राणिवर्गस्य प्रकृतेश्च सर्वथा कल्याणमेव। यश्च समाजो राष्ट्रे विद्यते तस्य संप्रतिष्ठा सुरक्षा राष्ट्रस्यैवोन्नतिः। अनया दृष्ट्या पशुधनं गोधनमन्नधनं वलौषधादिप्रभृतिकं सर्वसुखसाधनीभूतं राष्ट्रियं वस्तु मांगलिकमेव सर्वैः स्वीकार्यम्। अतोऽत्र राष्ट्रभक्तिपरकाः केचनाथर्ववेदीया मन्त्रा प्रस्तूयन्ते।

१. भूमे मातर्निधेहिमा, भद्रया सुप्रतिष्ठितम्,
संविदाना दिवाऽकवे श्रियां माधेहि भूत्याम्।
—अ० वे० ३१। १२। ६३

अर्थात् हे भूमे! मातः! भवती स्मान् सम्यक् सुप्रतिष्ठापयन्ती समाश्रयं ददातु, हे विशालस्वरूपे! आकाशसम्पृक्ताव्यापिनी धनसम्पत्तिवैभवेष्वधिकारं मे संस्थापयतु। विचारतो मन्त्रेऽस्मिन् समग्र भौक्तिक सामग्र्याः कामनाव्यक्ता प्रार्थिता वर्तते।

२. अस्मै ग्रामाय दिशश्चतस्त्रः
अजं सुभृतं स्वस्ति सवितानः कृणोतु
अशञ्चिन्द्रो अभयं नः कृष्णोतु
अन्यत्र राज्ञामभि यातु मन्युः
—अ० ४३। ६। ४०। २

अर्थात्—समक्तया जनसमूहं चतस्रोदिशः भगवान् भास्करः पुष्टिप्रदानेन प्रचुरतया सुखप्रदानेन शत्रुरहिताभयप्रदानेन च समुप-

करोतु=अनुगृह्णातु। शाशकानां यदि कोपः स्याच्चेत् प्रणिभ्योऽन्य-त्दूरे पततु।

अथ चैवमपि महत्त्वपूर्णं वचनं वेदस्य यथा—

३. अनमित्रं नो अधरात् अनमित्र नो उत्तरात,

इन्द्रानमित्रं नः पश्चाद् अनमित्रं पुरुस्कृधि ॥

—अ० वे० ४४। १। ४०

अस्याभिप्रायः हे इन्द्र ! अधस्तादहं शत्रुभिर्न ग्रस्तः स्याम् मां शत्रुरहितं भावय तद्दिशः। उपरिष्टादपि मह्यं शत्रुराहित्यं प्रदेहि, पृष्ठतश्च मे शत्रुराहित्यं प्रयच्छ। सम्मुखतोऽपि मह्यं शत्रुराहित्यं देहि। इत्थं सर्वतशत्रुराहित्यप्रार्थनया सम्पूर्णराष्ट्रस्य सुरक्षायै परममंगलमयो कामनां विदधदथर्ववेदोयो मन्त्रोऽयं राष्ट्रस्य समुचित भक्तौ च विनियुक्तो दृश्यते। यथा—

४. वेदविद्यारहितं राष्ट्रमसुरक्षितं भवति।

ब्रह्मगवी पच्यमाना यावत् माभि विजङ्गहे।

तेजोराष्ट्रस्य निर्वहन्ति न धीरो जायते वृषा।

—अ० वे० ५। १९। ४

अर्थात् सा ब्रह्मगवो=वेदवाणी पच्यमाना-तप्यमाना यावत् कालं सर्वतोऽसुरक्षिता स्वाध्याय प्रवचनयागादिनाऽसम्मानिता भवति तदा राष्ट्रनिस्तेजः प्रवर्तते अर्थात् राष्ट्रस्य तेजोवैभवं सा ब्रह्मगवो नाशयति। तदानीं न कोऽपि वीरः पुरुषः ऐश्वर्यवान् समुत्पद्यते, फलतो यत्र वेदविद्याया अनादरस्तत्रतद् राज्यं न कथमपि सुरक्षितं भवति, सर्वे निर्बला असहाया भवन्ति, येन राष्ट्रस्य महती क्षतिर्जायित इति निश्चितम्। तस्मादेव 'राष्ट्ररक्षायै अथर्ववेदस्याज्ञां शिरोधार्य्य वेदस्य रक्षाअध्ययनाध्यापनादिभिः वेदप्रतिपाद्यकर्मज्ञानादिभिश्च तत्तद्रूपोपासनया राष्ट्रं निश्चितमेवं संरक्षणीयमिति परमं कर्तव्यम्।

## ५. अथर्ववेदे सुखत्रयस्य महान् सन्देशः—

भवप्राणाः नवभिः संमिभीते दीर्घायुत्वाय शत शारदाय हरिते त्रीणि रजते त्रीण्यमसि त्रीणि तपसा वितिष्ठानि ।

—अ० वे० ५।२८।१

अर्थात्—स महेश्वरः परम पुरुषोत्तमो नवप्राणजीवनशक्तीः नवेन्द्रियैः सह शरदः शतमायुर्दीर्घजीवनाय यथावदर्थतः सम्मेलयति । तन्माध्यमेनैव दरिद्रताहारिपुरुषार्थे प्रबन्धरूपास्त्रयःप्रियाः वा त्रीणि प्राप्तव्यानि कर्माणि, तथा सुवर्णे त्रीणि सुखानि तपश्चर्या सामर्थ्येन प्रतिष्ठापितानि मन्यन्ते । वस्तुतो येन परमात्मना नवद्वारपुरशरीरे द्वयोश्श्रोत्रयोर्नेत्रयो चक्षुषोः घ्राणयोः मुखे पायूपस्थेष्वखिलेष्विन्द्रियेषु नवशक्तयः संस्थापिताः तेनैवोपदिष्टमिदं यत् मनुष्य उत्तमपुरुषार्थेन सर्वोत्तमप्रबन्धेन उत्तमोत्तमकर्मणा च रजतसुवर्णादिकमेकीकृत्य संगृह्य वा त्रीणि सुखानि—अन्नं मनुष्यम् पशूंश्च वर्धयेत्= वृद्धिं नयेत् इदमेवसत्कर्मं सर्वसुखमूलं सर्वे समामनन्ति ।

## ६. अथर्ववेदे शिक्षाप्राप्तये सन्देशः—

यथा वृक्षं लिबुजा समन्तं परिषष्वजे एवा परिषजस्व मां यथा मां कामिन्यसो यथा मन्नापगा असः ।

—अ० वे० ६।८।१

अर्थात्—यथा लिबुजा=लताविशेषास्वमेव वर्धनाय तदीयाश्रयेण सह समुत्पद्यमाना वेलवृक्षं समन्ताद् वेष्टयति तथैव हे विद्ये ! मांद्त्वं समन्ताद् वेष्टय येन त्वं मां प्रति कामयमाना भव, न कदापित्वं मद्वियुक्ताऽहञ्चत्वद् वियुक्तः स्याम् । एतेनोक्ताथर्ववेदीय मन्त्रेणैव पूर्णविद्याया कामना प्रसादस्य वरदानमथर्ववेदीय सम्प्राप्य के न कृत्यकृत्या भविष्यन्ति ?

परमार्थतश्च विद्यां विना राष्ट्रस्य का सत्ता ? किं राष्ट्रं विद्या-मन्तरा ? किं स्वत्वं राष्ट्रस्येति ? तस्माद् राष्ट्रहिताय वैदविद्यायाः कियानुपयोगः ? इत्येवाथर्ववेदस्य महान् सन्देशो महानुपदेशः, अतोऽवश्यमेव तां विद्यां प्राप्य मानवलोकः समग्रं राष्ट्रञ्च सर्वविध सुखशान्त्या प्राणिमात्रस्य सर्वविधकल्याणं विधातुं प्रभवति, धन्यञ्च भवति।

**७. अथर्ववेदे पर्यावरणसम्बन्धो मन्त्रोऽपि महान्—**

आयने ते पराणे दूर्वा रोहतु पुष्पिणी, उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान् —अ० वे० ६।१०६।१

अर्थात्–हे मनुष्य! तव गमनागमनपन्थाः निष्क्रमणपन्थाश्च पुष्पवान् दुर्वाङ्कुरवान् विकसित कमलसरोवरयुतोभवेदिति। वृक्षाः पादपाः पृथिव्यामुपरि कशक्तिप्रदाः वृष्टिप्रयोजकाः पूर्ण-साधनाः शुद्धवायुप्रदाश्च स्युः येन दूषितवातावरणस्य निवारणं स्यात्। समपेक्षित घनधान्यशस्यपूर्णा मही सत्यं राष्ट्रस्य महती सम्पत् सिद्धा भवेत्।

**८. अथर्ववेदे जीवने पूर्णायुष उपदेशः—**

वैश्वदेवीं वर्चस आरभध्वं शुद्धाभवन्तः शुचयः पावकाः, अति-क्रामन्तो दुरितापदानि शतंहिमाः सर्ववीरा भवेम॥

—अ० वे० १२।२।२

अर्थात्–भो मानवाः! समेषां विदुषां प्राणिनाञ्चहितैषिणीं वेदवाणीं धारयन्तु येन तत्तेजसा सर्वेप्राणिनः पवित्राः शुद्धाः प्रतिभावन्तो भवन्तु, एवंविधंपवित्रं मन्त्रं मन्त्रयन्तु येन कठिनं कष्टदायकं वक्रं कुटिलं प्रतिकूलञ्चपन्थानमुल्लंघयन्तः सर्वे वीराः शतसंख्याका न हिमऋतून पर्यन्तं सुखभोगिनः सन्तु। अत हे मानव! वेद-वाण्या निरन्तरं स्मरणेन परायणेनार्थानुसन्धानेन च बाह्याभ्यन्तरतश्शुद्धास्सन्तः परानपि परिशोधयन्तः कुपथान् परित्यज्य सर्वान् वीरपुरुषान् कुर्वन्तः पर्णायुरालभन्ताम्।

९. वेदज्ञानिनो जीवनं सफलम्—

यो अस्या ऊधो न वेदाथो अस्या स्तनानुत उभये नैवास्मै दुहे दातुं चेदशकद् वशाम् ।। —अ० वे० १२।४।१८

अर्थात् यो मनुष्यो वेदवाण्याः संसेचनं संरक्षणं संवर्धनं सस्वरं विदधाति तथा वेदानुसारं महान्तमुपदेशं प्राप्य तदवधार्य्यंच सम्यक् मन्त्रं मन्त्रार्थञ्च रक्षति स इहलोकसुखं परलोकसुखञ्चाशुलभते। एवंविधं ब्रह्मज्ञानिनं वेदज्ञं वेदवाणी कामधेनुरिव सर्वकामनापूरिका। दुग्धामृतेन तं जनं परिपूर्णं करोति। यदा मानवो वेदवाण्याः पवित्रमुपदेशं श्रुत्वा तथा विधमेवाचरणं करोति तदनुसारं च जगति ज्ञानप्रकाशं विस्तारयति स इहजन्मनि परजन्मन्यपि पूर्णानन्दमनुभवति।

१०. अथर्ववेदे सुपथात् कथमपि न विचलेदित्युपदेशः—

मा प्र गाम पथो वयं मा यज्ञादिन्द्रसोमिनः मान्त स्थुर्नो अरातयः —अ० वे० १२।४।१८

अर्थात्—हे महदैश्वर्यवान् भगवन्! वैदिकमार्गतो न दूरं व्रजेम तथा कदाप्यैश्वर्ययुक्तयज्ञतो देवपूजासंगतिकरणरूप दानव्यवहारतो न दूरो भवेम, अदाता अरातिश्शत्रुर्मम मध्ये न वसेयुः।

११. पुत्रपौत्रैः सह निवासोपदेशः—

इहैवस्तं (सहैव) स्तं मा वि यौष्टं विश्वमायु व्यश्नुतम्, क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ। —अ० वे० १४।१।२२

अर्थात्—स्त्रीपुरुषौ द्वावपि कृत दृढप्रतिज्ञौ प्रसन्नतापूर्वकं पुत्रपौत्रादि परिजनैः सह धर्मेण वर्तमानौ पूर्णायुर्भुक्त्वा यशस्विनौ भवेव।

१२. वधू साम्राज्ञी भवत्वित्युपदेशः—

सम्राज्ञ्ये विश्वशुरेषु सम्राज्ञ्युत देवृषु ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः। —अ० वे० १४।१।४४

अर्थात्–हे वधो ! विद्यायां बुद्धौ च वले च स्वकर्तव्यपालने एवं निपुणा समर्था भवतु श्वसृप्रभृतयः सर्वे परिवारजना जविष्ठा श्रेष्ठा ज्येष्ठा कनिष्ठाश्च सुप्रतिष्ठां प्राप्नुयुः तदनुसारं त्वञ्च प्रतिष्ठां लभस्व ।

**१३. वेदे मानवहितकारिसमुपदेशः –**

सो चिन्नु भद्राक्षुमती यशस्वत्युषा उवाष मनवे स्ववंती ।
यदी मुशन्तमुशतामनुं क्रतुमग्निं होतारं विदधाय जीजनत ।
–अ० वे० १८।१।२०

इत्थं तदेव निश्चित्य कल्याणी अन्नमयी यशोमयी सुखवती वेदवाणी पुण्यप्रभाते मनुष्यहिताय प्राकाशत यतो ह्रीमां वेदवाणीं कामयमानाः विद्वान्सोऽपि समभिलाषुभिर्महापुरुषैः स्वबुद्ध्या सह मंगलप्रदं ज्ञानमजनि ।

एतावताऽत्राथर्ववेदे सर्वविद्योपायाः सततं राष्ट्रोद्धाराय संरक्षणाय महते कल्याणाय सिद्धमन्त्ररूपार्थाः समुद्बोधिताः येन सर्वथा–समस्तप्राणिनां सर्वविधं कल्याणमेव प्रथितम् ।

---

# विनिर्गत-स्मृत-कृत-ग्रन्थ विमर्शः

विभिन्नेषु इतिहासग्रन्थेषु तत्तद् ग्रन्थप्रणेतृभिः स्व स्व मतानुसार-मेव वेद-पुराण-दर्शन-धर्मशास्त्रादि ग्रन्थविषये तत्कर्तृविषये पाश्चात्य-वासनानुकरणतया नियमपूर्णा विचाराः प्रदर्शिताः। तत्र तत्र वेद-पुराणादि प्रभृति ज्ञानाकराणां कालनिर्धारणं पुरुषकर्तृत्वञ्च यथा-मति प्रतिपाद्य लोकास्तथा प्रबोधिता येन सम्प्रति सर्वत्र विसम्वाद एव प्रस्तुतो भवति।

अतोऽत्र प्रसङ्गतः प्रोक्तविषये यथाशक्यं यथाबुद्धि विचारः प्रस्तूयते।

पुराणेषु वचनमिदमुपलभ्यते यदाधारीकृत्य मन्ये परमार्थ-प्रकाशः स्यात्—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणास्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

अयं हि पौराणिकश्श्लोकः सर्वथा महत्त्वपूर्णः सर्वसंशयापनोदाय। याथार्थ्यतो वेदानां पुराणानां सर्वदर्शनानां धर्मशास्त्राणामुपनिष-दाञ्चापि स्मृतत्त्व-विनिर्गतत्व कृतकत्व प्रतिपादनपूर्वकं काल निर्धा-रणेऽपि सुतरां सत्प्रामाण्यमधिगच्छत्येव।

श्लोकस्यास्य परिचयमन्तरैव लोका अद्यवेदानां पुराणानां च स्वरूपविषये कालनिर्धारणविषये च भ्रमपूर्णमतं प्रकाशयन्तोऽपि पण्डितम्मन्यादरीदृश्यन्ते।

वस्तुत उक्त पुराणवचनानुरोधतः पुराणानां कृते स्मृतपदप्रयोगः, वेदानाङ्कृते विनिर्गतशब्दप्रयोगः, पुराणविषये वेदविषये च कथमपि कृतशब्द प्रयोगोनास्त्येव, न वा कथञ्चिदपियुक्तिप्रमाणसङ्गतमपि।

तत्र श्लोकेऽनुगुण शब्दप्रयोगः सम्यग् विचार्य्यैव कृतः, तेनेयं जिज्ञासापिस्वाभाविको यत् वेदानाङ्कृते विनिर्गत शब्दप्रयोगे किन्तथ्यमिति ? तद्विषये कृत-स्मृत शब्दयोः प्रयोगः कथन्नेति ? एवं पुराणानां कृतेऽपि स्मृतशब्दस्यैव कथं प्रयोगः ? कृतशब्दप्रयोगः कथन्न-तद् विषये ? उत वा विनिर्गत शब्दप्रयोगः कथनास्ति ? आसु जिज्ञासासु सञ्जातासु समाधानं तासान्तदैव सम्भवम् यदा विनिर्गत-स्मृत-कृत शब्दानामर्थावबोधः समुचितः प्रामाणिकश्च जायताम् समग्रेऽपि संस्कृत वाङ्मये नैकत्र ते शब्दाः प्रयुक्ताः लभ्यन्ते । यथाऽन्यत्र न क्वचिदपि प्राप्यन्ते । समालोचका इतिहासग्रन्थलेखका विद्वान्सोऽपि वर्तमान लेखनप्रणालीमनुसृत्य तद्विषये न दत्तावधाना भवन्ति न वाऽभूवन, येन वेद पुराणादिविषये कालनिर्धारणं तत्तद् ग्रन्थ कर्तृत्वञ्च न सम्यग्गोचरी भवति ।

तस्मादेवात्र क्रमशो विचारो विधीयते—

**१—विनिर्गत ग्रन्थ विमर्श ।**

स एव विनिर्गत ग्रन्थोऽभिधीयते यस्य शब्दा अर्थाश्च बोध्यमानाः केनचित्पुरुषेण नोच्चारिताः न च कृता भवन्ति, अतएव संस्कृत-वाङ्मये श्रुतिपदेनाभिधानं प्रशस्तम्मन्यते । श्रुतिरियमिति सर्वत्र प्राशस्त्यं भजते । अयं हि योगरूढ़शब्दः=श्रूयत एव न केनचित् कृत इति । यश्च वाक्यसमूहः श्रूयत एव न कैश्चित् कृत इति स एव श्रुतिपदभाक् । तस्मादयं श्रुति शब्दो वेदरूपग्रन्थे रूढ़ोऽपि विद्यते । यथा वर्तमानसमये रेडियोनामकयन्त्रेण कश्चनापिसम्यगभिनयः श्रुतिगोचरो जायते, श्रुत्वा च कस्याञ्चिदपि भाषायां लिपिबद्धः क्रियते ग्रन्थरूपतासंग्रहेण भवति, तत्राऽयं प्रश्नः शक्यो यत् को हि ग्रन्थ-कर्ता लेखकः ? अभिनयस्तु मालतीमाधवविषयकः दुष्यन्तशकुन्तला विषयको योऽपि कोऽपि वा, यस्य रेडियोयन्त्रद्वारा दूरदर्शनद्वारा वा श्रुत्वादृष्टवा च लेखकः कथम् तदभिनयकर्ता न मन्यते=स्वीक्रियते, यतो लेखकस्तु केवलं तत्तद् भाषायां शब्दनिर्माणकर्ता नार्थ-कल्पकः, स न वा उच्चारयिता भवति किन्तु ते तु सर्वेऽपि शब्दा तत्तद् यन्त्रतः सम्यग् विनिर्गता एव । येन तदभिनयस्य शब्दश्रवणानन्तरं

केवलं लेखको लेखनमेव विधत्ते न कर्ता, न स्मर्ता न वाऽनुवादकः स वक्तुं शक्यः किन्तु स लिपिक पदवीकः ।

तथैव लोकपितामहोब्रह्मा ऋषयो मुनयश्च सर्वेऽपि श्रुतिवाक्यानां न कर्तारः, न वा स्मर्तारः, न वाऽनुवादकाः कथ्यन्ते ।

कृतग्रन्था अनित्या भवन्ति, किन्तु ब्रह्मणास्मृता अर्थाः, विनिर्गतानि वाक्यानि नित्यनूतनान्येव जायंते प्रतीयन्ते, इदमेव तत्त्वं प्रकाशयितुं उपर्युक्तवचने वेदानां कृते विनिर्गत शब्द प्रयोगः, पुराणानां कृते स्मृतपदप्रयोगः कृतः ।

## २—स्मृतग्रन्थ विमर्शः

शास्त्रविभाजनं दलद्वये दृश्यत एव श्रुतिस्मृतिरूपतः—वेदातिरिक्तानि पुराणानि-उपपुराणानि, दर्शनानि धर्म शास्त्रादीनि च स्मरणविषयतया स्मृतिरूपाण्येव । अयं हि स्मृत शब्दः पङ्कजशब्दवद् योगरूढ़ः, पंकाज्जातं पंकजमितिव्युत्पत्त्याकमलरूपोऽर्थो भवति तेन हि योगः परन्तया व्युत्पत्त्या पंकाज्जोक-शैवालप्रभृत्यर्थान् व्यावर्तयितुं कमलरूपार्थे पंकजपदं रूढ़मपि । तद्वदेव स स्मृतग्रन्थः प्रोच्यते यस्य नित्यं नूतनानभिनवानर्थान् तपःपूतात्मानो महर्षयो हि ऋतम्भराप्रज्ञाया स्मृति पथमानयन्ति । तदनन्तरं च स्वशब्दे तानर्थान् प्रतिबद्धच ऋषयो महर्षयश्च प्रकाशयन्ति । तेन रूपेण पुराणग्रन्थास्मृतग्रन्था एव सन्ति । पुराणानामर्था नित्यमेव नूतनाः प्रतिपादिता भवन्ति । तेन पुराणानां शब्दाः प्रथमं ब्रह्मणः पश्चाद् व्यासमुने, ततोऽन्येषां मुनीनाम् । किन्तु पुराणानामर्था न ब्रह्मबुद्धिकल्पनाप्रसवाः न वा व्यास प्रकल्पिताः प्रत्युत परमेश्वरस्यैव ।

## ३—कृतग्रन्थ विमर्शः

स एव कृत ग्रन्थोऽभिभाष्यते यस्यार्थाश्शब्दाश्चपुरुषकल्पिता विनिर्मिताश्च । यथाऽभिज्ञानशाकुन्तलम्मालतीमाधवम्रघुवंशादि काव्यानि । एतद्धि सर्वं यद्यपि रामायणमहाभारतपुराणमूलकमेव तथापि समग्रोऽपि संवादः सामाजिकचित्रणं विविध वैचित्र्यपूर्णं कवि-

प्रतिभाप्रसूतमपि। कविगणाः लोकरुचिलोकप्रवृत्ति प्रवणतया सरसतामुन्नेतुमर्थान् भावांश्च स्वप्रखरप्रतिभया प्रख्यापनाय सहृदहृदयप्रीणनाय लोकेऽवतारयन्ति। कल्पनापि कवीनां काव्यप्रणयने न निर्मूला स्वतन्त्रा वा भवन्ति परन्तु ध्वन्यालोकप्रभृतिलक्षणग्रन्थानुसारं तथा प्रवृत्तौ प्रतिबद्धा एव। कालिदासप्रभृतयो महाकवयोऽपि रामायणप्रभृति विशिष्टग्रन्थानधीत्य संश्रुत्यचैव काव्यरचनासु प्रवृत्ताः। ऋतम्भरा प्रज्ञया न तेषां स्मरणन्तैर्विहितमिति। तस्मादेव रघुवंशमहाकाव्यमपि वाल्मीकिमुनिकृतरामायणवत् स्मृतग्रन्थकोटिसु न गण्यते कथमपि। तेन कवीनां विदुषां ग्रन्थाः कृतग्रन्थकोटिमेव भजन्ते।

कृत ग्रन्थोऽपि परिस्थितिवशादेव स्मृतग्रन्थतया भाषितुं शक्यते। यथा कोऽपिविंशतिः त्रिंशत् पञ्चाशद् वा वर्षतः पूर्वं किमपि काव्यं सम्यगधीतं परं किञ्चित् तथाऽदृष्टं प्रभावितं येनाधीतमपि सर्वंविस्मृतिपथङ्गतम्। सम्प्रति भूयोभूयः कण्ठस्थीकरणाय अर्थबोधाय च प्रयासो विधीयते तेन यथा क्रमं शनैश्शनैः सामान्यार्थं एव स्मृति पटलमारोहति। यदि स्मरणशक्तिः साहायनी भवति चेत् तदैव पूर्णतोऽर्थविबोधः सम्भवति। शब्दानुपूर्वी पूर्वमपि न कण्ठस्थमासीत् तेन तत्स्मरणन्न सम्भवम्। यदि कण्ठस्थीकृतानर्थान् स्वशब्देष्वाबद्ध्य रघुवंशादिकाव्यग्रन्था निर्मीयन्ते तदा ते स्मृतग्रन्थत्वेन ज्ञायन्ते। न तु तदा ते कृतग्रन्थत्वेन स्वीक्रियन्ते। यतस्तेषां ग्रन्थानामर्थान् न प्रकल्पितवन्तः, तन्निर्मातारस्तु कालिदासादयो महाकवय एव। वयन्तु केवलं स्मर्तार एव स्मः वयन्तु तत्तदर्थानाधारीकृत्यैव ग्रन्थप्रणेतारः। यद्यपि कृतित्वमत्रास्माकं प्रतीयते परन्तु रघुवंशादिकाव्यानां न वयं स्वयं कर्तारः अपि तु यथाकथञ्चिदनुवादकाः। यथा स्मृतरघुवंशादिकाव्ये न कृतित्वंमस्माकम्, तथैव—ब्रह्मणा व्यासेन वा स्मृतपुराणादि शास्त्रेषु न तेषां कृतित्व सम्भवम् तेऽपि केवलं स्मर्तारः।

न च अत्र जिज्ञासा भवति यत् वा शंकितुं शक्यते यत् प्रोक्तपुराणवचने स्मृत-विनिर्गत-शब्दौ प्रयुक्तौ भवतः तत्र वेदपुराणयोर्नित्यता साधयितुन्न शक्यते यतः पदद्वयस्यापि प्रयोगः अनित्य ग्रन्थेषु=कृत ग्रन्थेष्वपि दृश्यते, यथोक्त प्रक्रिययारघु-

वंशादौ द्वयोः प्रयोगः प्रदर्शित एव तर्हि तयोर्व्यभिचरितत्वान्नैव वेद-पुराणयोर्नित्यत्व सिद्धिः तथा सति कथं ब्रह्मणाऽर्थतो नित्यपुराणानि स्मृतानि तन्मुखाच्च शब्दतस्तथाऽर्थत उच्चारणतश्च नित्यवेदा उच्चरिता जाता इति ? यदि द्वावपिशब्दौ स्मृत-विनिर्गतौ योगरूढौ स्वीक्रियेते तदपितथ्यं न समीचीनं प्रतिभाति, यतो योगरूढिस्वीकारे एकतरपक्षपातिनी न कापि युक्तिस्तर्हि तौ शब्दौ वाचकाविव कथन्न यौगिकौ स्याताम् ? एवम्बिधोक्त जिज्ञासय प्रश्नसमाधानमित्थं भवति वस्तुतस्तु युक्तप्रश्नोत्थानं हि तदुद्धृतप्रासंगिकवचनमविचार्य्यैव जातमस्ति, तत्र विचारणोयमस्ति यत् ब्रह्मणा कदा कस्यां परिस्थितौ पुराणानिस्मृतानोति ? कासीत् परिस्थितिर्यत् ते वेदास्तन्मुखात् स्वतः प्रकटिता अभूवन् ? एवं विध विचारणायामिदमेव विज्ञै रितिहास कारैः प्रोक्तं यत्प्रोक्ताखलु घटनातदानीन्तनी ज्ञायते यदाहि भौतिकसृष्टि प्रक्रियाया आरम्भ एव नासीत् । महाप्रलये ब्रह्मातिरिक्तन्नकिञ्चिद-प्यासीत् क्वचित् । यथा शान्तोदधौ न तरंग बुदबुदादीनांस्तित्वं न भवति तथैव जीवादीनामपि महाप्रलये पृथक्स्तित्वन्नावतिष्ठते, यदाब्रह्मणः सृष्टि विषयिणी सदिच्छाऽभवत् । तत्र भौतिकसृष्टेरनन्तरं प्रथमः प्राणी ब्रह्मासमभूत । सद्यो जातशिशोर्बुद्धिरत्यन्तमविकसितैव यथा भवति तथैव नवजातलोकपितामहपदवीमुपेतस्य ब्रह्मणोऽपि बुद्धिरविकसितैव समवस्थिता । ब्रह्मास्वयमात्मानन्नावगच्छति यत् कोऽयं कुतः केनोत्पन्नः ? इति सर्वमाकलयन्तमुत्सुकं ब्रह्माणमवलोक्य परमेश्वरो नभोवाण्या तपसि संयोजितवान् ब्रह्माणमेनम् । तपश्चर्याव-शादेव तस्य हि प्रश्नद्वयस्य समाधानं समजायत् । तपोबलेनैव प्रत्यक्ष मन्वभवत् यत्स भगवतोविष्णोर्नाभिकमलादुत्पन्न इति । भगवान् विष्णुः शेष जिज्ञासां समादधन् प्रोवाच यत् सृष्टि विरचयेति, सापि-सृष्टिः का ? तन्निर्माणञ्च कथमित्यादिकं ब्रह्मा नावधारितवान् एवं विधजिज्ञासां भगवतो विष्णोः सम्मुखं समुपस्थापयत् । तपश्चर्यैि-भगवता पुनरपि ब्रह्मासमुपदिष्टः । तदैव ज्ञातुं शक्यते यत्सृष्टिः का ? तस्यानिर्माणञ्च कथम्भवतीति ?

तपश्चर्याचरमावस्थामुपागतो यदा तदानीं तपसः प्रभावात् पुरा-णानि स्मृतिपटलमारूढ़ान्यभवन् । इदमेव तथ्यं सम्यक्तया—'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणस्मृतम्' इतिपङ्क्त्या समुद्धृतम् ।

ब्रह्मातपश्चर्यायां लीन एवासीत् तस्याः सम्पूर्णतापेक्षया येन हृदयं तथाविध सामर्थ्यशाली भवेत् तथा सति ईश्वरप्रेषिता अनुप्राणिताश्च वेदाः प्रतिफलिताः सन्तः कण्ठदेशतो विनिर्गताभवेयुरिति ब्रह्मदेवस्य समीहाभूत्। यदा तपः पूर्णताङ्गतं तदा भगवतो विष्णुना प्रेषिता प्रेरिताश्च वेदाः लोकपितामहस्य ब्रह्मणो हृदये प्रतिफलिताः कण्ठत उच्चरिता अभवन् ।

अत्र च प्रमाणम् श्वे० उ० ६/१८ वचनमेव—

यो ब्रह्माणं विदधाति पूर्वम्
योवै वेदाँश्च प्रहिणोति तस्मै, इत्यादिरूपम् ।

अर्थात् ब्रह्म ब्रह्माणं प्रथममुत्पादयति तं तपसि नियोजति तपसि पूर्णे सति वेदान् तत्पार्श्वे प्रेषयति, उक्त मन्त्रे प्रहिणोति शब्दः प्रयुक्तो विद्यत एव, तस्य स्वारसिकोऽर्थो विलक्षण एव, यथा रेडियो संयन्त्रसंस्थानं शब्दान् प्रेषयति रेडियो संयन्त्रादिकं हि शब्दानां प्रतिफलनमेव विधत्ते, तथैवेश्वर-प्रेषिता वैदिकाश्शब्दा अपि ब्रह्मणो-हृदि प्रविष्टास्तत्रप्राप्तावा प्रतिफलिताश्च कण्ठतोनिस्सरन्ति स्वभावतः। यथा रेडियो संयन्त्रतो विनिर्गता अभिज्ञानशाकुन्तलरघुवंश-काव्यादिमयाश्शब्दा दुष्यन्तशकुन्तलादिभिर्नोच्चारिता भाष्यन्ते न वा तत्कर्तृत्वन्तत्तत्संयन्त्रस्य, वक्तुं शक्यते तथैव वेदशब्दानां तदनु-विद्धानामर्थानाञ्च तथा उदात्तानुदात्तस्वरितानाञ्चापि कर्ता ब्रह्मा न भवति। इत्थं हि तत्तदितिहासमाध्यमेन ज्ञायते यत् ब्रह्मा येषां पुराणानां स्मरणं कृतवान् तानि मनुष्यकृतरघुवंशाभिज्ञानशाकुन्तलादि कृतिवत् कथमपि न सन्ति, तानि पुराणानि न पुरुषकृत ग्रन्थरूपाणि प्रत्युत तानि ह्यर्थरूप ब्रह्मैव, एवमेव हि ब्रह्मणो मुखात् कण्ठतोवेदा विनिर्गता ये तेऽपि तत्प्रेषिता आसन् प्रेषकोऽपि ईश्वरापरपर्यायो ब्रह्मैव' प्रेषिताश्च वेदशब्दा अपि ब्रह्मस्वरूपा एव ।

वस्तुतो दृष्टान्त-द्राष्टान्तिकयोर्विवेचनमतीवावश्यकम् तथाहि— अनित्या अर्था स्मृता विनिर्गतास्सन्तोऽपि अनित्यताम्भजन्ते तेऽनित्या एव तिष्ठन्तीत्येव सत्यम् । परं येऽर्था नित्या शब्दाश्च येनित्यास्ते स्मृता विनिर्गता अपि नित्या एव तिष्ठन्ति। यथा हि ब्रह्मनित्यम् । अतस्तद् ब्रह्माऽऽकल्पतः कोटि-कोटिभिर्महर्षिभिः स्मृतं-

सदपि नित्यमेवावतिष्ठते। एवं वेदाः पुराणानि च नित्यानि स्मृतानि-विनिर्गतान्यपि नित्यान्येव। अत्र नित्यतायां किं प्रमाणमिति प्रश्न समाधानाय कानिचिद् वेदवचनानि युक्त युक्तानि स्वतःप्रामाण्यतया प्रदर्श्यन्ते। यथा—

१—वेदोब्रह्मरूपः वेदाः पुराणानि च ब्रह्मस्वरूपाणि—ब्रह्मस्वयम्भूः इति (तै० आ०)।

पुराणमपि वचनमेतत्समर्थयति—यथा वेदः नारायणः स्वयम्।
—वृ० ना० पु० ४।१७

ब्रह्म सच्चिदानन्दस्वरूपमुक्तम्। विज्ञानमानन्दं ब्रह्म, (वृहदा० ३।६।२८) चिच्छकस्य ज्ञानमर्थः अत्राद्वैतवाद सिद्धान्तानुसारम् यथा ब्रह्मनित्यं सत्स्वरूपन्नित्यानन्दरूपं तथा नित्य ज्ञानरूपमपि। ज्ञाने च शब्दानुवेद्यभावनमावश्यकम्। अनुविद्धमेवज्ञानं सर्वंशब्देन भासते—

इति वाक्यपदोयेब्रह्मकाण्डे प्रोक्तमेव—नित्यज्ञानाय नित्यशब्दानुवेधः पूर्णत आवश्यकः। तस्मान्नित्यशब्दात्मकः नित्यार्थ-नित्य-सम्बन्धात्मकश्चवेदः ब्राह्मरूपतया सिद्धएव।

२—पुराणमपि वेदरूपमेव, वेदो हि पुराणमात्मसमानं नित्यमामनुते ब्रह्मणः समानता पुराणमाप्नोतीति विषये-अथर्ववेदे ११-७-२४ मन्त्र एव प्रमाणभूतः ऋचः सामानि छन्दांसि पुराणं यजुषा सह। इति।

स्वयं पुराणमेवात्मानं ब्रह्मस्वरूपम्मनुते। पुराणं वस्तुत एकमेव। अस्यैवाष्टादशप्रकरणान्येवाष्टादशपुराणत्वेन व्यह्रियन्ते। इमान्येवाष्टादशप्रकरणान्यष्टादशावरूपतयाऽभिव्यक्तानि भवन्ति। सामान्यमिदं वचनं यद्-अवयवीतो नावयवा भिन्ना इति। पुराणं हि ब्रह्मपुराणरूपतां प्रतिपादयदुद्घोषयति यत् ब्रह्म हि वस्तुतोऽनेकरूपेषु समवतरति, तस्यैकं रूपं पुराणमपि विद्यते।

यथा—एकं पुराणं रूपं वै (प० पु० स्व० खं० ६२।२) इति वचनानुसारम्, इदमपि सुप्रतिपादितं यत् किन्नामकं पुराणं ब्रह्मणः

कोऽत्रयत्र इति, तद्यथा—ब्रह्मपुराणं भगवतो मस्तकम्, पदम्पुराणं हृदयम्, विष्णुपुराणमेव दक्षिणो बाहुः, शिवपुराणञ्च वामबाहुः, भागवतपुराणमेवोरुयुगलम्, नारदीयपुराणं नाभिः, मार्कण्डेयपुराणं दक्षिणपादः, अग्निपुराणं वामचरणः, भविष्यपुराणं दक्षिण (घुटना इति जानुः) ब्रह्मवैवर्तपुराणं नाम (घुटना इति) वाम जानुः, लिंग पुराणं दक्षिण (घुट्ठो) गुल्फकम्, वाराहपुराणं वाम (घुट्ठी), गुल्फकम्, स्कन्दपुराणमेवरोमावलिः, वामनपुराणं त्वक्, कूर्मपुराणं पृष्ठभागः, मत्स्यपुराणं मेदो भागः, गरुड़पुराणं मज्जा, ब्रह्माण्ड पुराणमेवास्थिभागः। इत्थमेतदुक्तवचनं सर्वंप्रस्तूयते पद्म पुराणगतम्—

एकं पुराणं रूपं वै तत्र पादमं परं महत्।
ब्राह्मं मूर्धा हरेरेव हृदयं पद्म संज्ञितम्॥
वैष्णवं दक्षिणो बाहुः शैवं वामो महेशितुः।
ऊरू भागवतं प्रोक्तं नाभिस्यान्नारदीयकम्॥
मार्कण्डेयञ्च दक्षांघ्रि वामो ह्याग्नेयमुच्यते॥
भविष्यं दक्षिणो जानुर्विष्णोरेव महात्मनः।
ब्रह्मवैवर्तं संज्ञन्तु वामजानुरुदाहृतः।
लैङ्गन्तु गुल्फकं दक्षं वाराहं वामगुल्फकम्।
स्कान्दं पुराणं लोमानि त्वगस्य वामनं स्मृतम्॥
कौर्मं पृष्ठं समाख्यातं मात्स्यं मेदः प्रकीर्त्यते॥
मज्जा तु गारुड़ं प्रोक्तं ब्रह्माण्डमस्थि गीयते॥
एवमेवाभवद् विष्णुः पुराणावययवो हरिः॥

—प० पु० स्व० खण्ड–६२।२—७

एवं प्रकारेण हि वेदाः पुराणानि यदा ब्रह्मरूपाणि तर्हि तान्यनित्यानि सर्वाणीति वचनं सर्वथा व्यामोहं भजतामेव। यतोऽनित्य वचनं सर्वं पदम्पुराणानुसारं वाधितत्वाद् विरुद्धमेव। वस्तुतस्तथ्यमिदमवधारणीयं विद्वद्भिर्यत् यदा महाप्रलये ब्रह्मणः सदंश आनन्दांशश्च विद्यमानौ भवत एव तदा तस्य ब्रह्मणश्चिदंशवेद-

पुराणानामपि सदा विद्यमानतापि सिद्धैव यतश्चिदंशभूता एव वेदाः-पुराणानि। महाप्रलयोपरते ब्रह्म = नारायणो ब्रह्माणं सृजति = प्रकटयति भौतिकसृष्टि निर्माणार्थम्।

यथा-यथा भगवतो हिरण्यगर्भस्य ब्रह्मणो बुद्धेर्विकासस्तथा तथा तपसः साहाय्यं लब्ध्वा क्रमशः प्रथमं ब्रह्मरूप पुराणस्य स्मरणं भवति, तदनन्तरं-वेदाभिव्यक्तिः आविर्भावः—

'वेदा देव सृष्टिक्रमः।'

यावत् कालं वेदा ब्रह्माणन्नोपस्थितास्तावद्ब्रह्मदेवः सृष्टिनिर्माणविषमेऽनभिज्ञ एवासीत्। पुराणानां वेदानाञ्चाधिगमनानन्तरं ब्रह्मणः समग्रसंशयोऽनभिज्ञता च निरस्ताऽभूत। तदनन्तरं वेदपुराणसाहाय्येनैव भौतिक सृष्टिनिर्माणे समर्थोऽभूत्। मनुवचनमप्यत्र प्रमाणम्—

वेदशब्दभ्यएवादौ पृथक् संस्थाश्चनिर्ममे। —मनु १।२१

ब्रह्मा न केवलं भौतिकसृष्टिमेवाकरोत् किन्तुसम्प्रदाय प्रवर्तनमपि चकार, सृष्टिक्रमविस्तारे सति लोकपितामहः सनक-सनन्दन-सनातनसनत्कुमारवशिष्ठादि मानसपुत्रानव्यसूयत्। तेभ्यश्च वेद-पुराणोपदेशमपि प्रादात्। तदनन्तरमेव तान्येव स्मृतिविषयीभूतानि वेदपुराणानि शिष्यप्रशिष्येभ्योऽप्युपदिदेश वशिष्ठादिमुनिगणैः तदनुसारमेव वेदपुराणादि शास्त्राणि पठन-पाठन परम्पराप्रचालिता अद्यापि प्रचलत्येव।

व्यास द्वारा-पुराणादीनां संक्षिप्तकरणं द्वापरान्ते पुराणादीनामध्ययनाध्यापने विशृंखलतागतामवधार्य तथाविधः प्रयासो विहितोवेदव्यासेन, विशृङ्खलतायाः कारणमिदमासीद यत् ब्रह्मदेवेन स्मृतानां पुराणानां विशालताशतकोटिमिता-विशिष्टासीत् तेषुशतकोटिश्लोका आसन्।

यथोक्तमन्त्र विषये मात्स्य पु० (३।२-३)—

तपश्चचार प्रथममराणां पितामहः।
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
नित्यं शब्दमयं पुण्यं शतकोटि प्रविस्तरम्॥

इति शतकोटिश्लोकात्मकपुराणस्य पठनंपाठनमतिकठिनमेवासीत् यतस्तदा आयुषः बुद्धेश्चाधिक्येन ह्रासता जाता आसीत्। सम्प्रति कलियुगे ब्रह्मणास्मृतपुराणस्य पठनमध्ययनमसम्भवमेवास्ति। तस्मादिह भगवतोविष्णोर्ज्ञानशक्तेरवतारभूतोभगवान्वेदव्यासश्चतुर्लक्षपरिमितश्लोकेषु ब्रह्मणा स्मृतपुराणस्य संक्षेपं चकार। अद्यसमुपलब्धं यत् पुराणं तत्तु भगवतावेदव्यासेन कृतमेवास्ति। अद्यावधिब्रह्मणा स्मृतपुराणोपलब्धिर्न जात।

अत्र विशिष्टो विचारोऽयं यत् स्मृतवाक्यापेक्षया विनिर्गत वाक्यं प्रबलम्, अत्रेत्थमपि न शंकनीयं यत् ब्रह्मणा सर्वप्रथमं पुराणस्मरणं सञ्जातन्तेनेदं परवर्तिवेदापेक्षया महदिति, यत इतिहासेनैव प्रबोधितं यत् पुराणं तपश्चर्यातः पूर्णतायाः प्रथमं स्मृतिपथमागतम् (अर्थात् तपसः पूर्णतायाः प्रथममेवोदितं स्मृतिपथे) वेदस्तु तस्यपूर्णतानन्तरं यथायथं यथास्वरूपमेवश्रुतिपथमागतः। तस्य पुराणस्यस्मरणे बुद्धिप्रतिभादिषुकुण्ठतादि सद्भावात् स्खलनं सम्भवम्, परन्तु श्रुतवाक्ये (वेदात्मके) कुण्ठायाः सद्भाव एवासम्भवः, कुण्ठायाः सद्भावस्य प्रश्नएव नोदेति।

अतो वेदः स्वतः प्रमाणम्, पुराणादिस्मृत्यादिस्तु वेदमूलकत्वादेव प्रामाण्यमधिगच्छति।

धर्मे प्रमीयमाणेतु वेदेन करणात्मना।
इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति॥

इति वचनानुसारं श्रुतिस्मृतिविरोधे सञ्जाते स्मृतेरप्रामाण्यम्भवति श्रुतिरेवसत्प्रामाण्यं भजते यथा—जै० सू० १।३।३। "विरोधे त्वनपेक्षं स्यात्" इति पुराणादिषूल्लिखितविषया वेदानां प्राप्तशाखासु नोपलभ्येयुश्चेत् तदा शास्त्रकाराणां महानुपदेशो यत् पुराणानां ते विषया मान्यतामर्हन्ति तदाऽनुमानं कर्तव्यं यत् तत्तद्विषयमूलकश्रुत-

योऽवश्यमेवासन् नात्र सन्देह इति । इदमपि मीमांसासूत्रकारो जैमिनिमुनिः प्रतिपादयति यत् स्मृतीनामपि कोऽपि विषयः श्रुतिषु न प्राप्तो भवेत् यदि तदापि सो विषयो नाप्रामाणिकोमन्तव्य इति, परन्तु तत्राप्यनुमानं विधेयंतत् स्मृतिवचने तादृशेविषयेऽवश्यमेव कापिश्रुतिमूलभूतास्यादेवेति या सम्प्रति नोपलब्धा। यथोक्तन्तेन—(जै० सू० ।३।६ १।३।३) असतिह्यनुमानम् इति ।

पुराणमिदं विश्वस्य महदद्भुता सम्पत् । पुराणेषु सामाजिका राजनीतिका यावन्तो वादाः तावतां सर्वेषां यस्मिन् कस्मिन्नपि रूपे परिचयोलभ्यत एव। पुराणसदृशास्तत्त्वप्रतिपादका नान्ये ग्रन्थाः केचनोपलब्धाः । वेदानां शाखासु बहूनां शाखानां ह्रासो-लोपोऽपि जात एव तथाप्युपलब्धैरेवांशैर्विद्यावतामनुमानादि प्रमाणैः युक्तिभिश्च शेषाणामंशानां सत्ताः परिभावनीया एव । पठन-पाठन विधया सावधानैर्वेदा संरक्षणीयाः सन्ति ।

---

# व्यंजनावृत्ति वार्ता

निखिलोऽपि जगत्प्रपञ्चोब्रह्मलीलाविलसित इव समग्रोऽपि-साहित्यसिंधुर्व्यञ्जनासमुल्लसितो विभाति नात्रकिमप्याश्चर्यम्। न केवलमलङ्कारशास्त्र एव व्यञ्जनायाः प्रामुख्यं किन्तु शब्दशास्त्रे व्याकरणे वेदान्तेऽपि च तस्या माहात्म्यमुपयोगिता च न तिरोहिता। वेदेऽपि च तदीयः प्रसङ्गो मनोहारिवरीवर्ति। परमेतदवधारणीय-मवश्यमेव यत् सर्वत्र प्राथम्येन शास्त्रज्ञैरभिधालक्षणे विचारपथ मानीयेते ततः परमेव व्यञ्जनाया अवसरः समायाति यतो व्यञ्जनाऽ-भिधा पूच्छायिताऽभिधामूलालक्षणामूलेति बहुशः प्रतिपादनात्। तेनैवाभियुक्तैरभिहितमिदं यदभिधालक्षणातात्पर्याख्यासु विरतासु तुरीयावृत्तिर्व्यञ्जनेति, यैश्च तात्पर्याख्यानाङ्गीक्रियते तेषाम्मतेऽभिधा-लक्षणयोर्विरतयोस्तृतीयावृत्तिर्व्यञ्जना सिद्धैव।

अभिधा हि एकस्यैव नियन्त्रितस्यार्थं विशेषस्याभिधायिनी वृत्तिरिति, लक्षणापि च रूढि प्रयोजनान्यतरवशंवदीभूयैकस्यैवाप्रधानी भूतस्य गौणार्थस्य लक्षिका भवतीति प्रतिपादयन्ति शास्त्रज्ञाः। अत-एवेदं वचनं सत्यमेवयत् व्यञ्जनातु तदैव प्रवर्तनशीला भवति यदा खलु विगत शक्तिरभिधाप्रतिहतप्रभावालक्षणाच नार्थप्रतिपत्तौ समर्थे भवतस्तदा व्यञ्जनैवार्थबोधाप कारिणीति।

न चास्यां व्यञ्जनायामेकार्थंप्रतिबद्धत्वं वक्तुं शक्यते तस्या असीमित विषय गामित्वात् वक्तृबोद्धव्यादि विषयकल्पनानन्त्यसञ्चा-रित्वाच्च।

यथा चन्द्रमण्डलमुदितमिति कदाचिद् विरहिण्या सखी प्रति-चेदुच्यते तर्हि 'विरहिरण्या विरहजनित सन्तापातिशयवेलासमु-पस्थितेयं पुरतः 'इति सख्या सम्यग् विज्ञायते। एतद्धि पूर्वोक्तं वाक्यं दूत्याऽभिसारिकां प्रति प्रयुक्तं चेत्तर्हि तदाऽभिसारिका समव-गच्छति, अभिसारकालोऽयंसन्नद्धस्तदर्थं सञ्जीभूयताम्मयेति। यदि तदेव वाक्यां चौरमित्रेण चौरं प्रति प्रयुक्तं स्याद् तदा चौरोऽभ्युप-गच्छति तथ्यमिदं यत् अलमलं मदीय चौर्य्यसाहसविलसित-प्रदर्शनैश्चन्द्रोदयेऽभिज्ञे यताभीते इति।

इत्थमुपर्युक्ता भावा निखिला अन्ये चापि भावार्था एकस्यैव-वाक्यस्य भवितुं शक्यन्ते । भावाश्चैते न कुत्रापि शब्दकोशे कोशकारैः प्रकाशमानीताः । नामी भावास्तस्माद्वाक्यान्निर्गलन्तीति 'नानुभव विलासभाजो वक्तुं पारयन्ति । अतः प्रशस्तं तथा भूतम्मन्तव्यं यदस्ति तदर्थं काचिद् विशिष्टा वरिष्ठाशक्तिरेव तादृशवाक्यगत भाववैचित्र्यमालोडयन्ती समुज्जृम्भते ।

सा च नैवाभिधाऽभिधातुं शक्या, सचेतसामन्तःकरणप्रमाण-मन्तरा विविध कोषादिसाहाय्यामभिलषताऽपि सर्वत स्वतन्त्रेणापि तथाविधवाक्यार्थाऽत्रबोधनेऽशक्तत्वात् ।

यदिहलक्षणावृत्ति प्रशक्तिस्तथाविधार्थं प्रकाशनाय कैश्चिदभ्युप-गम्येत् तदपि न सम्यक्, मुख्यार्थ बाधस्य रूढ़िप्रयोजनाऽन्यतर कारणकलापस्य चाऽभावेनद्वितीयावृत्ते स्तस्याः प्रवृत्त्यसम्भवात् । तेन हि कस्यचिदप्यन्यस्योपास्य सुतरामभावात् प्रोक्तवाक्ये विविध विचित्रार्थ संवहन शालिनीं काचन तृतीयैव वृत्तिरभ्युपगम्या, सा हि तर्हि अभिधालक्षणातोव्यतिरिक्ता का स्याद् ऋते व्यञ्जनायाः ।

साहि व्यञ्जना वृत्तिर्ध्वनिकाव्यात्मवादिनां सहृदयानां सच्छास्त्र वासनावतां साधन सोपान सम्पद् रूपा व्यंग्यार्थप्रत्यायिका सहृदय हृदयाऽऽवर्जिका विशिष्टावृत्तिर्विशिष्यत एवाऽभिधालक्षणा-भ्याम् । व्यञ्जनव्यंग्य सम्बन्धनमपि तयैव सम्भवम् । यद्यपि तिस्रश्शब्दस्य वृत्तय इति वचनानुसारं शब्द निष्ठाया अर्थनिष्ठायाश्च-तस्याः प्रतिपादनेन न कथमपि वृत्ति शब्दो व्यवहारपर इति वक्तुं शक्यते, तथापि व्यञ्जनावृत्तिपदान्तर्गतो वृत्तिशब्दो व्यापार परतया व्यवहारक्रियारूपतामप्यासादयत्येवेत्यपि सत्यम् । किन्तु विचारणा यामत्र वृत्ति शब्दश्शब्दशक्तिं स्मारयति व्यवहारो वा ? इत्यपि जिज्ञास्य पक्ष उपस्थितो भवति । तत्र हि निश्चयेन वक्तुं शक्यते-यदिह शब्द व्यवहारोऽभिधालक्षणातात्पार्यवृत्ति व्यतिरिक्त एवाभा-सते नितराम् । तत्र शब्दार्थरूपं व्यञ्जकत्वमौपाधिकमेव । परमत्र तत्स्वरूपं सुनियतमेव । वस्तुतऔपाधिकत्वन्तु केवलं शब्दप्रसंगे सम्भवति ।

अथचेयं व्यञ्जनावृत्तिः शक्तिवृत्तिरिव न शब्द मात्राश्रया किन्तु मतान्तरीय लक्षणावृत्तिरिवार्थाश्रितापीति । तेनेयमत्रास्याश्शब्द निष्ठत्वमर्थं निष्ठत्वमुभयत्वं सुप्रथितमेव । शब्दनिष्ठा व्यञ्जनाहि प्रकृति-प्रत्यय पदवाक्यनिष्ठतया चतुर्धा व्यवह्रियते । यथा वा "द्योतिका वाचिका वा स्युः द्वित्वादीनां विभक्तयः ।" इति सिद्धान्तानुसारं यदाऽमादि विभक्तीनामेकत्व द्वित्वबहुत्व संख्याद्योतकत्वम्, तदा प्रकृतिरेवैकत्वाद्यर्थं वाचिका भवति । यदातु अमादिविभक्तय एव वाचिकास्तदा घटादि प्रकृतय एकत्वाद्यर्थं द्योतिन्यः । यत्र पदस्य द्योतकत्वन्तत्र परिपूर्वकाद् भूधातो लर्टितिपि शप् प्रभृतितिङादिकार्ये सञ्जाते परिभवतीत्यादौ भूधातोः परिभवाद्यर्थवाचकत्वं परेरुपसर्गस्य च द्योतकत्वं प्रसिद्धमेव । यथोक्तमत्र शाब्दिकैः—

उपसर्गेणधात्वर्थोबलादन्यः प्रतीयते ।
प्रहाराहार संहार विहार परिहारवत् ।। इति ।

व्यञ्जनेयं न केवलं काव्यनिष्ठैव, अपितु व्याकरणशास्त्रनिष्ठापि— यथा, 'वाह ऊठ्' इति सूत्रीयमूड्ग्रहणं ज्ञापकम् असिद्धवहिरङ्गमन्तरङ्गे इत्यस्यन्यायस्येति तदपि पदनिष्ठव्यञ्जकञ्च नैव प्रतिपाद्यते । तथाहि—'वाह उठ्' इस्यत्र, इग्यणः सम्प्रसारणमित्यतः सम्प्रसारण-पदमनुवर्त्यं वाहस्तद् विधानेष्टसिद्धेरूडग्रहणेनासिद्धं वहिरङ्ग-मन्तरङ्गे' इति परिभाषा ज्ञाप्यते । तत्र ज्ञापनं सूत्रघटकोठ् ग्रहणेनैव । ज्ञापितामान्तस्यां विश्व वाह् अस इत्यवस्थायां सम्प्रसारण पदानुवर्तनेन जात सम्प्रसारणे पूर्वरूपे च कृते विश्व उह् अस् इत्यत्र पुगन्त लघुपधगुणे प्राप्तेसति वहिरंग सम्प्रसारणस्यासिद्धत्वाल्ल-घूपध गुणेनस्यादिति सूत्रस्थमूठ् ग्रहणं सार्थक्यं भजते । तद्धि सूत्रस्थ मूठ् पदप्रोक्त ज्ञाप्यार्थे न शक्तम् न लक्षकम् किन्तु व्यञ्जकमेव, कथमिति चेत्—

तर्हि ज्ञापनन्नाम प्रत्यायनं द्योतनं वा नत्वन्यत् ।
तदेव ज्ञापनमिह व्यञ्जनमित्यभ्युपगम्यते ॥

एवञ्च-प्रत्ययोत्तर पदयोश्चेति सम्पूर्णं सूत्रं ज्ञापकं भवति 'अन्तरङ्गानपि विधीन् वहिरङ्गो लुग्बाधत' इति परिभाषायाः । तत्रत्या व्यञ्जना वाक्यनिष्ठा भवति । एवमेव चन्द्रमण्डलमुदितमित्यत्र-

तत्प्रपञ्चन कृतमेव। 'अर्कोऽस्तंगत' इति वाक्यस्य सन्ध्योपासनं करणीयमित्यादि यथापात्रं व्यंग्यार्थस्य व्यञ्जनं लोके प्रसिद्धमेव। इयं व्यञ्जना प्रकारान्तरेणापि द्विधा–

शाब्दी व्यञ्जना = अभिधामूला लक्षणामूलाचेति द्विधा तत्र प्रथमा नियन्त्रितान्यार्थविषयक बोधजनिका, यथा 'दूर्गालंघितविग्रहो राजत्युमावल्लभः' इत्यादौ उमावल्लभ शब्दस्योमानाम् महादेवीवल्लभ भानुदेव भूपतिरूपेऽर्थे प्रकरणेन नियन्त्रिते गौरीवल्लभशिवरूपोऽर्थो व्यञ्जनयैव प्रत्याय्यते। द्वितीया लक्षणामूला व्यञ्जनातु गंगायां घोषः इत्यादौ प्रसिद्धा वर्तत एव। तत्र गंगापदनिष्ठा शक्तिर्हि भगीरथ रक्ष खातावच्छिन्न जलप्रवाह विशेषं बोधयित्वा विरता। लक्षणया च तीर विषयको बोधः। तयोरभिधालक्षणयोः विरतयोः शाब्देयोरभिधालक्षणयोर्विरतयोरित्यर्थः। व्यञ्जनया शैत्यपावनत्वातिशयस्य बोधः इति प्रयोजनवतीषु-लक्षणावृत्तिषु सर्वत्र प्रयोजन प्रतिपत्त्यर्थं लक्षणामूला समुपास्यत एव। अतएवोक्तमभियुक्तैः:—

लक्षणोपास्यते यस्य कृते तत्तुप्रयोजनम्।
यथा प्रत्याय्यते सा स्याद् व्यज्जना लक्षणाश्रया॥ इति

सा व्यञ्जना चेष्टा निष्ठापि भवति विचारतः सापि शब्दनिष्ठैव वक्तुं शक्या।

यद्युच्यते 'बालमूकादीनां चेष्ट्यैव व्यवहारो दृश्यते' इति चेष्टा निष्ठैत्र स्वीक्रियते तेषां शब्द ज्ञानाभावात्। तन्न सम्यक् यतस्तेषां बालमूकादीनामपि जन्मान्तरीय शब्दस्मरणेन तत्रापि शब्दनिष्ठैव नतु तद् भिन्नेति परेषांमतं यथा स्फुटीकृतमेतत् सर्वं लघुमञ्जूषादौ कलाटीकारेण श्री दुर्बलाचार्य्येण।

अर्थनिष्ठा व्यञ्जना वक्त्रादि वैलक्षण्यहेतुका या प्रतिभाजुषामन्यार्थधीः तद्धेतुर्व्यापारोऽर्थनिष्ठा व्यञ्जनेति। शब्दनिष्ठ व्यञ्जनया तु नैषा गतार्था वक्तुं शक्या तथा च —

रविजाले विलोक्य श्रीनाभिपद्मे पितामहम्।
रसाकुला छादयते दक्षिणं नयनं हरेः॥

इत्यादौ हरिपद सान्निध्यात् हरेर्दक्षिणनयनं सूर्यात्मकम् तत्संकोचेन-सूर्यस्यास्तत्वम् तेन पद्मस्य संकोचस्ततश्चपितामहस्य (ब्रह्मण) स्थगनम्=गमनम् तेनाप्रतिबद्धं रतिविलसितम् 'इतिक्रम शोव्यंग्येषु प्रतीयमानेषु तत्तदर्थं प्रतीत्युत्तरमेवव्यंग्यार्थं प्रतीतिः, एवञ्चार्थं निष्ठापि व्यञ्जना मन्तव्यैवेति मञ्जूषाकाराभिप्रायः।

इत्थमार्थी व्यञ्जनाया यत्र वक्तृ बोधव्यवाक्यादीनां वैशिष्ट्यात् काव्यवासना परिपक्वबुद्धीनां सचेतसां वाच्यलक्ष्यव्यतिरिक्तो-योऽन्योर्थः प्रतीयते तद्धेतुर्योऽर्थस्य वाच्यलक्ष्यव्यंग्यस्य विविधरूपस्य व्यापारः स एवार्थी व्यञ्जना पद्भाक्। व्यञ्जनाया अस्याश्शब्दार्थं-गतत्व व्यवस्थापकौ त्वन्वय व्यतिरेकौ एवस्तः, तद् व्यञ्जक शब्दसत्वे तदर्थंप्रत्ययः तच्छब्दाऽभावे न तदर्थ प्रत्ययः यत्र, असावेव शाब्दो-व्यञ्जना, यत्र तच्छब्द परिवर्तनेऽपि तदर्थ प्रत्ययः नापसरति तत्रार्थी व्यञ्जनेति विपश्चितां सम्मतिः। तेनैव शब्दस्य पर्यायपरिवृत्ति सहत्वाऽसहत्वाभ्यां शाब्दीव्यजनाऽर्थीव्यञ्जनेति व्यवहारः। अतशब्दस्यपर्याय परिवृत्यसहत्वमेव व्यञ्जनायाः शाब्दत्वे बीजमस्ति।

आचार्यमम्मटपादैरपि तदृकाकारै नागोजिभट्टैश्च नियन्त्रितार्थ-बोधजनकत्वं शाब्द व्यञ्जनात्वं प्रतिपादितम्। विषयेऽस्मिन्नैक-मत्यम्। तद्यथा अभिधामूलां व्यञ्जनामभिलक्ष्य काव्यप्रकाशेतदनु सारिणि दर्पणे प्रतिपादितम्—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थं धीकृद् व्यावृतिरञ्जनम्॥

साहित्यदर्पणकारोऽप्येतत्समानार्थकमेव वचनं प्रयुक्तवान्। तेन विज्ञायते यद् अभिधामूला व्यञ्जना तत्रैवाङ्गी क्रियते यत्र नानार्थका-श्शब्दाः प्रयुक्ता भवन्ति। तदाऽभिधायायां नियन्त्रितायां द्वितीयार्थ प्रतीतिर्व्यञ्जनयैव भवति। परमत्र विचिकित्सा प्रवर्तते यत् नियन्त्रि-तार्थबोधजनकत्वमिति लक्षणं शाब्दव्यञ्जनायाः केवलामभि-धामूलामादायैव प्रवृत्तम्भवति ? उतलक्षणामूलामप्यादाय ? यद्युच्यतेऽत्रलक्षणमूल व्यञ्जनमपि लक्ष्यं वर्तते तल्लक्षणस्य तर्हि सम्यगिदमवधारणीयं सहृदयैर्यत् गंगायां घोषः 'उपकृतबहु किम्-उच्यत इत्यादौ क्वचिदपिनास्ति नानार्थकः शब्दः तत्प्रयुक्तमभिधाय-नियन्त्रणम्वा ? एवमस्यां दशायाङ्कथङ्कारमत्र शाब्दव्यञ्जनात्वं

वक्तुं शक्येत् इति विप्रतिपत्तिस्स्यादेव। यदि चात्र शब्दस्य पर्याय-परिवृत्यसहत्वमूलकत्वेनाऽत्रशाब्दत्वम् अभिप्रेतन्तर्हि क्वचिदपि सम्भवेऽपिशाब्दत्वे गंगायांघोषां इत्यत्र भागीरथ्यांघोष: इति उच्चार्य शब्दपरिवर्तनेऽपि शैत्यपावनत्व रूपव्यंग्यस्य तीरे प्रत्यायनेन शब्दस्य पर्याय परिवृत्यसहत्वं क्वगतम्? इत्थमियमन्या विप्रतिपत्ति:। तथा च विवक्षिताऽन्यपरवाच्यध्वनौ भवत्यभिधामूला व्यञ्जना। यतस्तत्रैव वाच्यार्थमुपसर्जनीकृत्य व्यंग्यार्थ: प्रधानत्वेन प्रतीतिगोचरी क्रियते।

लक्षणामूल व्यञ्जनातु वस्तुतोऽविवाक्षितवाच्यध्वनौ प्रतिपद्यते। वाच्यमत्राविवक्षितमेवावतिष्ठते सुतराम्। तस्य वाच्यार्थस्याविवक्षापि द्विधाऽत्यन्त-तिरस्कृत रूपत्वात् तथाऽर्थान्तरेसंक्रमणत्वाच्च—

(१) अत्रव्यञ्जनाविषये वैमत्यनिरासपूर्वकं तत्संस्थापनं कथमुप-पादनीयम्भवति? विषयेऽस्मिन् प्रथमत: स्मृति सहकृतं मनसा निर्वाहो यदि कर्तुं मिथ्यते तर्हि तन्नशोभनम् यत: स्मृतोऽर्थ: शब्देन सम्बद्धोऽसम्बद्धोवा? सम्बद्धश्चेत्तदा सम्बन्धसामान्ये तद्विशेषेण-वा? नाद्य: निर्विशेषं न सामान्यम् इति सिद्धान्तविरोधात्। द्वितीय पक्षेऽभीष्टमेव मतं सम्पद्यते। अयमेव च सम्बन्धविशेषो व्यञ्जनात्वेन स्मर्यते प्रेक्षावद्भिस्सहृदयैरपि। असम्बन्धत्वपक्षे तु अनियम प्रसङ्गप्रसरो दुरुद्धरस्स्यात् यश्च स्वयमपि दूरोत्सारित:।

(२) अपि च न कोऽपि सचेता शैत्यादिकमर्थं मनसा साक्षात्करो-मित्यनुव्यवसायपदवीमानयति। न सहृदय हृदयपक्षमारोहति-वा क्वाचित्। प्रत्युत गंगापदाद् व्यञ्जनया जानामित्येवाऽनुव्यवसाय: प्रामाण्यतामभ्युपगच्छति।

अथ च व्यञ्जना स्वरूप सती वा बोधहेतुरितिविकल्पोऽपि विचारतोऽवश्यमापातरमणीय एव, शब्दस्थले ज्ञायमानाया बोध हेतुत्वस्य सिद्धान्तितत्वात्। तद्ग्राहकञ्च वक्तृबोधव्यादीनां ज्ञानम्। अन्यत्रापि तस्या स्वरूप सत्याएव तत्वतोऽङ्गीकारात्। वक्तृबोधव्या-दीनां तात्पर्यस्य वा ज्ञानं सहकारीति सर्वथास्वीकारेण सर्वदोष प्रसर-निराकरणात्।

व्यञ्जनाया अस्वीकारे मतान्तरमपि विचारणीयमेव। 'मुखं विकसितस्मितम्' इत्यादौ विकाशस्य मुखे बाधाल्लक्षितार्थस्य

विस्तृतस्यान्वय वोधोत्तरं मुखे कुसुमसम सौरभवत्तायाश्चमत्कृति-रमणीयताया वा बोधो मानसालौकिक प्रत्यक्षरूपः स्मृति सन्निकृष्ट एवेति स्त्रीकृत्य श्री जगदीशतर्कालंकार श्री हरिनाथभट्टाचार्यादयो विद्वान्सो न व्यञ्जनावृत्तिमङ्गी कुर्वन्ति (श० शे० प्र० पृ० १६६-१६७)।

एवं 'गामानय' इत्यादि वाक्यादपि मानसबोधः स्यादेव तर्हि शक्त्यादेर्वृत्ति कल्पनं व्यर्थमेवेति न वक्तुं शक्यते यतो वृत्योपस्थित पदार्थादतिरिक्तस्यार्थस्य शाब्दबोधे प्रतीतिर्माभूदिति तस्य नियन्त्रित विषयकत्वस्यावश्यकतया तत्रोक्त मानसत्वायोगात्। तथा च व्यञ्जनायाः स्वरूप सत्या हेतुत्वे न केवलं सचेतसामेव बोधः अपितु सर्वस्यैव (आपामर विद्वज्जनस्य) सर्वदा बोधः स्यात्। ज्ञातस्यास्तत्त्वेतु शक्तिग्राहक व्यवहारादिवत् तद्ग्राहकस्यापि वचनीयता समापतेदिति। अपि च दूरस्था भूधरा रम्या इत्यादौऽने-कार्थस्थले भूधरपदेन भूपतीनामपि बोधः शक्त्यैवासम्भवति, शक्ति-मूलाया व्यञ्जनायाश्शक्तौ, लक्षणा मूलायाञ्च (लक्षणायाम्) व्यञ्जनायाम् द्वयोश्च क्वचिदनुमानेऽन्तर्भावं विधाय न्यक्कुर्वन्ति मुक्तावली टीकाकाराः। एवं गंगायां घोष इत्यादौ शैत्यपावनत्वाति-शयविशिष्टस्य तीरस्य लक्षणैव बोध इति। तथा चोक्तम्--

गच्छ गच्छ चेत्कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥

इत्यादावर्थशक्तिमूलव्यञ्जनया व्यज्यमानाः कान्तगमनोत्तर-कालिककान्ताप्राणवियोगादयोऽर्थाः। एषा मद् गमनोत्तरं प्राण-वियोगवती भविष्यति, ममापि जन्मेत्यादि विलक्षणप्रयोगवतीत्वात् या नैवं सा नैवम् यथा एतच्छब्दभिन्नशब्दप्रयोक्त्री कामिनी 'इत्यनुमीत्यैव बोधनीया इत्युदाहरन्ति' (न्या० सिद्धान्त० मु० किरणा० टीकायाः शब्दखण्डे)।

श्री महिमभट्ट महोदया अप्यनुमाने एवास्यान्तर्भावं स्वीकुर्वन्ति।

---

# विभावानुभावसंचारिसंयोगाद्रसनिष्पत्तिः

विभावानुभावसंचारिसंयोगाद्रसनिष्पत्तिरितिकारिका रूपास्तान-नुमापयत एव रसादीन् निष्पादयन्ति। त एव हि प्रतीयमाना आस्वाद पदवीं गतास्सन्त रसाः प्रोच्यन्ते अयमेवावश्यम्भावी प्रतीतिक्रमः केवलमाशु भावितया कथमपि नानुभूयते यतोऽद्याप्यभिव्यक्ति क्रमरूपस्स्वीकृतः।

---

न्यायसिद्धान्त मु० किरणावली टीकाकारस्तु शब्दखण्डे गंगायां घोष इत्यादौ तात्पर्यवृत्त्यैव शैत्यपावनत्वादि प्रतीतये वक्तृगतं तात्पर्यं शब्दे आरोप्य तस्य शब्द वृत्तित्वं सम्यक्तया निर्वाह्यमिति प्रोक्तवान्। व्यञ्जनाया वृत्तित्वेतु अश्लीलस्थले इवात्रापि केशवालुकादेरपि प्रतीतिः स्यात्, तन्निवारणायतात्पर्यवृत्तेस्तवाप्यावश्यकत्वे तद्धेतुन्या-येन व्यञ्जनावृत्तेर्निष्प्राणत्वमेवेत्याद्युपपादयति प्रस्थानरत्नाकरकारः। अद्वैतवादिनोवेदान्तिनोऽपि-अर्थापत्तिप्रमाणेनैव व्यंग्यार्थबोधमुपपाद्य व्यञ्जनावृत्ति प्रख्यातवन्त एव।

व्यञ्जनाया अनुमानेऽन्तर्भाव इति पक्षोऽपि न समीचीनो भाति, यतो हि व्याप्तिज्ञानाद्यभावेऽपि साध्य सिद्धावपि वाक्य श्रवणोत्तरं सोऽर्थः प्रतीयत एव तर्हिकथङ्कारमनुमानेऽन्तर्भावस्तस्या वक्तुं शक्येत्।

महिमभट्टकृतो मतमेतद् विषये न साधु मन्ये, तत्र तदीयानुमान प्रक्रियायां बहुत्र स्वरूपासिद्ध्यादिदोष ग्रासाच्च। यथा—काव्यप्रकाशे मम्मटेनतु व्यञ्जनया दत्तोदाहरेण-'भ्रमधार्मिक विश्वस्त स श्वाद्य मारितस्तेन गोदानदीकच्छ कुञ्जवासिनासिंहेन।' इत्यत्रहि विधि-विषयीभूतं गृहे भ्रमणमभ्रमणमनुमापयति. तदेवात्र प्रदर्श्यते महिम-भट्टादिमतेन—'विचारते यद्यप्मत्र गृहेभ्रमणं, न गोदावरीतीरे भ्रमणाभावमनुमापयितुमिष्टे व्यधिकरणत्वात् तथापि व्याप्तिग्रहो पयिकत्वेनेदमुक्तम्।'

अत्र प्रकारान्तरेण व्यञ्जनाविषयकोध्वनि प्राधान्यकं तत्त्वं विमृश्यते तथाहि—

ध्वनेः प्रधान भेदाः




यस्य प्रतीतिमाधतुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापराक्रिया ।

इतिपूर्वमप्युक्तमत्र स्मर्यंते प्रसंगतः—

फल लक्षणायाः फलं शैत्यपावनत्वप्रतीति रूपम् । व्यञ्जनध्वननद्योतनादि शब्दव्यपदेश्यो व्यञ्जनाख्यो व्यापारः एव तथा प्रतीतिं साधयति ।

तेनहि यस्य शैत्यपावनत्वादि रूपफलस्यानुभव रूपतां प्रतीतिमा-घातुं लक्षणा = लाक्षणिकः शब्दः समुपास्यते शब्दैकगम्ये लाक्षणिक-शब्दैकमात्रगम्ये फले व्यञ्जनात् अपरा काचिदपि क्रियानास्ति ।

न च गंगायां घोष इत्यादौ गंगाशब्दादेव पावनत्वादयो धर्माः कथन्न प्रतीयन्त इति ? वाच्यम् गंगादिलाक्षणिकशब्दानां पावन-त्वाद्यर्थेषु संकेताभावात्, संकेतितस्यैवाऽभिधया प्रतीतेः ।

न च गंगादि पदस्य तीरे लक्षणाभवति तथैव पुनःफलेऽपि लक्षणा-स्यादिति वक्तुं शक्यते यतो गंगापदस्य मुख्यार्थबाधादित्रयस्य सत्वेन लक्षणोपपत्तौ पुनः शैत्यपावनत्वाद्यर्थे लक्षणायाः हेतोरभावेन लक्षणा नेतिवक्तुं शक्यत्वात् । तथाहि यथा गंगाशब्दः स्रोतसि सबाधस्तटं लक्षयति तथैव यदितटेऽपिसबाधः स्यात् तत्रप्रयोजनं लक्षयेत् । तत्र च तटन्न मुख्योऽर्थः न चात्रबाधः, नापि तटस्य लक्षणीयैः फलैः सम्बन्धः, नापि लक्ष्यैः प्रयोजने किञ्चित्प्रयोजनम्, नापि गंगा-शब्दः तटमिव प्रयोजनप्रतिपादने समर्थः इति लक्षणया फल-स्याप्रतीतिः ।

न वा मुख्यार्थबाधात् स्खलद् गतिरसौ शब्दः तीरमिवपावन-त्वाद्यपि लक्ष्येदितिवाच्यम्, एवमनवस्थास्याद या मूलक्षयकारिणी अस्तीति काव्यप्रकाराः प्रतिपादयन्ति । न वा पावनत्वधर्मविशिष्टे तीरे लक्षणास्तु इति वक्तुं शक्यते यतो विषय फलयोः कार्यकारण-भावेन युगपद् प्रतीतेरभावात् । अतस्तटादौ ये पावनत्वादयो विशेषास्ते अभिधा तात्पर्यलक्षणाभ्यो व्यापारान्तेरवगम्याः । स च व्यापारः व्यञ्जनैव । सर्वमेतद् व्यञ्जना व्यापारगम्यमिति तर्हि का नाम व्यञ्जना ? सकल शास्त्रवासनावताञ्च तद्विषये कावधारणा ? तत्स्वरूपञ्च किमिति प्रथममिह व्यंजनास्वरूपं वक्तव्यमेव सा न केवलमलङ्कारशास्त्रे एव विचारपथामानीता किन्तु शाब्दिकानां वेदान्तिनाञ्च नयेऽपि समादृताऽस्ति । अतस्तस्या स्वरूपनिर्वचनं-विधेयमेव ।

अलंकारशास्त्रे वृत्तिविषयः प्रायश्शब्दशास्त्रमूलक एव तथा ध्वनि सिद्धान्तश्चापि तन्मूलक एवास्ति तेनशाब्दिकसिद्धान्ते किं

स्वरूपं व्यञ्जनायाः प्रतिपाद्यते। ततः पूर्वमवतरणं काव्यात्मक-माश्रयतया त्रिविधमुपात्तम् तस्य काव्यस्य त्रिषु भेदेषु ध्वनिर्नाम काव्यं लक्षणामूलत्वात् अभिधामूलत्वाच्च द्विविधम् तत्राभिधामूलो विवक्षितान्यपरवाच्यः, लक्षणामूलश्चविवक्षितवाच्यः, अविवक्षित वाच्यश्च ध्वनिर्द्विविधः, अर्थान्तरसंक्रमितवाच्यः अत्यन्त-तिरस्कृतवाच्यश्च। अभिधामूलोध्वनिश्चापि विवक्षितान्यपरवाच्य-असंलक्ष्यक्रमव्यंग्यः संलक्ष्यक्रमव्यंग्यश्चेति द्विधाविभक्तः यथोक्तमपि काव्यप्रकाशकारः—

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।
कोऽप्यलक्ष्य क्रमव्यंग्यो लक्ष्यव्यंग्यक्रमः परः॥

इति ध्वनेरभिधामूलकस्य भेदस्य विवक्षितान्यपर वाच्यस्य द्वौ भेदौ। यत्र ध्वनौ वाच्योऽर्थः विवक्षितं किन्तु व्यंग्योपसर्जनीभूतं स अपरं अभिधा मूल इत्यर्थः। विभावानुभावव्यभिचारिण एव न रसाः किन्तु रसस्तैरनुभूयते (अभिव्यञ्जते) तैरस्तिक्रमः इति स खलु लाघवान्न लक्ष्यते यत्र स अलक्ष्यक्रमः यत्र च लक्ष्यते स लक्ष्यक्रमः। इत्थं व्यंग्यक्रमस्य लक्ष्यत्वाऽलक्ष्यत्वकृतं वैलक्षण्यम्।

अस्तु प्रथममिह अभिधामूलव्यञ्जनाविषये विशेषविचार-प्रसंगतः पूर्वं व्यञ्जना का? इति विमर्शं आवश्यकः तद् यथा—तस्याः किं स्वरूपम् किमर्थं सा स्वीकर्तव्या? लक्षणयासा कथन्नगतार्था? वैयाकरणानामपि व्यञ्जना कथमावश्यकी? एतत्सर्वं विचारणीयम् व्यञ्जना नाम मुख्यार्थबाधग्रहनिरपेक्षबोधजनकोमुख्यार्थ सम्बद्धा-ऽसम्बद्धसाधारणः प्रसिद्धाऽप्रसिद्धार्थं विषयकोवक्त्रादि वैशिष्ट्यज्ञान प्रतिभाद्युद्बुद्ध संस्कारविशेषो व्यञ्ना। अतएव निपातानां द्योतकत्वं स्फोटस्य व्यंग्यता च वाक्यपदीयकारो प्रतिपादिता। द्योतकत्वन्नाम स्वसमभिव्याहृतपदनिष्ठ शक्तिव्यञ्जकत्वम्, यथा— प्रजपति इत्यत्र प्रकृष्टजप बोधकत्त्वम्। क्वच्चिक्रियाक्षेपकत्वमपि तत्।

यथा प्रादेशं विलिखति प्रादेशं विनिर्माय लिखति इत्यर्थेन क्रियाक्षेपकत्वम्। एषा च व्यञ्जना क्वचिन्मुख्यार्थस्य बाधे क्वचित्त-स्याबाधेऽपि, क्वचिन्मुख्यार्थ विशिष्टमर्थान्तरम्, क्वचित्तदविशिष्टमर्थं

बोधयन्ती वक्तृवृत्ति वैशिष्ट्यम्, तत्प्रामादिकञ्चापेक्षते। अतश्चा-भिधालक्षणापेक्षयाऽस्याँविशेष्यता प्रसिद्धयति। शक्तिलक्षणेच पद-वाक्ययोरेव। व्यञ्जनातु पदेपदैकदेशे, वाक्ये, वाक्यैकदेशे, वाक्य समूहे चेति तिष्ठति। इयञ्च व्यञ्जना वाच्य-लक्ष्य-व्यंग्यार्थ-निष्ठा-चापि स्वीकृता तस्मादस्या वृत्तेरभिधा लक्षणाभ्यां वैलक्षण्यं वैचक्षण्यञ्च सर्वथा सर्वत्र गीयते।

अतो लक्षणया न तस्या गतर्थत्वम् गंगायां घोष इत्यादौ गंगा पदात् स्वशक्य सम्बधेन लक्षणया तीरबोधेऽपि शैत्यपावनत्वादि प्रतीत्यर्थं वैयाकरणानामपि व्यञ्जनाऽऽवश्यकी। न केवलं कवीनामेव यतोहि शाब्दिका व्यञ्जकत्वमेव द्योतकत्वमङ्गी कुर्वन्ति। केचित्तु व्यञ्जनाया शब्दमात्रवृत्तित्वाच्छब्दस्यैव व्यञ्जकत्वं स्वीकुर्वन्ति नत्वर्थस्य तन्न समीचीनम् यतः—

रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम्।
रत्याकुला छादयते दक्षिणं नयनं हरेः॥

इत्यत्रहरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं तत्संकोचेन सूर्यास्तस्तेन च पद्मसंकोचस्तेन पितामहस्य स्थगनम् तेनाप्रतिबद्ध रतिविल-सितम् इति क्रमशो व्यंग्येषु प्रतीयमानेषु तत्तदर्थं प्रतीत्युत्तरमेव व्यंग्य-प्रतीत्याऽर्थस्यापि व्यञ्जकत्वस्वीकारात्।

एवमेव गतोऽस्तमर्थ इत्यादावपि वाच्यार्थधी पूर्वकस्य वाच्यार्थ-बाधज्ञानेऽजायमानस्य लक्षणयोपयादयितुमशक्यत्वाच्च। ननु एक सम्बन्धिज्ञानमपर सम्बन्धिस्मारकं भवति इति रीत्यैव व्यंग्यार्थ बोधोप-पत्तौ गतोऽस्तमर्थ इत्यादौ व्यञ्जना नावश्यकीति चेन्न गतोऽस्तमर्थः श्रवणानन्तरम् सन्ध्यावन्दनकर्तव्यत्वं मयास्मृतमित्यनुव्यवसाया-भावात् तत्रानुलोरवाच्च। किञ्च इदं पदमेतदर्थस्य न वाचकं न लक्षकं नापिस्मारकम् किन्तु व्यञ्जनया वोधकम् इति प्रामाणिक-व्यवहारेणापि तस्या अतिरिक्तत्वम् असम्बद्धस्यापि व्यंग्यत्वात्। न च व्यंग्यार्थोऽनुमेयः इति वाच्यम् विरुद्धानैकान्तिकेभ्यो व्याप्ति-पक्षधर्मतादि निश्चयाभावेऽपि व्यंग्यार्थ प्रतीतेः सिद्धि सत्त्वेऽपि व्यंग्यार्थं बोधदर्शनेन तत्प्रतिवध्यतावच्छेदककोटौ तद्भेद प्रवेशेऽति

गौरवेण तज्जन्य बोधस्यातिरिक्तत्वे एव लाघवाच्च। अन्यथा शब्द प्रामाण्योच्छेदापत्तिः।

एतद्धि सर्वं शाब्दिकैरपि स्वसिद्धान्ते बहुधा प्रतिपादितमेव। सम्प्रति अलंकार शास्त्राराद्धान्तानुसारमुपस्थाप्यते अभिधामूल-व्यञ्जनाविषयकः पक्षोविचारार्थम्। अलंकार शास्त्रकारैरपि भर्तृहरेस्तद्वचनमुद्धृतम्प्रामाण्येन यथा–

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दस्यार्थस्यानवच्छेदे विशेषस्मृति हेतवः॥

वचनमिदं सम्यक्तयाऽभिधामूलव्यञ्जना पक्षसाधकम् अतएव–

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृति रञ्जनम्॥

इति आचार्यं मम्मटपादैरुपपादितं सुसामञ्जस्यं संस्थापयद्भिः। तथाहि—अनेकेऽर्थावाच्यत्वेन यस्य तस्यानेकार्थस्यनानार्थकस्य शब्दस्य वाचकत्वे अभिधायां प्रकरणादिभिर्नियन्त्रिते सति अवाच्यार्थ-स्तदाऽभिधया प्रतिपादयितुमशक्यः। तद्धीकृत् = तत्प्रतीति हेतुः-या व्यावृतिः व्यापारः सा अञ्जनं व्यञ्जनमित्यर्थः अर्थात् वर्णसमूहात्मनः पदस्यानेकत्वानैकैवशक्तिः, शक्यतावच्छेदकभेदेन तद् भेदात्। ततश्च यस्मिन्नर्थे तात्पर्यग्राहकं प्रकरणादिकमवतरति तदगोचर-शक्त्या तदर्थोपस्थापनम्। अन्यस्य च तिरोधानम्। तयानिरुद्धया-ऽभिधया बोधतितुमशक्यार्थस्य बोधने प्रभवन्तीवृत्तिर्व्यञ्जना नाम। इयञ्चाभिधामूला शाब्दी व्यञ्जना प्रोच्यते। अतः प्रोक्त-संयोगो विप्रयोगश्चेत्यादि भर्तृहरिवचनानुरोधतः संयोगस्तत्र प्रसिद्ध-सम्बन्धः।

विप्रयोगोविभागः, साहचर्यं सम्भूयावस्थानम् सादृश्यम्वा। विरोधिता सहानवस्थानम्, अर्थः प्रयोजनम्, प्रकरणं वक्तृश्रोतृबुद्धिस्थता, लिङ्गं संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तोधर्मः। असाधारण धर्मो वा, व्यक्तिर्लिङ्ग पुंस्त्वादि, सामर्थ्यंकारणता, औचितीयोग्यता, देशकालौ तद्विशेषौ, स्वरः उदात्तानुदात्तस्वरितादिः एवमेतैश्शब्दवाच्यार्थस्यानवच्छेदे कतमोऽर्थोऽत्रविवक्षित इतिसंदेहे सति विशेषस्मृतिहेतवः विशेषस्य = विवक्षितार्थस्य वा स्मृतिर्ज्ञानं-तद् हेतवः तद्जनका भवन्तीत्याशयः। अस्य सम्पूर्णस्य विमर्शः यथाक्रममावश्यकमेव।

तत्र प्रथमम् संयोगः प्रसिद्धार्थस्य गुणविशेषरूपः सम्बन्धस्तेनाभिधानियमनं यथा = सशखचक्रीहरिरित्यत्र शंखादि संयोगेनानेकार्थस्य हरिशब्दस्य विष्णौ रूपेऽर्थेऽभिधानियम्यते अन्य हरिपदार्थे इन्द्रादौतच्छंखचक्रसंयोगाभावात् । विप्रयोगस्तावत्तत्सम्बन्धध्वंसः यथा आशंखचक्रोहरिः इत्येनाभिधया सम्बन्धस्य प्रतियोगिपूर्वकत्वात् अशंखचक्रोहरितित्यत्रापि तच्छंखचक्र प्रतियोगिकाभाववद्धरिर्विष्णुरेव न त्विन्द्रादयः एवमन्येपि विषया ऊहनीयाः सन्ति—

१—व्यञ्जना वस्तुतो द्विः प्रकारा-शाब्दी-आर्थी च, शाब्दी च लक्षणामूला व्यञ्जनापि द्विधा भवति, अर्थान्तरसंक्रमित वाच्या, अत्यन्ततिरस्कृत वाच्याच—

२—शाब्दी—अभिधामूलायां व्यञ्जनायां त्रीणि तत्त्वानि परमावश्यकीयानि १—शब्दस्यानेकार्थत्वम्, २—अभिधाशक्तिः कस्मिश्चित् प्रकरणादौ नियन्त्रितत्वम्, ३—प्रतिभाबलात् सहृदयस्य अप्राकरिणाकार्थं प्रतीतिः।

शब्दशक्तिमूलव्यञ्जनाया विषये ध्वनिकारस्येदं मतं यत् यस्मिन् काव्ये यस्मादलंकारः (नतु वस्तुमात्रम्) शब्दशक्त्या प्रकाशते स शब्द शक्त्युद्भवो ध्वनिः। वस्तुद्वये शब्दशक्त्या प्रकाशमाने तु श्लेषः—

यथा—

आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवोहि सः ।।

आर्थी व्यञ्जना (ध्वनिकारेण पदपदांशवाक्यादिकानां व्यञ्जकत्वं न्यक्कारोह्यमेव इत्यादौ) प्रतिपाद्यध्वनेः भेदोपभेदप्रदर्शनपूर्वकं शब्दस्य गरिमाऽऽविष्कृतः। विना शब्दसाहायकं नार्थी व्यञ्जना कथमपि सम्भवति। तथापि आर्थीव्यञ्जनाया क्षेत्रमतीव विपुलम्। अभिधालक्षाणाभ्यामर्थबोधनशक्तिः केवलं शब्देऽस्ति नार्थे। किन्तु व्यंग्यार्थ बोधनक्षमता उभयोरपि शब्दार्थयोर्भवति। यथाह—ध्वनिकार आनन्दवर्धनाचार्यः—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनी कृतस्वार्थौ ।
व्यङ्क्तः काव्य विशेषः स ध्वनिरिति सूरिभिः कथितः ।।

यत्रार्थादि व्यंग्यार्थं प्रतीतिस्तत्रार्थी व्यञ्जनायास्त्रयो भेदा भवन्ति—१—वाच्यसम्भवा (वाच्यार्थाद् व्यंग्यार्थस्य)। २—लक्ष्य सम्भवा (लक्ष्यार्थात्तस्य)। ३—व्यंग्यसम्भवा (व्यंग्यार्थात्तस्य)।

आर्थी व्यञ्जनायाः स्वरूपं मम्मटपादैः काव्यप्रकाशस्य तृतीयोल्लासे विस्तरशो व्यवहृतं व्याख्यातञ्च। वक्तृ बोधव्येति वचनमुखेन।

अत्र विषये पण्डितराज जगन्नाथस्य रसगंगाधरकारस्यापि-कश्चन प्रमुख आशय उपस्थाप्यते। तेनापि पदवाक्यरचनादीनां व्यंजकत्वं सुस्पष्टमेत्र प्रतिपादितम् किन्तु तस्य प्रतिपादनशैली सूक्ष्मेक्षिकया सर्वतोविलक्षणैवाभाति। तन्मते—वर्ण रचना विशेषादीनां-नास्तिगुणाभिव्यंजकत्वं गौरवान्मानाभावाच्चा न च यदि वर्णादिषु माधुर्यादि व्यञ्जकताऽस्ति तर्हि माधुर्यादिगुणाश्रयरसानामपि व्यञ्जकताभविष्यतीति वाच्यम् यतोहि गुणाभिव्यञ्जकाः पदार्थाः तदाश्रय व्यञ्जकाभवेयुरेवेति नास्ति नियमः। यथा घ्राणिन्द्रियं

गन्धस्य व्यजकं नतु गन्धाश्रयी भूतायाः पृथिव्याः । प्रत्युत्—यथा कुत्रचित् गुणानां गुणिनां मिथोऽसम्बद्धत्वेन कदाच्चिच्च मिथो सम्बद्धत्वेन ज्ञानेन्द्रियैः पृथिव्यादीनां गुणिनां, गन्धादीनां गुणानाम्—उदासीनानाञ्च पदार्थानां प्रमितिगोचरतास्यात्तथैव स्व-स्व व्यञ्जकैर्वर्णैः कदाचिन्मिलितत्वेन, कदाचिच्च पार्थक्येन रसानां तद् गुणानाञ्चाभिव्यक्तिविषयता भवतीति नव्याः प्रतिपादयन्ति पण्डितराजप्रभृतयः। तदितरैस्तु वर्णादीनां माधुर्यादिगुणमात्र व्यञ्जकताऽङ्गीक्रियते । रसादि व्यञ्जकता तु गौरवान्माना भावाच्च निराक्रियत एव ।

**शब्दशक्तिमूलकध्वनिविषये पण्डितराजस्य सिद्धान्तः**

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य सा[1] सूते व्यञ्जनैव सा ।।

इति तेन प्रत्यपादि ।

**श्लेष विचार :**

व्यञ्जना—प्रसंगे अलंकारविषये व्यापकतासि । श्लेषे हि श्लेषभित्तिकमभेदाध्यवसानं द्वयोरर्थयोरिति समस्तालंकारिकनिवद्धम् अनुभवसिद्धञ्च । तत्र मूलान्वेषणे विधीयमाने एक पदोपात्तत्वान्न मूलमन्यन्निर्वक्तुम् एनपदबोधित इत्यर्थः । एकपदोपात्तोहि अनेकार्थोप्यर्थोऽभिन्नतयैव भासते । इत्थञ्चोल्लासस्य कालकरवालइत्यादावप्येकपदोपात्त तया द्वयोरर्थयोभेदाबध्यवसानस्य युक्तत्वेनाभेदस्यैव व्यञ्जकत्वमित्युचितम् नीपमायाः ।

श्लेषे द्वयोरर्थयोः वाच्यत्वम् एककालत्वञ्च इहत्वेकस्य वाच्यत्वम् अपरस्य व्यञ्जकत्वम् भिन्नकालत्वञ्चेति । एतावन्मात्रैणैवेकपदो पात्तत्वप्रयुक्तमभेदाऽध्यवसानं न शक्यं त्यक्तुं, व्यंग्यंगताया भिन्नकालत्वस्य चाभेदप्रतिपत्तावबाधकत्वात् । अर्थात् यत्र द्व्यर्थकपदघटित काव्यस्थले प्रकरणादयोऽभिधानियामका न तिष्ठन्ति तेन द्वावप्यर्थौ वाच्यवृत्त्यैव प्रतीयते तत्रैव श्लेषः । एवञ्च श्लेषस्थले द्वयोरर्थयोर्वाच्यत्वं समकालीनज्ञानविषयत्वं च सुनिश्चितम् । उल्लास-

१. या इति पाठ भेदोऽपि ।

इत्यादौ अभिधानियामकस्य प्रकरणस्य विद्यमानत्वेन राजरूपार्थेऽभिधाया नियमनात् प्रकृतार्थस्यैव वाच्यत्वम् अप्रकृतस्येन्द्रादिरूपार्थस्य व्यंग्यत्वमेव। अत एव तयोर्भिन्न कालज्ञान विषयापि निर्णीतम् तथा च कथं श्लेषस्थ दृष्टान्तेनात्र प्रकृताऽप्रकृतयोरभेदाध्यवसानमित्याक्षेपः ? प्रकृताप्रकृतयोरभेदज्ञाने एककालीनत्वं वाच्यत्वं वा न नियामकं न वा व्यंग्यत्वं भिन्नकालत्वञ्च वा प्रतिबन्धकत्वमिति श्लेषस्थलात् तादृश वैलक्षण्यं प्रतिमानमपि न किञ्चित्करम्। एकपद बोधितत्व प्रयुक्तमभेदाध्यवसनमत्रापि भवेदेवेति समाधानम्।

अनेकार्थक पदैर्निर्मितं यस्मिन् काव्यस्थलेऽभिधा नियन्त्रयितुं प्रकरणादिकं न तिष्ठन्ति। ते द्वौ अर्थौ वाच्यवृत्तितोऽभिधातएव प्रतीयेते तत्रैव श्लेष इत्यर्थः।

दशायामस्यमिदं सुनिश्चितमेव यत् श्लेषकाव्यस्थलेद्वावप्यर्थौ वाच्यावेव भवतः समकालीनौ च प्रतीतिपथमवतरतः। यत्रोल्लास्य कालकरवालइत्यादि काले अभिधानियन्त्रक प्रकरणादिज्ञानं भवत्येव, तेनप्रकरणादि ज्ञानेनाभिधायां नियन्त्रितायां राजरूप प्राकरणिकार्थं एव वाच्यो भवति, अप्राकरणिकेन्द्रादिरूपार्थो व्यंग्य एव भवति। अतएव प्राकरणिकाऽप्राकारणिकयोर्द्वयोरर्थयोर्भिन्नकाले ज्ञानं निश्चितम्। अत्र विशेषतो विचारणीयं यत् श्लेषस्थलीय दृष्टान्तेन व्यंग्योपमास्थले प्राकरणिकाऽप्राकरणिकयोरर्थयोरभेदारोपः कथंकारः समोचोनः इति अर्थान्न समीचीनोऽभेदारोपः. यतो दृष्टान्तदार्ष्टान्तिकयोर्नितान्तं भिन्नता विद्यते। पूर्वपक्षिणां तर्कोऽपि शिथिलएव यतो द्वयोः पदार्थयोरभिन्नावगमेतयोर्वाच्यत्वं समकालीनत्वञ्च यदुच्यते न तत्र कोऽपिनियामकः न एकस्य व्यग्यत्वं भिन्नकालीनत्वं प्रतिबन्धकम्। अर्थादेकस्य वाच्यत्वेऽपरस्य व्यंग्यत्वे सति तथा भिन्नकालिकत्वे सति एक शाब्दबोध्यार्थद्वये (बोध्येऽर्थद्वयेऽभेदारोपः सम्भवः) इति भावः। तेनैव शब्दशक्ति मूलध्वनेर्लक्षणं रमणीयमितिपण्डितराजस्य सिद्धान्त उपपद्यते।

पण्डितराजमते यत्र योगरूढ़िस्थले रूढ़िज्ञानेन योगज्ञानस्यापहरणं क्रियते तत्र शब्दशक्तिमूलध्वनेरावश्यकता भवति, अर्थान्तरस्य प्रतीत्यर्थं समुदेति यथा—

अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः ॥

चपला विद्युतो वारिवाहैः—मेघैः सह, अबलानां नायिकानां श्रियं= शोभां हृत्वा=अपहृत्य यत्र यस्मिन् काले, अनिशं=सततं तिष्ठन्ति स कालः वर्षासमयः, समुपस्थितः समागतः इति वाच्योऽथः, किन्तु-चपलाः पुँश्चल्यः अबलानाम्=अशक्तानाम् श्रियं=द्रव्यं हृत्वा वारिवाहैः=जलवाहकैः क्षुद्रैः (शारिरिकदृष्ट्या तु हृष्टपुष्टैः) पुरुषैः सह यत्र अनिशं सततं तिष्ठन्ति रमन्ते। सह कालः कलियुगः समागतः इत्यर्थान्तरमपि प्रतीयते । अयं द्वितीयोऽर्थः योगरूढि-साहाय्येन अबला वारिवाहचपला शब्दैर्न बोधयितुं शक्यते यतस्तस्य-प्रतीतिस्तु नायिकात्व-मेघत्व-विद्युतत्वादिभिरघटितैव भवति अन्यथा चमत्कारो न स्यात् । यदि चात्र कश्चन वदेत् यत् नास्तु सा प्रतीतिर्योगरूढिसाहाय्येन, किन्तु योगशक्त्या साहाय्येन सम्भवत्येवेति तदपि नास्ति समीचीनम्, योगशक्तिस्तु तावदेवार्थं बोधनक्षमा भवति यावदेषा रूढ्यर्थेनामिश्रिता स्यात् अत्र तु (अवला वरिवाहादिषु) सा रूढचर्थेना संवलितास्ति ।

यद्युच्यते फलवलात् द्वितीयार्थस्यानुभवसिद्धत्वात् तथा कल्प्यते इति तदपि न वारिवाहादिभ्योयोगरूढ्यादिभ्यः शब्देभ्यः केवल योगार्थबोधस्वीकारेऽपि न प्रकृते इष्टसिद्धिः, योगशक्तिसाहाय्ये नापिचपलादिशब्दैः पुंश्चलीत्वादीनामलम्भात् = अप्राप्तेः अतएव पण्डितराजो वदति 'पुंश्चलीत्वादेः सर्वथैव तदविषयत्वात्' एवञ्चै-तादृशेषु स्थलेषु शब्दशक्तिमूलव्यञ्जनास्वीकारः आवश्यकः अन्यथाऽनिस्तारः । एवमेव–

चाञ्चल्ययोगिनयनं तव, जलजानां श्रियं हरतु ।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं हरति ॥

अत्र काव्य जलजपदेऽत्रयोरैक्यान्मूर्खरूपार्थस्यलाभः नयतीति नयनमिति व्युत्पत्त्या चौररूपार्थस्य, मृगयन्तीति मृगा इति व्युत्पत्या गवेषणरूपार्थस्य लाभः ।

इत्थं वाच्यार्थे पर्यवसन्नेऽपि जलज-नयन-मृगशब्देभ्यः प्रतीय-मानो द्वितीयोऽर्थः (मूर्खपुत्राणां चौराद्यैर्धनहरणं सुशकम् न तु गवेष-

काणां सावधानानामप्रमत्तानामिति यावत् इति स्वरूप:) व्यञ्जना-व्यापारेणैवोपपादयितुं शक्यते रूढिनिर्मुक्त केवल योगमर्यादाया विषय एवायं नास्ति । प्रमाणानि—योगरूढिस्थले केवल योग शक्या-ऽर्थान्तरस्य प्रतीतिं कश्चिदपि न मन्यते ।

(१) पङ्कजादिशब्देषु योगरूढेषु कुमुदादीनामुपस्थितिर्लक्षणैव भवति इति तार्किका मन्यते ।

(२) ईशानो भूतभव्यस्य स एवाद्य स ईश्वरः इति वेदान्त-वाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवोऽत्रप्रतिपाद्यते उत ईश्वरः इति संशये जीव एव च (अङ्गुष्ठ परिमाणस्य लिंगस्य ब्रह्मण्य सम्भवात् :) इति पूर्वं पक्षेसति, भगवान् वादरायणः सिद्धान्तार्थं शब्दादेव प्रमितुः इति सूत्रं व्यरचत् । तस्यायमाशयः = परमात्मैवात्र प्रतिपाद्यः इति प्रमितम् । कुतः इति चेत्—शब्दादेव—ईशान शब्दादेवेति-भावः, ईशान शब्दः परमात्मनि योगरूढः । अतः केवल योगमर्यादया ततः शब्दात्, ऐश्वर्यविशिष्टस्य जीवस्य बोधो न स्यात् रूढेर्योगापहारित्वात् । अत्रत्यनिष्कर्षः —

तस्मादर्थान्तरमिह न शक्ति वेद्यम् अपितुव्यक्तिवेद्यमेव, अत्र लक्षणयाऽपीष्टसिद्धिर्न सम्भवति यतः सा मुख्यार्थबाधे सत्येव जायते । मुख्यार्थश्च = वाच्यार्थश्च कामपि बाधां न प्राप्नोति । आचार्य मम्मटो हि काव्यप्रकाशेऽभिधामूलव्यञ्जानाया लक्षणं कृतवान् यथा—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यर्थं धीकृद् व्यापृतिरञ्जनम् ।।

अनेकार्थस्य शब्दस्याभिधायाँ नियन्त्रितायाँ संयोगाद्यैः अन्यत्र वाच्यस्याप्यत्रावाच्यस्य अप्राकरणिकस्यार्थस्य धीः बोधः तत्प्र-कारको व्यापारः व्यञ्जनेत्यर्थं, अनेकार्थकपदनिष्ठाया व्यञ्जनायाः संयोगादि कर्तृकनियन्त्रणञ्चात्रान्यार्थोपस्थापकत्वप्रतिबन्धरूपम् । नात्रविषये मतान्तरमपि-यथा—

नानार्थक शब्दज जायमान शब्दबोधं प्रति तात्पर्यनिर्णय हेतु-ताया अवश्यकल्पना वरीवर्ति, तेन प्रथमं नानार्थकशब्दादनेकार्थ-कोपस्थितावपि प्रकरणादिभिस्तात्पर्यं निर्णयहेतुरुत्पादिते तस्मिन्

यत्र तात्पर्यनिर्णयस्तस्यैवार्थस्यान्वयबोधो जायते नान्यस्येतिप्रणाली सरणावाश्रीयमाणायां नैकमात्रगोचर स्मृत्यापेक्षा भवति, नवाऽपरार्थोपस्थानप्रतिबन्धकत्वकल्पनम् ।

नानार्थक शब्दजन्यबोधंप्रति तात्पर्यनिर्णयस्य हेतुत्वमवश्यं कल्पनीयं भवत्येव, अन्यथा-हरिरित्यादौविष्णुविषयक बोधेच्छयोच्चरितत्वाभावज्ञाने अन्यसिंहादिबोधेच्छयोच्चरितत्वज्ञानेवा विष्णुविषयक बोधापत्तिः । न च स बोध इष्ट इति वक्तुं शक्यः, अनुभव विरोधात् । न वा तत्र तादृशबोधवारणाय उक्तज्ञानयोः प्रतिबन्धकत्वं कल्प्यमिति वक्तुं शक्यते यतः तदपेक्षया हरिपदजन्य विष्णु विषयकबोधं प्रति इदं हरिपदं विष्णुबोधेच्छयोचचरितम् इत्याकारक तात्पर्यग्रहणस्य कारणत्वकल्पने एव लाघवात् । एवं तात्पर्यं निर्णयस्य शाब्दबोधकारणत्वे सिद्धे नानार्थकशब्दश्रवणानन्तरं संकेतग्रहस्य पुरुषस्य प्रथमं संकेतितास्सर्वेऽर्था समुपतिष्ठन्त एव ततस्तात्पर्य सन्देहोदयः ? ततश्च प्रकरणादिभिस्तात्पर्यनिर्णयकारणैस्तात्पर्यनिर्णयः सूपपाद्यते, तदनन्तरं तात्पर्यविषयस्यैवार्थस्यान्वयबोधो भवति, नान्यस्य । तेन तात्पर्यविषयीभूतस्यैवार्थस्यान्वयबोधोपपत्यर्थं पूर्वकल्पे समाश्रितायाः एकमात्रार्थं विषय स्मृतेर्नापेक्षा, नापि द्वितीयोपस्थितौ तात्पर्यविषयेतरार्थमानवारणाय तात्पर्यनिर्णयस्य प्रतिबन्धकत्व कल्पनाया अपेक्षा भवति ।

तात्पर्यनिर्णयस्य शाब्दबोधे कारणत्वेन भोजनप्रकरणे शालकाद्युच्चरितात् सुरभिमांसभक्षयति इति वाक्यात् सौरभमयमांसभक्षणरूपस्यैवार्थस्य शक्त्याऽन्वयबोधो जायते, चिकिर्षितश्चतत्र गोमांसभक्षणविषकोबोधः स च शब्दशक्तिमूल व्यञ्जनास्वीकारमन्तरा बोधयितुन्ना शक्य इति । शक्तिसाध्या तदीया शाब्दबोधविषयता न वक्तुं शक्या तदधीनशाब्दबोधं प्रति तात्पर्यनिर्णयस्य हेतुत्वात् ।

यद्युच्यते व्यञ्जनयाऽपि कथमतात्पर्यविषयार्थं बोध इति वैयञ्जनिकबोधं प्रत्यपि तात्पर्यनिर्णयस्य हेतुता कल्पनादिति तदपि न युक्तियुक्तम् यतो यत्रानेकव्यंग्यार्थं सम्भावना तत्र तु वैयञ्जनिक बोधेऽपि तात्पर्यनिर्णयो न कारणत्वेनापेक्षितः अतात्पर्यार्थबोधसाधकतयैवधर्मिग्राहक मानसिद्धा व्यजनेति तदधीन बोधसामान्ये तात्पर्यं निर्णयस्य हेतुत्वकल्पनं वाद्यपराहतमिति ।

न वाऽत्र एकमात्रगोचर स्मृतेस्तच्छाब्दबुद्धावनपेक्षितत्वेविशेष स्मृति हेतवः इति हरिकारिकाग्रन्थः मम्मटमते कथं संगच्छते ? कथम्वाप्रकरणादि ज्ञानस्यापरार्थोपस्थानप्रतिबन्धकत्वविरहे संयोगाद्यैरनेकार्थस्य शब्दस्य वाचकताया नियन्त्रणोक्तिश्चेति न वक्तुं-शक्यते यतः स्मृति शब्दस्य निश्चयपरतया विशेषस्मृतिशब्देन विशेष विषयस्तात्पर्यनिर्णयोऽत्र गृह्यते, संयोगाद्यैर्वाचकताया नियन्त्रणं चैकार्थमात्रविषयक—तात्पर्यनिर्णयजननद्वारा शाब्दबुद्धिं प्रति सर्वथाऽनुकूलत्वात् । अवाच्चार्थोऽत्तात्पर्यार्थः इत्थं मम्मटग्रन्थोऽपि सुसामञ्जस्यं सम्यग्भजते । यद्युच्यतेऽत्र यत् व्यञ्जनाजन्य शाब्द-बोधेऽपि पदज्ञानस्य कारणत्वेन शक्तिसाध्य प्राकरिणकार्थंबोधानन्तरं तात्पर्य-ज्ञानात्मकपदज्ञानस्य नष्टत्वात् कथन्तत्र व्यञ्जनयाऽपि अप्राकरिणाकार्थं बोधःकर्तुं शक्य इति ? यतो द्वितीयक्षणभावी शक्यार्थं बोधरूपस्तदीयो व्यापारस्तृतीयक्षणे तिष्ठतीति तद्व्यापारात्मक सम्बन्धेन तस्य विद्यमानत्वान्न दोषप्रसंगावसरः ।

अर्थप्रतीतो शक्यतावच्छेदकस्येव पदस्यापि विशेषणतया भानात् प्राथमिकशक्यार्थं बोधस्यैव पदज्ञानत्वादित्यपरे । तत्रावृत्याऽपि पदज्ञान सुलभमित्यपि समाधानम् । अत एव भगवान् भर्तृहरिरपि प्रतिपादयति यत्—

न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इत्युक्त्यापि पदजन्यार्थबोधे शक्यतावच्छेदकमिव पदमपिविशेषणतया भासते इत्येव समर्थितम्भवति । तथा च व्यंग्यार्थं बोधात् पूर्वक्षणे यः शक्यार्थबोधो भवेत् तस्मिन् पदमपि भासेत् इति अयत्नसिद्धं पदज्ञानमिति भावः ।

आचार्य मम्मटमतेन श्लेषस्य शब्दालंकारत्वे विचारप्रदर्शनप्रसंगे व्यञ्जनामन्तरा नैव सम्यक् समिहितसिद्धिः तथाहि—'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते' इति श्लेषस्य लक्षणम् । स च सभंगाऽभंग-भेदेनोभयात्मकत्वेन त्रिधा भवति । यथोक्तेषूदाहरणेषु अवश्यमेव समन्वयस्त्रयाणाम् । अत्रालंकार सर्वस्वकारः सभंगश्लेष एव शब्दश्लेष-विषयः, तत्रोदात्तादिस्वरभेदाद् भिन्न प्रयत्नोच्चार्यत्वेन भिन्नयोः

शब्दयोः जतुकाष्ठनयेनश्लेषः। अभंगस्त्वर्थश्लेषः। तत्रस्वरभेदाभिन्न-प्रयत्नोच्चार्यतया शब्दाभेदादर्थयोरेकवृन्ताकगत फलद्वयन्यायेन श्लेषः। योहि यदाश्रितः सतदलंकार एव। अलंकार्यालंकारभावस्य लोक-वदाश्रयाऽऽश्रयिभावेनोपस्थितिः। शब्दार्थयोर्मध्ये यस्मिन् शब्देऽर्थेवा-विद्यमानेसति ये दोषगुणालंकाराः सन्ति, असति च न सन्ति, तेऽवश्य-न्तदधीन स्वरूपतया तदीया इति व्यवस्थाप्यन्ते। एतन्मूलक एव शब्द प्रवृत्तिसहत्वाऽसहत्वाभ्यां शब्दगतत्वार्थगतत्वव्यवस्थितिरिति प्राचां प्रवाद प्रसंगः।

अनेकार्थस्येति पूर्वोक्तसिद्धान्तानुसारमत्रव्यञ्जनया नानार्थस्थले-ऽप्रकृतार्थं बोधप्रपञ्चः प्राचीनानामविचार रमणीयः। अस्य सिद्धान्त-स्य सारः कार्त्स्न्यञ्च संक्षेपत उच्यते। तथाहि 'सुरभिमांसं भक्षयति' इत्यादौ प्रकरणादिकं समनुसृत्य शक्त्या अभिधया सुगन्धितार्थस्योप-स्थितौ अपि गवाद्युपस्थितेरभावात् गवादि विषयकोऽन्वयो न भवितुं शक्नोति। भवति चेत् तदुपस्थितिर्व्यञ्जनैवस्वीकार्या तदर्थम्। ननु नानार्थं निरूपितां नानार्शक्तिं स्वीकृत्य, एकया प्राकरणिकार्थ-स्योपस्थितौ सत्यां द्वितीययाऽप्राकरणिकार्थस्योपस्थितिः कथन्नेति चेन्न प्रकरणादि ज्ञानस्य प्रतिबन्धकत्वात्।

इदं हि प्रकरणादि ज्ञानं व्यक्तिव्यञ्जनाजन्य, जन्यामप्राकरणिको-पस्थितिं प्रति नैव प्रतिबन्धकं किन्तु अभिधा जन्यामप्राकरणिकोप-स्थितिं प्रत्येव। यतो व्यक्ति जन्योपस्थितेः व्यक्तिज्ञानस्योत्तेजकत्वात्। ननु प्राकरणिकार्थं ज्ञानानन्तरं तादृशपदज्ञानस्योपरमत्वात् कथं व्यञ्ज-नयाऽपि अप्राकरणिकार्थं बुद्धिरिति ? चेन्न अर्थप्रतीतौ शक्यतावच्छेद-कस्येव ( अर्थगतधर्मस्येव ) पदस्यापिविशेषणतयाभानात्। इत्थमत्र नानार्थकशब्दस्थले एकस्यार्थस्याभिधया बोधेऽपि द्वितीयार्थोव्यञ्ज-नैवबोध्यते। तत्र शब्दश्लेषेण न गतार्थतावक्तुं शक्या यतस्तत्राभिधयैवा-र्थद्वयस्योपस्थिर्वक्तुं शक्या किन्तु न तथा सम्भवम् प्रकरणज्ञानस्य द्वितीयार्थस्याभिधया बोध्यमानस्य प्रतिबन्धकत्वात्। व्यञ्जनयाबोध्य-मानस्यार्थस्य तु न प्रतिबन्धकता यतो व्यञ्जनाजन्यज्ञानस्योत्तेजकत्व-स्य पूर्वमेव प्रतिपादितत्वात्। परमत्र नवीना अलंकारिका नानार्थक-शब्दस्थले शक्त्यैव प्राकरणिकाऽप्राकरणिकानां सर्वेषामर्थनामन्वय-

बोधं मन्यन्ते। प्रकरणादिज्ञाननिश्चयस्यापरार्थोपस्थितौ प्रतिबन्धकत्वन्तुन वक्तुं शक्यम् यतः संस्कारतदुद्बोधकयोः विद्यमानयोः स्मृतिः कदापि प्रतिबद्धा न भवितुं मर्हति। अभिधया एकार्थबोधकैरपि शब्दैरभिधालक्षणाभ्यामनेकार्थ प्रतिपादनमर्थश्लेषस्य स्वीकारात्। शब्दश्लेषस्तु अभिधामात्र प्रतिपाद्यानेकार्थं शब्दैरनेकार्थाभिधानम् अयमेव तयोर्भेदः। अतएवात्र प्रसंगतश्श्लेषस्य शब्दार्थान्यपरालंकारविषये वैकल्पिक प्रश्नः। शब्दालंकारोऽर्थालंकारो वेत्यत्र कश्चन पूर्वपक्षःकश्चनोत्तरपक्षश्चापि सिद्धान्तरूपः। श्लेषालंकारस्त्रिविधः पूर्वमेवस्मृतिपदमानीतः सभंगाऽभंगोभयात्मकत्वेन। तत्र येन ध्वस्त मनोभवेनेत्पादौ सभंगः, अन्धकक्षयकर इत्यादावभंगः, तयोश्चैकत्र संभवादुभयात्मकः।

अतः स्त्रिविध एव श्लेषः शब्दाऽकारो नत्वर्थालंकारः इति दर्पणकारमतम्। परमत्र सभंगश्लेष एव शब्दश्लेषः नत्वभंगश्लेषः सत्वर्थश्लेष एवेति मन्यन्तेऽलंकारसर्वस्वकारादयः। तेषामयमाशयः शक्यते वक्तुमत्र सभंगसमासभेदेनानेकधा विद्यमानैः पदैः श्लिष्टत्वेन स्वरभिन्नत्वम्। तत्सत्वे प्रयत्नभिन्नत्वम् प्रयत्नभेदेतु शब्दभेद एव। एवं भिन्नयोस्तयोः जतुकाष्ठयोरिवैकत्र समावेशः श्लेषः, अत एवासौ शब्दश्लेषः शब्दालंकारः। अभंगस्त्वर्थश्लेष एव। यतोयत्रोदात्तादीनां स्वराणामभेदादभिन्नप्रयत्नोचार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयवत् एकशब्दलग्नार्थयोरेव श्लिष्टत्वमित्यर्थश्लेषोऽर्थालंकारः। यो हि ध्वनिगुणीभूत व्यंग्य दोषगुणालकारान्यतमः। यदाश्रितः स तदलंकार एव।

अलंकार्यालंकारभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिरिति चेन्न—अत्रमम्मटभट्टसिद्धान्तपक्षः। यथावस्तुध्वन्यादयो रसाद्यंगभूतव्यंग्यादयो, दुःश्रवत्वादयो माधुर्यादयोगुणाः पुनरुक्तवदाभाषादयो यस्मिन् शब्देऽर्थे सन्ति जायन्ते यस्मिन् पुनरसति त एव न, तथाऽस्यापि तत्सत्वाऽसत्त्वाभ्यां सत्वाऽसत्व व्यवस्थाङ्गीकार्या। न चान्धकक्षयकर इत्यादौ शब्दाभेदः अर्थभेदेन शब्दभेद इति दर्शनात्। किञ्चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभोटंकनात्शब्दालंकारत्वमेव। विसदृशशब्दद्वयस्य बन्धेवैचित्र्यम् वैचित्र्यस्यैवालंकारत्वात्।

अर्थमुखप्रेक्षिततया चालंकारत्वेऽनुप्रासादीनामपि रसादि परत्वेनार्थालिंकरत्व प्रसंगः।

शब्दस्याभिन्न प्रयत्नोचार्यत्वेनार्थालंकारत्वमितिचेन्न तदा प्रतिकूलतामुपगते इत्यादौ शब्दभेदेऽपि अर्थालंकारत्वमिति दोषात्।
स्तोकेन्नोन्नतिमायाति 'इत्यादौ परिवर्तनेऽपि न श्लेषत्व हानिः।

अथ च नानार्थकस्थले नानार्थक शब्दश्रवणामनन्तरं प्रथमं सर्वेषामर्थानामुपस्थितिः (स्मृतिः) जायते। तत्तत्सकलार्थनिरूपितनानार्थकशब्दे समान रूपेण गृहीतत्वात् तत्र कस्मिन्नर्थे वक्तुस्तात्पर्यमिति निर्णयासम्भवेन सन्देह श्रोतुरूत्पद्यते। तदैव श्रोतातथाविध सन्देह निवृत्यर्थं तात्पर्यं निर्णायकं प्रकरणादिकं पर्यालोचयति। तेनैव तात्पर्यं निर्णयोजायते। तदनन्तरं पुनरेकार्थमात्रविषयिणी समुपस्थितिः तद्द्वारोपस्थितार्थविषयकान्वयबोधो भवति। यस्यात्मनियदर्थविषयिणी उपस्थितिस्तदर्थविषयक एव शाब्दबोधो भवतीति नियमात् नियमक्रमः।

अत्रेत्थं शंक्यते यत् हेतुभूतस्य पदज्ञानस्य क्षणिकतया विनष्टत्वे कथमेकार्थं विषयिणी पुनः पदार्थोपस्थितिरितिविषये समाधानमिदं यत् तदात्मक पद ज्ञानजाया एकार्थमात्रविषयायाः पुनः पदार्थोपस्थितेरनन्तर मेवान्वय बोध इति नये द्वितीयायाः पदार्थोपस्थितेः प्राथमिक्याइव नकुतो नानार्थक, गोचरतेति प्रकरणादिज्ञानस्य तदधीन तात्पर्यनिर्णयस्य वा पदार्थोपस्थितौ प्रतिबन्धकत्वं वाच्यम् अन्यथाशाब्दबुद्धेरपि मानार्थविषयत्वापत्तिः।

अत एव पयोरमणीयमित्यादौ सन्देह निवारणाय क्रियमाणे अत्रत्यं पयः पदं दुग्धातात्पर्येणेच्चारितमित्याकारके तात्पर्यनिर्णये पय आदिकं पदं भासते। इति तात्पर्य ज्ञानमेव पदज्ञानात्मकं सम्पद्यत् इति तात्पर्यम्।

यद्युच्यते द्वितीयोपस्थितिरेकार्थं मात्र विषया कथम्? प्राथमिक्यामिव तत्रापि सर्वेऽर्थाः कुतो न भासेरन्? तन्न शोभनं यतो द्वितीयस्यामुपस्थितौ प्रकरणादिनिर्णीततात्पर्य विषयीभूत एकएवार्थो भासते नान्यः। तत्र प्रकरणादि ज्ञानस्य प्रतिबन्धकत्व स्वीकारात्।

यद्युच्यतेऽत्र व्यवहिततयोपस्थिति काले नष्टस्य तस्य प्रतिबन्धकत्वं न सम्भवति 'इति तदपि न युक्तम्' प्रकरणज्ञानस्य नष्टत्वेऽपि प्रकरण-जन्यतात्पर्य निर्णयस्योपस्थितकालीनस्य प्रतिबन्धकत्वं भवत्येव। नानार्थक पदजन्यांतदन्यार्थं विषयकोपस्थितिं प्रतितदर्थंविषयक-तात्पर्य निर्णयः प्रतिबन्धक इत्याकारक प्रतिबध्य प्रतिबन्धकभाव एवास्थेयः।

यद्येवं न स्वीक्रियते चेत्तर्हि उक्तप्रतिबद्ध्यप्रतिबन्धक भावास्वी-कारे उपस्थितेरप्रतिबन्धे उपस्थितानामर्थानां शाब्दबोध भान-नियमेन नानार्थस्थले शाब्दबोधोऽपि नानार्थविषयक आपद्येत। अनुभवसिद्धश्च तत्र तात्पर्य विषयैकार्थमात्रविषयकं शाब्दबोधोऽ-पेक्ष्यते। अत उक्त प्रतिबध्यप्रतिबन्धक भावोऽवश्यं स्वीकार्य एव।

अत एवोक्तान्ववबोधक्रमानुसारं संयोगविप्रयोगश्चेति वाक्य-पदीय वचनमत्र सुसंगच्छते—

'तत्रोक्तमनवच्छेदे विशेष स्मृति हेतव' इति।

तत्रानवच्छेदे तात्पर्यसन्देहे विशेषस्मृतिहेतवः विशेषस्मृतिरेकार्थ-मात्रविषया स्मृतिरिहविवक्षिता। उक्त रीत्यानानार्थक शब्दस्थले संकेतितसकलार्थोपस्थित्यनन्तरं सति तात्पर्यं सन्देहे संयोगादयः स्वज्ञानाधीन तात्पर्यनिर्णयद्वारा तात्पर्यविषयार्थातिरिक्त संकेतितार्थ विषयकोपस्थितेः प्रतिबन्धकरणेनैकार्थं मात्र विषयकोपस्थितेः-कारणानि भवन्तीति।

इत्थं 'सुरभिमांसं भक्षयति' इत्यादौ वाक्याज्जायमानागवादि विषयिका द्वितीयोपस्थितिर्नास्ति तस्मादेव गवादिविषयिणी प्रतीतिरपि न भवति यतश्शाब्दबोधं प्रति तदुपस्थितेः कारणत्वात्। यदर्थविषयिणीउपस्थितिस्तदर्थं विषयक एव प्रतीतिः (बोधः) सञ्जा-यते। सा च द्वितीयोपस्थितिः कथं स्यादितिजिज्ञासायाम्, तदर्थं व्यञ्जनाव्यापारोऽत्राभ्युपेयः। यदा सुगन्धिमांसं भक्षयतीत्यादौ आवृत्तादौ शालकादिः सुरभिमांसं भक्षयतीति केनाप्यति ग्रामीणेन प्रयुक्तं वाक्यं तदा तत्र तस्य वाक्यस्य सौरभमयं मांसं

सुरभिः गोः मांसमिति द्वावप्यर्थौ श्लेष महिम्ना (शक्त्या) वस्तुतः समुपस्थितौ वर्तेते तौ च वक्तुरभिप्रेतौ तिष्ठतस्तेनबोधोऽपि द्वयोरर्थयोर्जायत एव।

अतएव विदग्धस्य श्रोतुः आवृत्तादेर्जायमाना जुगुप्सा समुत्पद्यते, इति वस्तुस्थितिः। परन्तु तत्र श्लीलार्थविषयकोपस्थितिः भोजनरूप प्रकरणज्ञानजन्यतात्पर्यनिर्णये न प्रतिबद्धेति तद् विषयकोबोधोऽभिधया न शक्यते कर्तुमिति तदर्थमत्रव्यञ्जनाव्यापारः स्वीकार्य एव। एवमादिरेव शब्दशक्ति मूलध्वनेर्ध्वेर्लक्ष्यस्थल इति प्रोक्त प्रकरणस्य चरमं विवक्षितम्।

ननु नानार्थकशब्दस्थले नानार्थनिरूपिता सत्यमेकैव शक्तिरिति पक्षस्वीकारे उक्तदिशाव्यञ्जनावृत्तेरावश्यकता भवतु नाम, यदि नानार्थनिरूपिता नाना शक्तिर्नानार्थकेषु शब्देषु स्वीक्रियते चेतर्हि-सम्भवत्यभिधयैव निर्वाहः 'इति जिज्ञासायाम् समाधानमित्थं विधीयते तद् यथा एकया शक्त्या प्राकरणिकार्थोपस्थितेरनन्तरं द्वितीयया शक्त्या द्वितीयार्थोपस्थितस्तथापि स्यादिति चेन्न स्यादेव प्रकरणादि ज्ञानस्य प्रतिबन्धकस्यानुपरमात्। अन्यथा प्राकरणिकार्थोपस्थितावेवाप्राकरणिकस्याप्यर्थस्य विषयत्वं स्यात्। अर्थात् पूर्वशक्त्या पुनरनुपस्थितौ कृतार्थत्वादिति भावः। प्रकरणादि ज्ञानस्येति तात्पर्यनिर्णयस्याप्युपलक्षणत्वात् (अनाशात्) सत्वादिति यावत्।

वस्तुतो नानार्थकशब्दस्थले नानाशक्तिः स्वीक्रियते, तथा च सुरभिमांसं भक्षयतीत्यादौ तात्पर्यनिर्णयेनाऽप्राकरणिकाश्लीलार्थ विषयकोपस्थितेः प्रतिबन्धात् एकया शक्त्या प्राकरणिक सौरभमय मांसरूपार्थमात्रोपस्थितावपि द्वितीययाऽभिधाशक्त्या एवाप्राकरणिकार्थ श्लीलविषयकस्मृतेः सम्भवः।

तदा तत्रोक्त प्रतिबन्धकज्ञानमकिञ्चित् करमेव। तस्य प्रथमप्रतिबन्धेन क्षीण सामर्थ्यात्। तथा च 'व्यञ्जना व्यापारोनिष्फलः' 'इति शंकायाम् समाधानमाह न स्यादेवेति। अयमाशयोऽत्र यत् प्रतिबन्धकज्ञानं यावत्तिष्ठति तावत्प्रतिबन्धं करोत्येव। न तस्य प्रथम प्रवृत्या

कृतार्थता क्षीणसामर्थ्यंता वा भवतीति द्वितीययाऽभिधाशक्त्याचिकीर्ष माणामपितत्राप्राकरणिकाश्लीलार्थं विषयकस्मृतिं प्रतिबध्नीयादेवेति तावत्कालपर्यन्तं वर्तमानः प्रतिबन्धकीभूततात्पर्यंनिर्णयः। अन्यथा प्रतिबद्धेतरार्थायाः प्रथमशक्तिजन्याप्राकरणिकार्थोपस्थितिस्तस्यामेव द्वितीयावृत्तौ प्रथमशक्त्यैवा प्राकरणिकोऽश्लीलोऽप्यर्थः किमिति न विषयो भवेत् ? तथात्वे विषयत्वे तु द्वितीयशक्तिस्वीकार एव किमर्थः। एवञ्च प्रतिबन्धकज्ञाने विद्यमाने प्रतिबन्धोऽभ्युपेय एवेति द्वितीय शक्त्यापि नेष्टसिद्धि सम्भावना कथमपि। तथा च शक्तेर्नानात्वमप्रामाणिकम् प्रामाणिकत्वेवा तस्य संकुचितस्थलविषयकत्वमेव स्यात्।

ननूक्त प्रतिबध्य प्रतिबन्धकाङ्गीकारे वैयञ्जनिकाप्राकरणिकार्थ विषयकोपस्थितेरपि कुतोहि प्रतिबंध इत्याशंक्य समाधीयते यथा— धर्मिग्राहक मानेनाप्राकरणिकोपस्थापकतयैव तादृशव्यक्तेरुल्लासात् तदजन्योपस्थितिं प्रत्येव प्रकरणादिज्ञानस्य प्रतिबन्धकत्वकल्पनात्।

व्यक्तिज्ञानस्योत्तेजकत्व कल्पनाद्वा। तत्रःधर्मिग्राहक इत्यत्र धर्मीव्यञ्जना तद्ग्राहकं मानम् 'अनुभवसिद्ध नानार्थस्थलीयाप्राकरणिकार्थ विषयकोपस्थितिः तद्रूपेण प्रमाणेनेत्यर्थः। सामान्यतो नानार्थकपदजन्याप्राकरणिकार्थं विषयकोपस्थितिं प्रति प्रकरणादि ज्ञानस्य तज्जन्य तात्पर्यनिर्णयस्यवा प्रतिबन्धकत्वे व्यञ्जनयाप्यप्राकरणिकार्थं विषयकोपस्थितिर्न स्यात्, 'इति शंकायाधर्मिग्राहकमानेनोक्त प्रतिबध्य प्रतिबन्धक भावघटक प्रतिबध्यदले व्यञ्जनावृत्यजन्येति निवेशेन वैयञ्जनिकोपस्थिति प्रतिबन्ध इति समाधानं कृतं स्यात्। अथवा

अस्तु सामान्य एव प्रतिबध्य प्रतिबन्धक भावः, मास्तु च व्यञ्जनावृत्यजन्यत्वनिवेशः, तथापीष्टसिद्धिः सम्भवति व्यक्ति ज्ञानस्योत्तेजकत्वाद्वा। अर्थात् नानार्थक पद जन्याप्राकरणिकार्थोपस्थितिं प्रति तदर्थनिरूपित नानार्थक पदनिष्ठव्यञ्जनाज्ञानस्योत्तेजकत्वमङ्गीकृत्यतादृशोत्तेजकाभाव विशिष्टोक्त प्रकरणादि ज्ञानस्योक्तोपस्थितिं प्रति प्रतिबन्धकत्वं कल्पनीयम्।

एवमेवाशयं मम्मटाचार्या अपि प्रोक्तवन्तः वाक्यपदीयकारवचन-मनुसृत्य च यथा—

अनेकार्थस्य शब्दस्य वाचकत्वेनियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधो कृद्व्यापृतिरञ्जनम् ।। इति ।

अनेकार्थस्य शब्दस्याभिधायां संयोगाद्यै र्नियन्त्रितायां सत्यामन्यत्र वाच्यस्याप्यत्रावाच्यस्याप्राकरणिकार्थस्य धीर्बोधस्तत्प्रकारकोव्यापारः 'अञ्जनं व्यञ्जनमेव, अनेकार्थकपदनिष्ठाया अभिधायाः संयोगादि कर्तृक नियन्त्रणञ्चात्रान्यार्थोपस्थापकत्वप्रतिबन्धरूपमवगन्तव्यम् ।

नानार्थकेषु श्लिष्टेषु यत्रानेकत्रतात्पर्यं ग्राहकं प्रकरणादिकं युगपदवतरति नावतरतिवा, तत्र श्लेषः यत्र तु क्रमेण तत्रावृत्तिः पुनः पुनरनुसन्धानं यथा अक्षाभज्यन्ताम् 'भुज्यन्ताम्' दीप्यन्ताम् अत्रान्वयिपदार्थभेदाद् बोद्धुरावृत्त्यै बोधः, उच्चारणन्तु तन्त्रेणैव स्वरूपाण मेकशेष इति सूत्रे शब्देन्दु शेखरे प्रोक्तम् । यत्र त्वेकत्रैव तत्रव्यञ्जनेत्यर्थः, नानार्थेषुश्लिष्टेषु यत्रानेकत्र प्रकरणादिकं युगवदवतरति तत्रैव श्लेष इति न वक्तुं शक्यः अनेकत्र प्रकरणाद्यनवतारे योऽसकृत् परगोत्राणामित्यादौ श्लेषानापत्तेः ( ३७६ उदाहरणे ) प्रकरणादि नियमाभावात् द्वावप्यर्थौ वाच्यौ इति तदुदाहरणस्थ वृत्तिग्रन्थविरोधाच्च दशमोल्लासेऽर्थश्लेषोदाहरणेऽभिधाया नियन्त्रणाभावात् द्वावप्यर्थं भूयोवाच्यौ इति वृत्तिग्रन्थविरोधाच्च ।

अर्थभेदेन शब्दभेद इति नयेन भिन्नाः शब्दाः काव्यमार्गे स्वरो न गण्यते इति नयेन युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपह्नवते एकवृन्ताकगतफलद्वयन्यायेन यत्रार्थं द्वयप्रतीतिः स श्लेषसकृदर्थं गमयतीति नियमाङ्गी कर्तृं णाम्मतेनाह अर्थं भेदेनेति ।

एकानुपूर्वीकत्वेऽपि तत्तदर्थं निरूपित वृत्तिभेदाच्छब्दभेदः । काव्यमार्गे यदि स्वरा उदात्तादयो विचारितास्स्युस्तदाश्लेषोच्छेदापत्तिः । श्लेषस्य चमत्कारितायाः सर्वानुभवसिद्धत्वात् । अत्रोक्ते विषये अर्थभेदग्रहोत्तरं शब्दभेदग्रहस्त्वकिञ्चित्करः । तेनैकोच्चारणापह्नुत भेदकभिन्नार्थक सदृशनानाशब्दवत्त्वं श्लेषः ।। अतोव्यञ्जनायाः

कियतीशास्त्रेषु यथायथं यथालक्ष्यमपेक्षा भवतीति न सन्देहः। यत्रशब्द-निष्ठेयं वृत्तिस्तत्रशब्दाअपि रूढः, योगः, योगरूढः, यौगिकरूढरूपतया रूढयौगिकत्वम्वेति विधया चातुर्विध्यं भजन्ते। तत्र क्रमशस्तेषां पारिभाषिकं स्वरूपं लक्षणभेदोदाहरण निदर्शनपूर्वकमत्रोपस्थाप्यते यथा—

१—**रूढत्वन्नाम**—रूढि-योग-योगरूढि-रूप शब्द शक्तेस्त्रैवि-ध्येऽपि शब्दानां चातुर्विध्यं प्रतिफलति—तत्ररूढत्वन्नाम—शास्त्रीया-वयवशक्तिनिरपेक्षसमुदायशक्ति प्रयोज्यार्थं बोधकत्वम्, यथा-मणि-नूपुरादि शब्देषु-तत्र मण्यते यः समणिः, इति शास्त्रीयव्युत्पत्तावपि-शास्त्रीयावयवार्थं शक्ति नैरपेक्ष्येणैव शब्दस्य समुदाय शब्दस्वा मणि-त्वजातिविशेषावच्छिन्नबोधकत्वम्। एवं नूपुरशब्देऽपि नुवतिपुरम् इति शास्त्रीयविग्रहेऽपि शास्त्रीयावयार्थ शक्ति नैरपेक्षवपुरस्सरमेव नूपुर शब्दस्य समुदायशक्त्या नूपुरत्वजातिविशेषावच्छिन्न चरणभूषण-बोधकत्वम्।

२—**यौगिकत्वञ्च**—शास्त्रकल्पितावयवार्थं निरूपतिशक्तिमात्रा-धीनार्थं बोधकत्वम् यथापाचकादिपदे। तत्रहि-पच्ण्वुलरूपावयवार्थं पाकाश्रयरूप तत्तदर्थंनिरूपितावायवशक्ति मात्राधीन बोधकत्वम्।

३—**योगरूढत्वञ्च**—शास्त्रकल्पितावयवार्थंसिध्यत्व समुदायविशे-षार्थं निरूपित शक्त्यधीनार्थंबोधकत्वम् यथापङ्कजादि-पदे-तत्रहि-पङ्कात्जायते तत्पंकजम् इति व्युत्पत्त्या निष्पन्न पंकजशब्दस्य पंकजनिकर्तृ रूपायवार्थ सहकृत पद्मत्वावच्छिन्नात्मक समुदाय विशे-षार्थ निरूपितशक्त्यैव पंकजनिकतृतावशिष्टपदमत्वावच्छिन्न बोध-कत्वम्।

४—**रूढयौगिकत्वञ्च**—समुदाय निरपेक्षावयवार्थंनिरपेक्ष समुदाय विशेषार्थंऽन्यतरार्थ निरूपित शक्त्यधीनार्थबोधकत्वम् यथाऽश्वग्रन्धादि मण्डपोद्भिदादिः।

'सोऽव्यादिष्ट भुजंगहार वलयस्त्वां सर्वंदोमाधवः' इत्यादौ श्लेष-काव्य इव प्रकृतेऽपि प्रकृताऽप्रकृतयोरर्थंयोः बोधस्य स्वीकारे बोधका-

भावात-भुजंगस्य सर्पस्य हारश्चवलयश्चते माल्यैकदेशे भूषणे यस्य स तादृशः प्रसिद्धशिवः उमाधवः पार्वतीपतिस्त्वांसर्वदापायात् ।

कृष्णपक्षे इष्टः भुजंगस्यहारः हरणं यस्य तादृशं यद् यद् वलं वलयोः श्लेषस्थले ऐक्यस्त्रीकारात् । तेन गरुणेन याति संचरतीति तादृशः सर्वदः सकलपदार्थप्रदाता–अत्र नानार्थस्थलेऽप्राकरणिकार्थं बोधाय व्यञ्जनोल्लासोनावश्यकः सोऽव्यादित्यादौ श्लेष काव्यस्थलइव द्वावप्यर्थौ ऽभिधाशक्त्यैवावगम्येते तथा प्रकृतेऽपि । इत्थं शास्त्रकाराणां विविधविचारप्रक्रियानुसारं व्यञ्जनाया गूढतत्त्वमुपस्थाप्यते ।

शास्त्रकारैरभिधा लक्षणा व्यञ्जनेति तिस्रः शब्दस्यशक्तयः समुद्बोधिताः, अभिधालक्षणे च केवलं शब्दनिष्ठे मन्येते, परं व्यञ्जनेयं शब्दनिष्ठापि वाच्यलक्ष्यव्यंग्यार्थं निष्ठापि, तथा चेयं पदैकदेशनिष्ठा प्रकृत्येकदेशे निष्ठा प्रत्ययस्येकावयव निष्ठा सती बहुविस्तृतक्षेत्र कामधेनुरिव सर्वार्थं प्रत्यायन क्षमापि । व्यञ्जनेयं न केवलं शास्त्रव्यवहारसाधनपरा अपितु लोकव्यवहारावधारणपरापि, व्यञ्जना विभिन्न शास्त्रकारैः स्व स्व व्युत्पत्त्यनुसारन्नैकविधानैक स्वरूप परिभाषितानैकलक्षण लक्षिता किन्तु महतीयं वृत्तिः विशिष्ट प्रभावाविलक्षणलक्षणघटिता प्रायः समेषां शास्त्रकाराणां मते येनकेनापि रूपेणानुभवपथमागता ध्वनन प्रत्यायनद्योतनाभिव्यञ्जनादिनाना संज्ञाभिरभ्यर्हिता शास्त्रमर्यादा धुरं वहन्तीव समग्रान् सहृदयानात्मसात्कुर्वंती काव्यात्मरसादि विषय विशेषान् लोकोत्तरामनुभववीथिमाकर्षन्ती भावाभिनवमभिनयँश्चानुमोदन्ती काव्यनिष्ठा-अभिधेयलक्ष्यव्यंग्यार्थनिष्ठेव सहजसहृदयनिष्ठापिरसात्म भावात्मालंकारात्मवस्तुध्वन्यात्मगतापि विराजते, यदा सहृदयैः दृश्य श्रव्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावसंचारि संयोगाद्रसानुभूति प्रयोज्यान् स्वगतस्थापि भावान् रसभूमिकानात्माभिन्नतया नयति तदा खलुसाधारणीकरणवेलायां सर्वथैक्यं रसमयं जगदखिलंसामान्यविशेषावस्थया जगतिगुण क्रिया नामादिभानशून्यैरसानन्द सहोदरत्वं न पृथक्तया नैकतया वा कमपि विलक्षणमेव भावोपहितमात्म चैतन्यं परमाह्लादकरमनुभूयरसप्रवाहे निमज्यते सुतराम् सहृदयलोकः ।

इयं वृत्ति पदाभिधेयाभिधालक्षणावत् स्त्रीकृता, एषाह्यात्मभूता काव्यं निर्जीवमिवावस्थितं सजीवमिवविदधत्यंगनासुलावण्यमिव काव्य सम्बन्धिन: सर्वानप्यतिशय्य वरीवर्तीतिनातिशयोक्तिः एवं हि बहुभिर्मनीषिभिः सहृदयवरैर्विविधरूपेणावधारिता सुगृहीता-सत्यपि साक्षाद संस्पृष्टा सर्वानभिव्यञ्जयन्तीव स्वयं काव्य-सहृदय-निष्ठा विराजते, यथोक्तमत्र विलक्षणं किञ्चिद यथा--

विना मातृ हस्तं विना भ्रातृवर्गं,
विना गोरसं को रसो भोजनस्य ।

इति प्रतिपादितार्थः स्वांशे यथा साधीयान् तथैवैनां व्यञ्जनां विना को रसास्वादः ? सालंकारासगुण रुचिरसन्निवेशकमनीया कामिनीव कविकृतिरनयोत्कर्षमाहृत्येव । अत इयमेवकामप्यनिर्वचनीयामभिख्यां सम्पादयन्ती शक्तिनिपुणताभ्यासपाटवं भजतां कवीनां महाकवित्वलाभाय प्राधान्येन निमित्तभूता स्मर्यते, तेनैवानन्दवर्धनाचार्यपादैस्सत्यमेव साधूक्तं यत् द्वित्राः पञ्चषा वा महाकवयो गणयन्त इति । व्यञ्जनेयं सत्यमनेकविधेन विलक्षणेन शब्देनात्मानमुल्लासयन्ती काव्ये नाट्ये च सुदृढं सुपदमादधाना सहृदहृदयैः सुसम्वेद्यतामुपगता सामान्यजनैरस्पृश्यतां नीता वर्णाश्रमानुरूपमाचारमाचरन्तीव सचेतसां चेतांसि = मनांसि रमयति । एनां परिहायपरमाह्लादसन्दोहेन रसेनाप्यायितमात्मानं को बहु मन्येत ? । ध्वननंध्वनिरिति व्युत्पत्त्या व्यञ्जना व्यापारो ध्वनिशब्देनैव संकीर्त्यते ध्वनिकारेणापि । ध्वन्यते यः स इति व्युत्पत्त्यर्थोध्वनिः, ध्वनतीतिव्युत्पत्त्या शब्दोऽपिध्वनिः, ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या काव्य विशेषोध्वनिरितिव्यञ्जनायाः क्षेत्राणि प्रामुख्येन नियतानि । एवमेव काव्यवृत्तिवत् काव्यार्थं वृत्तिवत् सहृदयवृत्तिरपीयंवृत्तिरभिव्यंक्तुं शक्या ।

आनन्दवर्धनाचार्येण ध्वनिविषयेविशिष्टोविचारो निहित एव । ध्वनिरात्माकाव्यस्येतिदिशा तदीयः प्रयासः शास्त्रीयसिद्धान्तप्रथने महतीं ख्यातिम्भजति यश्चध्वःनिरुक्तस्तेन स नाभिनव अपितु बुधैर्यः समाम्नातपूर्वः इति तस्य मंगलश्लोकेन ध्वनिपदार्थोऽपि पुण्य

श्लोकत्वमुपगच्छति। अयं ध्वनिसम्प्रदायस्य प्रवर्तनमयः मंगलमयश्च समयोऽतीव प्राशस्त्यं भजति। ध्वनिसम्प्रदायप्रचलनात् पूर्वं काव्य-जगत्यलंकारस्य रीतेश्च, नाट्यजगति रसस्य, प्राधान्यसूचकानि लिंगान्युपलभ्यन्ते, अलंकारसम्प्रदाये प्रथमो भामहः काव्यालंकार उक्तिवैचित्र्यस्य काव्यप्राणात्मतां साधयामास, उक्तिवैचित्र्ये च वक्रोक्तिरेवकाव्यात्मप्राणानर्थयति 'इति समीक्ष्य साध्वेव तेनोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना॥

वक्रोक्तेः स्वरूपमुद्घोषयत् प्रोक्तवान् सः 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलं कृतिः' इति। भामहापेक्षया परवर्तीदण्डी मुख्योऽलंकार सम्प्रदायस्य मन्यते। महाकविना दण्डिना हि काव्यदर्पणेऽतिशयोक्ते-रलंकारमुलत्वं साधुसमर्थितं सुनिभालितञ्च तत्तत्वम्। ततः पर-मन्येऽपि उद्भटरुद्रटप्रभृतयोऽप्यलंकारसम्प्रदायस्य प्रवर्त्तका आचार्याः संस्कृतसाहित्यजगति लब्धावतारा स्वाप्रतिमप्रतिभयाऽलंकार पथं समभासयन्। रीतिप्रवर्तकेषु मुख्यो वामनाचार्यः संस्कृताकाशे महान् मंगलग्रहोऽशोभत्। 'विशिष्टा पदरचना रीतिः', 'रीतिरात्मा काव्यस्य' इति तस्य मूलसूत्रं निदानभूतं रीतिप्रवर्तकाचार्याणाम्। एतावता सर्वत्रात्मपदं सारभूतपरं ज्ञानाधिकरणस्य ज्ञानरूपस्य वा मुख्यस्यात्मनो बाधात्। रससम्प्रदाये तृतीयः ख्यातो भरतमुनिः। विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति प्रतिपादयन् सम्यक् समादरमलभत् संस्कृतसाहित्यसमाजे।

रससम्प्रदाये तु रसस्य व्यञ्जनामन्तरा प्रतीतिरेव गगनकुसुमा-यिता, अतस्तां कल्पयन्ति तत्सम्प्रदायवादिनआचार्याः। रसरूप-वाच्यत्वाभ्युपगमे रस इति सामान्यशब्दस्य शृंगारादिविशेषशब्दस्य वा प्रयोगं विना तत्प्रतीतिरशक्या, न चैवं वक्तुं शक्यते यत् विभावाद्य-प्रतिपादने रसशृंगारादि शब्दानां भूयोभूयः प्रयोगेऽपि रसाद्यप्रतीतेः रसादिशब्दाप्रयोगे विभावादिप्रतिपादनेच रसाद्युपलम्भात् तत्रान्वय-व्यतिरेकाभ्यां विभावादि सत्वमेव रसावधारणहेतुः, तेषामेव प्रत्यायकत्वमायातीति व्यञ्जनैव वृत्तिस्तदुपयोगिनीति। अभिधाया-

स्तदुद्बोधने सामर्थ्याभावोदर्शित एव, मुख्यार्थबाधाद्यभावाल्लक्षणाया अपि नावसरः । तस्मादेवैतत्सम्यक् सर्वमाकलयताऽऽनन्दवर्धनाचार्येणोक्तं सम्यक्—तृतीयस्तु[1] रसादिलक्षणप्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते, न तु साक्षात् शब्दव्यापारविषय इति वाच्याद् विभिन्न एव, इति । एतेनेत्थमत्र वक्तुं पार्यते यत् ध्वनिकारेणाभाववादिभिर्विलोपितो ध्वनिमार्गः पूर्वं कथञ्चित् स्पृष्टोऽपि सम्प्रति सम्यगुन्मीलित इति । अयं ध्वनिसंप्रदायाचार्यत्वेनानन्दवर्धनाचार्येणाऽभिभूषितः सम्यक् समादरं भजते । काव्यात्मत्वमुखेन सर्वापेक्षया ध्वनेः प्राधान्यं युक्तिप्रमाणाभ्यां संसाध्य महाविषयस्यानुमीलितपूर्वस्यापूर्वः कश्चन पन्था दर्शितो ध्वनिकारेण । एतदपि सत्तथ्यमत्रयत् पूर्ववर्तिनो महाकवयो व्यासवाल्मीकिकालिदासप्रभृतयो ध्वनिमार्गे सर्वथाऽस्खलन्तः सहृदयहृदयाह्लादकारिकाव्यंविरच्याऽव्यक्तयाऽनयाप्रशस्यमानयाऽनुमत्याऽऽनन्दवर्धनाचार्यमन्वग्रहिषुः । जगति ध्वनिसम्प्रदायस्य महान् सुप्रभातः श्रीमताऽऽनन्दवर्धनाचार्येणापरकल्पादाविवानीत इति वक्तुं शक्यते । तेन हि ध्वन्यालोकमातन्वता शाब्दिकप्रवरेभ्यो महानादरोपि प्रदर्शित एव । प्रथमे हि विद्वान्सो वैयाकरणा 'व्याकरणमूलत्वात्सर्वविद्यानाम्' इति प्रतिपादयता निखिलोपि सिद्धान्तः ध्वनिसम्प्रदाये शाब्दिकैरुपकृत इति प्रमाणी कृतम । ध्वनेः पन्थानं वैयाकरणा एवाश्रित्य कथं तया ख्यातिमभजन् इति विषये तेन स्वीयाभिप्रायः प्रदर्शितः सादरम् । तद् यथा वैयाकरणाहि श्रूयमाणेषु वर्णेषु ध्वनिरितिव्यवहरन्ति, तथैवान्ये तन्मतानुसारिभिः काव्यतत्त्वदर्शिभिः वाच्यवाचकसम्मिश्रः शब्दात्माकाव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्यात् सम्यग्ध्वनिरित्युक्त इति ।

:

अत्र विद्वदुपज्ञेयत्वं वैयाकरणानां यत्प्रोक्तम् तदित्थम् विद्वद्भ्य उपज्ञा उपक्रमो यस्या उक्तेरिति बहुव्रीहिः समीचीनः नतु विदुषाम् उपज्ञेत्येवं विधस्तत्पुरुषः शक्यः, 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इत्यनेन नपुंसकत्व प्रसंगात् इति महाभाष्य वचन प्रामाण्यात् ।

---

१. ध्वन्यालोक पृ० सं० १-२७-२८

इदमेव तथ्यमुररीकृत्य लोचनकारोऽभिभाषते उपज्ञोपक्रममिति, न पुंसकत्वं तत्पुरुषाश्रयं निरवकाशमिति। विद्वत्सु प्राथमिकत्वेन वर्णनं शाब्दिकानां (वैयाकरणानां) वाक्यपदीय कारेण भर्तृहरिणापि-कृतम् यथा—

रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरण संस्कार पवित्रित मुखानराः॥

इति वैयाकरणमते शब्दो द्विधा (१) ध्वन्यात्मकः (२) स्फोटात्मक-श्चेति, महाभाष्यकारो भाषते यत् अथवाप्रतीत पदार्थको ध्वनिः शब्द इत्युच्यते तद्यथा शब्द कुरु शब्दं माकार्षीः शब्दकार्ययमाणवकः इति ध्वनिकुर्वंन्नेवमुच्यते तस्माद् ध्वनिः शब्दः[1] इति। अत्र विषये 'तपरस्तत्कालस्येति सूत्रेभाष्ये एवं तर्हि स्फोटः शब्दः' इत्युक्तम् तेनः ध्वन्यात्मके स्फोटात्मके शब्दे व्यवहारो भाष्यकारेण प्रशस्तीकृत प्रमाणाय कल्प्यत एव। तत्र ध्वन्यात्मकश्शब्दोऽनित्यो नानारूपः प्रतिपादितः परं स्फोटात्मकश्शब्दो नित्यो निरवयोध्वनिरूपरूषितोऽर्थाव-बोधकः। तदित्थं स्फोटात्मक शब्दाभिव्यञ्जकत्वेनाभिमतः ध्वन्यात्म-कश्शब्दः ध्वनिपदेन व्यपदेशमर्हति। तथैवात्रकाव्येऽपि व्यञ्जकेषु-ध्वनिव्यवहारो वैयाकरणसिद्धान्तानुसारं ध्वनिसिद्धान्तस्य प्रतिपादि-तोऽलंकारशास्त्रज्ञैः।

प्रसंगतोऽत्र संक्षेपेण स्फोटनिरूपणं क्रियते। यथा घट इत्यत्र घकाराकारादिषु वर्णेषु श्रूयमाणेष्वाशुतर विनाशिसु पूर्वपूर्वं वर्णोच्चा-रणानन्तरमपरापरवर्णोच्चारणे पूर्ववर्णानां व्यपगतत्वेन वर्ण समूहात्मना प्रकल्पितस्य पदस्य तत्समूहात्मकस्य वाक्यस्य च सिकताभित्तेरेवास-म्भवात् घकारादयोवर्णाः कथं तत्र सम्भूय वृत्तेराश्रयतां प्राप्य सदर्थं बोधयितुं शक्नुवन्ति? इमामेवानुपपत्ति परिहर्तुकामा वैयाकरणा अर्थावबोधाय स्फोटं नित्यमङ्के निधाय निरस्तैतद् विपद आशेरते। स्फोटः निरवयवः आन्तरः कश्चित् स्फोटात्मना शब्दात्मको वक्तुः श्रोतुश्चहृदये समवस्थितः ध्वनिधर्मरुषितः एकोप्यनेकधाप्रकाशमानो

१. म० भा० पस्य पृ० १६,

घकाराकारादिवर्णैः वैखरीरूपैरभिव्यक्तोऽयं प्रत्याययतीति=बोधयतीतिवा इयं स्थितिः सम्पद्यते अत एवोक्तं वाक्यपदीयकारेण—

प्रतिविम्बं यथाऽन्यत्रस्थितं तोय क्रियावशात्।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः॥[1]

तस्य च नित्यतया वृत्त्याश्रयत्वमप्युपपद्यते। स्फोटाभिव्यंग्य एव शब्दब्रह्म, नादाभिव्यंग्य स्फोट इति व्यवहारः शास्त्रे दृश्यते। तत्र हि अभिव्यंग्याभिव्यञ्जकभावाभिधानेन व्यञ्जनावृत्तिविना समिहितार्थानुपपत्तेः। व्यञ्जकेषु वर्णेषु ध्वनिं व्यवहरन्ति शाब्दिकाः। तथैव काव्येषु व्यञ्जकेषु शब्दार्थादिषु ध्वनि व्यवहारमामनन्ति सहृदयाः कवयः। अत एवोक्तं ध्वनिकारेण यथा—

परिनिश्चित निरपभ्रंश[2] शब्दब्रह्मणो विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहारो हि 'इति तैः सह किं विरोधा विरोधौ चिन्त्येते' इति नैयायिक प्रक्रियया शब्दाज्जाताः शब्दाः शब्दजाः शब्दाः श्रोत्रपथमायान्तीति घण्टायाँ वाद्यमानायाँ शब्दजशब्देषु अनुरणनात्मकेषु लोका अपि ध्वनिं व्यवहरन्ति। नैयायिकानामपि तत्र ध्वनि शब्दोल्लेखो दृश्यत एव इत्थं तन्मतेऽपि वहुशो ध्वनिव्यवहारप्रत्यक्षः। अत्रेदमपि विभावनीयं विद्यते यत् व्यञ्जके ध्वन्यात्मके शब्दे ध्वनि व्यवहारः न तु व्यंग्ये स्फोटे। परं काव्ये तु व्यञ्जके व्यंग्ये तद्व्यापारेच ध्वनिपदप्रयोगः क्रियते। व्यञ्जकः सहृदहृदयानामेवार्थं गमयति। गम्यमानश्चमत्कारी भवति काव्ये अन्यत्र गृहीत संगतिकानां सहृदयासहृदयानामर्थावबोधकः न ते न कथमपि कश्चिच्चमत्कारः सम्भवति। यथोक्तमत्र—

योऽर्थो हृदयसंवादी तस्यभावो रसोद्भवः।
शरीरं व्याप्यते तेन शुभं काष्ठमिवाग्निना॥

१. बा० प० १।४९

२. ध्वन्यालोके तृ० उद्योते।

येषां काव्यानुशीलनाभ्यासपाटववशात् सत्वरं विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभावयोग्यताते सहृदयपदभाजः सहृदया इति लोचन टीकायामुक्तम्।[1]

केवलं शब्दार्थसंकेतग्रहवतामपि नादाभिव्यंग्यः स्फोटोऽर्थमभिधत्ते। नतु सहृदयानामेवेत्यपि विशेषः। अत्रविषयेऽपिध्वनिकारेणैवोक्तम्—वाच्य वाचक सम्मिश्रः शब्दात्माकाव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्यात् ध्वने लक्षणम्—

यत्रार्थः शब्दोवा उपसर्जनीकृतस्वार्थौ।
व्यंक्तः काव्य विशेषः स ध्वनिरिति सूरिभिः: कथितः।

इत्येवं विलक्षणाया व्यञ्जनावृत्तेरयं व्यवहार पन्थाः सर्वैरादृतः। व्यञ्जनाव्यापारस्य च वाच्यलक्ष्यार्थतिरिक्तार्थं बोधहेतुत्वं व्यञ्जनास्वरूपमिति प्रोक्तम् यथा योऽर्थस्यान्यधीहेतुर्व्यापारो व्यक्तिरेव सा इति काव्यप्रकाशेतृतीयोल्लासे।

व्यङ्ग्यर्थान् स्वीकुर्वन्तोऽपि तत्प्रतीतिलाभाय=निर्वाहाय वा व्यञ्जनापारं नाङ्गीकुर्वन्ति तार्किकाः, कारणं द्विविधं भवति, १ ज्ञायमानम्, २ अज्ञायमानञ्च, यथा धूमो ज्ञायमानो अग्निमनुमापयितुं समर्थः नान्यथा, चक्षुरादिना पर्वतादौ पक्षे धूमं ज्ञात्वैव वह्निमनुमिनोतीति तात्पर्यम्। वह्निः स्वरूपः सन्नेव न तु ज्ञायमान एव दाहं प्रति कारणं भवति। अग्निं जानानः एव न कथमपि दाहमनुभवति, अपितु तमजानतोऽपि। तस्मादिह वक्तुं शक्यत एव यद् वह्नि स्वरूपत एव दाहजनक इति। तदेवं व्यञ्जनाज्ञाता अज्ञाता वा कारणमितिविचिकित्साजायते। तत्र नाद्यः शक्तेग्रहिकता यथा शास्त्रे प्रतिष्ठिता— शक्तिग्रहं व्याकरणोपमानमित्यादिवचनेन ग्राहकाः सम्यक् प्रतिपादिताः सन्ति, न तथा व्यञ्जनाग्राहकत्वेन केचनक्वचिदपि काव्येनिर्दिष्टाः। यद्युच्यते ज्ञातैव व्यञ्जना कारणमिति तथासत्यवश्यमेवतदुपायतया केषांचिन्निर्देश उपलभ्येत्। इत्थमेवेदं पदमस्मिन्नर्थे शक्तम्, अस्मात्पदादयमर्थो बोधव्य इत्यादि रूपेणावश्यं शक्तिग्रहो जायेत्

१. ध्व० १ उ० लो० टी०

नतथा व्यञ्जनाग्रहः केनचिद् बोध्यते। ज्ञातासती तु न सिद्धा तथार्थ-बोधने, एवमेवाज्ञाता सत्यपि न अत एवोच्यतेऽत्र न द्वितीयोऽपि-अर्थात् अज्ञातासती चेत् कारणन्तदा समेषांसहृदयासहृदयानां समानोबोधः स्यात्। तथा च सहृदयानामेव व्यंग्यार्थंप्रतिपत्तिः नान्येषामिति द्विधाविभागो न सिद्ध्येत।

नैवं वक्तुमपि शक्यते यत् सर्वत्र व्यंग्यार्थं बोधेऽपि तात्पर्यज्ञानस्य कारणत्वेन स्वीकारात् क्व व्यभिचार इति ? तथा कार्यतावच्छेदक-कोटौ न संकोच इति न गौरवदोष प्रसंगः इति यतोव्यञ्जनावादिनां मते व्यंग्यार्थंबोधे तात्पर्यज्ञानस्य हेतुत्वानभ्युपगमात्। अतएव वयस्यानागरासंगात् अंगानां हन्ति वेदनामिति स्थलेषु वयस्या नागर-पुरुषसंयोगादङ्गानां वेदनां हन्तीति तात्पर्याधारेणशक्यार्थं बोधानन्तरं-तात्पर्याविषयो भूतस्यापि वयस्या=हरीतकी नागरयोगात् शुष्ठी-योगात् अंगानां वेदना हन्तीत्यर्थस्य बोधोऽभिधामूलव्यञ्जनया जायते। तथाविधबोधे तात्पर्यज्ञानस्य हेतुत्वे शक्त्यैव तादृशार्थप्रतीतेरभिधा-मूल व्यञ्जनाया=स्वीकारो न सहेतुकः सिद्ध्येत। अपि च शक्यार्थं बोधात् प्राक् तत्र व्यंग्यार्थबोधधारणायं व्यञ्जनाजन्यबोधं प्रति शक्ति-जन्यबोधकारणतायाः स्वीकरणीयतया निश्चितमेव गौरवमापद्येत। यद्युच्यतेऽत्र व्यंञ्जनावृत्तेरनङ्गीकारेतत्रानुमानुभवपथमागतस्य व्यंग्यार्थं बोधस्यानुपपत्तिः स्यात्। तेन तदनुपपत्तिरेव व्यञ्जनां कल्पयतीत्यर्था-पत्तिप्रमाण गम्यतैववेति, तन्नसमीचीनं व्यञ्जनांविनापि तादृशबोध-स्य मनसैवोपपत्तेः। ज्ञानलक्षणा सन्निकर्षं सचिवेन मन एवविशिष्टां धियं जनयिष्यति न काचिदनुपपत्तिः।

ननु शब्दे साक्षात्कृतेसति ततो बोधानन्तरं सुखविशेषोऽनुभूयते अन्यथा स नानुभूयत इत्यन्वय व्यतिरेकाभ्यां तादृशसुखविशेषप्रति तथाविधस्य हेतुता कल्पनीया अन्यथा तदपलापे सुखविशेषस्याप्य-पलापापत्तेः। परमिदन्नतथ्यं यतः मनोरथप्रभवंसुखमपि चमत्कारकारि-त्वेनानुभूयते। केचनैव मनोरथरथमारुह्यानन्दानुभवं कुर्वन्ति नास्ति-वैचित्र्यम् तेन मानसस्यापि बोधस्य चमत्कारजनकत्वेन सुखोपलब्धे-र्बाधाभावात्।

यदि च मानसबोधस्य प्रत्येकं पदार्थोपस्थिति मूलकतया यद्यस्मिन् पद्यांशे–ममापि जन्म तत्रैव भूयात् यत्रगतोभवान् "इत्यत्रशरीर-वियोगोपस्थापकपदाभावात् कथमत्रशरीर वियोगस्य मानसो बोधः कर्तुं सम्भावयितुं वा शक्यते ? अलंकारशास्त्रवासनानतां ममतु व्यञ्जनायाः कारणत्वोपगमेन मरणपदप्रयोगं विनापि तथाबोध-सम्भवेनानुपपत्ति वक्तुं न शक्यतइति शंकाया अनवकाशात् इति कथमपि न शंकनीयम् यतस्तादृशवाक्यज्ञानस्य तादृशवाक्यान्तर्गत जन्मादिपदज्ञानस्य वा तदुपस्थापकत्व कल्पनात् ।

अथ चात्र व्यञ्जनाया अतिरिक्तायावृत्तेरत्रस्वीकारे व्यंग्यार्थं-बोधं प्रति व्यञ्जनाजन्य पदार्थोपस्थितेरेव शब्दशक्ति मूलव्यञ्जना-स्थलेऽतात्पर्यं विषयस्यापि बोधः स्यादित्यादि कल्पनायां गौरवात् मानसवोध एव स्वीकरणीयः । अत्र जगदीशभट्टाचार्याः शब्द शक्ति-प्रकाशिकायाँ व्यञ्जन जन्यवोधं मानसबोधं प्रतिपादितवन्तः ।

व्यञ्जनामन्तरापि मानसबोधेन चमत्कारसारो ध्वनिरुत्पद्यते यदि मन्यन्ते तर्हि प्रश्नो भवति यत् किं मानसो बोधः स्मरणात्मक एव स्वी-कर्तव्यः उतवा तद्भिन्नोवः ? नाद्यः, स्मरणात्मकः कथं स्वीकर्तव्यः यतः स्मृतेः संस्कार जन्यतया संस्कारोद्बोधे सत्येव तथाविधः स्मरणात्मको वोधो वक्तुं शक्यः नत्वन्यथाकथमपि । योहि संस्कारो मन्यते सोऽपि-चात्रानुभवात्मकेन ज्ञानेनैव जायते । अतस्तत्र येन क्रमेणानुभवो भवति तेनैवक्रमेण संस्कारस्य विद्यमानत्वेऽपि तदुद्बोधे च क्रमाभावेन विभिन्नतया=विपर्ययेणापि संस्कारोद्बोधस्य समुदयेन स्मृतिर्ह्यत्र वैपरीत्येनापि स्यात् । तथा च प्रथममिष्टस्य पश्चात् स्मरणं-पश्चादिष्टस्यबोधस्य पूर्वं स्मरणं भवति । तथा सति चारुताऽत्र कथं न विलुप्ता भवेदिति ? कथञ्च सर्वेषां सहृदयानां समानास्मृतिः ? यथासमानो बोधः स्यात् । वस्तुतः संस्कारक्रमेण स्मरणमितित्वनुभव विरोधादेव प्रतिपादयितुमशक्यः । यदि मानसबोधो भिन्नः स्वीकृतः स्वीक्रियते वा तदपि न शोभनः यतः संस्कार सहयोगंविनैव मानसो बोधोयदि समपेक्ष्यते तदा मानसः प्रवृत्तेर्नियामकाभावात् संगताऽसंग-तयोर्बोध प्रसंगात् ।

यद्युच्यतेऽत्र मानसबोधस्य नियामकः कश्चित्कल्पनीयः शक्यश्च तर्हि मानसबोधस्य नियामकान्तर कल्पनापेक्षया व्यञ्जनास्वीकार एव श्रेयः पन्थाः। यदि चात्रापि व्यञ्जना शब्दव्यापाररूपभवन्ती तदैवार्थं बोधने समर्था यदा व्यञ्जकस्य शब्दादेर्व्यंग्यार्थेन सह कश्चित् सम्बन्ध प्रतीयेत। सम्बन्ध विनाऽसम्बद्धत्वाविशेषात् यस्य कस्यापि बोधापत्तिरितिवाच्यम् इति न युक्तियुक्तं प्रतिभाति। यथोक्तमत्र "सोऽर्थः तद्व्यक्ति सामर्थ्ययोगी शब्दश्चकश्चन" इत्यनेनैव समाधातुं शक्यत्वात्। शब्दस्यसाक्षात्सम्बन्धीतु वाच्योऽर्थ एव भवति तस्य सम्बन्धी व्यंग्योऽर्थ 'इति परम्परया स्वसम्बन्धितामुपगच्छति। नात्र-साक्षात् सम्बन्धो युक्तस्तस्याकिञ्चित्करत्वात्। यदि च पूर्वं ज्ञाता अज्ञाता वा बोधिकेति विकल्पमुपस्थाप्य दूषणदानं कृतन्तदपि कथमपि समीचीनम् यतो ज्ञाताया व्यञ्जनाया बोधकत्वें बाधकाभावात्।

अत एवात्र व्यञ्जनयार्थं बोधने सहकारितया एतद्धि वचन प्रोक्तं येन ये व्यंग्यार्थ बोधसहकारितां भजन्तेतेऽत्र प्रदर्श्यन्ते यथा।

वक्तृबोधव्यकाकूनां वाक्य वाच्यान्य सन्निधेः।

प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिमायुषाम्॥

इति यत्र व्यञ्जनयाव्यंग्यार्थं प्रतीतिस्तत्रसहकारिता वर्तत-एवेषां तादृशार्थेन सह व्यञ्जकानां सम्बन्धग्रहणरूपमेवेति सुस्पष्टं सचेतसाम्।

वृत्तिविषये भूयान् मतभेदो दृश्यते सर्वमत्र संक्षेपेण प्रदर्श्यते—

१—अभिधैव केवला शब्दवृत्तिरिति व्यक्तिविवेककारो महिमभट्टो-वदति।

२—अभिधा-लक्षणाच वृत्तीद्वे नैयायिकानां मते।

३—अभिधा-लक्षणा व्यञ्जना चेति तिस्त्रोवृत्तय इति आचार्य मम्मटः प्रतिपादयति।

४—अभिधा-लक्षणा-व्यञ्जना-तात्पर्यचेति चतस्त्रो वृत्तयो विश्वनाथादिमते ।

५—अभिधा-लक्षणा-तात्पर्याख्या चेति वृत्तयः केषाञ्चिदन्येषां मते ।

६—शाब्दिकैरपि प्रसिद्धाऽप्रसिद्धभेदेनाभिधायाः (शक्तेरेव) स्वरूपमेकं प्रतिपादितं तन्मतेऽपि व्यञ्जना स्फोटाभिव्यंग्यस्य शब्दब्रह्मज्ञानाय-विशेषतो यथा स्थलमुपन्यस्तास्मृतिगोचरीभवत्येव । यथा वाक्यपदीयकारोऽभिभाषते—

नादैराहृतबीजायामन्त्येन ध्वनिनासह ।
आवृत्त परिपाकायां बुद्धौशब्दोऽवधार्यते ॥

अर्थादन्तिमेन ध्वनिना स्फोटात्मकशब्दस्य स्फुटपरिच्छेदानुकूलास्फोटस्याभिव्यक्तिर्मन्यते । अतश्चान्तिमोध्वनिः स्फुटस्फुटतरावधारणहेतूनां साहाय्येन स्फोटात्मकशब्दपरिच्छेदानुकूलांयोग्यतामादधानः स्वधर्मरूषितं स्फोटमर्थबोधकं व्यञ्जयति । प्रत्येकं ध्वनयो व्यञ्जयन्तोऽपि न द्रुतं स्फोटात्मानं शब्दतत्त्वं प्रकाशयितुं समर्थाः । पूर्वंपूर्ववर्णानुभव जनित स्फुटस्फुटतराभिव्यक्तिसचिवोऽन्तिमोध्वनिः तद्रूपोवर्णोवा स्फुटतमं स्फोटं द्योतयतीति कोऽत्रव्यञ्जनां विना सदुपायः । अत एव पूर्वं पूर्वं वर्णानामुच्चारणेतज्जन्य स्फुटस्फुटतराऽभिव्यक्त्यभावात् तत्सद्भावं विनाऽन्यस्य वर्णस्य द्योतकत्वानुपपत्तेरिति तात्पर्यम् ।

वक्तुर्हृदये स्थितः स्फोटः सन्निहितः अतएवशीघ्रं व्यक्तोऽर्थमवगमयति, श्रोतुश्चविलम्बेन स्फोटाभिव्यक्त्याऽर्थावगमः पश्चाद्भवतीत्यनुभवसिद्धमेव । अत एव नागोजिभट्टपादैर्मञ्जूषायामुक्तम् यथा—केनचिद्घटमानय इति वैखरी नादः प्रयुक्तः स केनचिच्छ्रोत्रेणगृहीतः स एव नाद इन्द्रिय द्वारा बुद्धि हृद्गतः सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोध इति । इत्थमेवात्रार्थबोधकत्वं स्फोटस्य स्वीक्रियते । तेन मध्यमानादोऽर्थवाचकस्फोटात्मक शब्द व्यञ्जक उच्यते । इति परम लघुमञ्जषायाँ दर्शनात् मध्यमानादातिरिक्तः कश्चिदान्तरो नित्यो निरवयवः शब्दः स्फोटपदेनोच्यते ।

यद्यपि वेदे स्फोटशब्देन वाक्तत्त्वव्यवहारः प्रायः न दृश्यते तथापि वाचां नित्यत्वाखण्डत्वसंहृतक्रमरूपत्वादिनाव्यवहारः स्फोटात्मकमेव शब्दं लक्ष्यीकरोति स्फोटशब्दप्रयोगः प्रायः प्रथममेवाष्टाध्याय्याम् अवङ्स्फोटायनस्येति सूत्रद्वारास्फुटोलोके । यथोक्तमेव पूर्वंयद्व्यञ्जना-सर्वासांवृत्तीनामन्यतमा व्यापिका शब्दार्थनिष्ठाबहुविस्तृतक्षेत्रेयं सोदाहरणन्नात्र सर्वं यथालक्ष्यं यथाग्रन्थमवतारयितुं तदीय रहस्य-तथ्यविस्तारयितुमतः प्रायो ये विभिन्न प्रक्रियानुसारं विचाराः स्मृति-पथमागता व्यञ्जनास्वरूपविषये विविध लक्षणलक्ष्यस्थलविषये यथाशक्यं यथामति विदुषां सेवायामुपवर्णिता । विभिन्न प्रक्रियाश्रयेण कुत्रचिदवश्यंपुनरुक्तिः प्रतीयते परं परमार्थतोनास्ति तथा। क्वचिदंश विशेषविचारे तथा प्रतीवपि तात्पर्यार्थदृशा विभिन्नावेदन-प्रक्रिया यथा च विशेषाविशेषं सुधियो विभावयिष्यन्ति स्वयमिति विचार्य प्रकरणानि बुद्धिपथमानीतानि ।

---

# विशिष्टाद्वैताभिमतात्मस्वरूपविमर्शः

प्रसंगतः प्रस्तुते विवक्षिते शोधप्रबन्धे प्राथम्येन विशिष्टाद्वैत-शब्दोपातस्तेन विशिष्टाद्वैतपदार्थविवेचनं सुसंगच्छते। तथाहि अयं सिद्धान्तः सनातनो न तु केनचिदाचार्यवर्येण निर्मितः कल्पितः, यद्यप्यस्यानादिकालतो निर्वचनं प्रशस्तं श्रुत्यादि सकलसात्त्विक-शास्त्रसमभिनन्दितमेव, अयं हि परमवैदिक सिद्धान्त इति साभिमानं सदाचार्यैः प्रतिपादितः प्रतिकल्पमाविर्भावतिरोभावक्रमेण कोऽपि-सिद्धान्तः प्रत्यक्षपरोक्षात्मना भावना विशेषात् यथाकल्पं यथाकालं प्रकाशितोऽभिव्यक्तस्तिरोहितोवाभवति, आचार्यैस्तथाऽभिभाषितो-भवति। अयं हि श्रुत्यनुगामिवशिष्ठपराशरहारीतशाण्डिल्यादि शिष्टाग्रसरैः सादरं परिगृहीतो विशिष्टाद्वैतसिद्धान्तः स एव पाञ्च-रात्रागमवदने कदाऽयं संकोचविकासरूपाविर्भावतिरोभावमाप्नुवन् यथाऽवसरं पुनः पुनरधिकारिविशेषान् आसाद्य वाविर्भवति। बीज-रूपेण सदाऽयंसिद्धान्तोधृतसत्ताकोवर्तत एव। यथा वर्तमानकल्पा-न्तर्गत यथाकालं तदाविर्भावे पराशरपाराशर्य्यं बोधायनटंकद्रविण गुहदेवभारुचिश्रीमन्नाथ यामुनमुनियतिवरादयो जगद्गुरवो रामानुजा-चार्यप्रभृतयोऽस्यविशिष्टाद्वैतवेदान्तसिद्धान्तस्य प्रचारकाचार्या अभवन् तानासाद्य पृथिव्यां प्रभूतप्रचारमवाप्यावश्यमद्यावधि-प्रसरणशीलः सर्वथा समादरणीयोऽयं सिद्धान्तो जातः।

कस्यचिदपिसिद्धान्तस्य सर्वकाले सामान्यविशेषरूपेणैव सत्ता भवति, न तावत्ससिद्धान्तः सर्वः सहैव समभावेन जगति सर्व जन-ग्राह्यः पालनीयोऽनुकरणीयो वा भवति। एतस्मिन् कलियुगे श्रीसंप्र-दायाऽपरपर्यायस्य विशिष्टाद्वैतवेदान्तसिद्धान्तस्य प्रचारस्तु भगवता-वादरायणेन श्रीमद् भागवतमहापुराणस्यैकादशे स्कन्धे पञ्चमाध्याये निमिकरभाजनयोगेश्वर सम्वादेन नारायणपरायण प्रशंसामुखेन निर्भ्रान्तनिर्मुक्तसंशयः समुल्लिखितः। तद् यथा—

कृतादिषु प्रजाराजन्! कलाविच्छान्तिसम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः॥

क्वचित्क्वचिन्महाराज द्रविड़ेषु च भूरिशः।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥
कावेरी च महापुण्या प्रतीची च महानदी।
ये पिबंति जलं तासां मनुजा मनुजेश्वर ॥
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥

इति न चात्र कृतयुगादिषु वर्तमानप्रजानामेतद्घोरकलियुगजन्मा शासनरूपाश्चर्यैः कैश्चित्सन्देग्धव्यः। यतो नारायण परायणानां महत्त्वन्तेषां सुदुर्लभत्वञ्च भागवतमहापुराण एवषष्ठस्कन्धस्य चतुर्दशाध्याये तथैव प्रतिपादितम्। तद्यथा—

स रजोभिः समसंख्याताः पार्थिवैरिहजन्तवः।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥
प्रायोमुमुक्षवस्तेषां केचनैवद्विजोत्तम।
मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्ध्यति ॥
मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥

इति नारायणपरायणशीलक्षिक्षया स्त्रीशूद्रादिगणानामपि मायातरण सौलभ्यञ्च प्रोक्तम् द्वितीयस्कन्धसप्तमाध्याये—

ते वै विदन्त्यतितरन्ति च देवमायां,
स्त्रीशूद्रहूणशबराअपि पापजीवाः।
यद्यद्भुत क्रमपरायणशीलशिक्षा-
स्तिर्यग्जना अपि किमुश्रुतधारणाये ॥

इति विशिष्टाद्वैतवेदान्तसिद्धान्तस्य श्रीसम्प्रदायत्वेन प्रसिद्धिस्तु साक्षाद् भगवदाज्ञयाऽङ्गीकारपूर्वकं प्रपत्तितत्त्वादेव, अत एवोक्तं वृहद्ब्रह्मसंहितायाम्—

अतः कान्ते त्वया कार्या श्रद्धामच्चक्रधारणे।
सन्धारय मुमुक्षूणां प्रपन्नानां ममाज्ञया॥
ओमित्युवाच सा देवी चक्रशंखौ भुजद्वये।
प्रयोजनान्तरं हित्वा मन्त्रराजमथोदधौ॥ इति

तत्रैव श्रीरंग वैभवनिरूपण प्रकरणेऽपि सुव्यक्तम्—

यत्र मे लोक कल्याणकारिणो परमा कला।
द्विजरूपेण भविता यातु संकर्षणाभिधा॥

इत्यारभ्य—

विष्वक्सेनादिभिर्भक्तैः शठारिप्रमुखैर्द्विजैः।
रामानुजेन मुनिना कलौ संस्थामुपेष्यति॥

इत्यन्तम् एवं विष्वक्सेनसंहितायाम् यथोक्तम्—

अदादिमं मन्त्रराजं लक्ष्म्यै स पुरुषोत्तमः।
सापि सेनाधिपतये कृपया परयाददौ॥

एवञ्चपद्मपुराणे ब्रह्माणं प्रति भगवन्नारायणकथनम् यथा—

पुरा मन्त्रद्वयं ब्रह्मन् विष्णुलोके महापुरे।
तस्मिन्नन्तः पुरे लक्ष्म्यै मयादत्तं सनातनम्॥

उपर्युक्तं मन्त्रराजम् 'ॐ नमोनारायणाय' इति मन्त्रद्वयञ्च, श्रीमन्नारायणचरणौ शरणं प्रपद्ये, श्रीमते नारायणाय नमः इति प्रोक्तवान्नारायणः।

यदि कैश्चिदत्रोच्येत् यदेतत्संप्रदायस्थैराचार्यैः स्वीकृते विशिष्टाद्वैतवेदान्तसिद्धान्ते न किमपि प्रमाणमुपलभ्यते? इति यतो हि सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं, सर्वं खल्विदं ब्रह्म, सत्यंज्ञानमनन्तं ब्रह्म, अयमात्माब्रह्म, तत्त्वमसि प्रभृत्यभेदवादिन्यः श्रुतयो

हि जीवब्रह्मणोरभेदमभिभाषन्ते। नित्यो नित्यानां चेतनश्चेतनाना-मेको बहूनामिति ज्ञाज्ञौद्वावजवीशनीशौ, पृथगात्मानं प्रेरितारञ्च मत्वा भोक्ताभोग्यं प्रेरितारञ्च मत्वा, प्रधान क्षेत्रज्ञ पतिर्गुणेशः, तयोरन्यः पिप्पलं स्वाद्वत्ति, प्रभृतयो भेदवादिन्यश्च श्रुतयोब्रह्मात्मह्मणोर्भेदं-ब्रुवते। अत्राद्वैतवादिनस्तावत् (अप्राप्तेहिशास्त्रमर्थवत्) इतिन्यायम-नुरुद्ध्य भेदस्य प्रत्यक्षेणगृहीतत्वात् प्राप्तत्वेन भेदवादिन्यः श्रुतयस्त्वौ-पाधिकं भेदं वदन्त्यस्गौताणा एव। अद्वैत श्रुतयश्चाप्राप्तार्थवादिन्यः पारमार्थिकमभेदं वदन्त्यस्ता एव मुख्या अतस्ताभिर्मुख्याभिः श्रुतिभि-र्बोधितोऽद्वैतसिद्धान्त एव शास्त्रसम्मत इत्युपदिशन्ति।

द्वैतवादिनस्तु 'भूयसां स्याद्वलीयस्त्वमितिन्यायात् प्रत्यक्षप्रमाणेन सिद्धस्यैवार्थस्य शास्त्रेणापि प्रतिवादनादनेक प्रमाण प्रतिपन्नो भेद एव शास्त्रसम्मतो ? तेनाभेद वादिन्यश्श्रुतय एव गौणाः पुरोहितोऽयं राजासंवृत्त इतिवत् प्रशंसार्थाः श्रुतयः, मुख्यास्तुश्रुतयो भेदवादिन्य एवातो द्वैत सिद्धान्त एव शिष्टजनादृतः परिपालनीय इति व्याह-रन्ति तथा च द्वैताऽद्वैताभ्यां भिन्नोऽयं विशिष्टाद्वैत सिद्धान्तो निर्मूल इतिप्रतिभातोति शांकरमतानुयायिनोर्द्वैतवादिनो व्याह-रन्ति। तन्न समीचीनं युक्ति प्रमाणानुरोधतः।

अत्र विशिष्टाद्वैतसिद्धान्तवादिन आचार्या यमामनन्ति विशिष्टा-द्वैतसिद्धान्तं तद्धि शास्त्रसम्मतं सत्तथ्यमेव। भेदवादिनीनामभेद-वादिनीनाञ्चोभयविधश्रुतीनां व स्तुतोऽत्र सर्वासामपि वेदत्वाविशेषाद् गौणमुख्यविभागस्तत्र तत्र न कथमपि वक्तुं युक्तो योग्योवा। किन्त्वत्र सर्वाभिर्घटकश्रुतिभिस्तासामविरोध एव नेयो भवति। यथा हि एको देवदत्तस्तिष्ठति, इत्युक्ते देवदत्तस्यात्मा भिन्नो तदीयदेहश्च भिन्नः इतिदेहात्मनोर्द्वयोर्भिन्नत्वेऽपि देवदत्ते यथैवैकत्वव्यवहारो मुख्यस्तथैव चेतनामचेतनानाञ्च परस्माद् ब्रह्मणोर्भिन्नत्वेऽपि 'यस्यात्मा शरीरं यथा य आत्मनि तिष्ठन् यस्यात्मा शरीरम् यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम् "इत्यादिघटकश्रुतिभिः तयोश्चेतनाचेतनयोर्ब्रह्मणश्शरीरत्वबोधनात् शरीरशरीरिभाव कृत एकमेवाद्वितीयमित्येकत्व व्यवहारो मुख्यः चेतनानामचेतनानाञ्च-

ब्रह्मणश्शरीरत्वेनापृथकसिद्धविशेषणत्वात्ब्रह्मणा तेषां भेदश्च तात्विकः। एवं चेतनानामचेतनानाम् परस्परं भेदश्चेतनेष्वपि परस्परं भेदश्च सत्यः। तथा सति सूक्ष्म चेतनाचेतनविशिष्टंब्रह्मकारणम् स्थूल चेतनाचेतनविशिष्टं ब्रह्मकार्यम्। चेतनाचेतनेषु सूक्ष्मत्वंतु नामरूपविभागानर्हत्वम् नामरूपविभागार्हत्वं च स्थूलत्वम्। सत्ख्यातिवादिनां कार्य्यकारणयोरभेदात् सूक्ष्मचेतनाचेतनविशिष्ट-ब्रह्म स्थूलचेतनाचेतनविशिष्ट ब्रह्मणोरैक्याद् विशिष्टाद्वैतमित्युच्यते। 'यतो वा इमानि भूतानि जायन्ते, यन्माद्यस्य यत् इत्यादि ब्राह्मलक्षण-निर्णायक श्रुति सूत्रादिभिः ब्रह्मणो जगत्कारणत्वं प्रतिपाद्यते, तथा सोऽकामयत बहुस्यां प्रजायेय इत्यारभ्य, तत्सृष्टवा तदेवानुप्राविशत् तदनुप्रविश्य सच्चासच्चाभवत् (सच्चत्याच्चा भवत्) इत्यादिना तस्यै ब्रह्मणो बहुभवन संकल्पपूर्वकसृष्टिः, तदनुप्रवेशतत्तत्संज्ञा भाक्त्-वादिना कार्यत्वञ्च प्रतिपाद्यते। एवञ्च येनाश्रुतं श्रुतं भवत्यमतं मत मविज्ञातं विज्ञातमित्यारभ्य यथासौम्येकेन मृतपिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिनाभिधित्सितस्यार्थस्य 'प्रकृतिश्चप्रतिज्ञा दृष्टान्तानुरोधात् "इत्यादिना मीमांसितत्वात् ब्रह्मणः केवलं निमित्तकारणत्वाङ्गणकारे चैक विज्ञानेन सर्वं विज्ञानप्रतिज्ञाकारणविज्ञानेन कार्यं विज्ञानविषयो मृत् पिण्डादि दृष्टान्तश्च न घटते तस्माद् ब्रह्मण अभिन्ननिमित्तो-पादानकरणत्वं च सिद्धयति। एतदेवोपवृंहितं श्रीविष्णुपुराणे यथा—

विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।
स्थिति संयम कर्ताऽसौ जगतोऽस्य जगच्च सः॥

'इति। एवमेव प्राचामुक्तिरपि प्रमाणाय कल्प्यते।

हरिरेव जगञ्जगदेव हरि-
र्हरिणा जगतो नहि भिन्न तनुः।
इति यस्य मतिः परमार्थं गतिः
स नरो भवसागरमुत्तरति॥

इति, अयमेवार्थः श्री रामानुजस्वामिकृत श्रीभाष्ये श्रुतप्रकाशिका-द्यनेक महानिबन्धेषु सविस्तरं सम्यङ्निरूपितः।

न केवलमत्रैव किन्तु वेदोपवृंहणभूतेतिहासेषु भगवन्महादेव-दृष्ट्या नियत सात्त्विक सत्पुराणेषु श्रीमद्भागवते भगवच्छास्त्रे पाञ्चरात्रागमे च विधिवद् विस्तरेण च प्रतिपादितः, अतएव वृहद् ब्रह्मसंहितायामुक्तं चतुर्थपादेनवमाध्याये-यथा—

चिदचित्प्रकृतिर्द्वेधा विशेषेण तथा हरी।
तद् विशिष्ट परं ब्रह्म श्रुतिराह महामते ॥३५॥

सदेवेदं पूर्वमासीदेकमेवा द्वितीयकम्।
तदैक्षतासृजल्लोकान् सूक्ष्मभूतान् स्वसंस्थितान् ॥३६॥

असृजन्नाम रूपाभ्यां तत्र तत्रान्वगात् स्वयम्।
तत्तन्नाम भवद् राजन् प्राकारान्तर संग्रहात् ॥३७॥

विशिष्टे एव भवति प्रकारान्तरमाश्रितम्।
स्थूलावस्थौ चिदचितौ प्रकारान्तर संस्थितौ ॥३८॥

तत्तन्नियमनार्हत्वमुपादानञ्च कीर्तितम्।
यं विशन्तीति वाक्येन प्राग् विलीनमिदं जगत् ॥३९॥

स्थूलाकार परित्यागो लयो नामनिरूप्यते।
स्थूलाकारानुकरणं प्रभवो नाम गौतम ! ॥४०॥

न च द्रव्यान्तरोत्पत्तिराकारान्तरमेव च।
वाचारम्भणवाक्येन निर्णीतं परमर्षिभिः ॥४१॥

उपादायेदमखिलं निर्विकारतया स्वयम्।
नामरूपविभेदेन परिणामो व्यवस्थितः ॥४२॥

तद्भागित्वमुपादानं सत्यसंकल्पताहरेः।
निमित्तत्वन्तु निर्णीतं चेतसा ह्यवलोक्यताम् ॥४३॥

इत्यादि विशिष्ट वचनैः एवं चतुर्थपादषष्ठाध्यायेऽपि—

जीवोहि सच्चिदानन्दलक्षणः प्रकृतेः परः।
अचेतना या प्रकृतिश्चतुर्विंशतिधा स्मृता ॥४४॥

शरीरभूता सा राजंश्चेतना यत्र वैभवा।
चेतना प्रकृतिर्भिन्ना प्रति देहं व्यवस्थिता ॥४५॥

ज्ञानाकारेणैक रूपा परायत्त स्थितिर्हि सा।
चेतना चेतनं सर्वं शरीरं परमात्मनः ॥४६॥

परमात्मा स्वतन्त्रोऽयं राजन् सर्वेश्वरो हरिः।
चेतनेषु च सर्वेषु चेतनोऽयं प्रजापतिः ॥४७॥

इत्यादि विविधवचनैः चिदचिद् विशिष्ट एवार्थः प्रतिपादितः। यदि चात्रैवंविधवचनैः विशिष्टाद्वैतसिद्धान्तार्थनिरूपणस्य सुसंगतत्वेन प्रतिपादनेऽपि विशिष्टाद्वैतशब्दस्य क्वचिदप्यार्षग्रन्थेषु सद्भावाभावादेव कथमयं सिद्धान्तः स्वीक्रियताम् तर्हि तत्रेदं समाधानमुपयुक्तम् विशिष्टाद्वैत शब्दस्यापि भगवच्छास्त्रे यथा वृहद्-ब्रह्म संहितायामेव चतुर्थपादे दशमेऽध्याये रुद्रभद्रबाहु सम्वादमुखेन प्रोक्तं विद्यते—[२]

राजोवाच

भगवन्देव देवेश! यदुक्तं भवता ययोः।
ज्ञान ब्रह्मस्वरूपस्य वाक्यैः शोधबोधकैः ॥१॥

ब्रह्माद्वितीयं वैशिष्ट्यं कथं स्याद् वद विस्तरात्।
कुतो वै दृश्यते द्वैतमद्वये परमात्मनि ॥२॥

श्री रुद्रउवाच

यथापयसि राजेन्द्र घृतमस्ति न दृश्यते।
तद् विशिष्टं पयो यद्वदेकमेवावलोक्यते ॥३॥

यथाशब्दमयी वाचा केवलैवावलोक्यते ।
बीजमङ्कुरगर्भं वै वह्निगर्भाशमो यथा ॥४॥

विश्वगर्भा यथा बुद्धिः पुण्यगर्भा क्रिया यथा ।
चिदचिद् गर्भमेवैकं विशिष्टं ब्रह्म पार्थिव ॥५॥

कार्यकारणभेदेन त्ववस्याद्वयमुच्यते ।
कारणे सूक्ष्मरूपेण द्वैतेन परिवृंहितम् ॥६॥

स्थूलरूपेण कार्ये तु द्वैतेवासादितं हि तत् ।
न भिद्यते परस्तस्मात्परं तस्मान्न भिद्यते ॥७॥

गुणिनस्तुगुणो यद्वद् गुणादेवगुणी यथा ।
एवं विशिष्टाद्वैतं हि श्रुतिस्मृत्युदितं नृप ॥८॥

इति इत्थमेभि सच्छास्त्रवचनैश्चिदचिदीश्वर रूपतत्त्वत्रविषये न कोऽपि सन्देहावसरः न वा विशिष्टाद्वैतसिद्धान्तविषये प्रमाणाभाव इति विशदं प्रतिपाद्यात्राभिधेयनिरूपणपूर्वकं विशिष्टाद्वैत शब्दस्यापि तत्र तत्र सुप्रयुक्तत्वात् सर्वोऽपि सन्देहो निवर्तते सुसामञ्जस्यञ्च प्रवर्तते । तथाहि—

अद्वैतश्रुतिवृन्दस्य विशिष्टाद्वैतबोधिताम् ।
श्रीमद्रामानुजाचार्याः सम्यगूचुः सतां मुदे ॥

इति सदुक्ति प्रमाणानुरोधि विशिष्टाद्वैतपदार्थविमर्शः क्रियते येन शास्त्रज्ञाः सिद्धान्ते यद् वैशिष्ट्यन्तदवगम्यशंकावसाना भवेयुः । विशिष्टञ्च विशिष्टञ्च विशिष्टे, द्वयोर्भावो द्विता द्वितैव द्वैतं भेदो, न द्वैतमद्वैतमभेदः विशिष्टयोरद्वैतं विशिष्टाद्वैतं प्रथितम्, तथा च सूक्ष्म चिदचिद् विशिष्ट स्थूल चिदचिद् विशिष्टयोर्ब्रह्मणोरद्वैतमभेदः, सूक्ष्मचिदचिद् विशिष्टत्वन्नाम सूक्ष्मचिदचिन्निष्ठप्रकारता निरूपित विशेष्यताशालीत्वम् । एवमपरं स्थूल चिदचिद् विशिष्टत्वं हि स्थूल चिदचिन्निष्ठ प्रकारतानिरूपित विशेष्यताशालीत्वम् । ब्रह्मणि सर्वदैव यस्यात्मा शरीरस्य पृथिवीशरीरमित्यादि श्रुतिसिद्धशरीर शरीरि-

भावेन चिदचितो विशेषणत्वात्। य आत्मनि तिष्ठन् नात्मनोऽन्तरो यमात्मानं वेद यः पृथिव्यां तिष्ठन् यं पृथिवी नवेदेत्यादि श्रुतिनिकरेषु चेतनाचेतन पदार्थयोः सप्तम्यन्तत्वेन निर्देशाच्च।

यथाभूतले घटः पर्वते वह्निरित्यादौ भूतलपर्वतयोः सप्तम्यन्त-निर्दिष्टत्वेन विशेषणता नैयायिकादि सर्वसम्मता तद्वदत्रापि। विशे-षणतादयः पदार्थास्तु स्वरूपसम्बन्धविशेषाः तदरिक्तप्रकारता वि-शेषावा न तत्र विवाद प्रसंगः कश्चनापि। तथा च सूक्ष्मचिदचिन्निष्ठ-प्रकारता निरूपित विशेष्यताशाल्यभिन्नं स्थूल चिदचिन्निष्ठ प्रकारता निरूपित विशेष्यताशालि ब्रह्मेति शाब्दबोधः। यद्युच्यतेऽचेतनपदार्थं-स्य स्थूलत्वे विद्यमानेऽपि भवन्मते चेतनस्य जीवात्मनोऽणुत्वात् कथं तस्मिन् स्थूलत्व व्यवहारः?

तत्र समीचोनं चिदचितोर्नामरूप विभागार्हत्वं स्थूलत्वं, नामरूप-विभागानर्हत्वं सूक्ष्मत्वमिति स्थूलत्व सूक्ष्मत्वयोः सांकेतिकत्वात्। पारिभाषिकत्वाङ्गीकारे च "तत्सृष्ट्वा तदेवानुप्राविशत् सच्चासच्चा-भवत्। तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इतिश्रु-तिरेव प्रमाणम्।

एवञ्चात्र नामरूप विभागानर्हं चेतनाचेतनविशेषणतानिरूपित विशेष्यताशाल्यभिन्नं नामरूप विभागार्हं चिदचिन्निष्ठ प्रकारता-निरूपित विशेष्यताशालि ब्रह्मेति निष्कृष्टः शब्दबोधः। तथा च कारणावस्थकार्यावस्थब्रह्मणोरद्वैतं विशिष्टाद्वैतमिति फलितम्। न चात्र शंकनीयं यत् जीवब्रह्मणोरभेदे कथं ब्रह्मणोरिति द्विवचनमिति नीलघटयोर्दण्डिपुरुषयोरित्यादौ विशेष्याभेदेऽपि नीलत्वघटत्वादि-रूप विशेषणान्वयि द्विवचन दर्शनात्।

प्रकृतेऽपि विशेषणान्वयि द्विवचनोपपत्तेः। न च स्वतन्त्रस्य दण्डादेः द्रव्यान्तर विशेषणत्वे मत्वर्थीयप्रत्ययो दृष्टो लोके व्यवहारसिद्धश्च यथादण्डी कुण्डलीति। तेनात्रगोगतगोत्वादि तुल्यतया चेतनाचेतनस्य द्रव्यस्य वस्तुनो ब्रह्मप्रकारतया भिन्नप्रवृत्ति निमित्तानां शब्दानामे कस्मिन्नर्थे वृत्तिरिति समानाधिकरण्येन प्रतिपादनं विरुद्धमिति

चेन्न गौरश्वोः मनुष्योदेव इति भूतसंघातरूपाणांद्रव्याणामेव देवदत्तो मनुष्यो जातः पुण्यविशेषेण यज्ञदत्तोगौर्जातः पापेन कर्मणा अन्यश्चेतनः पुण्यातिरेकेणदेवोजातः इत्यादि देवादिशरीराणां यथा चेतन प्रकारत्वेनलोक वेदयोस्सामानाधिकरण्येन निरूपणं शास्त्रसम्मतम् ।

एवञ्च जातिर्वा गुणोवा द्रव्यं वा न विवादः । कुतश्चन द्रव्यविशेषं प्रति प्रकारतया यस्य पदार्थस्य सद्भावस्तस्य तदपृथक् सिद्धस्तत्प्रकारतया तत्समानाधिकरण्येन निरूपणं युक्तियुक्तं यस्य पुनर्द्रव्यस्य पृथक् सिद्धस्यैव कदाचित् क्वचित् द्रव्यान्तर विशेषणत्वमिष्यतेतत्र मत्वर्थीय प्रत्ययः इति विशेषोऽस्त्येव । तथा च स्थावर जडात्मकस्याशेषस्य वस्तुनो ब्रह्मशरीरत्वेन तद्विशेषणतया स्वरूप सद्भाव इति तत्प्रकारी चेश्वरएव तत्तच्छब्देनाभिधीयत इति तत्समानाधिकरण्येन प्रतिपादनं युक्तियुक्तमित्यलं पल्लवितेन ।

अत्र प्रसंगत इदं विचारणीयमावश्यकमेव प्रतिभाति यत् विभिन्नप्रचलित जीवब्रह्मैकत्वादिषु वादेषु कोवादः परमार्थिकः सर्वथाश्रुति प्रमाणप्रमेयताम्भजति ? अत्र ब्रह्मजीवयोः प्रायोवाद विवादः सार्वत्रिकः प्रचलितः । सोऽहम्, तत्त्वमसि, अहं ब्रह्मास्मि, ब्रह्मविद् ब्रह्मैव भवतीति विविधकक्यानामर्थः सामान्यतयाप्रतिपाद्यते यथा तद्ब्रह्माहमेवास्मि, सोऽहमित्यस्य, यद्ब्रह्मत्वमेवासि तत्त्वमसीत्यस्य, अहमेवब्रह्मास्मि अहंब्रह्मास्मीति वाक्यस्य ब्रह्मणोज्ञाताब्रह्मैव भवतीति ब्रह्मविद् ब्रह्मैव भवतोति वाक्यस्येत्यर्थं कुर्वाणाः केचन विचारयन्ति जगतीतले, जीवो ब्रह्मैव केवल मित्यपिवाक्यं केनापि कल्पितमेव । एवमुक्त विभिन्न श्रुतिवाक्यानुसारं ब्रह्मजीवयोरैक्यं समुपस्थापयन्तो जयन्ति सर्वान् वेदान्तिन इति मन्वाना परमह्लाद मनुभवन्तो भासन्ते भुवि ।

यथाऽत्र सामान्यार्थः प्रतिपादितस्तथा सामान्य विचारमेव प्रथमं कूर्मः, यदि ब्रह्मजीवयोरैक्यं स्यात्तर्हि श्रुतिस्मृतिसूत्राणाङ्क्रमप्राप्तानां प्रमाणानामनुरोधेन जीवानां ब्रह्मणः प्रादुर्भावः प्राकट्यमुपलभते तत् सर्वङ्कथं संगतं सङ्गच्छताम् ? यथा श्रुतिः यतो वा इमानि भूतानि जायन्ते जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद्ब्रह्मेति इति वेदप्रमाणेनावधार्यंते जगज्जन्मादिकारणं ब्रह्म, जीवानांततः प्रादुर्भावो भवति, परब्रह्मैव कारणं जगच्चकार्यम्, महर्षि-

वेदव्यासो ब्रह्मसूत्रेऽपि यन्माद्यस्य यत इति सूत्रं प्रणयन् ब्रह्मजीवयोर्भेदं जगतश्च ब्रह्मणासहभेदं सुप्रतिपादयति। यस्माद् ब्रह्मणः सकाशाज्जगतः सृष्टिः स्रजनं प्रसिद्धं तत्र कार्यकारणयोरनन्यता शास्त्रसिद्धेति व्याससूत्रानुगता प्रतीयते, तदन्यत्वमारम्भण शब्दादिभ्यः इतिसूत्रेण ब्रह्मणः कार्यरूपं जगत्, पृथङ्नास्ति, अपृथक् सिद्धमेवतद् विशेषणम्। यथाकार्यं घटादेः भूषणादेश्च कारणं मृत्सुवर्णादिकमभिन्नमेव, मृतपिंडस्यघटं प्रति उपादानकारणत्वात्, आभूषणं प्रति सुवर्णस्य चापि तथैवोपादानकारणत्वात्।

एवमेवैतादृशं ब्रह्म जगद्रूपतया, जीवोब्रह्मवेति तयोरेकता न सिद्धयति किन्तु शरीरशरीरी गुणगुणी अंशांशीभाव रूपतयैव मन्यते तयोरैक्य प्रक्रिया। पिता वै जायते पुत्र इति वचनेनापि पितुरंशतयैव पुत्र उच्यते अतएव पिताजनकः पुत्रस्तु जन्य इति न तयोरभेदः शास्त्रलोक व्यवहार प्रशस्तः। तस्मादेव गुणगुणी अंशांशी भावरूपतया यथा-भेद प्रतिपादनं युक्तिप्रमाणगम्यन्तथैव ब्रह्मजीवयोरत्र भेदः प्रशस्त एव नत्वभेदः। वस्तुतो जीवः कथमपि न ब्रह्म किन्तु तदीयांश एव भिन्न सिद्धः। जीवात्मनोंऽशत्वं ब्रह्मणश्चांशीत्वमेव भेदग्राहकम्। गीताचार्येण सुस्पष्टमुद्घोषितमेव जीवस्यांशभूतत्वं स्वस्य (ब्रह्मणः) 'ममैवांशो जीवलोके जीवभूतस्सनातन' इति प्रमाणेनापि ब्रह्मणासहजीवात्मनोभेद एव प्रतिबोधितो न कथमपितयोरभेदः।

तत्रैव भगवता कृष्णेन जीवस्वरूपं परमात्मस्वरूपञ्चाशेषेण प्रोक्तमेव।

द्वाविमौ पुरुषौ लोके क्षरः चाक्षरमेव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
क्षरादप्यतीतोहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो लोकत्रयमाविश्य विभर्त्यव्ययीश्वरः। इत्यादिरूपेण।

ब्रह्मसूत्रेऽपि भगवता वेदव्यासेन, नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चेत्यादिनाब्रह्मजीवयोः सुतरामेवभेदप्रतिपादनं कृतम्। जीवात्माब्रह्मणोंऽ-

शस्सन्नपि ब्रह्मणश्शरीरमपि वर्तते तद् यथा य 'आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मानवेद यस्यात्माशरीरं य आत्मानमन्तरो यमयति' इति श्रुति प्रमाणमनुरुद्ध्य चिद्रूपिणो जीवस्य = जीवात्मनोब्रह्मशरीरत्वं प्रतिष्ठापितमेव। तथा च जीवात्मा ब्रह्मणो विशेषणत्वेन प्रतिपादितोऽत्र। यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवीनवेद यस्य पृथिवीशरीरमिति श्रुति प्रमाणेनाचिदपि ब्रह्मणश्शरीरम् ब्रह्मणोविशेषणञ्च अचिदपि बोधितम्। यथा भूतलेघट इत्यादौ सप्तम्यन्तार्थस्य प्रथमान्तार्थेन सह विशेष्यविशेषणभावः सम्बन्ध शास्त्र सिद्ध एव। अचिन्माया चिज्जीवात्मा चोभावपि ब्रह्मणश्शरीरत्वेन तत्त्वेद्वेऽचिच्चिद्रूपे माया जीवात्मानौ चेति प्रतिबोधितौ।

ब्रह्मणा सह जीवात्मनां विविधः सम्बन्धश्शक्यो वक्तुम्।
इत्थमत्र चिदचिदीश्वरश्चेति तत्त्वत्रयं प्रख्यातम्॥

त्रयाणां समुदायस्य नामैवब्रह्मेति, एतत्त्रय सहैवावतिष्ठते यतोऽचिद्रूपामाया चिद्रूपा जीवात्मानोपृथक्सिद्ध विशेषणभूता एव। मायाजीवात्मा ईश्वरश्चेतित्राणमनादित्वम्। मायाऽचिदनादिरित्यत्रापि श्रुतिः प्रमाणम् यथा—'अजामेकां लोहितशुक्लकृष्णां वह्वीं प्रजां जनयन्तीं स्वरूपां, अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति।

अत्रविषये गीतायामपि प्रमाणं दृढं विद्यते यथा—'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि' अर्थात् प्रकृतिर्मायापुरुषो—जीवात्मा द्वावप्यनादी विद्येते इति सूपपादितौ। तृतीयन्तत्त्वं परब्रह्माप्यनादि रूपमेवात्र न कश्चनापवादः। अद्वैतवादिनोमंते जीवात्मनो ब्रह्मरूपत्वेन मोक्षदशायां जीवत्वोपाधिर्नश्यतीति कृत्वा जीवात्मनो नित्यता कथं सिद्ध्येत्। एकतोब्रह्मणि जीवत्वोत्पत्तिः पुनश्च मोक्षदशायां तद्ध्वंस इति कमुच्यताम्? यथा मोक्षावस्थायां जीवत्वविनाशेऽनित्यता प्रतीयते तथा मायाया अपि नित्यता भज्यते तथा चानित्यता मिथ्यात्वं जगतः प्रतिपाद्यते। न चात्र सूपपद्यते यत् कथमद्वैतवादसिद्धान्ते केनशास्त्रप्रमाणेन मायाया जगतो मिथ्यात्वमनित्यत्वमिति? जीवश्चब्रह्मैवेति कथमङ्गीकृतः? जीवात्मानं ब्रह्म

वदन्तस्ते किं गीतार्थमपि नाङ्गीकुर्वन्ति किम् ? यदि श्रद्धया निष्पक्षतो गीतावचनं स्वीकुर्युश्चेदवश्यं कदापि न जीवात्मानं न प्रतिपादयेयुर्ब्रह्मरूपम् । कदा ब्रह्म जीवत्वं कथं भजते ? जीवात्मा च ब्रह्मरूपतामुपैति ? गीतायामेव भगवतः कृष्णस्योपदेशेनार्जुनं प्रति ब्रह्मजीवयोर्भेद एवं सिद्धो भवति । ब्रह्मेव जीवात्मनश्चाप्यनादित्वञ्च तत्र साधितमेवसम्यक् । जीवात्मानश्चानन्तो नत्वेकस्तर्हि कथं ब्रह्मैकत्वं ब्रह्मवा भवति ? अथ "नित्योनित्यानां चेतनश्चेतनानामेको वहूनां यो विदधाति कामान् तमात्मस्थं ये प्रपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इति श्रुतिवचनानुसारं ब्रह्मणो जीवात्मनश्चोभयोरपि नित्यत्वमनादित्वञ्चसुतरां प्रमाणित-मेव ।

भोक्ता भोग्यं प्रेरितारञ्चमत्वा तेन जुष्टस्ततोऽमृतत्वमेतीति ज्ञाऽज्ञौद्वावजावीशेत्यादि श्रुतिवचनानुसारञ्च तयोर्भेदोनित्यत्वमनादित्वे नैव प्रथितम् । केचनात्रजीवात्मानं प्रतिबिम्बत्वेनबोधयन्तिसिद्धान्ततो यो नहि कथमपिसुसंगच्छते नहिप्रतिबिम्बेन किमपिकार्यं सिद्धयति न तेन रूपेण जीवः किमपि कर्तुं प्रभवति । दर्पणस्थ प्रतिबिम्बञ्जलगतप्रतिबिम्बवच्च जीवात्मनः प्रतिबिम्बस्य न कापिकृतिरनुभवगम्या युक्तियुक्तं प्रामाण्यत्वेनाभिमन्यते । प्रत्युत जीवात्माबहुविधं कार्यं करोति तस्य कर्तृत्वं लोके प्रशस्तमेव । तस्माज्जीवात्मनः प्रतिबिम्बत्ववादो भ्रमात्मक एव ।

जीवात्मनां विषये गीतायां यो भेदः प्रतिबोधितस्तत्रप्रमाणमिदं वचनमेव तत्रत्यमवधार्यं मेवाऽऽग्रहं विहाय तथाहि—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥

अयं पुण्यश्लोकस्सर्वथाऽनुसन्धेय एवाद्वैतवादिभिरपि । अनेन जीवात्मनो नित्यता शाश्वतिकत्वं ( सदा सत्ताऽङ्गीकृता ) पुराणत्वमनादित्वं सर्वञ्चैतत्तथ्यमयंश्लोकः प्रमाणयति । नायं कथमपिम्रियते किन्तु शरीर वियोग मात्रं भवति । तस्मादिह ब्रह्मजीवयोर्भेदश्शाश्वतिको नित्योऽनादिश्च ।

नैतावताऽलमपितु तत्रैवेदमपिवचनं प्रमाणायोपस्थाप्यते ? 'वेदाऽविनाशिनं नित्यं य एनमजमव्ययम्' इत्यनेनजीवात्मनोऽविनाशित्वं नित्यत्वमेवप्रतिपादितम् । अपि च 'नैनं छिन्दन्ति शस्त्राणि' प्रभृति नाना वचनानि प्रमाणानि तयोर्भेदविषये नित्यत्वविषयेऽशांशिभावविषये चेत्येतदनवधार्यैव तयोरेकत्ववादः कथं पारमार्थिकश्शास्त्रसम्मतः स्वीक्रियताम् ? एतावता जीवात्मनोः नित्यत्वेऽनेकत्वे कथं ब्रह्मत्वसिद्धिः ? कालत्रयेऽपि न ब्रह्मत्वप्रतिपादनं जीवात्मनोऽशक्यमेव । तयोरेकत्ववादः सर्वथा भ्रमात्मकएव । भक्तजनाश्चापि कथमपि न ब्रह्मभावं स्वस्मिन्नाधिगम्य न च स्वीक्रियेयुः कथमपि न स्वीकृतवन्त एकत्वम् ।

श्रीमद्भागवतादिमहापुराणेषु भक्तिरहस्यमतिमहत्त्वं ख्यापयति जीवात्मनां भक्तभावदासभावसेवकादिभावविषयेषु । परमभागवतोहि सदा भगवतोनारायणस्यांशमेवात्मानं स्वीकरोति । भगवतोनारायणस्य भगवत्या जगन्मातुः लक्ष्म्याश्चचरणारविन्देषु प्रणतिपरा भूत्वा भक्तास्तदीयचरणारविन्दमकरन्दस्यानन्दानुभवं कुर्वन्त्येव येषां सम्मुखे भक्तिस्तु तुच्छैव मुक्तिरपि न याथार्थ्ये न किमपि स्थानमहत्त्वं बिभर्त्ति । भक्तजनेषु श्रेष्ठ उद्धवो भाषते गोपिकाः प्रति यत्—'आसामहो चरणरेणु जुषाम्' इत्यादि भागवतपुराणवचनं गोपिकानां चरणरेणूनां सेवनपरायणानां गुल्मलतादिमध्ये स्वीयं जन्म तद्रूपतया कामयते स उद्धवः । गुल्मलतादिषु जन्मभवेदिति चेदात्मानं धन्यं मन्यते सः ।

एवमन्यभक्तानामपि वचनं विद्यते यत्—'त्वद्भृत्यभृत्यपरिचारक' इत्यादि वचनं सबलं प्रमाणं विषयेऽस्मिन् । ज्ञानिनामग्रगण्यो महावैयाकरणः शर्वशास्त्राभिज्ञश्री हनुमान कथम्भावाभिभूतस्सन् शास्त्रसिद्धान्तानुसारं समस्तचेतनहितायनिष्पक्षं भणति यथा दासोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मण इत्यादिकम् । एवं सर्वशास्त्राभिज्ञो बलवतामपि महाबलो परमशक्तिमान् भूत्वापि स स्वस्मिन् दासभाव एवांगीकृत्यांशांशी भावश्शेषशेषीभावस्सेव्यसेवकभावइत्येव सिद्धान्ततया स्वीकरोति न तु स्वयं ब्रह्म एवं भाषते । तस्यनिखिलोऽप्याचारो जीवस्य ब्रह्मणासह भेदमेव प्रमाणयति ।

स योगिनामपि परमयोगवलसिद्धोऽपि सर्वाऽणिमादिसिद्धय साधिता हनुमता परं कदापि 'अहंब्रह्मास्मि,' 'तत्त्वमसी'त्यादि वाक्यानुसारं ब्रह्मरूपत्वमात्मनि नान्वभवत् ।

यदा बालब्रह्मचारी परमज्ञानी, लब्धसमस्तसिद्धिः, अमितशक्ति-सम्पन्नोऽपि परब्रह्मज्ञानी मारुतिरात्मानं दासमेव मनुते तर्हिसामान्य-विदुषां ब्रह्मजीवयोरैक्यधारणा कथमादरणीया ? भक्तभक्ति महिम्नोर्वर्णनं कतुं कः पारयति ? भक्तःप्रभुचरणारविन्दं सेवते तस्य फलं किं भक्तस्य ब्रह्मैक्यप्राप्तिः, ब्रह्मभवनम्, ब्रह्मत्वप्राप्तौ सत्यामनन्तानां जीवात्मनामनन्तब्रह्मसिद्धिः । इयमपि धारणा वर्तते यन्मरणोपरान्ते जीवात्मा ब्रह्म भवतिं, तथा सत्यपिनैकं ब्रह्म-स्यादपितुअनन्तब्रह्माण्येवस्युर्जीवात्मनामनन्तत्वात् । अनेकानेक-ब्रह्मत्वसिद्धिर्जातैव याहि तन्मतविरुद्धा ।

वस्तुतोऽद्वैतमार्गं सिद्धान्तेन भक्तिमार्गस्य सेव्यसेवकभावस्य प्रतिबन्धो भवति मतेऽस्मिन् भगवत आराधनं सेवनं क्षमापराधयाच-नादिकञ्च सर्वं मतेऽस्मिन् परिसमाप्तमेव, यतः परमार्थतोऽद्वैत-सिद्धान्ते शरीर विसर्गानन्तरं जीवात्माब्रह्मैव भवति, सर्वं खलु इदं ब्रह्म', 'तज्जलानि', ' नेह नानास्तिकिञ्चन' 'ऐतदात्म्यमिदं सर्वम्', 'एकः सन् बहुधाविचचार' इत्यादिश्रुतिस्मृतिवचनानुसारं शरीरशरीरी भेदप्रयुक्त सर्वंब्रह्मात्मकमेव नाब्रह्मात्मक = अब्रह्मात्मकं न किमपि । इममेवब्रह्मजीवयोर्भेदं वेदान्तदर्शनस्य भगवद्व्यास-प्रणीतस्य प्रथमं सूत्रं प्रतिपादयति सम्यक् । 'अथातोब्रह्मजिज्ञासा'-अस्यार्थः धर्मज्ञानानन्तरं ब्रह्मज्ञानाय जिज्ञासा 'इच्छा, एतेन ज्ञाता ज्ञेयः सिद्धयतस्तेन पदार्थद्वयस्य प्रतीतिर्भवति । भेदव्यपदेशात् सूत्र-मपि प्रमाणयति विज्ञानमयजीवस्य आनन्दमयब्रह्मणासह भेदकथन-मेव न त्वभेदम् ।

तन्निष्ठस्यमोक्षोपदेशात् = अर्थाद् ब्रह्मनिष्ठ जीवा-त्मनः मोक्षोपदेशः प्रोक्तः, कर्मकर्तृव्यपदेशात् इतिसूत्रेण जीवात्मनां कर्मणां कर्तृत्वमेव प्रोक्तम् । यदा जीवात्मा मोक्षदशां लभते तदा स भगवतस्समानधर्मा भवति, नतु ब्रह्म भवति ब्रह्मस्वभावं, सारूप्यं,

सायुज्यमेवलभते न तु ब्रह्मपदवीं लभते। अत्र स्वयं भगवान्शकरो रहस्यपरं तत्त्व गुह्यमेव पार्वतीमुद्दिश्य तदीय प्रश्नस्योत्तररूपतया श्रीराधाकवचमाहात्म्यप्रसंगे मुक्तेः स्वरूपंसुस्पष्टमुपदिशति तद्धि सायुज्यादिकं चतुर्धामुक्तिमेवप्रतिपादयति नतु तन्मयता तद् रूपता ब्रह्मरूपत्वेन जीवात्मनां मोक्षं प्रथयति। तद् यथा—राधाकवचेश्रीशिव उवाच—

> शृणुष्व गिरिजेतुभ्यं कवचं पूर्वं संचितम्।
> सर्वं रक्षाकरं पुण्यं सर्वहत्याहरं परम्॥
> हरिभक्ति प्रदं साक्षाद् भुक्ति मुक्ति प्रसाधनम्।
> त्रैलोक्याकर्षणं देवि! हरिसान्निध्यकारकम्॥
> सर्वत्रजयदं देवि सर्वशत्रुभयावहम्।
> सर्वेषाञ्चैव भूतानां मनोवृत्तिहरं परम्॥
> चतुर्धामुक्ति जनकं सदानन्दकरं परम्॥

इत्यमत्र परमभक्तोऽपि हरिसान्निध्यमेवलभते चतुर्धा मुक्तिजनकमिति पदेनोक्त दिशा जीवात्मनां सर्वथा सर्वकालेऽपि मुक्तावस्थायामपि न ब्रह्मत्वमुपपादितम् किन्तु ब्रह्मणः समानधर्मत्वं सायुज्यत्वादिकमेव प्रमाणितम्। अतएव स्वयं गीतायामपि प्रोक्तं भगवताश्रीकृष्णेन—

> इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
> सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति ते॥

सृष्टिकाले महालयेपि च सर्वदा जीवात्मनां ब्रह्मणश्च भेद एव प्रमाणित न त्वभेद इति।

'भोगमात्र साम्यलिंगाच्च', 'जगद्व्यापारवर्ज्जं' 'प्रकरणादसन्निहितत्वाच्चे'त्यादि सूत्रैरत्र मोक्षदशायामपि ब्रह्मजीवयोर्भेद एव ज्ञापितस्तत्रैव मोक्षस्वरूपत्वञ्च ज्ञापितम्। जीवात्मा अंश एव ब्रह्मणः ब्रह्मचांशी। अत्रेयं शंकाजायते अंशे ये दोषगुणास्ते अंशिन्यपि प्राप्तास्युरितिपरन्न स्तेभवन्ति दोषगुणा जीवात्मनो ब्रह्मणि, यथा शरीरगतदोषाः काणत्ववधिरत्वादिनं जीवात्मनि-सम्भवन्ति यतो-

जीवात्मा स्वयं प्रकाशस्वरूपोऽजरोऽमर इति तथैव ब्रह्मणश्शरीरभूतस्यजीवात्मनो दोषगुणा आत्मनि ब्रह्मणि न जायन्ते कथमपि। यथाऽग्निगतदोषगुणा जलेनागन्तुं प्रभवन्ति जलस्य दोषगुणा नाग्नौ तथैव जीवात्मनां दोषगुणाः कथमपि ब्रह्मणि नायान्ति।

जगति नाना जीवास्तेषु परस्परं भेदावगएव भवति, ये ब्रह्मजीवविषयेऽभेदमवगच्छन्ति तत्त्वमसीति वाक्ये लक्षणया तद्धि परमार्थतश्शास्त्रविरुद्धमेव प्रतिपादयन्ति। यतोऽत्रश्रुतिरपि वदति यत्— 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति, अनया तत्त्वंपदार्थयोर्विचारणायां तत्र मुख्यार्थवाधोऽसम्भव एव प्रतीयते तेन वाधां विना तात्पर्यानुपपत्तिं विना च तत्त्व मसीति वाक्ये लक्षणा न समीचीना। ब्रह्मजीवात्मनोरेकतावादिमते तयोर्व्याप्यव्यापकसम्बन्धो यः शास्त्रसम्मतः सोऽपि न सम्पद्यते। यदा ब्रह्मव्यतिरिक्तमद्वैतमतेन किमपि सिद्धयति तर्हि न वा तदरिक्त वस्तु किमपि स्वीकुर्वन्ति तर्हि ब्रह्म व्यापकं कथं भवति ? यदितद्व्यापकमुच्यते तदा तद् व्याप्यं किम् ? नाद्वैतमते जीवो जगद् वा ब्रह्मातिरिक्तं मन्यते। यस्मिन् व्यापकता भवति सावश्यं यत्किञ्चिन्निष्ठव्याप्यतानिरूपितैव भवति। यतो व्याप्यो व्यापकश्चोभावपि शब्दौ तदर्थौ सम्बन्धिकौ भवतः न तु कथमप्यसम्बन्धिकौ स्याताम्।

अतोऽद्वैतवादिमतेऽपि ब्रह्मणि व्यापकत्वसिद्ध्यै तदतिरिक्तः कश्चन व्याप्य पदार्थोऽवश्यमङ्गीकार्य एव। ब्रह्मातिरिक्तश्च कः पदार्थः सम्भवः। जीवात्मानो माया चैवातिरिक्तत्वेन स्वीकर्तव्या एव। जीवात्मनां ब्रह्मणो मायायाश्चभेदः सदास्थिरः सनातन एव। 'मुमुक्षुर्वै ब्रह्मोपासीत' अनया श्रुत्याचापि निश्चितमत्रोपास्यस्योपासकस्य च पृथक् सत्ता प्रमाणितैव। मोक्षं कामयमानोऽवश्यं कश्चन ब्रह्मातिरिक्त एव भवति, न तु स्वयं ब्रह्मैव मुमुक्षुस्तस्य स्वयंमुक्तत्वाच्च ब्रह्मणोमुक्तस्य कावश्यकता कस्यचिदुपासनायाः ? अद्वैतवादिमते चब्रह्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वेन सत्तायाः सर्वथाऽभाव एव तर्हिव्यापकनिष्ठाया व्यापकता तन्निरूपिताव्याप्यताऽवश्यमाश्रयमाकांक्षते तच्चास्त्येव न, सर्वस्यापिमिथ्यात्वात्।

अत्रेदमपि प्रष्टुं शक्यमद्वैतवादिनां पुरस्तात् कथंमिथ्यात्वज्ञानं-ब्रह्मातिरिक्त वस्तुजातानाम् यदि तैरद्वैतवादिभिरुच्यते यद् वेदादि शास्त्रमेव प्रमाणं, तद्द्वारैव मिथ्यात्वज्ञानमिति, तदपि न समीचीनं यतस्तन्मतेतु वेदादि शास्त्रस्य ब्रह्मातिरिक्तसिद्धत्वादेव तेषामपि मिथ्यात्वमेव सिद्धयति तर्हि मिथ्याभूतैर्वेदादिशास्त्रैस्तेषामद्वैतवादिनां ज्ञानमपि मिथ्यैव । भवन्मते शास्त्रोपदेशक गुरवोऽपि मिथ्या:, मन्त्रोप-देशकागुरवोऽपि मिथ्या:, तेषाम्मतमपिमिथ्या, यद्वस्तुसत्यं तन्मिथ्या-त्वेन प्रतिपाद्यते यैस्तेषामिदं महदज्ञानमेव सर्वं खल्वज्ञानविलसितमेव प्रतिष्ठते । यैश्चोपाधिकृता जीवा इति स्वीकुर्वन्ति । उपाधौ दूरीभूते· सति जीवो ब्रह्मैव, परमत्रविचारत एतदेव सत्यं यदुपाधिरपिनित्य एव । स चोपाधिर्यदि ब्रह्मणि स्त्रीकृतस्तर्हि तदुपाधेर्दूरीकर्ता कः कारणत्वेनाभिमत: ?

एतन्मते तु ब्रह्म उपाधे: (मायाया:) बन्धने बद्धमेवसिद्धमेव भवेत् । यदि प्रोच्यते सा माया ब्रह्मण एकदेशे विद्यमाना तर्हि ब्रह्म किं सखण्डम् जातम् ? सावयवत्वात् ? अनित्यत्वापत्ति दोषोऽपि प्राप्त: । ब्रह्म तु वस्तुतोऽखण्डमेव, तस्माद ब्रह्मणि कथमपि नोपाधिर्वक्तुं शक्यते । स उपाधिधर्मो जीवात्मनः, यतो वेदे ब्रह्म तु निर्गुणं, निरञ्जनंमुपा-धिरहितं वर्णितम् । कदाचिदत्र तातस्य कूपोऽयमिति ब्रुवाण: 'क्षारं जलं कापुरुषा वदन्ति' इति न्यायानुरोधत: यद्याग्रहएव मन्यते तर्हि मन्यतां नाम परमद्वैतमते चेतनस्य पृथक्स्थिति: ब्रह्मण: = ब्रह्माति-रिक्ततया न मन्यते, तदोपाधियुक्तं ब्रह्माऽभवत् स उपाधिस्ततश्च्युत: क्व यास्यतीति प्रश्न: ? फलतो ब्रह्मण्येव स्यास्यति, तदाप्यभेद-साधनत्वेऽपि भेद एव स्थिरीभूत: सिद्ध्यति । यत उपाधि: ब्रह्म च पृथक् पृथगेव मन्येते । नैकरूपतया वक्तुं शक्येते ।

उपाधिश्चजड़भूत: ब्रह्म च चेतनरूपम् । जड़चेतनयो: कथम-भेद: ? ये च जीवब्रह्ममायेति त्रयाणामभेदं प्रतिपादयन्ति ते कथं शास्त्रविचारका इति मन्यन्ताम् ? श्रुति: ब्रह्मजोवमायाभेदमेव प्रतिपादयति । तद् यथा 'प्रधान क्षेत्रज्ञपतिर्गुणेश:' इति श्रुत्यनुरोधेन मायाप्रधानपदप्रतिपाद्या तस्या मायाया: क्षेत्रज्ञो जीव: पति: गुणानां-स्वामी प्रोक्त: । वेदान्तसूत्रेणापि भेद एव प्रतिपाद्यते यथा 'अधिकं-

तु भेदनिर्देशात्' इति अर्थात् शास्त्रेषु जीवब्रह्मणोर्भेद एव सिद्धान्ततः प्रोक्तः तस्मादत्र जीवाऽपेक्षया ब्रह्माण्यतीव महत्त्वं श्रेष्ठत्वञ्चनिर्धारितमेव, वस्तुतो जीवस्त्रिकालेऽपि न कथमपि ब्रह्मभवति, अद्वैतवादिना बोध्यते यत् जीवस्तु चिदाभास इति अन्ते च नाशो भवति जीवस्येति-तद्धि कथमङ्गीक्रियताम् ?

यतो हि–जीवस्याजरामरत्वं के न स्वीकुर्वन्ति ? जीवस्यानित्यताविषये पूर्वमेव प्रतिपादितमेवः अत्र विरोधोऽप्युपपद्येत यथा-जीवो यदि ब्रह्म भवति = ब्रह्मत्वं प्राप्नोति चेत्तर्हिजीवानां कर्माणि कुत्र भवन्ति ? यद्युच्यतेऽत्र ब्रह्मणि कर्माणिजीवानां तिष्ठन्तितदा अर्थात् ब्रह्मणि कर्माणि लीनानीति तर्हि-ब्रह्मापि कर्मी प्रवृत्तम् ब्रह्म कर्मी जातमिति, किन्तु वेदे ब्रह्म निष्कर्मी बोधितं वर्तते, केवलं जीवा एव कर्मिणः बोधिताश्शास्त्रेषु न तु कथमपि ब्रह्म । एतदाशयमेव भगवान् वेदव्यासः स्वसूत्रे लिखति सुस्पष्टम् यत् "वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयति' 'इतिसूत्रेण ज्ञायते यदीश्वरोऽपि जीवानां कर्म साकांक्षः अर्थात् ईश्वरो जीवानां कर्मापेक्षी भवति, यदि जीवा ब्रह्मणि लीना भवन्ति तदापि तेषां कर्माणि विद्यमानान्येव भवन्ति, यतो जीवानां सत्ता अनादिर्वर्तते तस्मादेव ब्रह्मसदानिष्कर्मी सृष्टि समये परमात्मा जीवापेक्षया परमार्थतो निष्कर्मी सन् सृष्टिक्रमे जीवेभ्यो दयया करणकलेवरं प्रयच्छति स्वयञ्च कर्मभ्यः पृथक्स्थितस्तर्हि जीवात्मा ब्रह्म कथं मन्यताम् ?

शास्त्रेषु जीवानां मोक्षस्वरूपं चतुर्धा प्रतिपादितं विद्यते सालोक्यं, सामीप्यं' सारूप्यं, सायुज्यञ्चेति । एतेनापि ज्ञायते यद् जीवब्रह्मणोर्भेदस्सदास्थिरः । मोक्षप्राप्तावपि मोक्षो नाम माया बन्धनतो निवृत्तिरिति मायाबन्धननिवृत्तो मुक्तो वा पृथगेवावतिष्ठते, यदि मायाबन्धन मुक्तः मायासंसर्गात् पृथग्भूतः असंपृक्त एव मन्यते, यदि बन्धन निवृत्तोप्येक एव स्यात्तर्हि यश्च बन्धनग्रस्तः बद्धोवा स्वीक्रियते तर्हि ब्रह्मापि बन्धने बद्धमेव स्यात् परं तद् ब्रह्मतु सदा शुद्धं मुक्तमानन्दं-सर्वज्ञं निरञ्जनस्वरूपमेव मन्यते तेन ब्रह्मोपरिबन्धनं न कथमपि साधूपपद्यते सिद्धान्ततः ।

यदि ब्रह्मैव मायया बद्धन्तर्हितदपरं किमप्यन्यद ब्रह्मबन्धन मोचकं कल्प्यते किम् ? यश्चेश्वरः स्वयं बद्धस्तर्हि तन्मोचक कोऽपर ईश्वरोन्यः मन्यताम् ? परमार्थतस्तु ब्रह्म कथमपि न मायाबद्धं-मन्यते किन्तु मायाबद्धान् जीवान् मोचर्यात सः, यतो जीवात्मनां बन्धनं भवति, ते जीवात्मानो बन्धनान्मुक्ताः सन्तोऽपि स्व स्वेरूपेणावतिष्ठन्ति न तु ब्रह्म भवन्ति । यतो जीवात्मनां नाशो न भवति तेऽप्यविनाशिन ईश्वरांशाः । अद्वैतवादिनो भाषन्ते यन्मुक्तावस्थायां जीवानां नाशो भवतीति । तन्मोथ्यैव, यतो मुक्तिपदार्थं विवेचने जीवात्मनां नाश-सम्भवो न कथमप्युपपद्यते । भगवतोश्रुतिरपि प्रतिपादयति यत् 'एषोऽणुरात्मा' "इति अर्थादयं जीवात्मा अणुः 'अविनाशी, यश्चाणु-र्भवतिसोऽणुपदार्थस्तथैव तिष्ठति । अणुस्वरूपजीवः सदाहृदयप्रदेशे विराजते । तथा सत्यपि स जीवः एकस्मिन् काले नखशिखापाददेहेषु यत्सुखं दुःखम्वा सर्वमनुभवति तद् ज्ञानं भवत्येव जोवात्मनः, जीवात्मा प्रमाणरूपो ज्ञानवान् वर्तते, तेनैव तद् ज्ञानस्याज्ञानद्वारा संकोचवशेन मायामोहितो जीवात्मा बन्धनतामुपैति । यथोक्तमेव गीतायामेव, 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः इति' 'अतो जीवात्मा तदज्ञानमोहितः सन् दुःखं भुंक्ते । ये च वदन्ति ब्रह्मैव स्वय-मेव जीवो जात' इति तत्कथमपि न शास्त्रसम्मतं यतः प्रत्युत शास्त्र-विरुद्धमेव ।

भगवान् वेदव्यासो वेदान्तसूत्रे प्रमाणं प्रस्तौति विषयेऽस्मि-यथा उभयेऽपि हि भेदेनैनमधीयते,, अर्थात् काण्वमाध्यन्दिनीय-शाखयो जीवात्म-परमात्मनोर्भेदतया प्रतिपादनमर्थतः कृत एव विद्यते ।

एवमनेकश्रुतयो जीवात्मपरमात्मभेदप्रतिपादिकाः विविधानि सूत्राणि चापि सन्ति । जीवात्माऽल्पज्ञः, परमात्मा सर्वज्ञः । यद्यत्राद्वैत वादिनः प्रष्टव्यास्युर्यत् ब्रह्मजीवयोरभेदे ब्रह्मणः कथं सर्वज्ञत्वं जीवस्यैव ब्रह्मरूपत्वात् । इदमप्यत्रविरुद्धमापद्यतेऽद्वैतमतेयद् ब्रह्मयदासर्वज्ञं तदा यं ज्ञात्वा तत्सर्वज्ञं मन्यते तर्हि द्वितीयज्ञानस्य विषयो जीव एवाङ्गी कर्तव्यः, यतो मिथ्यावादतो ब्रह्मणोऽतिरिक्तश्चेतनो न कोऽप्यन्यः इति वचनमेवनिर्मूलम् यत एकतस्तु स ईश्वरः सर्वज्ञः इत्युच्यत एव ईश्वरा-

तिरिक्तो चेतनो न कश्चनान्य इति विषयो विसम्वादापन्नो विरुद्ध एव।

अत्र कीदृशो भ्रम इति ज्ञातव्यो यत् जीवात्मानं मायाञ्च विज्ञायैव यदा ब्रह्मसर्वंज्ञत्वेनाभिधीयत इति। प्रलयकालेऽपि जीवो माया द्वावपि पदार्थौ तिष्ठत इति सर्वं सत् सिद्धान्तमेवापलपन्ति तेऽद्वैतवादिनः। नारायण एव ब्रह्मपदाभिधेयः यत्र सर्वे पदार्था लीना भवन्ति, पुनश्च कल्पादौ नारायणतएवाविर्भवन्ति। तत्र ब्रह्मणि जीवात्मनां लीनानां कथमपि नाशो न वक्तुं शक्यते। यथाभूमौ निक्षिप्त गर्ते सुसंस्थापितं घनं न नष्टं भवति किन्तु सुरक्षितमेव। न वा भूमौ समाच्छादितधनेन प्रतिष्ठापितधनेन कश्चनापि व्यवहारः प्रवर्तते तथैव भगवतिलीनेष्वपि जीवेषु न तेषां स्वरूपं नष्टं भवति नवा लोक व्यवहारः सिद्ध्यति तैः।

सद्वादिमतानुसारञ्च कोऽपि पदार्थो न नश्यति किन्तु सूक्ष्मावस्थायां लयो भवति। अर्थात् क्रमशः स्व स्व कारणे लीनतामुपगच्छन् सर्वोऽपि क्रमश उत्तरोत्तरं नारायणे परब्रह्मण्येवलीयते। एवं प्रलयकालेऽपि न नष्टो भवति। केवलं जीवात्मानः प्रलय काले प्रकृतिशरीर विरहिता भवन्ति। तस्मिन् समये जीवाः प्राकृतिविग्रहाभावादेवाशरीराः शरीरसम्बन्धिज्ञानसंकुचिताः यदा भवन्ति तथैव स्थितिरेव कारणावस्था मन्यते इयमेव सूक्ष्मावस्थाकथ्यते। यदा खलु कर्मानुसारं प्रकृतिसम्बन्धिशरीराणि जीवात्मानो लभन्ते तदा तत्तच्छरीरजन्यज्ञानमपि भवति। इयमेव तेषां स्थूलावस्था प्रकृतेः परिणामः स्वाभाविकोभवत्येव परंजीवात्मनः परिणामो नैव भवति कदाचन। जीवात्मा अणुरस्ति, देवमनुष्यादिः सर्वोऽपि प्रकृतिपरिणामएव कर्मकृत् सर्वः स्वीकृतः। यथा ब्राह्मणोऽहं क्षत्रियोहमित्यादि व्यवहारः कथमपि जीवात्मनि न सम्भवः किन्तु प्रकृतिसम्बन्धिशरीरसम्बन्धेनैव तत्तन्नामरूपादिना तथा व्यवहारो भवति। अत्रैव ब्राह्मणोऽहमित्यनेन विशेष्यविशेषणभाव सम्बन्धो यथा शरीरशरीरिणोस्तथैव ब्रह्मजीवरपि, जीवात्मानो माया तत्त्वद्वयमपि ब्रह्मणो विशेषणतयैवाभिधीयते।

कार्यावस्थायां स्थूलचेतनाचेतनविशिष्टं ब्रह्मैव जगत् पदेन व्यवहृतम्भवति। कारणावस्थायां सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्मकारण

ब्रह्मविहितम्भवति। अपृथक् सिद्धविशेषणं विशेष्यब्रह्म श्रुतिस्मृति सूत्रादिप्रमाणैरेव सिद्धं नियतञ्चसिद्धान्ततः। अयमेवानादिसम्प्रदायस्य पारमार्थिक परमवैदिक सिद्धान्तः वेदान्तसिद्धान्तः पौराणिकश्च। श्रीवैष्णवसम्प्रदाय एवानादि सम्प्रदायः। ये च निर्विशेषं ज्ञान-मात्रमेव ब्रह्म संगिरन्ते तेऽवश्यमेवकथञ्चिदाग्रहग्रहिला एव सन्तोऽ पारमार्थिकत्वमेव प्रतिपादयन्ति नतु पारमार्थिकत्वम्। यतोनिर्वि-शेषज्ञानमात्रब्रह्मणः सकाशात् (ब्रह्मणा) वा सविशेष जगतः स्रजन स्याशक्यत्वात्। यद्यत्रप्रोच्यते मायामङ्गीकृत्यतथोपपादनं सविशेषजगत इति तन्नशोभनं यतोयदि निर्विशेषं ब्रह्म मायां जानाति चेत्तदानिर्विशेष ज्ञान मात्रं ब्रह्मन सिद्धयति तस्य सविशेषत्वसिद्धेः। यद्युच्यतेतन्न मायामवगच्छति, तदा ब्रह्मणोऽज्ञत्वापत्तिदोषो दुर्निवारः। निर्विशेष ज्ञानमात्रब्रह्मणः स्वीकारे पूर्वापरा नैके दोषाः प्रभवन्ति, केचन ब्रुवते ब्रह्मनिर्गुणं निष्क्रियमिति वेदे लिखितं दृश्यते इति तदपि स्थवीयमेव अर्थान्न समीचीनम्। यतः ब्रह्मणि प्रकृतिगुणा निषिद्धाः प्रकृतिक्रिया-णाञ्चात्र निषेधः तत्र निर्गुणशब्दोहेय गुणानामेव निषेधमुपस्थापयति। तत्र ब्रह्मण्यनवधिकातिशयसौशील्य सौन्दर्यं सत्यसंकल्पदयादाक्षि-ण्यातिशयवात्सल्यादि प्रभृति गुणान् न निषेधति र्निर्गुणशब्दः। एते सत्य संकल्पादि प्रभृतयो गुणाः सदा ब्रह्मणि तिष्ठन्ति, तस्मादेव ब्रह्म-निर्गुणं निर्विशेषं कथमुच्यताम्? प्राकृतिक सत्त्वरजस्तमसामभावादेव निर्गुण निर्विशेषत्वस्य तस्मिन् प्रतिपादनात्।

अपि चात्रान्यविधोऽपि विमर्शो द्रष्टव्यः तथाहि अद्वैत मतेऽद्वैतमेव ब्रह्म स्वीकृतमस्ति, तदा तदद्वैत ब्रह्मणि कस्याश्चित्प्रमाया आवश्य-कता, यदा प्रमाणोपस्थानं ब्रह्मणि प्रस्तुतं तदा खलु तस्मिन् प्रमेयता-जन्यद्वैतापत्तिरागतैव तथा सति नाद्वैतन्निर्विशेषं ब्रह्मावतिष्ठते। तथा चाध्यारोपापवादन्यायेन निर्विशेष ज्ञान मात्रब्रह्मणि जगदुत्पत्तिः प्रलय इति स्वीकुर्वन्त्यद्वैतवादिन यद्धि कथमपि न सामञ्जस्यं भजते।

अध्यारोपवादं सर्पाध्यारोपं रज्जौ यथा तथैवात्र समर्थयन्ति यन्न साधु सम्पद्यते। अध्यारोपश्च वस्तुन्यवस्तु बुद्धिरेव, अनेन दृष्टान्ते नापिनिर्विशेष ब्रह्म सिद्धिः कथं मन्यताम्? यतोरज्जुसर्प दृष्टान्तो

बाधितः यतोऽत्राधिष्ठानातिरेकेणरज्जुत्व प्रकाशेनैव तत्र सर्पत्वंबाधितमेव। किञ्च सविशेषदृष्टान्तेन निर्विशेषब्रह्मणः कथं सिद्धिः स्यात्? अद्वैतमते ब्रह्मातिरिक्तो दृष्टान्तः कश्चिन्नास्त्येव तर्हि पुनरज्जुसर्परूप भ्रान्तियुक्त दृष्टान्तस्य को द्रष्टा भविष्यति? ब्रह्मद्रष्टा प्रोच्यते चेत्तदा न संगच्छते निर्विशेष ज्ञानमात्र ब्रह्मणोद्रष्टृत्वस्याशक्यत्वात्। तत्र च ब्रह्मणि भ्रान्तिरपि नावस्थातुं शक्नोति तस्य प्रकाशस्वरूपत्वात्। प्रकाशस्वरूपत्वादेव सविशेष ब्रह्मत्वसिद्धेः। सविशेष ब्रह्मणो मिथ्यात्व कथनमपि न संगच्छते इति विविधविचाराचारप्रसंगेऽद्वैतवाद सिद्धान्तश्शून्यत्ववादमुपैति।

यतोऽत्राद्वैतवादे निर्विशेष ब्रह्म भिन्नपदार्थमात्रं मिथ्यैव भाषते। शिष्यते च निर्विशेषं ब्रह्मतस्मिन्नपि न कोऽपि धर्म विशेषः स्वीक्रियते तस्मात् तस्य शून्यत्वमेवसिद्धयति। यदि ब्रह्मणि कश्चनधर्मोऽद्वैत वादिना स्वीक्रियते चेत्तर्हि तदब्रह्म सविशेषमेव न तु निर्विशेषम्। इत्थमत्र निर्विशेषज्ञानमात्रं ब्रह्मेति स्वीकारेऽनेके दोषाः प्रादुर्भवंति। यद्यप्यद्वैतवादिभिर्निर्विशेष ज्ञान मात्र ब्रह्म स्वीक्रियते परन्तु पूजनाराधनादिकं सविशेष ब्रह्मणः क्रियत एव पञ्चदेवस्यापि च।

तथापि निर्विशेषं ब्रह्मैव प्रतिपाद्यते। अतोऽत्र कथने प्रवचनेव्यवहारे च नैकता सिद्धयति। यद्युच्यते श्रुतिरेव निर्विशेषज्ञानमात्रं ब्रह्मप्रतिपादयति=समर्थयति 'इति न सम्यक् यतश्श्रुतिरपि सविशेषमेव ब्रह्म निरूपयति। यथाश्रुतिप्रमाणमत्र प्रदर्श्यंते—"प्रजा-पतिरकामयतप्रजाः सृजेयेति,… पतिं विश्वस्य आत्मेश्वरं शाश्वतं शिवमच्युतम्=तमीश्वराणां परमं च दैवतम्,…सर्वस्यवशी सर्वस्येशानः… …यः सर्वज्ञः सर्वविद्…यस्य ज्ञानमयं तपः……सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते…स विश्वपात् विश्वविदात्मयोनिज्ञः……कालकालो गुणी सर्वविद्यः………प्रधानक्षेत्रज्ञ पतिर्गुणेशः…… संसारमोक्षस्थितिबन्धहेतुः…… इत्यादि श्रुतिस्मृतिसूत्राणामनेकप्रमाणस्य विद्यमानत्वात् सविशेषब्रह्मसिद्धिर्निर्बाधा।

एतेन विशिष्टाद्वैत सिद्धान्तेविशिष्टाद्वैत ब्रह्मसिद्धिः विभिन्न पूर्वोक्त प्रमाणैरपि। यत्र कुत्रापि श्रुतिषु निर्गुणब्रह्मप्रतिपादनं दृश्यते,

तन्न निर्गुणशब्दस्यार्थो न निर्गुण=निर्विशेषब्रह्मेति, परन्तु तत्र सर्वत्रप्राकृत गुण निषधे श्रुतिवचनानि तात्पर्यमवधारयन्ति। यच्चाद्वैतवादी जीवब्रह्मणोरैक्यमभेदं प्रतिपादयति तत्र च श्रुतिप्रमाणमुपस्थापयति—यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति "इति अस्याश्श्रुतरेथंविचारे सति जीवे योजीवभावस्तं दूरीकृत्यापि नैव जीवब्रह्मणी कथमप्येकत्वमापद्यंते परन्तत्र श्रुतौ तादृगेव भवतीति प्रोक्तम् तेन जीवस्य ब्रह्म सादृश्यं तुल्यत्वमेव भाषितम्। न तु जीवो ब्रह्मैवेति तात्पर्यं भवति। यथा ब्रह्मविद् ब्रह्मैव भवति। तयापिश्रुत्या जीवस्य ब्रह्मतुल्यतैव प्रतिपादिता—शरीरशरीरिणो नैकत्व कथमपि। यदि शरीरशरीरिणोरेकत्वं स्वीक्रियेच्चेत्तदा शरीरमेवात्मा स्वीक्रियतां पृथगात्मा शरीरात्कथमङ्गी क्रियताम्? घटाकाश मठाकाशवत् सर्वोऽपि दृष्टान्तो विरुद्धमापद्यते तत्राद्वैतवादिसिद्धान्ते। यतोहि जीवानां जीवत्वं विनश्यद् ब्रह्मत्वभावापन्नत्वञ्चेत् तर्हि गीतायाँ गीताचार्यो भगवान्कृष्णो नैकत्रार्जुनं प्रतिजीवानां नित्यतां प्रातिपाद्य सम्यगुपदिष्टवान्—यथा 'अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिण:' प्रभृति बहूनि ववचनानि व्यर्थानि विरुद्धानि स्यु: कृष्णस्य। वेदान्तसूत्रेऽपि कर्ताशास्त्रार्थवत्वात् इति सम्यगभिहितं यत् शास्त्रीयं यत्कर्मयागादिरूपं तथा ब्रह्मोपासनादिकञ्च सर्वस्यापि कर्ता फलभोक्ता च स्वर्गादिमोक्षादिसमग्रस्य जीव एव।

जोवस्य लक्षणमपि कृष्ण यजुर्वेदीयश्वेताश्वतरोपनिषदि प्रथितमेव यथा—"बालाग्रशतभागस्य शतधाकल्पितस्य च। भागो जीव स विज्ञेय: स चानन्त्यायकल्पते।' इति श्रुतिप्रमाणेन जीवात्मा सूक्ष्मो नित्यश्च। एवं विध जीवस्य नित्यतायां सत्यां न जानेकथमद्वैतवादेतथाग्रहश्श्रीशंकराचार्यानुयायिनाम्। जीवात्माब्रह्मणि कथमेकी भूतोलीयताम्? मतेऽस्मिन् जीवस्य ब्रह्मणिलयो नामैक्यमेव मन्यते। यद्धिन कथमपि परमार्थतयाऽङ्गीकार्यं भवति। मोक्षोभिन्न:, ब्रह्म च ततोभिन्नम्, यदि मोक्षो ब्रह्मचैकमेवस्यात्तर्हि गीतावचनमिदं कथं संगच्छताम् यद् गत्वा न निवर्तन्ते तद्धाम परमं ममेति। विचार्य्यंतामत्र वस्तु यदि किमपिभवतिचेत्तदेव निवर्तनं भवति यदा तु वस्तु न भवति तर्हि निवृत्ति: कस्य भवेत्?

अर्थात् जीवो ब्रह्म जातं मिलितं तर्हि न स पुनरावर्तते। 'न स पुनरावर्तते विशेषतो मद्धाम प्राप्य' इति वदति भगवान् कृष्णः। एवेनैव ज्ञातव्यमिदं यत् कथमपि मोक्षपदार्थो न ब्रह्मरूपः किन्तु भिन्न एव, मोक्षे जीवो ब्रह्मणः साम्यतां प्राप्नोति, साम्यता च सान्निध्यतः सामीप्यतः सायुज्यतः सार्ष्टितश्चेति नैकविधा।

श्रुतिरप्यत्र प्रमाणम् यथा विद्वान् पुण्यपापेविधूय निरञ्जनः परम् साम्यमुपैति, एतेन मोक्षदशायामपि जीवानां ब्रह्मणासह भेदोभवत्येव सिद्ध एव नित्य एव तयोर्भेदः। तमेव विदित्वातिमृत्युमेतिनान्यः पन्था विद्यतेऽयनाय, अविद्ययामृत्युं तोर्त्वा विद्ययाऽमृतत्वमश्नुते। ब्रह्मविदाप्नोति परम् इत्यादि नानाश्रुतिस्मृतिसूत्रप्रमाणैः मोक्षदशायां मुमुक्षुदशायां बद्धदशायां तथा नित्यदशायाञ्च जीवानां भेदएवावगम्यते। यथा प्रति जीवं परस्परं भिन्नाः अर्थात् जीवाः परस्परं भिन्ना भवन्त्येव तथैव परमात्मना सहापि जीवात्मानोभिन्ना एव=परमात्मनो भिन्ना एव जीवात्मानः।

अद्वैतवादिनः सजातीय-विजातीय स्वगतभेदशून्यं ब्रह्मणः स्वरूपं वर्णयन्ति परन्तु ब्रह्मणि वस्तुतः सजातीय विजातीय-स्वगत भेदा सदा भवन्ति, वेद श्रुतिरेव तत्र ब्रह्मणि सजातीय-विजातीय स्वगतभेदानेव प्रतिपादयति यथा सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयमिति श्रुतिभ्यां सजातीयादि भेदविशिष्टमेव ब्रह्म सिद्ध्यति। भगवान् श्रीकृष्णो गीतायामपि सुस्पष्टमेव ब्रह्मजीवयोर्भेदं प्रोवाच।

यथा—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥

क्षरादप्यतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोकेवेदे च प्रथितः पुरुषोत्तमः॥

सर्वस्य चाहं हृदि सन्निष्टो
मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद् वेदविदेव चाहम्॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।।

प्रभृति विभिन्नवचनैः जीवानामन्तर्यामीश्वरो जीवानां दिव्य-देहानां परमात्मा प्राणभूतः आत्मस्वरूपोमन्यत एव । बृहदारण्यकोपनिषद्यपि प्रोक्तं यथा तथाऽत्र गीतायामपि, 'मन्मनाभव मद् भक्तो मद्याजी मां नमस्कुरु' इत्यादि वचनैरनन्यभक्तिद्वारा जीवात्मानः परमात्मानं प्राप्नुवन्तीति प्रतिपादितम् । एतेन मायावादस्य मिथ्यात्वं सर्वथा निरस्तमेव भवत्यद्वैतवादसिद्धान्तेन यत्प्रतिपादितम् ।

अद्वैतवादिनामेतदपि कथनं कथमपि न शोभते यत् 'दशमस्त्वमसि' इति वचनेन यत्तात्पर्यं तेऽवधारयन्ति तथा 'तत्त्वमसि' 'अहं ब्रह्मास्मीति' वचनप्रमाणेनापि ते प्रतिपादयन्ति यत् प्रोक्त श्रुतिद्वयवाक्य-जन्यज्ञानेन जीवो ब्रह्मैव भवतीति सिद्धान्तितम् । यदि जीवो ब्रह्मत्वं प्रतिपद्यतां चेत् तद्दशमपुरुष इव भ्रमात् प्रतिपाद्यतयापि नैव जीवोब्रह्मभवति बा ब्रह्मत्वं प्रतिपद्यते । दृढ प्रतिज्ञयापि न तत्साध्यं भवति पादोऽस्य विश्वाभूतांनि त्रिपादस्यामृतंदिवि "इत्यादि यजुर्वेदीये मन्त्रेऽपि ब्रह्मण एकदेशीजीवः प्रोक्तस्तस्माज्जीवो ब्रह्मणोंऽशभूत एव न तु ब्रह्मरूपः, अद्वैतवादप्रवंतकाचार्यै जीवो ब्रह्मणोऽशत्वंन्यषेधि परं ब्रह्मसूत्रे तु अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्व मधीयत एके, इतिसूत्रभाष्ये जीवो ब्रह्मणोंऽश एव समर्थितः ।

गीतायामपि निर्भ्रान्तमेव सिद्धान्तं प्रतिपादयति गीताचार्यः स्वयं भगवान् कृष्णो यत्—

ममैवांशो जीवलोके जीवभूतः सनातनः । इति ।

एतद्धि वचनं जीवस्यांशत्वं जीवभूतत्वञ्च सनातनमेव निरूप्य गीताचार्यः परमार्थं प्रकाशितवान् येन न कोऽपिजीवब्रह्मोर्विषये विवादोऽद्वैतवासनामधिकृत्य । यदा खलु जीवात्मा सनातन एवांशभूतो ब्रह्मणस्तर्हि तमेव घटाकाशमठाकाशवन्निरूपयतां कीदृशो मोहः इति सुधियः स्वयमेव विभावयन्तु ।

'तमेव शरणं गच्छ सर्वभावेन भारत!' इति वचनेनापितयोर्भेद एव प्रतिपादितः। यदि जोवो ब्रह्मैवस्यात्तर्हितस्य ब्रह्मत्वसिद्धि कृते तदुपदेशश्चस्यात् तदा तमेवशरणं गच्छ, मामेवैष्यसि मद्याजी मां नमस्कुरु, भक्त्यालभ्यस्त्वनन्यया, मच्चित्तःसर्वदुर्गाणि (वृजिनं संतरिष्यति) मत्प्रसादात्तरिष्यसि, प्रभृतिवचनविशिष्टैः किं नोक्तं? सर्वमपि तथ्यं संप्रकाशितम् जीवब्रह्मणोर्भेदविषये सारल्येनापि। यः कश्चनापि यं कमपि शरणत्वेनोपासनायां प्रवृत्तो भवति सच शरणागत स्वयं शरण्यो न भवति प्रत्युत शरणागतिर्हिस्वोत्कृष्टस्यैव भवति, न समानस्य नवा स्वस्य कथमपि। शरण्यस्सर्वदाशरणागतान् प्रति समाराध्योविशिष्टशक्ति सामर्थ्योपेतो भवति विशिष्टस्योत्कृष्टस्यैव-शरणागतिः क्रियते। तथाविधशरण्यस्य शरणागतिप्राप्तवतां परम-शान्तिर्मोक्षप्राप्तिश्शास्त्रेषु वर्णिता।

इत्थञ्चात्र मोक्षोऽपि न तथा यथाद्वैतवादिभिर्वर्णितः, किन्तु सचतुर्धा सामीप्य सारूप्य-सालोक्यसायुज्येति स्वयं भगवता महादेवे शिवेन पाञ्चरात्रागमे भगवतीं पार्वती प्रति सम्यक्तयातत्तथ्यमेव-प्रतिपादितम् विशेषप्रसंगे राधाकवचप्रवचनोपदेशे। सामीप्यन्नाम भगवत्समीपनिवासः, सारूप्यन्नाम भगवत्स्वरूपप्राप्तिः, सालोक्यन्नाम भगवल्लोकेऽधिवासः, सायुज्यन्नाम भगवतासहस्थितिः। तदैव जीवात्मा मोक्षानुभवं कुर्वन् कृतार्थो भवति। भगवल्लोके निवसन्नपि जीवो मोक्ष दशायामपि ब्रह्म नैव भवति, तेन जीवः पृथक् ब्रह्म च पृथगेव। जोवात्मा चाणुरल्पज्ञश्च परमात्मासर्वज्ञो विभूश्च। तदैव भगवान् जीवात्मनो मोक्षावस्थायामात्मीयतां तत्र प्रवर्तयन् परमप्रसन्नः सन्नेव हृष्टस्तुष्टः परमाह्लादसमवहितश्च स्वयं निखिलवेदवेदान्त पुराणशास्त्रसम्मतसिद्धान्तरहस्यमुपस्थायन्नेव भाषते यत्—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथयन्ति ते॥

अर्थादयं जीवो मम समान धर्मा नित्यत्वेन, ब्रह्म सजातिरेव। प्रकृति सम्बन्धाद् जीवो विजातिश्च। ब्रह्मणि सर्वज्ञत्वादि विशिष्टज्ञानादेव स्वगत भेदोऽपि। 'यदि जीवो ब्रह्म भवेत् तर्हि तद् ब्रह्म हि-उपादान-

निमित्त सहकारिकारणत्रयं भवति' इति विचार प्रसंगे किन्नामोपादान-कारणमिति ? जिज्ञासायामुच्यते–कार्यंरूपे परिणामयोग्यं वस्त्वेवोपादान कारणं भवति यथा घटं प्रति मृदिति। निमित्तकारणञ्चोपादान-वस्तुनः कार्यंरूपे परिणतकर्ता प्रोच्यते यथा तमेव घटंप्रति निमित्त-कारणं कुम्भकारः। सहकारिकारणञ्च कार्यंवस्तुन उत्पत्ति सहायक-मुपकरणं यथा दण्डः चक्र चीवरादिकञ्च, सम्पूर्णस्य जगतस्त्रिविध-रूपं कारणं स एवेश्वरोऽशीरूपो योहि ब्रह्मपदेनाभिधीयते। सूक्ष्मचिद-चिद्विशिष्टमुपादानकारणं सः। एकोऽहं बहुस्याम् नेहनानास्ति किञ्चनेति संकल्पविशिष्टं ब्रह्म निमित्तकारणम्मन्यते।

ज्ञानशक्त्यादि विशिष्टं सहकारिकारणं भवति। अत्रैका शंकापि-स्वाभाविकी भवत्येव यत् ईश्वर उपादानकारणं चेत तदा स विकारी-सिद्धः न तु शुद्धः, ईश्वरस्तु अविकारी शुद्धश्चेति विरुद्धं भवति ? परमत्रविचारतो न कश्चन विरोधोऽनुपपत्तिर्वा, यतश्चिदचिद् विशेषणविशिष्टेश्वरस्य जगद्रूपपरिणामो न तु विशेष्यस्वरूपतः परिणामोऽगीक्रियते। विशेष्यस्वरूपं यद्ब्रह्मणोऽस्ति तस्मिन कश्च-नापिविकारः, परिणामस्तु विशेषणद्वारैव, यथोर्णनाभितः कीटक-विशेषस्य पाशनिर्माणेऽपि (मकड़ीजाल इत्यस्य निर्माणेऽपि) तस्य स्वरूपं न विकृतं भवति स्वरूपे तिष्ठति न विकारमुपैति, तथैवोपादान-कारणे ईश्वरे न विकारः कश्चन, एवमेवमनुष्यत्वादिविशेष जीवात्मनि-शेषचापि न कोऽपिविकारो भवति।

जीवात्मानिर्विकारी सदा तिष्ठति, वाल्ययुवावृद्धावस्थादिष्वपि स्थूलादिकं सर्वं खलुशरीरस्यैव विकारो न तु शरीरिणो जीवात्मनः, निमित्त कारणमपीश्वर एव जगत इति विषये शंका भवति यदेक एवेश्वर उपादाननिमित्त कारणतया कथं स्वीक्रियते विरुद्धत्वात् उपादाननिमित्तकारणयोर्विरोधप्रतीयत एव परमत्रापि सर्वोऽपि-विरोध परिहर्तुं शक्यः। यथैक एव जीवात्मा स्वसुखादिभ्य ये विभिन्ना उपायास्तदर्थं कार्यं विदधाति बहुविधम् परं निमित्त एक एव स जीवात्मा, तथैवेश्वरो निमित्तकारणमपि भवति, वेदेऽपि प्रति-पादितं यत् "अनेन जीवेनात्मानुप्रविश्यनामरूपे व्याकरवाणीति,

अर्थात् स्वांशभूतेन जीवात्मनाऽत्मनिप्रविश्य नामरूपे प्रकाशति। जीवस्यब्रह्मणश्च विषये सुस्पष्टं प्रमाणमपरमपि विद्यते यथा—

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्योऽभिचाकशीति ॥

अर्थात् प्रकृतिरूपे वृक्षे जीवात्मा परमात्मा च मिलित्वैव वसतः, अनयोरेकः कर्मफलं भुनक्ति तद्द्वारा सुखी-दुःखी च भवति, स जीवात्मा, परं परमात्मातु केवलं तत्र साक्षीभूत्वा निवसति। तौ द्वावपि अनादिकालतः सखायौ वर्तेते। भगवान्श्रीकृष्णो गीतायामुपदिशत्यपि यत्—

मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजयः।
यो मामजमनादिञ्च वेत्ति लोकं महेश्वरम्।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥

एवंविधं सगुणं ब्रह्म ज्ञात्वा ज्ञानवान् भक्तिमांश्च यदा जीवो भवति तदा सर्वंपापैर्मुच्यते। परब्रह्म जीवात्मनाद्वारा भोक्ता प्रोच्यते, जीवात्मनि ब्रह्मणो भोग्यमपि विद्यते। तद्ब्रह्मान्तर्यामीतया प्रेरणामपि करोति, जीवात्मा-परब्रह्मणश्शरीरम्, ब्रह्मणोद्विविधं शरीरं चेतनमचेतनं (जडात्मकम्) चेति। चेतनो जीवात्मा। जडश्चप्रकृतिरेव, तेनैवसूक्ष्मचिदचिद् विशिष्टं ब्रह्मकारणावस्था भाष्यते, स्थूलचिदचिद् विशिष्टं कार्यावस्था बोध्यते। तस्मादेव हेतोश्शास्त्र नियमानुरोधतः कार्यंकारणयोरभेदान्वयः स्वीक्रियते तयोः कार्यकारणयोर्भेदोऽपि। विशेष्यविशेषणोभयवृत्तिसामान्यधर्मेणैवाभेदः, विशेष्यं यद् ब्रह्म तस्मिन्नुभयवृत्तिः सामान्यधर्मश्चिदचिच्चिन्नित्यद्रव्यमेकमेव, एतेनैवरूपेणात्राभेदः। :विशेषणमात्रवृत्तिधर्मेणभेदः, स्थूलत्वचिदचित् सूक्ष्मत्वचिदचित् 'एतद्वयविशेषणेन भेदः। एवमेवविशेष्यबिशेषणयोरभेदान्वयः शरीरशरीरी भावेनभेदोऽभेदश्चापि, प्रकृत्यपेक्षया जीवात्माशरीरी भवति ब्रह्मापेक्षया जीवात्मा शरीरमेव मुक्तावस्थायामपि जीवोब्रह्मनैव भवति।

भगवतश्शंकराचार्यंमतेनब्रह्मनिर्गुणम् परमविद्यादोषेण जीवो भवति ब्रह्म पुनश्च अविद्ययाविनिर्मुक्तंब्रह्म ज्ञाताज्ञेयशून्य शक्ति-रहितं ज्ञानमात्रमेव ब्रह्म मन्यते । सगुणं ब्रह्मविद्यया—दूषितं मिथ्या भूतमेवेत्थं मन्यते तन्मते, मतेऽस्मिन् ब्रह्मातिरिक्तं सर्वं जगन्मिथ्या । अत्रविचारणीयं भवति यदि सर्वं मिथ्यैव तर्हि सर्वस्य सिद्धिः कथं क्रियते-तन्मते ? सिद्धिसाधनदोषसद्भावात् । ब्रह्मातिरिक्तं सर्वंमिथ्या, यदि तर्हि गुरुत्वं मिथ्या गुरुत्वस्वीकारो मिथ्या, उपदेशोऽपिमिथ्या, वेदशास्त्रादिकञ्चापि मिथ्या ।

एवं विधायां स्थितौ प्रामाण्याधिगमाय किमवशिष्यते तत्त्वतः ? न किंमपि । पुण्यपापे च मिथ्याभूते, भगिनी-भ्राता—पतिपत्नी प्रभृति सर्वोऽपि व्यवहारोमिथ्या, मतेऽस्मिन् सर्वं व्यवहारो मिथ्यात्वं प्रतिपद्यते तदा न कोऽपिव्यवहारः सिद्धस्तिष्ठति । एवं विधाऽऽस्तिकता कथं स्थिरा भविष्यति ? एवं विधायां स्थितौ मतेऽस्मिन् सर्वं माया-कल्पितं मिथ्यैव ।

भगवतोवेदव्यासस्य सूत्रमिदं विद्यते यत् 'अधिकं तु भेदनिर्देशात्' इति, वेदे ब्रह्मणो जीवस्य च परस्परं भेदएव वर्णितः परमार्थतः । ब्रह्म जीवात्मनोऽधिकं मन्यते प्रोक्तसूत्रेऽपि, वेदेऽपरमपिप्रमाणमत्र, "ज्ञाज्ञौ द्वावजावीशानीशौ अर्थात् जीवात्मा परमात्माच द्वावप्यजौ जीवोऽल्पज्ञः परमात्मा सर्वज्ञः ।

भगवतश्शंकराचार्यस्य मते निर्विशेषंब्रह्म स्वीक्रियते, निर्विशेषं-विशेषणविशेष्य शून्यम् । परमत्रविचारे क्रियमाणे सति सर्वैरप्यद्वैत-ब्रह्म स्वीक्रियते । जगद्गुरुश्रीरामानुजाचार्यमते विशिष्टाद्वैतं स्वी-क्रियते । विशेषणविशिष्टमद्वैतम् ।

जगद्गुरोश्शंकराचार्यस्यमतेऽद्वैतमेव ब्रह्मविशेषणत्वेन परमार्थतो-ऽगीकर्तव्यमेव तर्हि निर्विशेषं ब्रह्म कथं सिद्ध्यति मतेऽस्मिन् ? अत्र भग-वतो वेदव्यासस्य सूत्रमस्ति यथा-तदनन्यत्वमारम्भण शब्दादिभ्यः इति सूत्रेणानेन कार्यकारणयोरेकता प्रतिपाद्यते, तर्हि यन्मते जगन्मिथ्या विद्यते तन्मते कार्यकारणयोरेकतापि न सम्भविष्यति यतः कार्यं-

मिथ्या मन्यते यदा कार्यरूपं जगन्मिथ्या तदाकारणमपि मिथ्या, अत्र-सत्यस्य मिथ्यात्वस्य चोभयोरसिद्धता भवति। वेदवचनन्त्विदं प्रतिपादयति यत् वाचारम्भणविकारो नामधेयं मृतिकेत्येव सत्यम् यथा घटोमृन्मयः घटस्तस्य नामास्ति जलाहरणक्रियाऽनेन भवति, नष्टेघटे चूर्णपर्यन्तावस्थायामृतिकेवेति शिष्यते। मृतिका द्रव्यमात्रमेवान्तेऽव-शिष्यत इत्येव सर्वैः स्वीकृतम्। न द्रव्यान्तरं मृतिकातः किञ्चिदपि जातम्। एवमेवजीवेभ्यः प्रकृति शरीराणि प्राप्तानि प्रारब्धानुसारं-भोगायतनानि, प्रकृतिशरीरप्राप्त्यनन्तरं भिन्नं भिन्नं नाम विभक्तमेव भवतीत्येकस्य वैमत्यम्? यदाकारणावस्थायां जीवा भवन्ति तदापि जीवभावस्तिष्ठत्येवकिमत्रद्रव्यान्तरम्? ब्रह्मतु नाभवद् जीवः सः।

अन्यच्चापि वेदप्रमाणमत्र—यथा 'एतदात्म्यमिदं सर्वम्', 'सर्वं खल्विदं ब्रह्म', 'इदं सर्वं यदयमात्मा तत्त्वमसि' 'इति सर्वं श्रुतिवचनं जीवान् ब्रह्मात्मकान् बोधयति नतु जीवान् ब्रह्मैव प्रतिपादयति जीवो ब्रह्मभवति न कथमति तेषां श्रुतिवचनानां तात्पर्यमत्र। सर्वं, तात्पर्यं मद्वैतशब्दत एव निःसरति, अद्वैतपदार्थं एवंविधोऽस्ति यत् द्वाभ्यां चेतनाचेतनाभ्यामनुयोगिप्रतियोगिभ्यामिदंज्ञातं प्राप्तं वा द्वितम्। द्वितमेवद्वैतम् न द्वैतमद्वैतम्, अयमद्वैतशब्दो ब्रह्मणो विशेषणं भवति, एतद्ब्रह्मानुकूलं ब्रह्मातिरिक्तं न किमपि जीवातिरिक्तमित्य-वधार्य्यैव तस्यैव जीवात्मनो निबन्धनं विधत्ते। गीतायामपि भगवान् कृष्णः प्रतिपादयति यत्—

मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्यैवमात्मानं मत्परायणम्॥

अयमत्रश्लोकः ब्रह्मजीवयोर्भेदमेव प्रकाशयति। वस्तुतश्चिदचिदात्मकं सर्वं जगद् ब्रह्मणश्शरीरमेव। परब्रह्मैवास्यशरीरी विशिष्टाद्वैतसिद्धा-न्तस्य प्रशस्तता परमार्थतः सर्वशास्त्रमतेन निरूप्यते।

भगवच्छकराचार्यं मते निर्विशेषब्रह्मस्वीकारे किं प्रमाणम्? यदि किमपि प्रमाणमुपस्थाप्यते चेत्तदा ब्रह्मणि प्रमेयता आयात्येव येन निर्विशेषत्वं ब्रह्मणि न सिद्ध्यतीति सिद्धान्तहानिः, ज्ञानमात्र ब्रह्म-

स्वीकारे तन्मते ब्रह्म मायां जानाति यदि तदा सविशेषमेव सिद्धम्, यदि मायां न जानाति तदाऽज्ञो जड़ो वा भविष्यति, एवं विधे ब्रह्मणि दोषा नानापतन्त्येव। वस्तुतस्तन्मते ब्रह्म शुद्धैव मन्यते। अतश्चिज्जीवः अचित्प्रकृतिः आभ्यां द्वाभ्यां विशेषणाभ्यां विशिष्टं ब्रह्म सकलकल्याण गुणानामाकरं भक्तजनानांकृते भजनीयं मुमुक्षुभिरुपास्यं परमतत्त्वम्। निखिलं चराचरं जगत् तस्य शरीरमेवेत्यत्र भागवत महापुराणेऽपि प्रतिपादिते यथा—

खं वायुमग्निं सलिलं महीं च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित् समुद्राश्चहरेः शरीरं
यत् किञ्चभूतं प्रणमेदनन्यः ॥ भा० ११। २।४१

परमात्मनि=परमेश्वरे सर्वाणि भूतानि वसन्ति, तिष्ठन्ति, भूतेषु सर्वे जीवेषु सर्वात्माविष्णुरेव वसति रमते च। वसनात् वासनाच्च स वासुदेव इति कथ्यते। भूतेषु=प्राणिवर्गेषु सोऽन्तरात्मस्वरूपेण वसति तस्मिन् सर्वे प्राणिनो वसन्ति। स एव जगतां विधाता सृष्टा धाता धारकः पालकश्च, यथोक्तं विष्णुपुराणे, यथा—

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः॥
भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानियत्।
धाताविधाता जगतां वासुदेवस्ततः प्रभुः॥ इति

---

# परमात्मविषयोपसंहारः

भगवान् श्रीमन्नारायणपरमात्मैव शुद्धसंकल्पः सत्यसंकल्प-सकलेतरविलक्षणः परब्रह्मे ति गीयते, श्रियःपतिश्श्रीमन्नारायणः सर्व-प्रपञ्चाधिष्ठितं जगत् प्रतिकारणमिति न तिरोहितं केषाञ्चित्। संकल्पपूर्वकं निखिलस्य ब्रह्माण्डस्य निर्माता निमित्तकारणत्वेना-वसीयते । अखिल ब्रह्माण्डाधिपतिःश्रियःपतिः, भूनीलादेवीभ्यामु-पास्यमानः परवासुदेवः किमपि सहकारिकारणन्नापेक्ष्य स्वयमेव सहकारिकारणत्वमनुभवति जगदुदय रक्षाप्रलयकृतत्वेन, किं बहुना जगद्रूपेण परिणतिमुपेतमुपादानकारणमपि श्रीभगवानेव सर्व-सिद्धान्तसिद्ध इति निश्चितम्, यतः सूक्ष्मचिदचिद् विशिष्टो हि नारायण एव परिणमते जगद्रूपेणेति कारणब्रह्म, स्थूलचिदचिद्-विशिष्टः कार्यब्रह्मे ति विशिष्टाद्वैतसिद्धान्तः।

प्रमाणञ्चात्र यः पृथिव्यां तिष्ठन् यस्य पृथिवीशरीरम् य आत्मनि-तिष्ठन् यस्यात्मा शरीरम्, भोक्ता भोग्यं प्रेरितारञ्च मत्वा तेन जुष्टस्तेनामृतत्वमेति, नित्योनित्यानां चेतनश्चेतनानामेको वहुनां योविदधाति कामान् 'इति श्रुतयः ख्यापयन्ति जगत् प्रति सर्वविध-कारणत्वं परब्रह्मणः । इत्थमुपायोपेयभूतं ब्रह्मविज्ञाय लोकानां-सर्वेषामद्वितीयात्मानं लोके स्वेन सहापृथग्भूय वर्तमानेविलक्षणतया वर्तमानमुपायोपेयभूतं श्रिय.पतिरस्तीतिविज्ञाय समाश्वसन् प्राज्ञः स्वयमप्यस्तीति तैत्तिरीयादिश्रुतयो वदन्ति । भगवानेवोपेयः प्राप्यवस्तु 'स एवोपायस्वस्य प्रापकश्च, जीवानां जीवनसार्थक्यं भगवन्तं प्राप्यैव नान्यथा, स्वाश्रित रक्षकत्वमेव ब्रह्मणोलक्षणम् तेन सर्वविध-रक्षाभारः परब्रह्मणि समनुभूय तदुपासीत् तच्छरणमभ्युपगच्छेज्जीवः। अयमेव जीवस्य जीवतापादनोपायः। योहि जीवः ब्रह्मज्ञानन्नालभत् सलोके लोकदृष्टया सामान्यतो लोकभोगं वैषयिकं मायिकं भुञ्जा-नोऽपि न सद् वर्तते, यश्च सत्संस्कारोपेतो जीवः ब्रह्मज्ञानं लब्ध्वा-ऽऽत्मानं कृतकृत्यं मन्यमानो लोके यथा तथा वर्तमानोऽपि न फलेतरं

कल्पते स एव जीवः 'जीवन् जीवपदवीभाक्। एवम्भूतस्यैव जीवस्य जीवनं जीवनमनुमोदितं श्रुतिस्मृतिष्वपि नितराम्। यथा तैत्तिरीयोपनिषद् व्याहरति—

असन्नेव स भवति असद् ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः॥

इत्थं ब्रह्मानुभवानन्तरमेव कथञ्चिदेव स्वात्मस्वरूपं प्रतिपद्यते कश्चन जीवो भाग्यवशेन निर्हेतुककृपाकटाक्षेण ब्रह्मणः। तदनन्तरमेव स्वस्य दास्यत्वं, शेषत्वं, अंशभूतत्वं भोग्यत्वञ्चानुभूय शुद्धां शरणागतिं कामयमानो रोरवीति वराको जीवो भृशम्। अनेक जन्मसाहस्रीं संसारपदवीं व्रजन्।

'मोहभ्रमं प्रयातोऽसौ वासनारेण कुण्ठितः॥ इति संस्मृत्य भूयोभूयः पुनरपि मरणं पुनरपि जननं पुनरपि जननी जठरेशयनमित्युक्त्या जन्ममरणपाशबद्धो वर्तेऽहं परिपालयैनं शरणागतं सम्प्रार्थयति परब्रह्म पुरुषोत्तमम्।

यतः संहारविक्षेपसहस्रकोटीस्तिष्ठन्ति जीवाः, इत्युक्तरीत्या-सहस्रकोटिब्रह्मकल्पपर्यन्तं निरुद्धतयावस्थानस्य प्रकारान् पुनरपि-परमकारुणिक स्वतन्त्रशेषि संकल्पविशेषनियतकाले उपस्थितो 'प्रचरन्ति चान्ये' इति वचनानुसारं-महदादिमार्गेण निर्गत्य परमशेषिपादनिवेदनार्थाया विचित्रदेहसंपत्तिप्राप्तावपि शरीरमार्गेण परिभ्रम्य स्वंभगवत्किंकर इत्यनुभवन्नास्ते। यथा—

विचित्रा देहसंपत्तिरीश्वराय विवेदितुम्।
पूर्वमेव कृता ब्रह्मन् हस्त पादादि संयुता॥

इति स्वरूपतः स्वीयां स्वाभाविकीं स्थितिमविगणय्य 'इतोभ्रष्टः-ततो भ्रष्टो नास्त्युपायः परो मम' इति समवेक्ष्य—

देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणम्।
न तेषां यमसालोक्यं न ते नरकौकसः॥

अद्य प्रभृति हे लोका यूयं यूयं वयं वयम् ।
अर्थकामपरा यूयं नारायणपरा वयम् ॥
नास्ति संगतिरस्माकं युष्माकं च परस्परम् ।
वयं हि किंकरा विष्णोः यूयमिन्द्रियकिङ्कराः ॥

इति हरेः शरणागतानां स्वभावः स्वात्मानुभवकः—व्यवहारपथायते । किमधिकमुच्यताम्—

यन्मुहूर्त्तं क्षणम्वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः साचविक्रिया ॥
एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥

अतो ब्रह्मज्ञानं प्राप्य स्वस्वरूपम् परस्वरूपम् उपायस्वरूपम् प्रत्यवाय स्वरूपं फलस्वरूपञ्चार्थ पञ्चकं, परिज्ञाय च तदनुकूलमेव शास्त्रानुरोधिवर्तितव्यम् । यतो मनसाऽपि प्रतिकूलाचरणे स्वस्वरूप-विरुद्धाचरणमेव भविष्यति अतः—

आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षयिष्यतीति विश्वासः गोप्तृत्ववरणन्तथा ॥
आत्मनिक्षेप कार्पण्ये षड्विधाशरणातिः ।

सदास्वं परमात्मनः पारतन्त्र्यम्, शेषत्वम् 'अंशत्वम्' परमात्मनश्च स्वातन्त्र्यम्, शेषित्वं, अंशित्वमनुभूय तथा वर्तेरन् तेन कल्याण गुण-शालिनः परब्रह्मणः कृपाकटाक्षतः पञ्चविधार्थज्ञानेन स्वात्मरक्षणं सम्भवम् । तदेवं वृत्तिर्जायते भगवदनुकूला जीवानाम् । तदैवब्रह्म-ज्ञानेन लब्धसत्ताका जोवा एव जीवाः-समभिधातुं शक्यन्ते । इत्थं स्वरूपे वर्तमानां जीवानामुद्‌गारः स्वभावतः प्रकटी भवति । यत्—

नारायण ! दयासिन्धो ! वात्सल्यगुणसागर !
एनं रक्ष जगन्नाथ ! बहुजन्मापराधिनः ॥

परमेतस्य सर्वस्य स्वरूपोपलब्धिविषयकस्य ज्ञानस्य समुदयः जीवैः स्वयमशक्यस्तथैव 'यथा कश्चन जनस्तुङ्गं प्रसादमारोढुमिच्छुः सोपानमन्तरा नैव सफलो भवति तत्र सोपानानां तन्निर्माणकर्तृणामतीवावश्यकताभवति लोके चतथाविध सोपानोपलब्धिः सदाचार्य संसर्गेण सत्संगेन च सुशक्यः—

आचार्यः स हरिः साक्षात् कृत्वामर्त्यमयीं तनुम्।
मग्नादुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना।

इति वृहद् ब्रह्मसंहितावचनमेव पर्याप्तम्। एवंहि गुरुशिष्य भावः सनातनः सुप्रथितः भूरिशश्शास्त्रेषु समादृतः समेषां हितायैव। यदद्य व्यवहारपथे खपुष्पायितो वर्तते।

फलतो ब्रह्मविद्या यां (शरणगति विद्या) संप्राप्तौ परमाचार्यानुग्रह एव सवलं साधनमिति न सन्देहः। आसीत् कदाचिदस्या ब्रह्मविद्याया महाप्रभावः महत्त्वमेतस्या राक्षसराजोविभीषणः सम्यक् जानातिस्म तेन हि रावणादिभिरनादृतः दृप्तप्रपन्नः सपार्षदः समुद्रतटोपेतं भगवन्तं शरणागतवत्सलं सम्यगनुभूय तत्र प्रस्थितः, समुपेत्यत्र जीवस्वभावं कर्तव्यञ्चानु सन्धाय व्याहरति—

निवेदयत मां क्षिप्रं राघवाय महात्मने।
सर्वलोकशरण्याय विभीषणमुपस्थितम्॥

इति प्रणिपातवचनपुरःसरं सुग्रीवहनुमदादि पार्षदभूत-सद्विभूति सदाचार्यपुरस्कारेण राघवस्य शरणमुपगतस्सन् स्वीयं जीवनं सफलीचकार। परमोदारः अपार करुणानिधिः, दयासागरः भक्तवत्सलः, अशरण शरणागतः, भगवान् रामचन्द्रः—

परित्यक्ता च मया लंका मित्राणि च धनानि च।
इदानीमस्मि संवृत्तः राघव! शरणन्तव॥

इति व्याहरन्तं पादयोः पतितं रावणानुजमपिविभीषणम् समुत्थायालिंग्य च भृशंसुसन्तोष्य रामो द्विवर्नाभिभाषते—

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥

इति स्व स्वाभाविकं सफलं वचनं चरितार्थं यन्नेव—

अहं हि रावणं हत्वा सप्रहस्तं सबान्धवम्।
राजानं त्वां करिष्यामि सत्यमेतद् व्रतं मम॥

यत्फलं दशकृत्वः शिरो भगवते महेश्वराय समर्प्यापि रावणो न लब्धवान् तत्फलमनायासेन भगवतः रामभद्रस्य चरणशरणागतो-भूत्वा विभीषणः प्राप्तवान्। जीवानामियमेव कृतकृत्यता। भगवच्छ-रणागतानां जीवानां मित्रामित्रभेदज्ञानम् विनष्टमेव भवति तथा चाह भागवताग्रगण्यः प्रह्लादः—

सर्वभूतात्मके तात जगन्नाथे जगन्मये।
परमात्मनि गोविन्दे मित्रामित्रकथाकुतः॥

सर्वजगदात्मना चराचररूपेण दिव्यात्मस्वरूपतया सर्वान्तर्यामित्वेन च प्रकृति पदार्थं कञ्चुकं सन्धार्य परमात्मासर्वत्रैवोपस्थितश्चेत् तम्परि-त्यज्य मित्रामित्र भावना भागवतैर्नैव क्वचनविधेयेतिजीवस्वरूपं स्वभावश्चोपवर्णितम्। तथाचाभिहितमपि—

यच्चकिञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपिवा।
अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः॥

---

# गोमांसादिभक्षणविधिनिषेधविमर्शः

## (अहिंसा परमो धर्मः–इति प्रसंगे)

विश्वकल्याणाय प्रतिपादितेषु विभिन्नधर्मेषु मानवैर्व्यवह्रियमाणेषु अहिंसैको महान् धर्मः प्रोक्तः। सर्वेषु धर्मग्रन्थेषु प्रायोऽहिंसाधर्मस्य प्रामुख्येन प्रतिपादनं दृश्यत एव। अहिंसाधर्मस्य सर्वोच्च पदवीं गतस्य धर्माचार्यैं राजनेतृवर्गैश्चापि भूयोभूयः प्रभूतं विस्तृतञ्च महत्त्वं प्रतिबोध्यजनाः सर्वेऽहिंसाव्रतोपासनया सामयिकप्रगतिलाभाय सुशान्तिसुखलाभाय च सादरं सम्यगवबोधिताः। अयञ्च-सम्प्रति सामाजिकः परमशान्तिमयोधर्मः येन सार्वभौमिकी सार्वत्रिकी सुशान्तिः शक्यते। अतोऽस्य शास्त्रीयदृष्ट्या विचारः परमावश्यक इत्यवधार्यैवजनताजनार्दनस्य सेवायामुपस्थितोऽयञ्जन आत्मानं-धन्यम्मन्यते। जंनताजनार्दंनसेवामुखेन जनेश्वरस्यैव सेवा भवति। अतएव भागवतसेवा सन्तसमाजे महत्त्वपूर्णं स्थानं भजते।

मा हिंस्यात् सर्वभूतानि, कथमपि कस्यचिदपिप्राणिनो हिंसा न केनापि हेतुना कैश्चिदपि विधेया। हिंसानाम् न केवलं प्राणानां शरीरसम्बन्धविच्छेदरूपमेव, किन्तु यया कयापिरीत्या कस्यचिदपि प्राणिनः कष्टाय शरीरेन्द्रियात्मनाम्वा न कोऽप्याघातः, नापमानम्, न तिरस्कार, न वस्त्वपहरणम्, न वा मिथ्या कष्टप्रदारोपादिकं विधाय विधेया शास्त्रसम्मता। किन्तु भृशं गर्हिताश्चापि, अत एवोक्तमहिंसाविषये यत्—तत्राहिंसा सर्वथा सर्वदा, सर्वभूतानामनभिद्रोहः इति मनुस्मृतावपि प्रोक्तम्—अहिंसया च भूतानाममृतत्वाय-कल्पते, प्राणिनां हिंसामकृत्वा जनो मोक्षाधिकारं लभते। किं बहुना मनुस्मृतौ हि सर्वमानवधर्मेषु (अहिंसाया एव-प्रामुख्येन प्रथमतश्चर्चा विहिता) तथाहि-अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः[२] इत्यादि वचने, तत्रैवहि तया हिंसया तत्पदमप्युक्तम्।

१. म० ६,६०।
२. स० १०-६३।

अहिंसया महतोधर्मस्योपलब्धिर्भवति, यतस्तत्राभयदानेन निश्चय-मेवाहिंसाव्रतं पूर्णतां भजति। यथोक्तमत्रविषये आदिपुराणे, धर्माणाञ्च यथाहिंसाऽभयदानं वरेण्यकम्[1]। वस्तुतो लोकहिताय प्रोक्ता निखिला अपि धर्मा अहिंसाव्रतोन्मुखा प्रतिपादिता एव सन्ति, यथा-चाधर्मस्य कृते विज्ञापितं विद्यते यत्—

प्रविशन्ति यथा नद्यः समुद्रमृजुवक्रगाः।
सर्वेऽधर्माहिंसायां प्रविशन्ति तथा दृढम्॥[2]

अर्थात् यथा वक्रगतिका नद्यः समुद्रं प्रविशन्ति तथा सर्वेऽप्यधर्मा शास्त्र-प्रतिकूलदृष्ट्या कुटिलतया हिंसायामेव प्रविशन्ति। तस्मात् हिंसा सर्वथाहेया। भगवता व्यासेनापि साधुर्भणितम् इत्थमत्र सर्वपुराणानु-भवेन व्यासस्य हृद्यो भावः प्रकाशितः—

अष्टादशपुराणेषु व्यासस्य वचनं द्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

परपीडनमेववस्तुतो महतीहिंसाऽभिहिताऽत्र, परोपकारपदार्थेषु सर्व-प्रथमं विशेषेणाहिंसा समभिनन्दिता, परोपकार एतादृशोधर्मो यत्र न कथमपि पीडानुभवः प्रत्युत शरीरेन्द्रीयात्मनामुत्कर्ष एव भवति परोपकारेण। अपरमपि प्रोक्तं विद्यते वचनं भगवतो व्यासस्य यत्—

इदमेव धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥

प्रत्येकं जनः सुखमेव कामयते न मनागपि स्वप्नेऽपिदुःखं समीहते। किं दुःखं किं वा सुखमिति विषयेऽपि साध्वेव विवेचितं शास्त्रकारैः यत् अनुकूलवेदनीयं सुखम् प्रतिकूलवेदनीयं दुःखमिति, तेनात्मनः स्वस्यकृते यदानुकूल्यं तदेव परेषांकृतेऽपि कल्पयेत्। यच्चात्मनः प्रतिकूलं दुःखाय भवति न तत्कथमपि परेषामपि समीहेत् मनसापि। अयमेव सूक्ष्मो महांश्चधर्मस्य सन्देशः।

---

१. आदि० पु० १-१९।
२. पद्मपुराण २४,३-६।

'सत्यं न सत्यं खलु यत्र हिंसा'[1] इति वचनेन सम्यगेव प्रतिपादितं यत् तत्सत्यं सत्यंनास्ति यत्र हिंसा प्रवर्तते। इदं वचनं देवी भागवते प्रोक्तं विद्यते। एकेनैव महत्त्वपूर्णवचनेन भगवताव्यासेन सर्वोऽपि धर्मो सरहस्यं प्रतिपादितः। धर्मसर्वस्वं प्रतिबोधयद्भिः सर्वैरपि जनैरवधानैर्भाव्यं यत् कथमप्यात्मनः प्रतिकूलं परेषां न समाचरेदिति, यद्धि इह परत्र चापि प्रतिकूलं तत्सर्वमपि पीडाकरमेवेत्यवधार्यं हिंसैव भवति। अतोऽहिंसाव्रतोपासकैरिहात्मनोऽनूकूलमेवाचरण परेषामपि कृते विधेयमिति तदा महान् धर्मः, इयमेव नैतिकता इयमेव राष्ट्र-भक्तिः इयमेव पवित्रा सदाचरणीया राष्ट्रसेवा मन्यते। पवित्रतयैव शारीरिकं मानसिकं बौद्धिकमाध्यात्मिकं च परमं सुखं प्राप्य जन्म-साफल्यं लभते मानवो नान्यथा—

> श्रूयते द्विविधं शौचं यच्छिष्टैः पर्युपासितम्।
> वाह्यं निर्लेप निर्गन्धमनाः शौचमसिसनम्॥
> अद्भिः शुद्ध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्ध्यति।
> अहिंसया च भूतात्मा मनस्सत्येन शुद्धचति॥[2]

वाह्य पवित्रता निर्लेपनेन निर्गन्धेन, आभ्यन्तरस्यात्मनः शुद्धिरहिंसयैव प्रोक्ता। शरीरेन्द्रीयादिशुद्धिः जलेन, बुद्धेश्शुद्धिर्ज्ञानेन आत्मनोऽ-हिंसया, मनसश्शुद्धिस्सत्येनैव भवतीति सर्वशास्त्रसिद्धान्तऋषि-मुनिभिरादृतः, कठिनेऽपि कलियुगे नैके आचार्याः नेतारश्च परिपाल-यन्तोऽहिंसासत्यव्रतं राष्ट्रहिताय स्वस्य महान्तं धर्मं मन्वाना दिवंगता। महात्मा गान्धी सत्येन अहिंसाव्रतेन चैव पारतन्त्र्यमपि राष्ट्र-मुत्तमप्रयासेन स्वाधनञ्चकार। स्वातन्त्र्यसंग्रामावसरे नैकवारं बहुविधं भृशंकष्टं सोढ्वापि सत्यमहिंसाव्रतञ्च नैवात्यजत्। यथा पूर्व-मुक्तमेव मनुस्मृतौ विविधधर्मेषु प्रथममहिंसाया एव तथैवात्रबोधायन-धर्मसूत्रेपि तपसां गणना प्रसंगेऽहिंसायाः प्रथमं स्थानं विद्यते। तद् यथा—

---

१: दे० भा० ३-११-३६।
२. बौधायन धर्मसूत्रे ३-१०-२३-२४।

"अहिंसा सत्यमस्तैय सवनेषूदकोपस्पर्शनं गुरुशुश्रूषा ब्रह्मचर्यमधः शयनमेक वस्त्राऽनाशक इति तपांसि।"[1]

एवमेव भगवान् श्रीकृष्णोऽपि धर्मोपदेशप्रसंगे परमभक्तमुद्धवं समुपदिशति यत्र यमनियमक्रमेहिंसायाः प्रथमं वर्णनं दृश्यते भागवत-महापुराणे यथा—

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः।
आस्तिक्यं ब्रह्मचर्यञ्चमौनं स्थैर्यं क्षमाभयम् ॥
शौचं जपस्तपोहोमः श्रद्धातिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यं सेवनम् ॥
एते यमाः सनियमा उभयोर्द्वादशस्मृताः ।
पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥[2]

तत्रैव महाभागवते भगवान् कपिलमुनिः मातरं देवहूतिमुक्तवान्—

अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥[3]

पातञ्जलयोगसूत्रेऽपि भगवता पतञ्जलिमुनिना प्रोक्तम्—
अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहायमाः।[4] इति

बहोः कालात्पूर्वमेव लोकहिताय श्रीविष्णुशर्मणा पञ्चतन्त्रे लोक-रुचिकरिण्या कथया लोकमुपदिशता साधु प्रतिपादितं यथा—

हिंसकान्यपि भूतानि यो हिनस्ति स निर्घृणः ।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥

---

१. बोधायनधर्मसूत्र ३-१०-१४ ।
२. भा० म० पु० ११-१९-३-३५ ।
३. भा० पु० ३-२८-४ ।
४. योग सू० साधनापादे–६० ।

अर्थात् योह्यकारणमेव हिंसकान्नपि प्राणिनोहिनस्ति स निर्दयी दया-रहितः क्रूरो भवति, स तेन कर्मणानरकमुपैति, यस्तु निर्दोषं शुभाचार न्तं प्राणिनं हन्ति तस्य किं यत्प्रत्यवायः ? भूयानित्यर्थः ।

धर्मार्थकाममोक्षेषु पुरुषार्थेषु भरतर्षभ ।
यच्चेहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।।

इति वचनानुसारं धर्मोखिलः प्रोक्त एव महाभारते न सन्देहः तत्रहि प्राधान्येनाहिंसायाः कतिपयानि वचनानि संक्षेपतः प्रकाशमानी-यन्तेऽत्र यथा—

अहिंसा निरतः स्वर्गं गच्छेदिति मतिर्मम ।[1]
अहिंसार्थं समायुक्तैः कारणैः स्वर्गमश्नुते ।
अहिंसाधर्मं नित्यता, अहिंसाचैव जन्तुषु,
अहिंसा परमो धर्मः, अहिंसा सत्यवचनम्,
भूतानुकम्पकाः लोकसाक्षिणः —अहिंसा क्षमताशान्तिः

उद्योगपर्वणि यथा—अहिंसैका सुखावहा,[2] द्रोणपर्वणि यथा—अहिंसा सर्वभूतेषु[3] धर्मज्यायस्तरं विदुः, शान्तिपर्वणि यथा—राजधर्मा-नुशासने—

अहिंसो मन्दकोऽजल्पो मुच्यते सर्वकिल्विषै—३५-३७, ३५-३३ ।
अहिंसा सत्यमक्रोधः क्षमेज्या धर्मलक्षणम्—३६-१०, ३७-७ ।
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम्—६५-२०, ६५-२० ।
येष्वानृशंस्यं सत्यं चाप्यहिंसा तव आर्जवम् ।।—८०-४ ।
अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति—७९-६, ८०,६ ।

---

१. म० वनपर्वणि क्रमशः १८१-२, १७८-२, १८१-१०, १७८-१०, १८१-४२, १७८-४३, १८९-२२, १८७-२१, २०७-७४, १९८-६९ ।

२. म० उ० प० ३३-५२, ३३-५८ ।

३. द्रोण० १९२-३८, १९५-२९ ।

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ।। ७९-१८, ८०-१७।
अहिंसाः सर्वभूतेषु सत्यवाक् सुदृढव्रतः—१११-६, ११२-६।

एवं शान्तिपर्वणिआपद्धर्मप्रसंगेऽपि—

अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः।
एतेभ्यो हि महाराज तपो नानशनात् परम् ।।—१६१-२, १५५-८।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश—१६२-९, १५६-९।

एवं शा० प० मोक्षधर्मे—

अहिंस्रः सर्वभूतानां मैत्रायण मतश्चरेत्—१८९-१२, १८२-१२।
अहिंसकः समः सत्यो धृतिमान् नियतेन्द्रियः ।।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमम्—२४५-२२, २३७-२०।
अनुवर्ता महेवृत्तमहिंस्राणां महात्मनाम्—२६२-१९, २५४-२०।

एवमेवतत्रैवानुशासनपर्वणि-अश्वमेधपर्वणिच—

अहिंसाया प्रभूतानि प्रमाणानिसन्ति परमोपयोगिनि सर्वैः पालनीयानि, यत्र क्वचिद्धर्मशास्त्रेषु यागक्रियासु पशुवधः प्रयुक्तः तत्र श्रुतिविरोधः प्रवर्तते, उभयोर्विरोधे हि श्रुतेः स्मृतेः कस्य प्रामाण्यं कस्याप्रामाण्यम् कस्य वाधः ? कस्याबाध इति विचारोप्यत्र सामयिकः।

धर्मं प्रमीयमाणेतु वेदेन करणात्मना इति कर्तव्यता भागंमीमांसापूरयिष्यतीति वचनानुसारमेव जैमिनिमुनेः वचनमत्र विरोधेत्वनपेक्ष्यं स्यादसति ह्यनुमानम् ।।[1] इति सूत्रानुसारेणात्र यत्र श्रुति-स्मृत्योर्विरोध आपतति तत्र श्रुतेर्विरोधे स्मृतिवाक्यं त्याज्यं वाध्यम्वा भवति, यदि श्रुतिविरोधो न स्यात्तर्हि अनुमानमपेक्ष्यते। यथास्मृतिवचनोपलब्धिस्तथाश्रुतिवचनेनावश्यं भाव्यमिति यश्च कालवशाल्लुप्त इति न शक्यते। भगवान् मनुरपि भाषते यत् तयोर्विरोधे श्रुतिवचनमेव प्रमाणम् यथा तेनोक्तम्—

अर्थकामेष्वसक्तानां धर्मं ज्ञानं विधीयते।
धर्मं जिज्ञास्यमानानां प्रमाणं परमं श्रुतिः।[2]

१. जै० मि० १-३-३।
२. म० २-१३।

अपि च—

या वेद वाह्याः स्मृतयो याश्च काश्चन कुदृष्टयः ।
सर्वास्ता निष्फला ज्ञेयाः तमोनिष्ठा हि ताः स्मृताः ।[1]

विरोधे द्वयोर्जावालि मुनिरपि प्रोक्तवान् यथा—

श्रुतिस्मृति विरोधेतु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥

अत्रविषये पुराणवचनमपि प्रमाणम्—

श्रुत्यासह विरोधेन बाध्यते विषयं विना ।

अर्थात् श्रुत्यासह स्मृतेर्विरोधे स्मृतिरेवाप्रभावकारिणी भवति ।

एतावताऽत्राहिंसामुद्दिश्यैव विचारः प्रवर्तितः साचापि अहिंसा न पीडाकरी कथमपि प्रतिपादिता । सर्वतोभावेन स्वस्य परस्य चापिसुख-शान्त्यै स एव धर्मो ग्राह्यो यत्र न कापि कथमपि हिंसा स्यात् । केचनात्राक्षिपन्ति यत् वृहदारण्यकोपनिषदि गोमांसभक्षणविधिर्दृश्यत इति तद् यथा—

अथ य इच्छेत् पुत्रो मे पण्डितोविगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवोत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्यन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्ष-भेण वा ।[2]

अस्या उपनिषदर्थं आंग्लभाषायां राजा राजेन्द्रलालमित्रस्य बीफ इन एन्सिएण्ट इण्डियाख्यग्रन्थभूमिकायामनुदितः यस्य हिन्दी भाषानु-वादः विस्तारभयान्न प्रस्तूयतेऽत्र—प्रथमम् तथा च यदि कोऽपिजनः एवं विधं पुत्रं कामयते योहि प्रसिद्धः सार्वजनिको लोकप्रियवक्ता तथा समस्तवेदज्ञाता तथा पूर्णायुष्पर्यन्तं जोवितुमिच्छति चेत् तदा

१. म० १२-९५ ।
२. वृहदा० उप० ६-४-१८ ।

गोमांसं तण्डुलं किञ्चित् प्रपाच्य सपत्नीकः प्रोक्तं पुत्रं कामयमानः नवनीतेन सह भुञ्जीत स च मांसः यूनः वृद्धस्यवा महोक्षस्य भवेदिति । यद्येवं तर्हि सर्वे गोमांसभक्षिणो गौराङ्गा वैदिका वेदार्थज्ञाः प्रपद्येरन् परंतथा अतोऽस्या उपनिषदोऽर्थः कीदृशः इति परीक्षणीयः तथाहि—

प्रोक्तोपनिषदि निम्न प्रक्रियया पदानि चत्वारि सन्ति—

१—स य इच्छेत पुत्रो में शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै । १४ ।

२—अथ य इच्छेत् पुत्रो मे कपिलः पिंगलो जायेत द्वौ वेदावनुब्रुवीत सर्वंभायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरो जनयित वै । १५ ।

३—अथ य इच्छेत् पुत्रो में श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्रौ जनयित वै । १६ ।

४—अथ य इच्छेत् दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै । १७ ।।

इत्थमत्रेमानि चत्वारि पदानि समेषामनुवादकर्तॄणामनुसारमेकस्मिन् सर्वेषु वेदेषु पारंगतसन्तत्यै निम्नसंकेतानुसारं भोजनस्य निर्धारकाणि सन्ति—

१ – एकस्य वेदस्य ज्ञात्रे (ज्ञानकर्त्रे) पयसासह सुपाचितः तण्डुलः सघृतः भोजनाय कल्पितः (प्रतिपादितः) ।

२ – कयोश्चिद्द्वयोर्वेदयोर्ज्ञात्रे दध्नासह सुपाचितस्तण्डुलः सघृतः तथाविध तण्डुक्तोदन भोजनः कल्पितः ।

३—केषाञ्चित्त्रयाणां वेदानां ज्ञात्रे पुत्राय जलेन सह सुपाचितः सघृतस्तण्डुलः प्रकल्पितः(विहितः) ।

४—विदुष्याः कन्यायाः कृते तिलेन सह पाचितस्तण्डुलः सघृतः भोजनाय कल्पितः ।

अत्र प्रथमं पाश्चात्य विदुषां मतानुसारं चतुर्णांवेदानां क्रमः कीदृशः ? इति प्रदर्श्यते—

ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः । उपर्युक्तक्रमानुसारं वृहदारण्यकोपनिषदः पदानां क्रमिकः सम्बन्धः वेदक्रमानुसारमेव स्वीक्रियेच्चेत्तदाऽस्येदंतात्पर्यं भवति विभिन्नवेदेषु पारंगतपुत्रप्राप्त्यै (पतिपत्न्योः) दम्पत्योः, भोजनविधिरयं ध्येयः—

१. ऋगवेदज्ञानाय घृतमिश्रितमोदनं (तण्डुलं) पयसा सह ।

२. ऋग्यजुषोः घृतमिश्रितमोदनं दध्नासह ।

३. ऋग्यजुष्सामवेदज्ञानाय घृतमिश्रितमोदनं जलेन सह ।

४. चतुर्णामपि वेदानां ज्ञानाय घृतमिश्रितमोदनं गोमांसेन सह ।

यदि पूर्वोक्तं वचनं क्रमश्च स्वीकर्तव्यः स्याच्चेत्तदाहि अथर्ववेद ज्ञानाय गोमांसआवश्यकः पाश्चात्यमतेन । उपर्युक्तसन्दर्भे कस्यचिदेकस्य, द्वयोः त्रयाणां चतुर्णाम्वा वेदानां पारंगत पुत्रायाल्पकायस्यवृकस्य छागस्यवा मांसस्य विधानं नकृतं परं चतुर्णाम् वेदानां पारंगताय सहसा तथाथर्ववेदज्ञाय पारंगतत्रप्राप्त्यै गोमांसस्य निर्धारणं कथं संगच्छताम् ? अतोऽत्र पूर्णतः सूक्ष्मेक्षिकया विचार आवश्यक एव । पाश्चात्यैरपि आंग्लभाषायां फ्लेश (Flesh) शब्दस्यार्थः कस्यचित्पशोः मांसलावयवातिरिक्तः फलादीनां शाकादीनांच कृते प्रयोगः कृतो दृश्यते यत्र फलादौ कोमलांशा प्रकीर्तिताः । अथ च मीट (Meat) शब्दस्यापि वस्तुतोऽर्थं पशुमांसातिरिक्तपोषणाय खाद्यरूपेणोपयोगिनः कस्यचिदपि वस्तुनः कृते प्रयोगः कृतः । तथैवात्र संस्कृतभाषायाँ वेदे उपनिषदिवा स्मृतौ वा मांसशब्दस्यार्थः कृतः फलभागस्य शाकस्य च कोमलावयवाय पोषणपराय कृते भवति प्रयोगः व्यवहारश्च ।

विभिन्न भाषाकोशेषु तथाविधोऽर्थः मांसादि शब्दस्य द्रष्टुं शक्यः । एवमेव फलशाकादित्वग् भागस्य नामकीर्तनं चर्मरूपेण लभ्यते । तथा फलशाकादीनां कठोरस्य कठिनस्य भागस्य नाम अस्थिरूपेण कृतम् । फलशाकादि कृशतन्तुभागं नस अस्थिबन्दरूपेण वर्णितवन्तः कोषकाराः ।

संस्कृत भाषायाम् प्रस्थं कुमारिका-मांसम्-आनय पदस्य द्रावप्यर्थौ भवतः—१ कुमार्य्याः सेटकं मांसमानय अथवा कुमार्य्याः घृतकुमार्य्याः औषध्याः विशेषायाः सेटकपरिमितं सरसं कोमलावयवमानय इति भवति नात्र विवादः कश्चन । विशेषतः संस्कृत भाषायान्तु वहवः शब्द गोः अंगवाचकाः विभिन्न पशूनामंग-वाचकाश्च सन्ति । आयुर्वेदशास्त्रे च औपधिपादपविशेषे वाचकतया कृतः । यथा—

गोदन्ति—शब्दः गोः दन्ति पंक्तिबोधकः औषधिविशेष बोधकश्च ।

गोक्षुरः—गोखुरबोधकः गोखरुनामकौषधि बोधकश्च ।

गोजिह्वा—गोर्जिह्वा माजर्वा गोजर्वानामकायोरौषधि विषये च प्रोक्तः ।

अजाकर्ण—अजाकर्णौ बुध्येते श्रोत्रेन्द्रियार्थः असन अर्जुननामक एक औषधि विशेषपादपः यस्यांशः औषध्यर्थे पूर्णतः प्रयोगः ।

अजा—छाग्या वाचकः कन्दविशेषस्य अजाऽऽकृतिकस्य अजा-स्तनाकृतिकस्य कन्द विशेषस्य बोधकश्च ।

एवमेव सहस्राधिकाः वेदेषु पुराणेषूपनिषत्सु प्रयुक्ता न केवलं दुराग्रहमात्रेण पशुविशेषार्थं बोधकाः यदि कोऽपि तथैव मनुते तर्हि तस्य बुध्देर्वैभव एवोपहासाय प्रमाणयुक्तिविहीनस्य वचनस्य किं स्वारस्यम् ?

अत एव बृहदारण्यकोपनिषदोऽयमध्यायः (६·४) अभीष्ट पुत्र-लाभाय कथं परीक्षणीयः कथं व्याख्येयः अस्याः प्रथमाध्यायपादः प्रथमः । तद् यथा—

एषां वैभूतानां पृथिवी रसः पृथिव्या आयोज्यामोषधयः ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्यरेतः ।

अथ पदार्थः[1]—सर्वभूतानां रसः पृथिवी, पृथिव्या रसः जलम्, जलस्य रस औषधयः, औषधीनां रसः पुष्पम्, पुष्पस्य फलम् फलानांरसः पुरुषः, पुरुषस्य रसः शुक्रः । पुरुषसारः वीर्यम् । इत्थमितः पृथिवी-रसादारभ्य पुरुषसारपर्यन्तं न कस्यचिज्जीवस्य=पशोर्मासिस्य वा सम्बन्धि किमपि वस्तु विद्यते ।

तस्मादत्र सुनिर्णीतमेव यत् सर्वोच्चसन्ततिलाभाय सर्वथा उत्तमश्रेणिकौषधीय फलैरेवोत्तमोत्तमश्शुक्रः (रसः) प्राप्तुं शक्यः नतु-कस्यचिज्जीवस्य मांसशुक्रादिकमत्र प्रासंगिकमौचित्यं धारयति । यत्रहि औक्षेण शब्देन वत्सोऽर्थः केनचिद् गृह्यते सोऽप्यत्रात्यन्तमनुपा-देय एव । उक्षाशब्देनैव औक्षेणेति रूपं सिद्ध्यति । अस्य शब्दस्यार्थः सरमानियरविलियम्समहोदयेन संकलिते प्रसिद्धे संस्कृतांग्लशब्द-कोशे यथा विहितस्तथा प्रस्तूयतेऽत्र—

१. 'a bull (as impregnating the flock) महोक्ष महावृषभः गवां गर्भाधानाय समर्थः ।[1]

२. Name of 'soma' (as sprinkling or scattering small drops) सोम रसः निर्झरन् रसपूर्णः अष्टवर्गेषु एकमौसधमृ-षभकनामकं विद्यते । ऋषभशब्दत एव आर्षभेण शब्दः सिद्धः । तत्रैव स्त्रयमुक्तविदुषा सुश्रुतभावप्रकाशानुरूप एवार्थः कृतः औषधीय लघुवृक्षांकुर इति । उक्षा शब्दस्यापि सोऽर्थःकृतः ।[2]

क्षरणशीलरसेन परिपूर्णः सोम एव । ऋग्वेदस्य मन्त्रेषु सोम-रसकृते प्रयोग उक्षाशब्दस्य लभ्यत एव । तस्य प्रयोगः सोमरसार्थेऽनेकेषु भिन्न वेदमन्त्रेष्वपि प्राप्यते स्वर्गीय पं० श्रीपाद दामोदर सातवलेकर-द्वारा सम्पादिते स्वाध्याय मण्डलानन्दाश्रमे पाटडी गुजरातप्रान्ते च

१. १३५-६, ६, ८३ ।

२. ६-८५-१०, ६-८६-४३, ६-८६-२ ।

प्रकाशितग्रन्थे गोज्ञानकोषे प्राचीनवैदिकविभागे खण्ड ख वर्गे प्रथमे २२८ पृष्ठतः २३२ पृष्ट यावत् मन्त्रक्रम संख्या ७९१ तः ८०१ यावदुपलभ्यते ।

मांस शब्दस्यार्थोऽपि भवति मनुस्मृतौ हि अयमेकश्श्लोक उद्धृतः तत्र मांसशब्द प्रयोगः कृत —

मासं भक्षयितामुभयस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥[1]

अयं मांस शब्दः पदद्वयं मिलित्वा सिद्ध्यति यथा—माँ+स इत्यस्यार्थः मां योऽत्ति (भक्षयिष्यति वा) अर्थादस्मिन् जन्मनि यस्य मांसं भक्षयिता परस्मिन् (भाविनि) जन्मनि स मम मांसं भक्षयिष्यतीति । इयं व्याख्या मांसशब्दस्य विद्वद्भिः कृता ।

यक्ष रक्षः पिशाचान्नंमद्यं मांसं सुरासवम् ।
तद् ब्राह्मणेन नातव्यं देवाना मद्नताहविः ॥[2]

अर्थात् मद्यमांसाद्यपवित्रपदार्थः यक्षरक्षःपिशाचानामेव भोजनं विद्यते । तस्माद् दिव्यसात्त्विकपदार्थस्य सेवनं द्विजातिभिः कथमपि मद्यमांसादिर्नोपयोगाय ग्राह्यः । यद्यपि इदमपिवचनं लब्ध्वा लोका मद्यमांसादि-सेवने प्रवृत्ता भवन्ति, तद्वचनं यथा—

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

तन्त्रग्रन्थानुसारं यज्ञे मांस भक्षणविधिलभ्यते तत्रायं विचारआवश्यक एव, यज्ञकर्मणि धनस्यापव्ययो भवति, पारिश्रमाधिक्यं विविध-वस्तूनां संग्रहे महानायासो भवति सर्वजनहितायारब्धे कर्मणि सर्वजन समूहस्यैकत्रोपस्थितयेऽपि प्रयास काठिन्येन सर्वं साफल्यतामेति ।

१. म० ५ श्लो० अ० ५ ।
२. म० ११-९५ ।

भाग्यवशादेव कश्चन यज्ञे प्रवृत्तो भवति तत्र पशूनां विस्रंसनं = वधः तन्मांसेन हुतिः, यज्ञान्ते यजमानेन शेषमांसेन तृप्तिः कथमनुभूयताम् ? अतस्तत्रैषविधिः यद् यज्ञान्ते शेषमांसं जिघ्रति यजमानोऽयमेवाशयः, अयमुत्तमो विधि रस्तितत्रत्यः यथाभक्षणेन यज्ञविधिः पूर्णतामेति केषाञ्चिन्मते तथैवात्र तदपेक्षया महान्विधिः जिघ्राणमेव यतो हि मांसस्य घ्राणेन्द्रियेण गन्धसाक्षात्कारो भक्षणरूप एव स्वीक्रियते । तस्मादत्रैवं विधस्य मांसभक्षणे नैवदोषः । अयमपि घ्राणविधिः मांस-भक्षणनिषेधायैव विहितश्शास्त्रज्ञैः । यज्ञसम्पादने धनाधिक्यव्ययः पारिश्रमाधिक्यञ्च तथापि न मांसभक्षणं सम्पन्नम् तर्हि तथाविधस्य यज्ञमिषेण मांसभक्षणविधौ प्रयासः किं साधीयान् ? मन्यताम् ? न हि वस्तुतोऽत्र मांसभक्षणाभ्यासशीलानां कृते जिघ्राणकर्मणा निर्देशेन मांसभक्षणत्यागएव युक्तयुक्त्या विधिसंमतः परमोपादेयता चसिद्धयतित्यागेन एनामेवपरिसंख्या भणन्ति विधिज्ञाः, अत्रहिविधौ निषेधात्मकं वाक्यमिदं प्रवृत्तम्भवति ।

२—एवमेव मद्यपानप्रसंगेऽपि विचारः कर्तव्य एव । यज्ञे सोमरस-पानविधिः शास्त्रसम्मत एव, अयं ह्यौषधिभिर्निर्मित एको महान् पुण्यप्रयोजको याज्ञिकोरसः, यश्च मद्यात्मना कीर्तित इवाभाति । अस्य रसस्य पानेन न कश्चन दोषो भवति । यतोह्यायुर्वेदशास्त्रेषु यथारोग निवृत्तये स्वास्थ्यलाभाय च तथाविधासर्वस्यारिष्टस्य च सेवनविधिः कृत एव वर्तते । योहि चिकित्साविधौ चिकित्सकै-रहर्निशं रोगिणां मुक्तये रोगात् स्वास्थ्यलाभाय निःसंकोचं सविधिपाल्यते । अयं रसश्च मद्यसदृश एव भवति, एतादृशं वचनमपि वर्तते औषध्यर्थे सुरां पिबेदिति । नायं रसोविषयवासना-धिया सेव्यते । न तथा विधरपिक्वचित् । विषयवासना रूपतया पानेन पतनं सर्वथाऽऽधिक्य सेवनाच्च भयानकरोगाक्रमणञ्च शक्यम् । अतोयज्ञे सोमरसपानमेव विधिः औषध्यर्थे सुरापानञ्चविहितं नान्यत्र ।

३—मैथुन सम्बन्धेपि विचारः प्रसंगतः क्रियते । मनुस्मृतो तद् विषये या संगतिरभिहिता साऽवश्यं पालनीया ।

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।।

एवं विध वचनानुसारं निषिद्धतिथिवार परित्यागपूर्वकं विधिवत परिगृहीत दारैः सह सम्बधः कथमपि दोषाय न भवति । अयं सर्वोऽपि सुसामञ्जस्येनव्यवहारविधिर्लोक कल्याणाय प्रकल्पते ।

वस्तुतोऽत्राध्यात्मिक पशुवधयज्ञोऽपि विचारणीयोविद्यते—यथा ये निवृत्तिमार्गाश्रयिणः तैरिहपशुयागविधिराध्यात्मिक एव वर्तते ? आध्यात्मिकपक्षे वहिर्भूतं किमपिवस्तु न गृह्यते किन्तु शरीरसम्बन्धिन एव गृह्यन्ते । तत्र पशुः क्रोधरूपः, हविश्चात्मा रूपमेव, घृतञ्च बुद्धिरूपमेव, समिधश्चेन्द्रियाणि, तादृशयाग कुण्ड-शरीरमेव, तत्रपशुवधायशास्त्रमनासक्तिरेव, सर्वतो निःस्पृहः सर्वतो रागमुक्तः, होता च मनोरूपी, तत्राग्निरपि ज्ञानरूपो वर्णितः ।

**यथाह महानिर्वाण तन्त्रे**—'कामक्रोध विमोहलोभपशुकान् छित्वा विवेकाशिना मांसंनिर्विषयं । परात्मसुखदं खादन्ति तेषां बुधाः' इति इत्थं तत्रग्रन्थेषु चाप्याध्यात्मिक पशुहिंसैव वास्तविकपशुहिंसोच्यते । तस्मादिह कामक्रोधमोहलोभात्मकपशून् विवेकासिना छित्वा तेषां निर्विषयात्मकं मांसमात्मसुखदं ज्ञानिनो विधिवद्भक्षयन्ति । एत-त्तात्पर्यमत्र कामक्रोधमोहलोभादिकं ज्ञानेन दूरीकृत्य ज्ञानिनो निर्वि-षयाः सन्तः आत्मकल्याणङ्कर्तुं पारयन्ति, योगिनोमहात्मानः भक्त-गणः सात्त्विक पुरुषाश्चाहर्निशमेवैतादृशमाध्यात्मिकपशुमांसेन हवनकर्मणि सावधानास्तिष्ठन्ति ।

अर्थात् जितक्रोधास्ते सर्वेन्द्रियाणि विजित्य शमदमतितिक्षाश्र-योपेता बुद्धया मनः परब्रह्मणिपरमात्मनि नियुज्य ज्ञानाग्निमुत्पाद्य जन्मजन्मान्तरोपार्जितकल्मषं विनाश्य निर्वाणमुपगच्छन्ति । महा-त्मान एवंविधेयमजेयं कामक्रोधादिपशुं विधिनाऽसंगरूप शस्त्रेण हत्वा हवनं कर्म सम्पादयन्ति । अयमेवाध्यात्मिक पशुयज्ञः । वेदे श्येन-यागस्यापिवर्णनं विद्यते तत्रापि अध्यात्मिकपक्षः किन्तु तत्र न पशुहिंसा । श्येनपदस्य बाजनामकपक्षिणि संकेतः यद्यपि लोके तथाप्यत्र श्येन पदेनात्मारूपोऽर्थः कृतः, गृध्रपदार्थोऽपि इन्द्रयरूपः । वैदिकनिघंटुग्रन्थे

वर्णनं लभते यथा मृगाणां मार्गणकर्मणां=इन्द्रियाणांमिति । श्येनः आत्मा भवति । श्यायते ज्ञानकर्मणोः गृध्राणीन्द्रियाणि । गृध्यते-ज्ञानकर्मणोर्यंत् एतस्मिंमस्तिष्ठति । मार्गेण=कर्मकरणादेव मृगः। मृगस्यार्थं इन्द्रियम् । ग्रहणकर्ता गृध्र पदेन बोध्यते । इन्द्रियाणि ज्ञान-कर्मणी गृह्णन्ति तस्मादेव गृध्र पदेनेन्द्रियाणि बोध्यन्ते । अत एव श्येनयागस्यार्थः अध्यात्मपक्ष एव भवति । इन्द्रियाणि यदधीनानि-तिष्ठन्ति तदेवश्येन पदेन बोध्यते । तानि सर्वाणीन्द्रियाण्यध्यात्माधी-नानि तस्मादत्रश्येन पदेनात्माबोध्यः ।

इत्थमुपर्युक्त निघंटुप्रमाणानुसारं श्येनयागस्याध्यात्मिकः पक्षः सिद्धो भवति । इन्द्रियाणि विषयान्निरुध्य निष्कामकर्म सम्पादन-पूर्वकं षड्विंशतितत्त्वानां यथार्थज्ञानद्वाराऽऽत्मानं भगवच्चरणा-रविन्देषु संगनतां सम्पाद्य सफलानि भवन्ति यदा तदैव भगवच्चरणा-रविन्दप्राप्तिरेवात्मनः श्येनयागोऽभिहितो भवति । एवमेव भगवत्याः श्री दुर्गादेव्याः स्वरूपस्याध्यात्मिकं रहस्यं विद्यते ।

भगवती दूर्गादेवी—भगवत्याश्श्रीदूर्गादेव्याः आध्यात्मिकरहस्य-सम्बन्धे तस्याविचित्रं सिंहारूढरूपं यन्महिसासुररूढसिंहारूढत्वं प्रशस्तं लोके तदपि रहस्यपूर्णं वर्तते । पृथिव्या उपरि राक्षसस्तदुपरि सिंहस्तदुपरि दशभुजा श्री दूर्गादेवी विराजत इति । राक्षसस्तमो गुणरूपः तदुपरिसिंहो रजोगणरूपः तदुपरि सत्त्वगुणमयी जगज्जननी दूर्गादेवी समधिष्ठिता विराजते । तस्यास्तादृशस्वरूपेणाध्यात्मिकी शिक्षा प्राप्यते । समस्ते ब्रह्माण्डे सत्त्वरजस्तमसां प्रवाहः प्रसरितो विद्यते । तेनेदं शिक्ष्यते यत् तमोगुणरूपोराक्षणो रजोगुणरूपेण सिंहे-नाभिभूतस्तथा रजो गुण रूपं सिंह सत्त्वगुणमयी भगवती समाक्रान्ता विद्यते येन सर्वत्र सुखशान्तिः कल्प्यते । देव्या दशभुजत्वतया शिक्षेयं यत् यैः प्राणिभिर्दशेन्द्रियाणि विजितानि स्ववशे हस्तवत् कृतानि तेषांस्वेच्छाचारितां निरुध्य लोकहितकर्मणिच नियुज्य सत्त्वगुणमुक्तेन भगवत्या भगवतश्चाराधना समुपासना विधीयते तथा तस्याशरणा-गते भगवतश्च शरणागतेराश्रयणं विहितं तैर्दशदिक्षु निर्भयेन सुरक्षया च भाव्यत एव । तस्मादेव मानवः रजस्तमसी पराभूय सत्त्वगुण प्राप्तौ प्रचासं कूर्याच्चेत्तदा तज्जीवनमेव जीवनं नान्येषाम् ।

अत्रयज्ञेषु विविधेषु प्रवर्तितेषु ये विचाराः शास्त्रीयाः विचारयितुं सम्भाव्यन्ते ते विस्तारभयान्नोपस्थाप्यन्ते परमत्र प्रसंगतोऽत्राश्वमेव यज्ञः नरमेध यज्ञः इन्द्रयज्ञो ब्रह्म यज्ञश्चेति विविधा विमृश्यन्ते। १– अश्व + मेधः अत्र प्रक्रिया वर्तते यथा-अश्व शब्दस्य अर्थः = अश प्रकृतिकः यस्यार्थः उत्पादनम् स्थिरीकरणम् प्राणाशनम् वहनशीलश्चेति विविधः अर्थात् सूक्ष्मवाष्प वायुरेवाश्वः प्रोक्तः मेध पदार्थश्चः = ज्ञानम् ज्ञानभवनम्वा, जयकरणम् तेनात्रोत्पादनशीलस्या स्थैर्यशीलस्य, प्रणाशनस्य सूक्ष्मवाष्पवायोः वहनशीलस्याश्वानां (जयकर्ता कारयिता) यस्मिन् यज्ञेस एव यज्ञोऽवश्वमेधयज्ञपदाभिधेयः। अथवा भगवान् वेदानुद्धर्त्तुकामः हयग्रीवरूपंधृतवान् यन्मुखाकृतिरपि वाजिमुख सदृशीति प्रसिद्धा। तस्मादेव भगवान् हयाननः हयवदनः, अश्वमूर्तिश्चाभिहितः तस्य भगवतो यस्मिन् यज्ञे समाराधना भवेत् स यज्ञः अश्वमेधनाम्नाभिहितो भवति। अयं भगवान् हयग्रीव विद्याऽधिष्ठातृ देवतात्वेन वर्णितः यस्योपासनया सकलविद्यानां सिद्धिरभिहिता। यथोक्तमत्र—

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ इति।

**गोमेधयज्ञविचार**

गोशब्दस्यार्थः वाणी, इन्द्रियम् जलम्, भूमिः, पदं-स्वर्गः वज्रम् खगः, विद्युत् सूर्यः मतिः, जिह्वा, धेनुः वृषभश्चेति नानाविधः, गौभिः, इन्द्रियैः पुष्टं वलं बुद्धिः तेजश्चैतानि सर्वाणि सत्यमिन्द्रियप्रभृतिभिः क्रमशः युक्ताहारविहारस्येति दिशा अन्ते शुक्र पोषकतया वलबुद्धितेजो वृद्धयाऽऽयुष्यवृद्धिर्भवति। येन सत्सन्तति प्राप्तिः तादृशशक्यत्याजायते सद्गतिश्चावाप्यते। गोमेध = विद्युत् शक्तिरूपस्येन्द्रियस्थ जपसाध्यस्य यज्ञस्य नामापि गोमेध इतिः। गोमेध यज्ञ स्वरूपे भगवतो नारायणस्य निवासाय त्रिधामप्रसिद्धं विद्यते। १—क्षीरसागरे श्वेत द्वीपस्थे शेषशायी, २—सूर्यमण्डलमध्यवर्ती, योगिनां हृदये च वासीति। गोशब्दस्य सूर्योऽप्यर्थः।

**एवं नरमेधयज्ञः**—संसारे गमागम = गमनागमनकारितत्त्वानां जयसाध्य यज्ञो हि नरमेध पदाभिधेयः। येन जन्ममरणमुक्तिर्जायते स

यज्ञो नरमेध उच्यते। अथवा सन्तानप्राप्तये पुत्रेष्टि यज्ञ सम्पादनाय नराकार-(पुत्रकाकार प्रभृतिभिः) लक्ष्मणाद्यौषधिभिः हवन सम्पादनम् तदनन्तर तदौषधसेवनमेव नरमेधयज्ञः।

**इन्द्रयज्ञः**—यत्र वर्षाहितो वेदमन्त्रैः यज्ञसम्पादनं स इन्द्रयागः। उतवा मेघजविद्युतोयजनसाध्य यज्ञोहि वृष्टि सम्पादक इन्द्र यज्ञ इति।

**ब्रह्म यज्ञः**—यदद्वारा विवर्धनशीला कर्षणशक्तिः तद्द्वारा तेजश्च यज्ञसाधकं स यागः ब्रह्म यज्ञ इति। वस्तुतो यज्ञः तां समाकर्षण शक्ति प्रतिपादयति यथा सूक्ष्मतः स्थूलान्तं निखिलं परोक्षं प्रत्यक्षञ्च जगत् उत्पाद्यते परिवर्त्यते रक्ष्यते चापि सा शक्तिरेव व्याप्यव्यापकभावेन सर्वत्र समाहितासती तिष्ठति।

प्राचीन कालेश्रूयते यत् यज्ञेषु पश्वादीनां विस्रंसनंभवतिष्म इति तदानीं यज्ञस्य प्राधान्यात्। यद्यपि यज्ञेषु पशोरालम्भनं न कथमपि-वेदसम्मतं तथापिमांसस्वाद लोलुपा जना पशूनामालम्भनं कुर्वन्तः श्रूयन्ते तदा तत्र पशोः हिंसा प्रथितः प्रतीयत एव। तदानीं पशुहिंसया न विरमन्तिस्म मांसमक्षण प्रचारवशात्। हवन यज्ञव्वाजेन हिंसक व्याघ्रादि पशुसदृशाः सदा मांस लोलुपा जना एव पशु हिंसायाँ प्रवृत्ता अभूवम्। यस्या हिंसाया अवरोधायैव भगवान् स्वयं बुद्ध-रूपेणावतीर्य्य निखिलेऽपि विश्वस्मिन् हिंसा कार्यंमवरोद्ध मेवाहिंसाया व्यापकरूपेण प्रचारं प्रसारं विधाय पशु वधयुक्तं यज्ञं निन्दितवान्। तदापि महती हिंसातु सत्यमवरुद्धा परंरूढिवादिनो जना हवन कर्मणि कथञ्चिदवश्यं हिसांकुर्वन्तोऽद्यावधि सन्ति।

इमां रूढ़िवादितां निवारणाय शेषावतारः भगवान् श्री रामा-नुजाचार्यो हि धराधाम्नि केशव यज्वनः धर्मपदन्याः कान्तमत्या देव्या दिव्य कुक्षौ समवतीर्यः येनश्चयंसंज्ञानुयायिभिः सह सजीवपशोर्हिंसा सर्वंथायज्ञकर्मणि वहिर्वा निषिद्धा। पशुवधनिमित्तक यज्ञविधि-वचनानाञ्च पारमार्थिकं वैदिकराष्ट्रवान्त मेव तथ्यं सम्प्रकाश्य लोका परम वैदिक पथमानीतवान् स रामानुजाचार्यः। श्रुतीनां सम्यङ् मीमासा प्रतिजन समक्षं कर्तुंदृढ़ प्रयासोऽभवत्। यज्ञे सजीवपशोः स्थाने

पिष्टस्य माषचूर्णस्य पशोरालम्भनमेव पशुयज्ञकर्तृणांकृते प्रतिपादिवान्। एवं विधानेन तथाविध श्रुतीनां प्रामाण्यमपि सुरक्षितं स्यात् तथा हिंसाजन्यपापान्निवृत्तिरपि पशुयज्ञकर्तृणां भविष्यतीति। वस्तुतोयज्ञे पशुवधः सर्वथा निषिद्ध एव यतः श्रुतिरेषाऽभिभासते यत् माहिंस्यात् सर्वभूतानीति। तेनैव यज्ञे पशुवधः निषिद्ध एव।

यत्र 'अग्निसोमीयं पशुमालभेत्' इति वचनमुपलभते तत्र सम्यगर्थं श्रुतेर्न विधाय सामान्यतयाऽयमर्थः कृतो यत् पशुस्यमग्निदेवस्य सोमदेवतायाश्चेतिः। अयमनर्थं एवार्थं बुद्ध्या मस्तिष्कपटले प्रविष्टः सर्वान् व्यामोहयत्। श्रुतीनां पारस्परिकं विरोधं परिहृत्यैव मीमांसाशास्त्रं वास्तविकमर्थमभिधत्ते। उक्त श्रुतिद्वयविरोधे मीमांसशास्त्रानुसारं निर्णयः क्रियते। तत्रत्य यागपशुविष्टि रूप एव माषचूर्णनिर्मितः विवक्षितः। अत्र प्रजापतिस्मृतिवचनं प्रमाणम्—

> अतो माषान्न मे वैतन्मार्थे विधिनाकृतम्।
> पितरस्तेन तृप्यन्ति श्राद्धं कूर्यान्न तद्विना॥[1]

विधाता मांसस्थाने माषान्नस्य विधानं कृतवान् येन पितरः पूर्णतस्तृप्यन्ते। अतो यत्र श्रुतिषु पशूनामालम्भनं लभेत तत्र पिट्ठीः माषान्ननिर्मितस्यैव बोधः। यदि चात्र शंक्यते केनापि यत् पिट्ठी माषान्नचूर्णनिर्मितः पशुः जड़भूतस्तस्य कथमालम्भनमिति ? तर्हि तत्र सम्यगुत्तरं समानमेव प्रश्नकर्तुराशयेन यतो यत्र चेतनपशोरजस्य वृकस्याश्वस्य छागस्यवाऽऽलम्भनमुक्तं तत्रापि तस्य पशो जड़ात्मकशरीरस्यैव भवति न तु चेतनस्य तस्य सर्वथा नित्यत्वात् तदालम्भनं सर्वथाऽशक्यं हास्यास्पदमेव। आत्मनि न कथमपि शास्त्रस्याग्नेर्वा प्रवेशः सम्भवः प्रवेशं विना नाशोऽसम्भवः चेतनस्य चातिसूक्ष्म रूपत्वाच्च। आलम्भनशब्दस्यार्थः प्राणिवियोगः या हिंसैवा मन्यते या विगर्हिता। वस्तुतः आलम्भनं नामाकृतेर्विघटनमेव लक्षणया कृतं विद्यते। हिंसार्थकस्यधातोर्हन् इत्यस्य प्रयोगोऽपि आकार विघट नेऽपकारेच दृष्यते यथा घटो हतो मया हतो मया देवदत्तः, घटस्य तु आकारः विघटितः देवदत्तस्य-

१. प्र० स्मृ० श्लो० १५२।

२५

चापकार एव कृतः । न तु प्राणस्य वियोगः कृतः । यत्र च सुरभि तनया गावः तासामालम्भनं = प्रोक्षणं ततो जातां प्रस्तूतां भूवि च स्रोतो मूर्त्या प्रवाहरूपेण परिणतां रूपान्तरं गताम् इति प्रयोगः तत्र विचार आवश्यकः आलम्भन शब्दस्यार्थः पाणिनीयव्याकरणानुसारं डुलभष्प्राप्तौ धातुः भ्वादिगणे पठितः लभते रूपं सिद्ध्यति, अस्माद् धातोः केवलं प्राप्ति रूपोऽर्थ एव भवति न तु कश्चनान्यः । तथैव प्रेरणार्थकोऽपि लभ्धातुः विद्यते प्रेरणार्थकस्यास्य मैत्रायणीसंहितायां सायणभाष्ये चान्द्रव्याकरणे, जैनेन्द्रव्याकरणे, काशकृत्स्नव्याकरणे, कातन्त्रव्याकरणे, शाकटायनव्याकरणे, हेमचन्द्रव्याकरणे च सर्वत्र प्रेरणारूपोऽर्थः स्वीकृतो न हिंसादिरूपः कोषानुसारं हि द्वयोरपि धात्वोः ग्रहणे प्रेरेणेऽर्थे च प्रयोगः ।

यजुर्वेदे (३०-५) आलभशब्दस्य प्राप्तिरूपोऽर्थः —

१—ब्रह्मणे ब्राह्मणं आलभते = ज्ञानाय ज्ञानी प्राप्यते ।

२—क्षत्राय राजन्यं आलभते = शौर्याय शूरः प्राप्यते ।

३—नृत्ताय सूतं आलभते = नृत्यकर्मणे सूतमाह्वयति ।

४—धर्माय समाचरं आलभते = धर्माय धर्मसभायाः सदस्याः प्राप्यन्ते ।

एवमेव स्मृतौ गृह्यसूत्रेपि आलम्भनशब्दस्य आलभते इत्यस्य च स्पर्शार्थे प्रयोगः प्राप्यते । यथा—

१—मीमांसादर्शने (२-३-१७) सुबोधिनी टीकायाम् आलम्भः स्पर्शो भवति ।

२—ब्रह्मचारिणः धर्मप्रसंगे—यथा-वर्जयेत् स्त्रीणां च प्रेक्षणालम्भम् । अर्थात् ब्रह्मचारिणोहि स्त्रीणां प्रेक्षणं स्पर्शञ्च न कूर्युः इति निषेधः (म० स्मृ० २ । १७६) ।

३—उपनयनसंस्कारे = अथास्य (ब्रह्मचारिणः) दक्षिणांसं अधिहृदयं आलभते आचार्यो ब्रह्मचारिणः हृदयं स्पृशतीत्येवार्थः (पा० गृ० सू० २-२-१६) ।

४—विवाहसंस्कारे—वरोवध्वा दक्षिणांसं अधिहृदयं आलभते, वरोवध्वा दक्षिणस्कन्धस्योपरि भागतः हस्तेन हृदयस्य स्पर्शं करोति (पा० गृ० सू० १-८-८)।

५—वेदोपवृंहणभूत महापुराणेषु श्रीमद्भागवतपुराणे एतद् विषये महत्प्रमाणं यत् यज्ञे पशोः आलम्भनस्यार्थो न हिंसा। यथा—

यद्घ्राणभक्षो विहितः सुरायास्तथापशोरालभनं न हिंसा (भा० पु० ११-५-१३) अर्थात् यज्ञे सुराया घ्राणेन्द्रियेण साक्षात्कार जिघ्राणमेव न तु पानम्। यज्ञे पशोः आलम्भनं स्पर्शं एव विहितः न तु हिंसनम्।

६—स्पर्श शब्दो दानार्थेऽपि प्रयुज्यते यथा र० म० का० (२-४६) कोटिशः स्पर्शयताघटोघ्नीः। अत्र स्पर्शयता प्रयोगः दानेऽर्थे।

यस्यां श्रुतौ आलम्भन प्रयोगोदृश्यते तत्र पिष्टपशो राकृतेर्विघटन मेवाभिप्रेतम्मन्तव्यम् तत्र जीवितपशोर्हिंसा कथमपि न ग्राह्या भवति। धर्मशास्त्र प्रधाने मनुस्मृतिग्रन्थे हि मांसभक्षणनिषेधः पशोर्हत्याया अपि निषेधो लभ्यत एव। तस्मादास्तिकोहि पुरुष आत्मकल्याणाय हिंसावृत्तेर्विमुख सन् जीवनयापनं विदध्यात् तदेवश्रेयस्करः। अहिंसावृत्तिरेव भगवत्प्राप्तावपि प्रथमसोपानमिवशास्त्रे वर्णिता।

भगवान् गीताचार्यः श्रीकृष्णोहि भगवद्गीतायां सुस्पष्टमुक्तवान् यज्जीवात्मा अतीव सूक्ष्मो भवति तेन शस्त्रेण छेदनभेदनं वह्निनादाहः वायुना शोषणं जलेनार्द्रीकरणञ्चैतत् सर्वं सर्वथाऽसम्भवमेव। तस्मिन् जीवात्मनि शास्त्रादेः प्रवेशाद्यसम्भवादेव सर्वथाऽवध्येन कश्चन भयं प्रवर्तते यदि नाम सर्वोऽपि जनः तथाविधं नित्यस्वरूपं स्वस्यावधारयेत्। महाभारतशान्तिपर्वणि राज्ञ उपरिचरस्योपोख्याने वर्णनमस्ति यत् यज्ञेषु विधिवदन्नादिकस्यैव प्रयोगो विधेयः, छागादेर्वधः कथमपि नोचितः।

निरुक्तकारो यास्काचार्योऽपि निरुक्ते प्रोक्तवान् यत् यस्तु हिंसामार्गेण तपो विधाय विद्यां परित्यज्य कृत्वापि प्रभूतं तपः सधूममार्गं

प्राप्य पुनर्मृत्युलोकमाविशन्ति न मुक्ता भवन्तीति तात्पर्यम् । महर्षि-याज्ञवल्केनापि प्रतिपादितं यद्धि धर्मविरुद्धं लोकविरुद्धं समाचरति स स्वर्गमपिनाप्नोति किन्तावन्मोक्षम् । तस्माद्धिंसात्मकं यज्ञं लोक-विरुद्धं विज्ञायापि न कूर्यात् यतो न कल्याणप्रदः स यत्रकुत्रापि तंत्रादि-ग्रन्थेषु मद्यमांसादि पानभक्षणविधिवर्णनं दृष्ट्वा यो जनस्तथाचरति स न वस्तुतस्तदीयार्थमवगच्छति । तत्र हि तथाविध शब्दस्यार्थो विल-क्षण एव परिभाषिको भवति यद् ज्ञानं कर्तव्यमेव ।

यथा गोमांसभक्षणविज्ञानमवधार्यमत्र

> गोमांसं भक्षयेन्नित्यं पिवेदमरवारुणीम् ।
> कुलीनं तमहं मन्ये तदन्ये कुलघातकाः ।।

अस्य पद्यस्यार्थो निम्नलिखित प्रक्रिययाऽवधारणीय :—

> गोशब्दे नोदिता जिह्वा तत्प्रवेशोहि तालुनि ।
> गोमांसभक्षणं प्रोक्तं महापातकनाशनम् ।।

गोशब्दस्यार्थो जिह्वा न तु गौः पशुः, जिह्वायास्तालुनिप्रवेश एव गोमांसभक्षणं प्रोक्तम् स्वेष्ट देवता ध्यानं सम्यगाराधनं जिह्वा-यास्तालुनिप्रवेशं विधाय तद्देवता मन्त्र जप एव गोमांसभक्षणत्वेन प्रतिपादितः । अस्यायमाशयो यत् गोः जिह्वाया तालुनिसम्बन्धता विधिरतिसाधनाभ्यासवलेन मन्त्रजपकालं यावद् भवति येनोपांसु-जपः सर्वोत्तमोभवति । अतएव गोमांसभक्षणरूपता प्रतिबोधिता एवं विषये मन्त्रजपेतल्लीनोऽकम्पितजिह्वोहि यज्जपस्तदर्थ भावनः इति वचनानुसारं सहजयोगिप्रकृतिगतः कुलीन उच्यते । न तु गोः पशो-मांस भक्षणकर्ता ।

तत्रैव अमरवारुणिपान विज्ञानमप्येतादृशम्—

> जिह्वाप्रवेश सम्भूतः वह्निनोत्पादितः खलु ।
> चन्द्रात्सुवति यः सारः स स्यादमरवारुणी ।।

अर्थोऽत्र समवधारणीयः—खेचरीमुद्राया समभ्यासी योगीजनः स्वजिह्वया प्रथमं छेदनक्रियां विधाय तत्रोदोहनक्रियां विधाय

तालुरन्ध्रप्रवेशयोग्यां जिह्वां विधाय ततस्तालुरन्ध्रे प्रवेशङ्कारयति। तदा शिरोगतचन्द्रकुण्डत एको विलक्षणो रसः स्रवति तस्यैव रसस्य पानं योगोजन एव करोति, इदेमेवामरवारुणीरसपानं कथयति योगज्ञोयोगशास्त्रे। अत्रायमाशयः उपर्युक्त रीत्या तथा गोमांस भक्षणकर्ता अमरवारुणो रसपानकर्ता च परमश्रेष्ठो: मन्यते पवित्रः कुलीनः कथ्यते तथा स्वकुलोद्धारकश्च बोध्यते।

**बाल-विधवा बलात्कार विज्ञानम्**

> गंगा यमुनयोर्मध्ये बालरण्डातपस्विनीम्।
> बलात्कारेण गृह्णीयात् तद्विष्णो: परमं पदम्॥

गंगा यमुनयोर्मध्ये काचिदेका बालविधवातपस्विनी वसति तया सह बालात्कारी मोक्षं लभते। श्लोकेऽत्रगंगा यमुनयोर्वर्णनं वालरण्ड्या सह बलात्कार: कृतो विद्यते। सर्वस्य रहस्यमत्र प्रकाश्यते–

यथा–

> इडा भगवती गंगा पिंगला यमुना नदी।
> इडा पिंगलयोर्मध्ये बालरण्डास्ति कुण्डली॥

शरीरे इडानाडी गंगापदेनोच्यते, पिंगला यमुनापदेन। इडापिंगलयोर्मध्ये कुण्डली नाडी भवति, कुण्डली नाडी वालरण्डापदेन सुषुम्णा नाडीपदेन च प्रोच्यते। अत्र बलात्कार शब्दो ग्रहणार्थे प्रयुक्तो न तु व्यभिचारार्थे, सुषुम्मणाया कुण्डल्या वालरण्डाया ग्रहणेन सर्वतोमन आकृष्य सुषुम्णाचलन क्रमे केवलं भगवदुपासनाया एव निर्देशो योगशास्त्रे कृत:। योगीजनो भगवदुपासनातः पूर्वं योगाभ्यासेन (बलाद्ग्रहणेन) वालरण्डारूपिणीं कुण्डलिनीं जागृतिकर्मणा पूर्वतो तस्या जागरणं विधाय भगवत् उपासनां विधत्ते। अत्र तादृश्या एव वालरण्डाया बलात्कारो नाम ग्रहणमेव वर्णितं विद्यते। अत्रैवं विध योगक्रियया मोक्षो निश्चितो भवति।

एतावता प्रकरणेन गोमांसभक्षणशब्दः अमरवारुणी शब्दः अमरवारुणी रसपानशब्दः वालरण्डा गमन=बलात्कार शब्दाश्चं सर्वोऽपि पारिभाषिका एव । एषां शब्दानां सर्वोत्तमविलक्षणं वा युक्त तंत्र ग्रन्थेभ्य उद्धरणं कृत्वा योगाभ्यासक्रियाया सम्यगर्थं एव व्यक्ती कृतः । इमाः सर्वाः क्रिया योगिनांकृते अतस्तादृशान् शब्दान् ध्यात्वा पठित्वा श्रुत्वा दृष्ट्वा वा न लौकिको विषय-वासनानुसारी शास्त्र विरुद्धोऽर्थोविधेयः कथमपि । अत एतत्सर्वैर-प्यवधारणीयम्—

पुराणं मानवो धर्मः साङ्गनो वेदश्चिकित्सितत् ।
आज्ञा सिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इत्थमत्र पुराणम् धर्मशास्त्रं मनुस्मृतिप्रभृतिकम् साङ्गवेदाः, चिकित्साशास्त्राणि च सदोपदेशकारिणि तेषामाज्ञा कथमपि न तर्केण निवारयितुं प्रयतनीया । उपनिषत्सु मांसशब्दस्यार्थो न पशु-मांसः किन्त्वौषधविशेषमेदाभागः मांसल एव । एवमेव मंत्रेषु उक्षा शब्दस्य ऋषभशब्दस्यार्थो न वृषभः किन्त्वौषधि विशेष एव ।

यथा प्राणिसुचेतन वर्गेषु मांसः अस्थिमज्जाप्रभृतयोऽर्थाः प्रशस्ता तथोषधीसु वनस्पतिवर्गेषु चापि मांसस्थिमज्जादीनां व्यवहारो भवत्येव । आयुर्वेदीय सुश्रुतसंहितायां (३-३२) वर्णनं विद्यते यदाम्रफले पक्वे केशरमांसास्थिप्रभृतीनि मज्जातः पृथक् पृथक् दृश्यन्ते । एवमेव उक्षा ऋषभशब्दयोरोषधिविशेष प्रयोगः उभेऽपि तदौषधे रसायन-प्रमुखे च्यवनप्रासेऽष्टवर्गे परिगणितेतयोः पर्यायौ जीवकः ऋषभ-कश्चेति । उक्षाया अर्थरेतः सेचनसमर्थः कथितः इयं बलवीर्यं वर्धन-शीला ओषधिः । वीर्यमेव जीवनमुक्तं वर्तते—

चित्ताधीनं नृणां शुक्रं शुक्राधीनञ्च जीवनम् ।
तस्माच्छुक्रं मनश्चैव रक्षणीयं प्रयत्नतः ॥

वीर्यवर्धकत्वात् जीवनदायित्वाच्च उक्षा जीवकनाम्ना प्रोक्ता भवति । एवं द्वितीया ऋषभकनाम्नी चापि बलवीर्यवर्धकत्वात् तत्तदौषधिविशेषे प्रोक्ता । द्वेऽपि हिमालयशिखरे उत्पद्येते—

जीवकर्षभको ज्ञेयौ हिमाद्रि शिखरोद्भवौ।
रसोनकन्दवत् कन्दौ निःसारौ सूक्ष्मपत्रकौ।
जीवकः कूर्चकाकारः ऋषभो वृष शृंगवत्॥

एतावतात्र गोमांसादि भक्षणविधेः शास्त्रीयवचनानुसारं सर्वोऽप्यर्थो विमर्शित एव।

गोः वैदिकनामानि सन्ति तेषामर्थविचारणेनापि गोवधविषयको भ्रमो दूरी भवति—यथा (१) अहन्या=हननाऽयोग्या अहन्तव्या इत्यर्थः। (२) अही=अबध्या=अहन्तव्या, (३) अदिति (अ+दिति)= अछेद्या=अखण्डनीया प्रथमयज्ञप्रसंगतोऽहिंसा दर्शिता अत्र नाम्ना वर्णिता। गोरबद्धयता विषये विशेषेणापि महाभारत शान्तिपर्वणि वेदे च प्रतिपादिता विद्यते यथा—

अहन्या इति गवां नात्र क एतां हन्तुमर्हति।
महच्चकाराकुशलं वृषं गां वा लभेत्तु यः॥[1]

अर्थात् गवां नामैवाहन्या=अवध्या (अहंतव्या) इति। यदाऽयं गो न वध्यस्तर्हि कथं तस्य वधंकोऽपि कूर्यादिति विधिःस्यात्? यज्ञवाचकेषु नामसु अध्वर शब्दः प्रयुक्तः यस्यार्थः अहिंसा भवति, ध्वर शब्दो हिंसावाचकः यथा–ध्वराहिंसा तदभावो यत्र स अध्वर इति। इत्थमत्र प्रमाणितमेव यज्ञ मेधादौ न कयापि रीत्या कापिहिंसविधेया। (मेधृहिंसा संगमने च) मेधृ=शब्दस्य त्रयोऽर्थाः (१) बुद्धिवर्धनम् (२) संगतिकरणम्, (३) हिंसनञ्चेति। तत्रशब्दे यद्यपि हिसागन्धस्तथापि बर्धनं सम्मेलनमपि विद्यते यत्रार्थद्वयस्य प्राधान्येन गोसंवर्धनम् गोसंगतिकरणमेवार्थौ वलीयान्सौ भवतः। तत्राप्यर्थत्रयोपस्थितौमीमांसाभवति यत् गोमेधे कोऽर्थः समीचीनो ग्राह्यश्चात्र, अहिंसावाचकाध्वर शब्दसाहचर्याद् गोहिंसनार्थः पृथग् भवति, शेषावेव द्वावर्थौ गोसंवर्धनं संगतिकरणञ्चावधारणीयावत्र भवतः तस्मादत्र गोपालनं संवर्धनमेव संगतिप्रयोजकम्मन्यते। तेन गोहिंसाया न किमपि तथ्यमत्र समीचीनतां व्यवहारिकताञ्चभजति।

---

१. म० भा शा०, अ० २६३।

वेदेऽपि गोवधनिषेधकवचनम्, यथा—गां मा हिंसीरदितिं विराजम्–४२, घृतं दुहानामदितिं जनाय...मा हिंसीः ।।४९ यजुर्वेदः १३।।

तेजस्विनी गौरवध्या = अहिंस्या भवत्येव। गौश्चानुपमेया वेदस्याभिमतमिदं यत् सर्वेषां पदार्थानामुपमा सुलभा न तु गोः गौश्च यादृशमुपकारं समस्तमानवजातेः कृतवान् न तादृशमन्यः। यथा यजुर्वेदवचनं विद्यते—

ब्रह्म सूर्यं समंज्योतिर्द्यौः समुद्रसमं सरः।
इन्द्र पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ।।[1]

अर्थात् ज्ञानाय तेजसे च सूर्योपमा द्युलोकाय समुद्रमुपमा, पृथिवी विशाला यद्यपि तथापि तदपेक्षयेन्द्रोऽधिकं समर्थः प्रतिपादित एव। परं गोः मात्रा न विद्यते अर्थात गवासह न कस्यापि तुलना। अयमपि मन्त्रो गोहिंसाया निषेधकः यथा—दुहामश्विभ्यां पयो अहन्ये सा[2] वर्धतां महते सौभगाय, अयमवध्यो गौः अश्विन्या देव्याः कृते दुग्धं दद्यात् तथास्माकं महते सौभगाय वृद्धिं प्राप्नुयात्।

अस्मिन् मन्त्रे (सा अहन्या वर्धताम्) अयमबध्यो गौः वृद्धिं गच्छेदिति प्रोक्तम्। समेषां लाभाय गोःवृद्धिं कामना यत्र विद्यते तर्हि कथंतस्य कथमपि सिद्ध्येत् हिंसा। एतेन सर्वमेतत्प्रमाणितं यत्र कुत्रापि हिंसा यज्ञे परं मांसलोलुपा जनाः यज्ञाद् विशेषतो वहिर्निषेधेऽपि यज्ञे पशुवध विधि प्रयुक्त इति प्रेरयित्वा जनान् पशुवधं कारयितुं प्रेरका अभूवन्। यस्य पूर्णतया निषेधः श्रीमद्भागवत महापुराणे विद्यते यथा—

प्रथममत्र यज्ञे मांसभक्षण विधिर्मांसलुब्धानां कृते यथा प्रवर्ततेस्म तथा वर्णनं भागवतकारेण कृतम्—

ते मे मतमविज्ञाय परोक्षं विषयात्मकाः।
हिंसायां यदि रागः स्यात् यज्ञ एव न चोदना ।।[3]

---

१. यजुर्वेदः २३-४८।
२. ऋ० वे० १–१६४–२७।
३. भा० पु० ११-२१-२९।

अर्थात् परोक्ष मतमविज्ञाय विषयात्मकजनानां कृते एष नियमो यदि ते विषयासक्ता मांसबुभुक्षवस्तर्हि यज्ञ एव तत्र रागः क्रियेयुः । एतेन सुस्पष्टमिदं यत् उपर्युक्तं भागवत महापुराण वचनं न विधिवाक्यं किन्तु मांस विषयासक्तानां कृते एकः प्रतिबन्धात्मको विधिरेव न च कर्तव्य विधिः ।

अत एवाग्रे तत्रैव भागवत महापुराणे प्रोक्तम् यत्—

हिंसा विहाराह्योलब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवतायज्ञैः पितृभूतपतीन् खलाः ॥[1]

अर्थात् हिंसाशीला हिंसा विहारिणो दुष्टतावशात् स्वस्य सुखवासनया इन्द्रियतुष्टिबुद्ध्या पशुं हत्वा तन्मांसेन यज्ञं विधाय देवताः पितृस्थाभूतपतीन् सर्वान् सन्तोषयन्तो बाह्याडम्वरमाचरन्ति मांसाशिनः । अतएव महाभारते शान्तिपर्वणि सुस्पष्टमेव प्रतिपादितं यत् यज्ञे मांसभक्षणविधिः धूर्त्तैरेव प्रवर्तितो न तु वेदे तथाविधिः प्रोक्तः । यथा-

सुरामत्स्या मधुमांसमासवं कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद् वेदेषु कल्पितम् ॥
बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अज संज्ञानि बीजानि च्छागं नो हन्तुमर्हथ ॥
नैषधर्मः सतां देवा यत्र वध्यते वै पशुः ॥[2]

इत्येवं लोकहिताय पूर्णतया प्रकृतिहिताय सर्वथाऽहिंसा परमो धर्मः सदाऽऽदरणीयः ॥

न केवलं भारतीय शास्त्रेष्वेवऽहिंसाधर्मवर्णनं किन्तु ईसाई धर्मेऽपि तस्य समादरः हिंसायाः पूर्णं निषेध दृश्यते ।

'He that Kitten an ox is as if he slew a man' (Isaiah 66.3) अर्थात् येन गोवंशहत्याकृता तेन मनुष्यस्यैवहत्या

१. भा० पु० ११-२१-३० ।
२. मा० शा० प० ३३७-४-५-३२४-४-५ ।

विहितेति मन्यते। आंग्लभाषाकोशानुसारं OX शब्दो गोवंश-स्यस्त्रीपुंसयोरुभयोरपिबोधको भवति। एवमेव मुस्लिमधर्मेऽपि हिंसा निषेधो वर्तते। (अल गजाली) (१०५८-१११ इसवी) अष्टाविंशतितमेवयसि बगदाद स्थितस्य इस्लामिया इंस्टीट्यूट इत्यस्य निर्माणं सर्वोत्तमं निर्माणं कृतमासीत्। तद्द्वारा लिखितेऽरबी ग्रन्थे इह्य उलुमअल-दीन (धर्मस्यसार:) एव कुरान् समानतयाऽऽद्रियते तस्य उर्दू भाषायामनुवाद: नवल किशोर प्रकाशनेन लखनऊस्थितेन कृतो मजाकुल आरफिन नाम्ना प्रकाशमानीत:। अस्मिन् पुस्तके १९५५ ई० संस्करणस्य द्वितीयखण्डे २३ पृष्ठे १७-१९ पंक्तौ गोमांस-दोषविषये गोदुग्ध घृतस्यगुणविषये च वर्णनं लभ्यते। तत्र गोमांसो रोग नाम्ना दुग्धादिकमारोग्यतया वर्णितम्।

एतद् विस्तृतं वर्णनं सप्रमाणं पूर्वपक्षोत्थापन पूर्वकंसमुचितोत्तर प्रदानं च यथा क्रियते तत्सर्वमिह विविध भाषाभिमतं धर्माभिमतं सम्प्रदायाभिमतंञ्च युक्तियुक्तं विधीयते। विभिन्नसंस्कारे यत्र यत्र गोमांसादि विधि: श्रूयते तत्र तत्र विविध मन्त्राणमर्था: कीदृशा व्युत्पत्तिमधिकृत्य विहिता भवन्ति सर्वं सप्रमाणमुपस्थाप्यते। अत्र प्राचीनभारतेगोमांस सम्बन्धिसमीक्षात्मकग्रन्थस्यविस्तृतमुद्धरण-मेतदर्थमेव दीयते येन सर्वविधमुत्तरं भवति। सन्तोषप्रदं समस्त प्रश्नानाम्। उक्षान्न वशान्न शब्दयोरर्थ: भ्रान्त्या गोवध्यत्वरूप केन कृत:। आंग्ल भाषाया: पुस्तके वैदिक इण्डेक्स खण्डद्वितीये १४५ पृष्ठे मैकाडोनेलमहोदयस्य कीथमहोदयस्य लेख: वर्तते यस्या-र्थोऽत्र प्रस्तूयते तन्मतानुसार मेव यथा—वैदिकग्रन्थेषु मांसभक्षण-विधिर्नियमेन लिखितो लभ्यत इति। येन हिंसाया पशुहिंसा वर्जनस्य नामोल्लेखो नास्तीति, उदाहरणाय-शास्त्रीयविधौमांससमर्पणस्य-भावोऽयं विद्यते यत् देवगणा मांसंभक्षयिष्यन्ति, ब्राह्मणाश्चापि-खादन्तिस्ममांसम्। तत्र वृषभभक्षी उक्षान्न पदेनाग्नि: गोभक्षीवशान्न ऋग्वेदे गृहीतो विद्यत इति (ऋ० वे० ८-४३-११)।

एवमेव वी० एस० आप्टे महोदयेन आंग्लभाषाया: पुस्तके वैदिक-कालस्याध्ययनेऽध्याये १९ पृ० ३८९ लिखितम्। यदनुसारं विवाह प्रसंगे गोहत्या गोमांसशीर्षके प्रतिपादितम्।

अतेत्थं समाधीयते यत् लुप्ततद्धितांशप्रक्रियायाः कृते यथा स्वर्गीयः पं० श्रीपाद दामोदर सालवलेकर महोदयः गोज्ञान कोशे प्राचीन-खण्डे वैदिकविभागस्य प्रथमखण्डे १३ पृष्ठे लुप्ततद्धि प्रक्रियां बोधयन् वेदमन्त्रेषु एवं विधा अपि मन्त्राः यत्र शब्दार्थं तात्पर्यमन्य देव प्रतीयते। ऋग्वेदीय (६-४६-८) गोभिः श्रीणीत मत्साम्॥ एतस्य सर्वस्येति।

---

# साहित्य मीमांसा

अयं साहित्यशब्दोऽपि ॐ प्रणवाकारवदथशब्दवच्चपरममांगलिक इति परमं रहस्यम् । चिरकालतोऽद्यावधि साहित्यशब्दप्रयोगोलोकव्यवहारे शास्त्रे च परमां प्रसिद्धिमधिगच्छन्ननादि कालप्रवाह इव परिस्फुरञ्चकास्ति । सामान्योऽपि जनः सामान्येऽप्यर्थे नैसर्गिकमिमं प्रयोगं प्रयुञ्जन् दरीदृष्यते । अस्य मांगलिकत्वविषये न सन्देहलेशोऽपि यतस्साहित्यसंगीतकलाविहीनः साक्षात्पशु पुच्छविषाणहीन इत्यत्र संगीतस्य सामवेदमूलकत्वेन सुदीर्घकालतो नैके संगीतलयपरायणा महाविभूतयो भारतमुवममलां समलङ्कृत्य संगीतरवमहामन्त्रामोघैरखिलञ्जगच्चैतन्यतान्नीतवन्तः प्रस्थखण्डमपि द्रवीभूतत्वं विधाय समग्रप्रपञ्चं सरसञ्चक्रुरिति के न समर्थयन्ति ? 'रस्यते 'आस्वाद्यते' इति रस इतिव्युत्पत्त्या भावस्य सम्पूर्णस्य रसपदवीं नीतस्यमहर्षिभरनुभवपथमानीतस्य सहृदयैकगम्यस्य रसो वै सः इति श्रुतिसम्मतस्य तस्यसंगीतप्राणस्यापेक्षयाऽभ्यर्हितत्वेनसाहित्यस्योक्त सूक्तौ प्रथमप्रयोगश्चाप्यत्र मांगलिकत्वं सुतरां प्रमाणयति । अयञ्च साहित्यशब्दः परममांगलिकः सन्नपि सम्पूर्णं वाङ्मयमभिव्यञ्जयन् वेद शब्द इव व्यापकः सर्वमंगलकारकः सर्वशास्त्रबोधनमूलभूतः सर्वार्थसाधनसाधुत्वपरः स्वरूपतः सर्वार्थाकारपदपदार्थनिरूपणसमर्थः सततं समग्रशास्त्रलक्षणलक्ष्य बोधनक्षमश्च ।

आन्वीक्षिक्यादि दण्डनीत्यान्ताश्चतस्रो विद्या इति सम्यगेव तथापि सर्वासामपि निष्यन्दः साहित्यविद्यैव । चत्वारिश्शृंगाइत्यस्या ऋचो व्याकरण यज्ञ साहित्यपरमिति त्रिविधमपि विवरणमुपलभामहे । छन्दोवेदे श्रूयते, आह्लादरसशब्दयोश्चदिघात्वर्थं साम्यात् पर्यायिता । शब्दार्थयोः शक्तिशिवयरोरिव संयोगः साहित्यमिति । वस्तुतो गाढतरव्युत्पत्तिमसृणीकृतान्तःकरणानांपदवाक्यप्रमाणपारावारीणानांसाहित्ये स्वाभाविकीप्रवृत्तिः । अतएव शास्त्राणि सर्वाण्यपि व्युत्पत्तिकारिणि काव्योपकारकाणि काव्योपकरणानि साहित्यमङ्गीति

विज्ञाः प्रतिपादयन्ति । कालिदासानुसारेणैवाचार्यं कुन्तकोऽपिसहितत्त्वामृतञ्चपरस्परोत्कर्षजनकत्वरूपशोभाजनकत्वरूपमेववावदति सा च शोभा किं रूपा ? इति विचारणायामित्थं प्रतिपाद्यते यद्धि सर्वथाध्येयमेवं तद् यथोक्तन्तेनात्रौचित्यमेव परमहस्यं प्रमाणयति ।

औचित्येऽपि सूक्ष्मेक्षिकया परीक्ष्यमाणे यथा प्रकृतिवर्णनस्वरूप एव पर्यवस्यति । तेन हि सर्वेषु दोषेणु प्रकृति विपर्ययो नाम दोषः सर्वथा परित्याज्य एव । यत्परित्यागे समुचिते तदौचित्ये परिस्फुरति सति तनुषङ्गिणि शब्दार्थं चमत्कारे चावश्यवाचः कवेः स्वयमनुगमनविधायिनि स्वयमेव साहित्यन्नाम किमपि सारस्वतं तत्त्वं प्रादुर्भवतीति रस प्राधान्यवादि नामाचार्याणां मते रसपरिष्यन्दरमणीयत्वंरसपरिस्पन्दरमणीयत्वम्वा साहित्यापरपर्यायतया प्रतिष्ठामातिष्ठते । सा शोभाऽपरपर्यायाशक्तिः परमा शिवस्य जगत्सिसृक्षया मयूराण्डरन्यायेन विश्ववैचित्र्यप्रसवित्री पराप्रतिभाऽपरपर्याया परया वाचा संश्लिष्टावतिष्ठते । सैवशब्दार्थ वैचित्र्यमयकविसृष्टेरुपादानकारण रूपा । परावागेव प्रतिभोन्मेषिणी पराप्रतिभा व्यपदेश्या इत्यपि दर्शनम् अत्रेदं शंक्यते यत् शब्दादेव प्रमिति इति व्यासस्यका गतिरिति ? तत्रोच्यते—शब्दः साभिप्राय एव नतु निरभिप्रायः, तेनार्थाविनाभूतत्वमर्थादेवसिद्धम् । शब्दार्थयोश्शक्तिशिवयोरिवाविनाभावसम्बन्धस्वीकारात् तस्यैव च साहित्यरूपत्वात् तस्मादत्र साहित्यपदस्यमांगलिकत्वे निरस्ताः सर्वाः विप्रत्तिपत्तयः । तस्मादेवच काव्यस्य परम्रहस्यं सत्कविवचसा मन्तरा गोचरंकिमपि प्रस्फुरद्रमणीयत्वं तत्त्वंसाहित्यमिति रहस्यविदो निगदन्तितराम् ।

सत्कविः सत्काव्यञ्चाप्यत्र चर्चितव्यमेव तद् यथोदाहरणे स्वयमेवसुधियो विभावयिष्यन्तीति विचार्य प्रस्तूयते—

पश्य देवस्य काव्यमिति श्रुतेः अपौरुषेयं काव्यं वेदा इतिप्रमाणेन तथ्यमिदं प्रमाणितम्भवत्येव यत् वेद शब्देभ्य एवादौ 'पृथक् संस्थांश्च' निर्ममे' इति मानमेयोदय वचनानुसारं मानवीया वाणी तमेव पक्षं लक्ष्यी करोति । मानवानामाचारविचाराधीति बोधादिषु विधान-

मेवसरणी करणीयम् । तच्चापौरुषेयार्थं प्रत्यक्षानुमानादि सापेक्षमेव-भवितुमर्हति—सर्वस्य लोकः लोचनं शास्त्रम्' यथोक्तमत्र—

लोक्येते चात्र शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽथवा वृहद् व्यवहर्तृं परम्परा ।।

यच्चपूर्वमुक्तमेव सर्वशास्त्रलक्षण लक्ष्याभिव्यञ्जकः साहित्यशब्द इति तत्रापि वचनमिदं प्रमाणं यत् प्रयोग विज्ञानापरपर्यायं साहित्य-मिति ।

अत्र च साहित्यम्, साहित्यशास्त्रम्, साहित्य विद्या, चेतितत्त्व त्रयमालोच्य विषयः । प्रयोग विज्ञानं पुरुषार्थाय भवति, तत्तु साहित्यैक समधिगम्यमित्यप्यतिरोहितमेव सर्वशास्त्रवासनवताम् । प्रयोगश्च एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः कामधुग्भवतीति भगवत्पतञ्जलिमुनि सुबोधितया श्रुत्या ज्ञातव्य प्रयोग एवाभ्यर्हितः सर्व-शास्त्रभूमौ । शब्दविषयक सम्यक्त्व प्रतिपिपाययिषूणां कृते व्याकरण प्रामाण्यं सर्ववादि सम्मतं भवति । यथालोके तथावेदे, वेदाद् धर्मोहि निर्बभौ, वेदोऽखिलं धर्ममूलम् इति स्मृतेश्च । जनजीवनस्याधीति बोधाचरण प्रचारादिकमाम्नाय मूलकमेव प्राशस्त्यम्भजति । आम्नाय-स्यच क्रियार्थत्वात् । ज्ञान जन्याचिकीर्षा तज्जन्याकृतिः कृति जन्या चेष्टा तज्जन्यञ्चपलम् । आम्नायश्शब्दमयः । तस्मादेव सृष्टि प्रक्रिया-मवगत्य धाता यथापूर्वं ब्रह्माण्डं ससर्ज । तस्य तत्प्रवेशाच्चेतना, तत स्तस्य ज्ञानं सम्यग् गुरुशुश्रूषणादिभिर्भवितुमर्हति ।

सम्यग्ज्ञानाभावे-चिकीर्षा नोदीयात् । उदेति चेति विफला भवति, सुप्रयुक्तत्वं नाम 'आप्तत्वेन व्यवहृतत्त्वम् । व्यवहारोऽपि विधिनैव भवति, अन्यथोपहसनीयतैव स्यात् । अतएवोक्तमुपरि सम्यक् प्रयोग विज्ञानं पुरुषार्थाय भवति, यद्धि साहित्यैक समधिगम्यमिति मानादेव-मेयसिद्धिः । तदेतद्दिशात स्माच्छास्त्रं प्रमाणन्ते कार्याकार्यं व्यवस्थिता विति योगेश्वरेश्वरानुरोधात् सर्वैरपिशास्त्रप्रामाण्यमङ्गीक्रियते । लोक व्यवस्थापि विधि पूर्वैव ।

एवञ्च मन्त्र ब्राह्मण स्मृति पुराणोपपुराणायुर्वेद गान्धर्व सत्का-व्यगीतादीनामपि समग्र शास्त्रवलयानाञ्च साहित्य मीमांसायामुप-

योगः । वेदानां स्वतः तद्विरुद्धानां स्मृतीनां तदविरुद्धानां लोकवृत्तीनां तदविरुद्धाया आत्मतुष्टेः प्रमाणम् साधकं प्रमाणमेव न्यायः इति मम्मटाचार्यैः स्वशक्त्या प्रवृत्तिमत्त्वं न्याय्यात्वमिति भामहोऽपि प्रतिपादयति । शब्द प्रयोग विषयतां व्याचक्षाणेन महाभाष्यकारेण वाङ्मयादि परिचय इत्थं व्यपदिष्टोऽस्ति यत् सप्तदीपावसुमती चत्वारो-वेदाः, त्रयोलोकाः, एकशतमध्वर्य्यु शाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम् नवधाथर्वणवेदः ।

अथर्ववेदोयमुण्डकोपनिषदितु द्वे विद्ये वेदितव्ये ह्स्य यद् ब्रह्म विदो वदन्ति परा चैवापराच, तत्राऽपराऋग्वेदो यजुर्वेदः सामवेदोऽथर्व वेदश्चेति शिक्षाकल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति च । अथपरा ययातदक्षरमधिगम्यत इति । यथोक्तं वेदमन्त्रे—

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि यज्ञिरे ।
छन्दांसि यज्ञिरे तस्माद्ययुस्तस्मादजायत ॥

अत्र ऋक् साम यजुषां त्रयाणामत्रोल्लेखः नतु विकासक्रमः । किञ्च ऋग्यजुः सामभिरेव वेदानां ग्रहणे पुनश्छन्दः पदोपादानं लौकिक काव्यादिपरम् अन्यथा वैयर्थापत्तिः । अथर्व संहितायाम् यथा—

तमितिहासञ्च पुराणञ्च गाथाञ्च नाराशंसीश्चानुव्यचलम् ।

ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वं दिविदेवा दिविश्रिताः ॥

इतिहासस्य च पुराणस्य च गाथानाञ्च नाराशंसीनाञ्च प्रियं धाम भवति स एवं वेद ।

आन्वीक्षिक्यादि दण्डनीत्यन्ताश्चतस्रो विद्या इति सम्यगेव यथापि तासां सर्वासामपि निष्पन्दः साहित्य विद्यैव । चत्वारि शृंगाइत्यस्या ऋचो व्याकरण-यज्ञ साहित्यपरम् 'इति त्रिविधमपि विवरणमुपलभामहे । छन्दो वेदेश्रूयते, आह्लादरस शब्दयोः चदिधात्वर्थं साम्यात् पर्यायता । शब्दार्थयोः शक्तिशिवयोरिवेत्यादिकं पूर्वं सर्वं प्रपञ्चितमेव ।

एवञ्च शब्दार्थयोर्यथास्वं स्वसम्पत् सामग्री समुदायः सहृदय-हृदयाऽऽह्लादकारी परस्पर स्पर्धयाधिरोहति, स एव साहित्य नाम भाग्भवतीति सत्यं तथ्यमत्र। कुन्तकाचार्य रीत्यापि हि विशिष्ट-विन्यास सम्पत् साहित्यम्। वाच्यवाचकयोः परस्परमहमहंपूर्विकया-स्पर्ध मानयोः शोभाकारि परस्पर साम्य शुभगवस्थानं साहित्यम्। काव्यलक्षणस्य वाक्ये परिसमाप्तत्वात् वाचकस्य वाचकान्तरेण-वाच्यस्य वाच्यान्तरेण साहित्यं समभिप्रेतं भवत्येव। तेनैव योजना वैचित्र्यंकाव्यम् शब्द योजना वैचित्र्ये शब्दः काव्यम्, अर्थ योजना वैचित्र्ये अर्थः काव्यम्, उभय योजना वैचित्र्ये उभयं काव्यमिहोच्यते।

यद्यत्रेत्थमुच्यते यत् शब्दार्थयोर्निसर्गसिद्धं साहित्यं किमियता प्रयासेन तस्याभिधानस्य सिद्धसाधनत्वात् प्रयासवैयर्थ्याच्चेति तन्न समीचीनं यतः न ह्यस्माभिर्वाच्यवाचक लक्षणौत्सर्गिक सम्बन्ध निब-न्धनं तदिष्यते, वाहीकः हालीक प्रयुक्त शब्दस्यापि अर्थ बोधकत्वेन तत्रापि साहित्यमस्त्येव। तेन हि पदवाक्य प्रमाण साहित्यानां चतु-र्णामपिप्रतिवाक्यमुपयोगः। एतेषां यद्यपि प्रत्येकं स्वविषये प्राधान्य मन्यत्रगुणीभावस्तथापि सकलवाक्यपरिस्पन्दजीवितायमानस्य साहित्य लक्षणकविव्यापारस्य परमार्थतस्सर्वातिशायित्वात् साहित्य पदवीत्व-मुचितम्। यतः सहृदयश्लाघ्यः काव्यार्थएवायोद्धारदृशा वाच्य प्रतीय-मान भेदाभ्यां सूरिभिर्विभक्तः। मम्मटाचार्याभिमतेन रस एव मुख्यार्थः। स च मुक्तकेषु वाक्यकाव्यव्यापी, प्रबन्धेषु महवाक्य-व्यापी। रसादिरूपोऽर्थोयद्यपिनवाच्यस्तथापि तस्यान्यपेक्षयागुणभावे-ब्राह्मण श्रमणन्यायेनालंकारत्वम्, उच्चमानत्वात्।

अतएव चिरन्तनोक्तानां रसवाद्यलंकाराणामपि परिग्रहः अन्यथा-तेषां विषयापहार एव स्यात्। काव्यनिर्माणवत् तच्चिन्तमपि साहित्यम्। अतएवेदं शास्त्र प्रयोगविज्ञानम्। प्रयोगविज्ञानस्य लक्ष्याणि वैदिक-लौकिकशब्दरूपाणि यथायथमनुगतानि मन्यन्त एव। लक्ष्याणि चात्र लक्षणांशतो न हीयन्ते यथान्यत्रशुष्कतर्क मीमांसादिषु। एतदर्थमेवतत्सहचरितयाप्रचरतां काव्यग्रन्थानामुपयोगः तदनुविधा-यिनोलक्षणघटना च सुतरां वरीवर्ति। तस्मान् साहित्यपदं संयोग-संसर्ग-सम्पर्कयोग, बन्ध समवाय तादात्म्यादि, समनाम सर्वत्रैव

प्राप्यते। भरतमुनिना संयोगाद् रसनिष्पत्तिः (विभावानुभावसञ्चारिणाम्) रसो वै सः इति श्रुति स्वारस्यादुक्तमेव। सम्यग्वाग्योगः संयोगः, स च सम्बन्धाऽपरपर्यायः, सम्बन्धिभ्यां भिन्नो द्विष्ठो नित्यश्च।

रसदर्शने पार्वतीपरमेश्वरयोर्भेदाभेदयोरचिन्त्यत्वचिन्तनमेव परम रहस्यम्। तत एव रसः साहित्यं काव्यमिति पर्यायाः रसगंगाधरकाव्यप्रकाशसाहित्यदर्पणादिशब्दलिंगात् = प्रमाणात्। साहित्यविद्यानिरूपणपद्धतिरतीव हृद्येति समवधार्य्यैव पञ्चमी-साहित्यविद्येति सुप्रयोगः सुसंगच्छते सुतराम्। सा साहित्य विद्या चतसृणामपि विद्यानां निष्पन्दरूपा निःस्यन्दरूपा वा प्रतिष्ठिता। उपस्कारकत्वादलंकारः सप्तममङ्गमिति राजशेखरकृतकाव्य-मीमांसायां सुव्यक्तमत्रप्रमाणम्। लोके छन्दसां—(गद्य-पद्यानाञ्च) वेदेभ्य एव विकासः संस्कृतकाव्यानामुद्भवो विकासश्चेति।

लोके आदिकविः प्राचेतसो वाल्मीकिस्तत्कृतिः सीताचरित-महाकाव्यमेव वाल्मीकिरामायणरूपम्। राज्यभवनादयोध्यातस्सीता-देव्या निर्वासनानन्तरमेव रामे राज्यं प्रशासति वाल्मीकि विरचित-स्यादिमहाकाव्यस्य वाल्मीकीयरामायणस्य निर्माणमभवत्। ततः प्रागपि वेद मन्त्राणामेव कतिपयानां गानं प्रवर्ततेस्म। अयं वाल्मीकि-मुनिर्वेदे वम्रि संज्ञया मन्त्रेषु प्रतिष्ठितः स्मृतः। दस्युस्तु कश्चिदन्य एव। उतवा तस्यैव पूर्वजन्मवृत्तमत्रावधार्यते न तु रामायण निर्मातृ शरीरात्मनि दस्युव्यहारोपलब्धिस्सच्छास्त्रेषु समुपलभ्यते। यश्च सम्प्रति लोके कश्चन वर्गविशेषोऽनुसूचित जातीयोऽनुसूचित जनजाती-योवा तं वाल्मीकि मुनिं स्ववर्गप्रसूतं मत्वा अन्यवर्गेभ्यः पृथगात्म-सत्तां तस्य व्यवस्थापयन् विभिन्नोत्सवादि कार्यक्रमांश्च तद्वर्ग विशेषभावनया विधाय भ्रमात्मकं भावं प्रचारयति तन्न कथमपि शास्त्र-सम्मतं युक्तिसम्मतम् इति वृत्ति (इतिहास) सम्मतम्वा। प्रत्युत स महापुरुषो महामानवो वरुणात्मजः सर्वत्र शास्त्रेतिहासेषु संकीर्तितः यथा वाल्मीकीय रामायण एव माहात्म्यप्रसंगे प्रोक्तः साक्षिरूप एष श्लोकः पठ्यते—

वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना इति।

न प्रचेतसो देवस्य पुत्रः सामान्यो नरस्तत्रापि दस्युवृत्तोको-भवितुं शक्यः स च ब्रह्मयोनिरितिनिश्चितमेव। एतद्विषये विभिन्न-भ्रमापसारणाय पृथगेव विचारः कर्तुं योग्यो न त्वत्र तस्य प्रसंग इति विचार्यं विषयप्रवेशानुरूप विचार आवश्यकः।

महर्षि वाल्मीकेः परस्ताद् भगवान् वेदव्यास एव कवि वेदी-मलञ्चकार। स एव महाकवि वेधा पदभूषितो भारतीय संस्कृत-वाङ्मयमर्मस्थानं स्पृशन् महाभारतम्, अष्टादशमहापुराणानि तथोपपुराणान्यपि विरच्य समस्तं भुवनं परोक्षप्रत्यक्षमन्त्रराशिभिः प्रसादितवान्। स भगवान् वेदव्यासनाम्नाऽपि प्रकीर्तितः यतस्स भविष्यत्कालेऽत्यल्पधीः पुरुषानवधार्य्यं कथं सर्ववेदराशिं समग्र वेद-मन्त्र व्यूहं धारयिष्यन्ति ते, एकमेव वेदञ्चतुर्धाव्यभजत् अर्थात् सर्ववेद मन्त्रान् साक्षात्कृत्य दिव्यदृष्टया योगबलेन चापि तावदेवांशं तत्तन्नाम्ना ऋग्यजुस्सामाथर्वरूपेणाभिधानव्यवहारपथमानीय च लोकस्य महान्तमनुपममुपकारं कृतवानिति। स च कल्पजीवीति-मन्यत एव। ततः परमेव कियत्कालमतिबाह्यैव भासभवभूति कालिदास प्रभृतयोऽलङ्कृतवन्तस्तदीयं पदम्। भासभवभूत्यादितः पूर्वं व्यासतः परञ्च कियान् कालातीतस्तन्मध्ये कश्चनान्यः कविः शास्त्र-कारोवा कश्चन जातो नवेति विचारः सन्देहास्पदः।

राजशेखरेण काव्यमीमांसायाः परम्पराखल्वित्थमवोचि— यथा तत्र कविरहस्यं सहस्राक्षः, औक्तिकमुक्तिगर्भः, रीतिं सुवर्ण-नाभः, आनुप्रासिकं प्राचेतायनः, चित्रं चित्राङ्गदः, शब्दश्लेष शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः, अर्थश्लेष-मुतथ्यः, उभयालंकारिकं कुबेरः, वैनोदिकङ् वामदेवः, रूपक निरूपणीयं भरतः, रसाधिकरणं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादा-निकमुपमन्युः, औपनिषदं कुचमारः, इति तथ्यं सर्वं वहूनां विभूति-वराणां शास्त्रस्य विभिन्न तत्त्वावगाहन-लक्षणनिवर्तन विभिनांश-तत्त्वपरं लक्षणं विदधतां देशकाल स्थितिञ्च कथङ्कारमवधारणीयं भवेद् यथार्थत इति न कश्चन सत्तर्कः सत्प्रमाणं मतिमतामतमारोहति-सद्यः। प्राचेतसो वाल्मीकिः प्राचांस्फतद्धितेः (पा० सू० ४। १।१७)। इति स्मृतेः प्राचेतायनः इत्यपि प्रयोगः स्यादिति। स एव सीताचरित

महाकाव्येन सह काव्यमीमांसाया आनुप्रासिकमधिकरणमापि- निर्मितवान् इत्यपि केषादिञ्चदवधारणा। रूपकाचार्यो भरतो नन्दि- केश्वरस्य रससिद्धान्तं नामानुल्लेखेनैव संगृहीतवान्।

वस्तुतस्तु काव्यमूलं सौन्दर्यमन्तर्वहिर्भेदाभ्यां विभज्यते, अतएव सौन्दर्यमलङ्कार: काव्यं ग्राह्यमलङ्कारादिति वदन्त: शब्दार्थकले- वरस्य विवेचनमेव प्रपञ्चयंति। अयं हि प्रथमोभेद:, द्वितीयस्तु सहृदय संवेद्य मुक्ताफल विच्छुरितच्छायाप्रतिभं व्यंग्यमर्थमेव प्राधान्येन परिचिन्तयन्तस्तदाधारकमेव बाह्य सौन्दर्यमिति व्यवस्था- पयन्ति मान्या आचार्या:। इत्थञ्चात्र भारतीय काव्यशास्त्रे रसाल- ङ्कारश्चेति द्वावेव सम्प्रदायौ, उभावपि परस्परं पूरकावेव। इमौ द्वावपि वेद मूलकौ 'इति रसो वै स:' काते अलंकृति: 'इतिश्रुतिरत्र प्रमाणम्। काव्यानामंगीरस:, वाच्य प्रतोयमानो 'अलंकारध्वनी- गुणी कृतात्मानौ तमेवांगिनं भूषयन्तौ पोषयन्तश्च। स्वादयन्ति च ते सर्वेऽलंकारध्वनिप्रभृतय: सहृदयानतिशयेन।

अत एव रस आत्माययोरनयोर्वाच्यवाचकयोर्भाव्यभावकयो- र्भोज्यभोजकयो:। पर रीत्या च व्यंग्यव्यञ्जकयोरहमहमिकया स स्पर्द्धं साहित्यमेव काव्यम्।

यदा हि सहृदया दृश्यश्रव्यरूपेण विभावानुभावसंचारिणाम- वस्थितिरवधार्यंते तदैव संस्काराऽपर पर्याय वासनाख्यरत्यादि- स्थायिभावा: सुचिरकालत: तत्तदात्मनि सुप्रसुप्ता विद्यमाना- स्सन्तोऽपि तत: पूर्वमनुद्बद्धा एव प्रतिबुद्धा भुत्वा रसात्मतांगता भवन्ति, तदानीं च सहृदया काव्यात्मानं रसादीन् स्वाभिन्नत्वेन- स्वात्मन एव काव्यात्मरस रूपतया आस्वादयन्तोऽनुभवन्तोहि न स्वयं तत: पृथगवभासन्ते न च तदा काव्यार्थानपि वाच्यलक्ष्यरूपान् वाचक शब्दान् लोकस्थान् परितो वृहदाकारानायतांश्च जानन्ति, यत: सहृदयचैतन्य एव इत्यादि स्थायिभावद्रवप्रणाल्या स्व स्व समवायि तत्तदाश्रयैकमात्मसात्कृत्य रसतामास्वाद्यतांगतो व्यंजना- व्यापारेणाभि व्यज्यमानो.ध्वनिरात्मा काव्यस्य, रस एवात्मा यस्य तद् वाक्यं रसात्मकं काव्यम्वा, रमणीयार्थप्रतिपादकश्शब्द: काव्यम्वेति-

विविध लक्षणलक्षित स्वारस्यंश्चाभिव्यञ्जयन् सर्वंरसमयंजगादिति रसार्णवीकृतमवतिष्ठते सहृदय गोष्ठीगरिष्ठेषु ।

तदा च 'काव्यं व्यञ्जकम्, काव्यार्थोऽपि व्यञ्जनार्थः, व्यञ्जना-व्यापारोऽपि व्यञ्जकः, आलम्बनविभावोऽपि व्यञ्जकः, उद्दीपन-विभावोऽपि व्यञ्जकः', इत्यादिस्थायिभावकार्यमनुभावोऽपि-व्यञ्जकः, सहचारिणोऽपि व्यञ्जकः, किं बहुना सहृदयचेतनोऽपि-व्यञ्जकः इति राद्धान्तः साहित्यमहिम्नो व्यञ्जनाव्यापारस्य-विभुत्वात् व्यापकत्वाद्वा सर्वत्रानुस्यूतत्वाच्च । तेनैववेदान्ते-युक्त योगिनां परिपक्वावस्थारूढ़ानां ब्रह्मसाक्षात्कारं कुर्वतामद्वैत-बादि सिद्धान्तवासनावतामपि केवलं शुद्धब्रह्मण एवानुभूतिर्भणिता सिद्धान्ततः । न तदानिसर्गतोऽन्यत्किञ्चिदवभासतेब्रह्मणो व्यापकत्वा-त्सर्वात्मरूपत्वात् सर्वंजगदात्मरूपत्वाच्च किमवशिष्यते पृथग्ज्ञानाय तदानीम् ? कश्च ज्ञाता कं ज्ञेयमभवगच्छेत् ब्रह्मणो जीवस्य चैक्यात् ।

ब्रह्मैव सत्यं जगन्मिथ्येति वचने जगतो मिथ्यात्वं रज्वामुरग इव यथाऽवभासं वर्णितम्, ब्रह्मण्येवमायावशेन जीवात्मना जगतोऽव-धारणमौपाधिकमनुभूयते, मायाविमुक्तो सत्यामेक्यमापन्नो जीवो-ब्रह्मैव नान्यः । विशिष्टाद्वैतवादिसिद्धान्तेऽपि सारूप्य-सालोक्य सायुज्य-सार्ष्टिरूप चतुर्विध मुक्तिप्रसंगे परमवैदिके सिद्धान्ते भगवन्तं प्रति भागवतानां नानाजीवानां क्षराक्षररूपाणां बद्धमुक्ता-त्मनामाकीट ब्रह्मस्तम्भपर्यमानामपि ब्रह्मणश्शरीरात्मनांदीव्यानां जगतश्चापि शरीररूपत्वात् तस्य ब्रह्मणश्चिदचिद् विशिष्टत्वेन-सर्वात्मभावाभिव्यञ्जनेनेश्वरोऽपि व्यञ्जकः जीवराशिरपि व्यञ्जकः भोग्यरूप जगदपि व्यञ्जकम्भवत्येव । तथाविधाभिव्यंग्याभिव्यञ्जक भावोपनीतभगवद्भागवतैक्यं शरीरशरीरीभावेन, शेषशेषीभावेन, अंशांशिभावेन अभिभोक्ताऽभिभोग्यभावेन च चिदचिदीश्वरं साहित्यमेव, वेदवेदान्त-शास्त्र-पुराणादिरामायण महाभारत काव्य-प्रभृतीनि, समस्तज्ञानविज्ञानकला कौशलसंगीतनाट्यशास्त्रादीनि भावाभिव्यंजनायाः, अलंकारशास्त्रानगुणविविधलक्षणलक्षित व्यञ्जनाया वा समाश्रयरूपाणि सर्वत्रापि तथाविधाभिभावव्यञ्ज-नाया भागवतसहृदये काव्यरसानुभवशालिसहृदयेवा समानरूपतया विद्यमानत्वात् ।

यदिनाम रसानुभव वेलायां सहृदयोरसमनुभवन् स्वमात्मानं रंगमञ्चेऽभिनेतॄन् परिकीयत्वेन वा विचारधारायाँ मनसि चक्षुसोर्विषयत्वेन वाऽवधारयति तथा दृश्यं श्रव्यं नाटककाव्यञ्च तदर्थञ्च रसात् पृथक्स्थितमनुभवति तथा स्वीकरोति च तदा न स सहृदयः। यथा वेदान्ते योगशास्त्रेवा योगिनां ब्रह्मसाक्षात्कारे केवलमेकंब्रह्माव-लक्ष्यमनुभूतिपथमात्मनाऽभिन्नतया भवति नान्यत् किञ्चिदपि, तथात्रालंकारशास्त्रेऽपि रसस्य काव्यात्मनः साक्षात्कारे सति तदवसरे केवलमेकमेवाद्वितीयं रसमात्मना सहैक्यमापन्नमनुभवति सहृदयः। न तदा रसात् पृथग् स्वयमेवभासते न वा कोऽप्यर्थोजगत्स्थितः। ब्रह्मानन्द सहोदरो वा रसः, रसो वै सः रसंलब्ध्वा ह्यानन्दी भवतीति-श्रुत्या रसरूपं वा ब्रह्मप्रमेयपदार्थः। प्रमाता तु सहृदयः। यद्यप्यन्या-न्यशास्त्रानुसारं प्रमेयस्य प्रमात्रा सह भेदः सिद्धस्तथापि प्रमेय बोधा-वसरे प्रमाता तथैव तेन सहैक्यं भजते यथादेही देहाश्रितस्सन् देहधर्मो-पचारेणाभिभूतोऽहंस्थूलः कृशोवेति देहाध्यासेनैव स्वमभिधत्ते। न वस्तुतो जीवोहि स्थूलः कृशो वा भवति नित्यत्वात् तस्य नित्ये वस्तूनि कदाचिदपि स्थूल-कृशोपलक्षित विकारव्यवहारा दर्शनात्।

एवमेव सहृदयो लोके पाञ्चभौतिके भोगायतने नश्वरे शरीरे वर्तमानोऽपि व्यञ्जनाव्यापारमहिम्ना काव्यार्थानुभवभावाभि-व्यंग्यव्यापारप्रवाहे निमञ्जनं कुर्वन् तदवसरे स्वसमवेतरत्यादि स्थायिभावोद्‌बोधप्रसरप्रवाहे द्रवीमये स्वस्यापि तत्र संलीनतां प्राप्ते साधारणीकरणतया सर्वैरपि पदार्थैः सहैक्यं भजमानः स्वयं प्रमाता-प्रमेयः, ज्ञाताज्ञेयः, उपायउपेयः, प्रापकः प्राप्यः सन्नेव सहृद-यस्य भावः सहृदयत्वमापन्नो न कथञ्चिदपि क्षणमपि काव्यात्मनो-रसादेः पृथगात्मानमवधारयति। प्रत्युत स्वं निखिलं जगदपि रस-रूपमेव स्वयं स्वात्मनाऽनुभवति तदैव पारमार्थिकसहृदयत्वम्।

अलंकारशास्त्रमपि प्रायस्तस्य सिद्धान्तस्य व्याकरणमूलकत्वात् नित्यशब्दरूपतां भजति। यथा व्याकरणसिद्धान्ते शब्दसाधुत्वा-न्वाख्यानेसिद्धस्य नित्यस्य शुद्धस्यैव शब्दस्यान्वाख्यानं साधुत्वं बोध्यते। तत्र तदा शास्त्रप्रक्रियानिर्वाहाय अखण्डवाक्ये पदस्य,

पदे प्रकृति प्रत्ययादीनां स्थानिनामादेशानाञ्च कल्पनां विधाय लघू-पायेन शास्त्रज्ञानं कार्यंते तदैव कार्यवाद: अर्थादनित्यश्शब्दइत्यादि सिद्धोभवति । एवमेवालंकारशास्त्रेण आवेदतो लौकिककाव्यगत-शब्दान्तं यावत् स एव नित्यव्यवहारस्तथाप्यत्र रसबोधाय सर्वा: प्रक्रिया: प्रकल्पिता यथाकालम् । वेद: स्वयं काव्यं काव्यशास्त्रंचेति न कश्चन संशयलेश: । तेन नित्यत्वेऽपि न सन्देह: । पश्य देवस्य काव्यम् न जीर्यंते न ममारप्रभृति विभिन्नश्रुतिसारवचनस्वारस्यात् वेदे एव वेदस्य वेदता नान्यत्र, यदस्ति किमपिलोके तत्सवं खलु वेद वेदत्वमेव। एतेन महत: कस्यचिद् विभोर्व्यापारस्य सत्ताऽत्र प्रतीयते, स च विभुर्व्यापार: व्यञ्जनामन्तरा को भवितुमर्हति ? विशेषेण व्यञ्जनं-गमनम्-बोधनं-प्रत्यायनं द्योतनं ज्ञापनं प्रापणं-स्रजनमवनं प्रसारणम् प्रवर्धनं प्रहर्षणमुपसंहरणञ्चस्वत्मिन्नेवेति ब्रह्मणो लक्षणम् स्वभावो वा तथैव वेदस्यापौरुषेयस्यापि ।

येन ज्ञातेन सर्वंविज्ञातं भवतीति श्रुतिवचनप्रामाण्यादपि व्यञ्ज-कस्य द्योतकस्य बोधकस्य परमेश्वरस्याभिद्रवणमेव व्यञ्जना व्यापार:-योहि शाश्वतो मन्यते, यदा तस्य शाश्वतिकत्वं तदा तदाश्रयभूत शब्दराशेर्वेदस्य, वेदवेदार्थं प्रतिपादकसमग्र साहित्यपदार्थस्यापि-व्यञ्जनाव्यापाराश्रयत्वात् शब्दार्थयोरपिव्यञ्जकतयालंकारशास्त्रेषु सिद्धान्ततो वर्णनात् तत्तदभिव्यंञ्जककाव्यानां काव्यांशानाञ्चापि नित्यत्वम् ।

आत्मा तु नित्य एव न कश्चन सन्देह: । स भोगायतनाधिष्ठितो-जीव: काव्याश्रयाधिष्ठितो रसादिर्वा सर्वोऽपिनित्य एव । यद्यपि बहुत्रालंकारशास्त्रे रसस्यानित्यत्वं साधितम् तस्य विभावाद्यवधि-कत्वात् । परमत्रइदन्तथ्यमवश्यमवधारणीयं विद्यते यत् विभावाद-यस्तु यथालम्बनं यथाकालमायान्ति यान्ति च परन्तुरत्यादय: स्थायि-भावा न कुतश्चित्कस्मिन्नपिसहृदयहृदयेकथमप्यायान्ति यान्ति वा, प्रत्युत ते तु प्रसुप्तास्सन्तस्सदातिष्ठन्त्येव । केवलं विभवादिभिस्ते समुद्भूता: भवन्ति, विभावादि विना तिरोहिता: सन्तस्तिष्ठन्ति तेषां समवधानेनाविर्भवन्ति, तिरोभाव:, आविर्भाव: कथमपि न

विनाशोत्पत्ति रूपौ, यथा जीवानां नित्यत्वेऽपिशरीर सम्बन्धे लोके जन्म इति बोध्यते वियोगे मरणमिति, तथैव रत्यादयो भावा व्यञ्जनाव्यापारवशेनाभिव्यक्ता रसरूपतया आविर्भूता सन्त एवानुभूयन्ते सहृदयैः विभावादि समवधाने, तत्रैवोत्पत्ति व्यवहारोऽपिन वास्तविकः किन्तु व्यवहारिकः एव मन्यते ।

विभावादीनामभावे पुनस्ते रसपदवीं गता रत्यादयो भावास्तिरोधानतां प्राप्ता नष्टा उच्यन्ते । वस्तुतो विभावादि निमित्तस्यैवोत्पत्तिर्विनाश्च । विभावादिगतोत्पत्तिविनाशौ काव्यात्मरसादौ समारोप्यैवोपचारिकः प्रयोगो रसोऽनित्य इति वक्तुं शक्य इत्येव तात्पर्यम् । फलतोऽत्राभिव्यञ्जकत्वेनैव निखिलब्रह्माण्डस्य ब्रह्माण्डाधिपतेश्च विमर्शनाद् रसादेरात्मनो नित्यत्वावधारणं सुसंगच्छते ।

तदैव रसो वै स इत्यादयः श्रुतयः साधुत्वायालंकार शास्त्रसिद्धान्ते सामञ्जस्येन प्रति पद्येरन् । एवमेवालंकारा अपि तथाविधाभिव्यञ्जिता ध्वनिताः वस्तून्यपि तथाभिव्यञ्जितानि व्यञ्जनाव्यापार गम्यानि प्रतीयन्ते सहृदयैरनुभूयन्ते वा प्रोच्यन्ते । तथैव रसाभासो भावाभासो भावोदयो भावशान्तिर्भावशवलताचापि युञ्जानयोगिनामपरिपक्वावस्थाऽऽरूढानां ब्रह्मसाक्षात्कार वेलायां ब्रह्मणोऽतिरिक्तोऽन्योऽपि कश्चन पदार्थः स्वस्वरूपः जगच्च कथञ्चिन्मनसि बाह्यदृष्टौ चावभास्यत एव यथा, एवमेव रसाभासादयोऽपि सहृदयाभासैरप्राप्तसहृदभावैस्तत्तद् रसाभासादयस्तिर्यगादि विषयतापन्नाः तिर्यगादि गताः शत्रुप्रभृतिगताश्च यदाऽनुभवन्ते तदानीं सहृदयचैतन्योऽपिप्राप्तविभावादि निमित्तः स्वगतरत्यादि स्थायिभावान् परकीयांगनाविषयकान् शत्रुविषयकान् तिर्यगादि विषयकांश्च न पूर्णतो रसादिरूपतान् नेतुं प्रभवति, न वा तथाविधसहृदया सहृदनिष्ठरत्यादयो भावाः परकीयांगनाविषयकाः शत्रुविषयकाः तिर्यगादि विषयका आस्वाद्यमानाः पर्याप्तरूपेण रसरूपतामुपेता भवन्तीति दृशा तत्तद् भेदस्य विद्यमानत्वात् चर्वणाधाम्नामविश्रान्तत्वाच्च न सामञ्जस्येन पुष्णतां पूर्णतां प्राप्नुवन्ति । तेनैवाभिनय शालासु समवस्थित काष्ठलोष्ठादिवत् सर्वेऽभिनेतारोविषयाश्च न सहृदयानाह्लादयितुं प्रभवन्ति इत्यपि केषाञ्चिदनुभवः ।

वस्तुतो निरतिशय रसमयो भगवान् एव अत्र प्रसंगे महाभावपरिनिष्ठितां भुत्वा रसरूपे प्रकटीभूय देवकिन्नरगन्धर्वर्षिमुनिपवित्रतपस्वि प्रभृतिभिरनुभूयते नितरां सहृदयैरास्वाद्यते। अयं स एव रसो य समग्ररसानामुद्गमस्थानं परमोत्कृष्टोनित्योहि परमहाँश्चापि। यश्चायं सिद्धै रपि न सामान्यतया साक्षात्कर्तुं शक्यश्चेत्तर्हि सर्वोत्कृष्टं मनोभावनं रसमयं भावराज्यं कथमनायासेन कोप्यनुभवपथमानेतुं प्रभवेत्?। कर्मकुशलाः कर्मिणः, समाधिनिष्ठा योगिनः, छिन्न ग्रंथ यो ज्ञानिनः पुरुषाः, यदि भावराज्यस्य कल्पनामपिकर्तुं न प्रभवन्ति चेत् तदा महाभावराज्यस्य परमाधिष्ठातृपरमचिच्छक्तिः सर्ववासनावासनिरता, सर्वसाधनाऽध्यास विरता, भावराज्यनिवासिनी परमाह्लादविलासिनी परब्रह्मणः सहचरी रसलीलाऽऽप्लाविता निरता रससन्ततिः सर्वप्रमाण तर्क विद्या, केवलं सहृदयैः परमभक्तैश्चानुभूतिवीथिमयीकृता, लोकोत्तराह्लादजनयित्री काचिदनिर्वचनीया विभूतिरेवाभिव्यज्यमाना साहित्यसिन्धुरसार्णवाऽनुपमा मनोहराऽऽविर्भावतिरोभावमहिम्ना निखिलमपि ब्रह्माण्डं द्रवीभावमानेतुं प्रभूतसामर्थ्या शब्दार्थमयी भावापन्ना समाराधनीया कथन्नसर्वातिशायी सेव्यताम्?

सहृदयैर्यदा दृश्यकाव्यं पश्यद्भिः श्रव्यकाव्यं श्रोत्रगोचरी कुर्वद्भिः विभानुभावसहचारि संयोगात् स्वगतवासनाख्यरत्यादयो भावाः रसपदवीं प्राप्ता अनुभूयन्ते अर्थात्—

१—विभानुभावव्यभिचारि संयोगाद् = व्यञ्जनाद् रसस्य चिदानन्दविशिष्टस्थाय्यात्मनः, स्थाय्युपहितचिदानन्दात्मनोवा निष्पत्तिः स्वरूपेण प्रकाशनम्।

२—विभावानुभावव्यभिचारिणां सम्यक् साधारणात्मतया योगाद् भावकत्वव्यापारेण भावनाद् रसस्यास्थाय्युपहित सत्त्वोद्रेक प्रकाशितश्चात्मानन्दरूपस्य निष्पत्तिः भोगाख्येन साक्षात्कारेण विषयीकृतिः।

३—विभावानुभावव्यभिचारिणां संयोगात् भावनाविशेषरूपाद् दोषात् रसस्यानिर्वचनीय दुष्यन्तरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः।

४—विभावादीनां संयोगाद् ज्ञानाद् रसस्य ज्ञानविशेषात्मनो निष्पत्तिः ।

५—विभावादीनां सम्बन्धाद् रसस्य रत्यादेर्निष्पत्तिरारोपः ।

६—विभावादिभिः कृत्रिमैरपि-अकृत्रिमतया गृहीतैः संयोगादनुमानाद् रसस्यरत्यादेर्निष्पत्तिरनुमितिः नटादौ पक्षे ।

एभिर्विभिन्न प्रकारैः कृत व्याख्यान प्रसंगैः भरतसूत्रस्य कः परमार्थ इत्यत्रापि मोहो न निरस्तो न वा कस्मिश्चिदेकस्मिन् व्याख्याने समेषामभिनिवेश इत्यत्रवधार्यं सिद्धान्ततो हि रसो वै स इति श्रुति-स्वारस्येन रस्यते=आश्वाद्यते इति व्युत्पत्तियोगाद् ब्रह्मण आनन्द-मयतां ख्यापयति, तेनात्र रत्याद्यवच्छिन्ना भग्नाऽऽवरणाचिदेव रसः, अर्थाद् रत्यादि विषयकं भग्नावरणं चैतन्यमेव रसः न तु चैतन्य विषयीभूतरत्यादिः श्रुतिस्वारस्य भंग प्रसंगात् । अभिनवगुप्तो रसमा-नन्दरूपमाह । अतएवानन्दरूपयो रसब्रह्मणोरैक्यं स्वाभाविकमत्र ।

किन्तु साक्षात्कारे द्वयोरेतयोर्भेदः । तथाहि परब्रह्मसाक्षात्कारो विषयासंवलितत्वाद् विशुद्धब्रह्मविषयकः, श्रवणादि व्यापार-जन्यश्च । रसादयस्तु विभावादि संवलितत्वात् विशिष्ट रसविषयको व्यञ्जनामात्र जन्यश्च । न च भेदाङ्गीकारे ब्रह्मैव रसः रसो वै सः इत्याद्यभेदप्रतिपादक श्रुतिविरोध इति वाच्यम् तासामपि श्रुतीनाम् आदित्यो यूपः इत्यादीनामिव सादृश्ये एव तात्पर्यावसानात् ।

इत्थं भग्नावरणचिदविशिष्टो रत्यादि स्थायिभागे रसः । रत्याद्यवच्छिन्ना भग्नावरणाचिदेवरस इत्येतत् सिद्धान्तद्वयं पण्डित-राजेन व्यवस्थापितं दृष्टिकोटिद्वयमाश्रयता । मतद्वयेऽप्यस्मिन् चिदंशमादायनित्यत्वं स्वप्रकाशत्वं च सिद्धम् रत्याद्यंशमादाय पुनर-नित्यत्वमितरभास्यत्वञ्च । अथास्यां रसचर्वणायाँ सुखांशभाने किं मानम् ? इति जिज्ञास्यते चेत्तदा समाधावपि सुखांशभाने किं मानम् ? उभयत्रप्रश्नस्तावत्तुल्य एव । समाधौ सुखमात्यन्तिकं यत्तद् बुद्धि ग्राह्यमतीन्द्रियम् इत्यादि शब्दोऽस्ति प्रमाणमिति चेत्-अस्त्यत्रापि रसो वै सः रस ह्येवायंलब्ध्वाऽऽनन्दी भवतीत्यादिश्रुतिः सकल सहृदयहृदय प्रत्यक्षञ्चेति प्रमाणपरम् ।

इत्थं परमार्थतो यत् पूर्वं प्रपञ्चितं व्यञ्जनाया व्यापकत्वेन तत्सर्वंमाञ्जस्येन सुसामञ्जस्यमापद्यते। रसाभासा भावाभासादीनामनौचित्यप्रवृत्तेः; अर्थादनौचित्य प्रवर्तितो रसो रसाभासः। अनौचित्य प्रवर्तितो भावो भावाभासश्चेत्यादिरपि संगच्छते। अयं प्राचीनानां रसाभाषादि विषयकविचारः।

अनुचितालम्बनका, अनुचिताश्रयनिष्ठा वा वर्ण्यमानाहर्षादयो भावाभासाः प्रोच्यन्ते। अनुचितरतिः प्रवासी प्रभृतिं प्रति प्रतिषिद्धगमनं प्रति चात्र विवक्षितापि।

समासतो नामरूपात्मकस्य जगतो मिथ्यात्वेन केवलं परब्रह्मण एव सत्यत्वेन तस्यैवांशांशिभावो जीवब्रह्मणोः प्राप्यप्रापक सेव्यसेवक भावादयो ब्रह्मसाक्षात्कारे जाते नावभासन्ते यथा एवं रसानुभूतिवेलायां न कोऽपि पदार्थः सहृदयैः पृथगनुभूयते इत्येव सत्साहित्य पदार्थं विषय लक्ष्यलक्षणभावानुगतश्च सर्वशास्त्र प्रशस्तोऽपि।

वादे वादे जायते तत्त्वबोध इति धिया साहित्यपदार्थोऽत्र विवेचनपथे समानीयते किमिदं साहित्यम् ? इति जिज्ञासायामुत्तरमिदं प्रस्तूयतेऽत्र तद् यथा--हितेन (सुकुमारमतीनां रामादिवत्प्रवर्तितव्यम्, न रावणादिवत् इति कर्त्तव्याऽकर्त्तव्य प्रवृत्तिनिवृत्तिकारि कान्तासम्मिततयथोपदेशेन) सह सहितं तस्य भावः साहित्यम्। अत्रहित शब्दोलाक्षणिकः अर्शं आद्यजन्तो वा।

अहरहः सन्ध्यामुपासीत् स्वर्गकामो यजेत् नकलञ्जं भक्षयेत् इत्यादिप्रवृत्तिनिवृत्ति कार्युपदेशकारित्वात् सर्वेषां वेदशास्त्रादीनां सहितत्वमुक्तम्भवतीतिचेन्न विशिष्टस्यापि साहित्यस्यात्रविवक्षितत्वात्। प्रवर्तनारूपशासन प्रधानेषु वेदादिशास्त्रेषु सुप्रतिभायुषां प्रौढमतीनामेव दुःखेन च प्रवृत्ति दर्शनात्। सुकुमारमतीनामपि नीति शास्त्रपरांमुखान् विनेयान् ललितोचित संन्निवेशचारुलोक शास्त्रविलक्षण शब्दार्थमयकाव्यं कान्तावत् स्वाभिव्यंग्यश्रृंगारादिरसेन सरसतामापाद्य स्वाभिमुखीकृत्य सदुपदेश रूपस्यर्थे प्रवर्त-

यति । यथा कान्तागुरुजनाधीनमपि मधुरालापहासकटाक्षादिभिः सरसतामापाद्य स्वस्यां प्रवर्तयति तद्वदेवसाहित्य पदवीकं साहित्यम् । प्रौढमतीनां कृते साहित्यं काव्य निष्फलमित्यपि न वक्तुमुचितम् । यतश्चणकभक्षिणामपि कृषकाणां सुकोमलाऽपूप शष्कुली शाल्योदनादौ साभिनिवेशप्रवृत्ति दर्शनात् । तथा जगति सृष्टिरोगोपशमनाय गुडुच्यादि कटु कषाय क्वाथवदुपकारकेषु वेदादिशास्त्रेषु सत्स्वपि मोदकाऽपूपादिवदुपकारके मधुरकाव्ये कस्य सहृदयस्य प्रवृत्तिर्न साधीयसी स्यात् ? यथामधुरौषध सेवनान्ते कटुकषायौषधमपि सेवन्ते तथैव सुरस्वादुरसेन मिश्रितं हितकरं कठिनोपदेशमपि जनः पालयत्येव । यथोक्तम् विषयेऽस्मिन्—

स्वादुकाव्य रसोन्मिश्रं शास्त्रार्थमुपयुञ्जते ।
प्रथमालीढ मधवः पिबन्ति कटुभेषजम् ॥

एतेनेदं प्रमाणितं भवत्येव यद् वेदादिशास्त्राणां न कथमपि निष्फलत्वम् वक्तुं शक्यमिति । यतः कान्ताकुचमण्डलस्पर्शिनामपि प्रौढानां शूरवीराणां रिपुगजकुम्भविदारणेऽभिनिवेशः प्रशस्तश्शास्त्रेष्वपि वर्णित एव । अत्रेयमपरा जिज्ञासापि स्वाभाविकी संजायत एव यत् साहित्यमुपपादयन् काव्यं कथमुपपाद्यते इति ? तदुपरि समाधानमिदं यत् यद्यपिवाङ्मयमात्रं हि सत्यं साहित्यमित्यत्र न कश्चन विरोधस्तथापि सम्प्रति प्रसंगतोऽत्र काव्यस्यैवाभिप्रेतात् तस्यापि तदन्तर्भूतत्वाच्च । साहित्य संगीत कला विहीनः······साहित्य पाथोनिधि मन्मथोत्थम्—

येषां न चेतो ललनासु लग्नं लग्नं न साहित्यसुधा समुद्रे ।

साहित्ये सुकुमार वस्तूनि प्रभृतिषु तथैव दर्शनाच्च यो यो जयति साहित्ये तस्य वाणी प्रसीदति इति मुकुल भट्टवचनप्रामाण्याच्च । एवमप्यत्र साहित्यपदस्य विमर्शश्शक्यः तद् यथा—हितं निरतिसुखास्वादरूपो रसस्तेन सह सहितं तस्य भावः साहित्यम् । अत्रहिव्यंग्यव्यञ्जकभावेन सहभावोव्यक्तो भवति । रसो वै सः रस ह्येवायं लब्ध्वाऽऽनन्दी भवतीतिश्रुति प्रामाण्यात् सर्वंसुसामञ्जस्यं भजति ।

अथैवमपि व्युत्पत्तिश्शक्या कर्तुमत्र तद् यथा—सहितंचसहितंच सहिते 'अत्र द्वन्दापवादैक शेषेऽपि साहित्यस्यैवविवक्षणात् तत्र सहिते निष्पन्ने शब्दे यः शिष्यते स लुप्यमानार्थाऽभिधायीति वचनानुसारं द्विवचन परिनिष्ठिते सति तयोर्भावे वा साहित्यम् । अत्रेदमपि शंक्यते यत् किं पुनरिदं, सहितञ्च सहितञ्चेति ? तत्रोत्तरमित्थमुपपद्यते यच्छब्देन सहार्थः सहितः, अर्थेन सहशब्दः सहितः, एवञ्चशब्दार्थयोः सहभावः साहित्यम् । किन्तावद् वाङ्मयमात्रस्य साहित्य भावत्व-मुपपद्यते ? तत्रोच्यते औत्पत्तिकास्तु शब्दार्थेन सम्बन्ध इति मीमांसा शास्त्रोक्तेः, 'सिद्धे शब्दार्थं सम्बन्धे' इति महाभाष्ये वार्तिकोक्तेश्च 'स्वभाव' तश्शब्दार्थं सम्बन्धस्य नित्यत्वात् सर्वत्र सहभाव सत्त्वात् इति चेन्न विलक्षण साहित्यस्यात्रोपक्रान्तत्वात् । वैलक्षण्यञ्चात्र शास्त्रे लोके च घट इत्ययं शब्दः घट इत्ययमर्थं, 'इतितादात्म्यात् सहभाव सत्वेऽपि क्वचिच्छब्दस्य प्राधान्यम्, क्वचिदर्थस्येति न तिरो-हितं विदुषाम् ।

यथा शास्त्रे "अग्नेर्ढक् इत्यत्राग्नि शब्दस्यैव प्राधान्यम् । तत एवढक् प्रत्ययोत्पत्तेः । "न वेति विभाषा इत्यत्रार्थस्यैव प्राधान्यं निषेधविकल्पयोर्विभाषा संज्ञेति बोधनात् । लोकेऽपि गवीत्ययमाह इत्यादावनुकरणे शब्दस्य प्राधान्यम् तत्रार्थस्यानपेक्षणात् । घटमानय इत्यादौ अर्थस्य प्राधान्यं शब्दस्यानयनाऽसम्भवात् । वेदेस्वपि शब्दा-नामेव प्राधान्यम् । तुल्येऽर्थेऽपि अग्नि मीले, इत्येव वाच्यम्भवति न तु ई डे अग्निमिति कथमपिवाच्यं भवति, प्रभुरपि कस्मैचित् समरसिंहः इत्युपाधि ददानि तदा स समरसिंह इत्येवाभिधेयः न रणकेसरीति तत्रशब्दस्यैवप्राधान्यम् । पुराणेतिहासादिष्वर्थस्यैव प्राधान्यं न तु शब्दस्य । यतस्तत्रतवेदंमदिष्ट साधनमिदमनिष्टसाधनमिति तत्ता-त्पर्यावधारणात् ।

सुहृदोऽप्येवमिष्टसाधनान्येवोपदिशन्ति, परन्तत्र वलान्ननियोज-यन्ति । परमत्र शब्दार्थयोः स्व स्वरूपगुणीभावे सहभावोविवक्षितः । शब्दः स्वाभिधेयमर्थश्च स्व स्वरूपं गुणी कृत्वैकार्थं सम्पादन प्राधान्येन तत्परौ संगतौ सुहृदाविव रसादिरूपव्यंग्यमभिव्यङ्क्तः तदभिव्यंजने मनामपि न्यूनताऽऽधिक्यरहितो यः शब्दार्थयोः सहभावस्तत्साहित्य-

मभिप्रेतम् । अत्राऽऽनन्दवर्धनाचार्यस्येदं वचनं सार्थक प्रमाणायालम् ध्वन्यालोके—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्य विशेषः स ध्वनिरितिसूरिभिः कथितः ॥

आचार्य मम्मटेनापि काव्यप्रकाशे काव्यफलं प्रकाशयता शब्दार्थयोर्गुणभावेन रसांगभूत व्यापार प्रवणतया विलक्षणं यत् काव्यमित्यादिना तदेवाङ्गीकृतम् । तेनहि गुणीभूत शब्दार्थोभयत्वमेव काव्ये वैलक्षण्यं विशिष्यते सर्वापेक्षया । ध्वन्यालोके यत्रार्थः शब्दो वा इत्यास्यायमभिप्रायोयत्—यस्मिन् काव्ये प्रधानीकृतस्वार्थौ शब्दार्थौ (तदेव काव्यम्) तं सहृदयहृदयाह्लादजनकं कमपि विलक्षणं व्यंग्यार्थं व्यङ्क्तः व्यञ्जनतया प्रकाशयता सकाव्य विशेषोध्वनिः, इति मौलिकार्थः तदनुसारं व्यंग्य विशिष्ट शब्दार्थोभयत्वमेव ध्वनिकाव्यनिष्कृष्टं लक्षणं भवति । वैशिष्टयञ्चात्र स्वव्यञ्जकघटितत्व-स्वविषयक-प्रतीतिजन्यचमत्कार न्यून चमत्कारजनक प्रतीति विषयत्वमेतदुभय सम्बन्धेन ।

तत्र समासोक्त्यलंकारेषु ध्वनेरन्तर्भावविवारणाय उपसर्जनीकृतस्वार्थौ प्रोक्तौ तदर्थश्च व्यंग्यार्थं प्रति गौणीकृत स्वार्थौ, इति बोध्यौ । तेन समासोक्त्याद्यलंकारेषु वाच्यार्थस्यैव प्रधानतया विच्छिति विशेषाधायकतया व्यञ्जनयाप्रतीयमान व्यंग्यार्थं प्रतिगौणत्वाभावेन न तत्र ध्वनेरन्तर्भाव इति । पण्डितराजेनापि उत्तमकाव्यं लक्षयता शब्दार्थौ यत्र गुणी भावितात्मानौ कमप्यर्थमभिव्यङ्क्तः तदाद्यम् इत्यनेनायमेवार्थो निरणायि । अग्निपुराणेऽप्युक्तमेतद् विषये यथा—

शास्त्रे शब्द प्रधानत्वमितिहासेषु निष्ठता ।
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ॥

इति अर्थाद् वेदादि शास्त्रेषु शब्द प्राधान्यम् । इतिहासपुराणेष्वर्थं प्राधान्यम्, काव्येऽभिधायाः अभिधान व्यापारस्येति शब्देऽपि अभि धैव-व्यापारोऽभिधा व्यापारः, अभिधाया इत्यभिधा व्यापारः 'इति द्विविधसमासे प्रथमे तु अभिधाशक्तिरेव, द्वितीयेतु अभिधानिष्ठ-

व्यञ्जना व्यापारोऽपि गृह्यते व्यञ्जनाया व्यापकत्वेन सर्वत्र विद्यमान तया अभिधेयार्थेऽपि सत्त्वात् । अभिधान व्यापारस्य प्राधान्यादुभयोर्गुणीभूतत्वमिति काव्यं ताभ्यां भिन्नमिति शब्दार्थयोर्गुणीभूतत्वे साहित्य मेवोयपादितमर्थतो भवति । एवमेव हृदयदर्पणेऽपि भट्टनायकोऽभिभाषते यथा—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः ।
अर्थतत्त्वेन युक्तन्तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापार प्राधान्ये काव्यधीर्भवेत् । इति ।

नैतावताऽत्र शंकनीयं यत् सर्वत्रोभयोर्व्यञ्जकत्वाभावात् क्वचिच्छब्दो व्यनक्ति, क्वचिदर्थः, अत शब्दशक्त्युद्भवोऽर्थं शक्त्युद्भवोवाव्यंग्यः इति व्यवहारो जायते न तूभयोर्व्यञ्जकत्वे सहभाव इति, यतश्शाब्द्यां व्यंजनायामर्थस्य, आर्थ्यांव्यंजनायां शब्दस्य साहचर्यात् । व्यवहारश्चान्वयव्यतिरेकाभ्यां प्राधान्यमूलक एव मन्यते । अतएवोक्तमत्र प्रमाणम्—

शब्दबोध्यो व्यनक्त्यर्थंशशब्दोऽप्यर्थन्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥

तेन सर्वत्र द्वयोः सहभावोऽस्त्येवेति । तमेवार्थमधिकृत्यैव वक्रोक्तिजीवितकारोऽपि प्रतिपादनकौशलेनभिनवमेव किञ्चिदुद्भावयामास । यथोक्तं तेन न पुनरेतस्य कविकर्म कौशलकाष्ठाधिरूढरमणीयस्याद्यापि कश्चिदपि विपश्चिद्वयमस्य परमार्थं इति मनाङ्मात्रमपि विचारपदवीमवत्तीर्णं इति वदति । तदिदं ध्वन्यालोकालोकित हृदयस्यतस्य प्रतिपादनवैलक्षण्यम् । अतएवोक्तं तेन यथा—

साहित्यमनयोः शोभाति शालितां प्रति काप्यसौ ।
अन्यूनानति रिक्तत्व मनोहारिण्यावस्थितिः ॥

इति तत्रापि का नाम शोभाशालितेति विचारणायाम् सहृदयाऽऽह्लादकारिता, सहृदयाऽऽह्लादश्च रसास्वादनेनैवे'ति सर्वसम्मतम् वस्तुतो निष्कर्षे चेदमपि वक्तुं पार्यते यत्—

वृत्यौचित्य मनोहारिरसानां परिपोषणम् ।
स्पर्धया विद्यते यत्र यथास्वमुभयोरपि ।।

सा काव्यव्यवस्थितिस्तद् चिदानन्द परिस्पन्दसुन्दरा पदादि वाक् परिस्पन्दसारः साहित्यमुच्यते इति ।

एवमपि वक्तुं शक्यते यत् सहितानां भावः साहित्यम् सहित शब्दाद् गुणवचनब्राह्मणादिभ्यः कर्मणि चेत्यादिसूत्रेण भावेष्यत्रिकृते रूपम् । तत्र सहभावश्च चतुर्दशाष्टादश वा प्रस्थान भिन्नानांविद्यानां, सकल विद्यास्थानैकायतनं पञ्चदशकाव्यं विद्यास्थानम् इति याया-वरीयोक्तेः । पञ्चमी साहित्य विद्या, सा हि चतसृणामपि विद्यानां निष्यन्द एवेति तदुक्तेः ।

साहित्यस्य कर्म साहित्यम् कर्मणिष्यत्रिकृतेरूपम् । यतोऽत्र विचार्यमाणो कविकर्मणि सर्वा अपि विद्या परिसमाप्यन्ते यथोक्तमत्र भामहाचार्येणापि—

न स शब्दो न तद् वाक्यं न स न्यासो न सा कला ।
जायते यन्न काव्यांगमहो भारो महान् कवेः ।। इति ।

अत्र राजशेखरोऽपिवक्ति यथा—

शब्दार्थयोर्यावत् सहभावेन विद्या साहित्यविद्येति । सहभावे यथावस्थं चालौकिकचमत्कारनिष्यन्देऽन्यूनानतिरिक्तत्वेनावस्थितिरे-वेति । भोजदेवोऽपि शब्दार्थयोर्द्वादशसम्बन्धान् साहित्यपदेनैवावोचत् यथा—

अभिधाविवक्षा, तात्पर्यंप्रविभाग-व्यपेक्षा-सामर्थ्यान्वयैकार्थीभाव-दोषहानगुणोपादानालंकार योग रसादियोगरूपाः शब्दार्थयोर्द्वादश सम्बन्धाः साहित्यमिति श्रृंगारप्रकाशे । महिमाचार्यस्तु काव्यस्य रसात्मकत्वात् रसस्यच शब्दार्थाभ्यां परिपोषदर्शनादेवोक्तवान् । रस परिपोषेशब्दार्थयोः साहित्यम्, उभयञ्च प्रधानमेतदेवादिशत् । तद् यथ ।त्रिविधं हि शास्त्रम्, शब्दप्रधानमर्थप्रधानमुभयप्रधानञ्चेति । भारविकविः 'प्रखरप्रातिभप्रभशिथिलीकृतगुणोघेन, माघेन च

शब्दार्थौ च सत्कविरिव द्वयं विद्वानपेक्षते' इति वदतो काव्यं शब्दार्थौ इत्यवोचि । तत्र साहित्ये शब्दश्चार्थश्च शब्दार्थौ इति प्रक्रियां द्वन्द्वदर्शनात् । काव्ये शब्दार्थयोः साहित्यमेवाभिप्रेतम् ।

शब्दार्थौ सहितौ वक्र कवि व्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।।

इति कुन्तकेनोक्तमेव तदेव साहित्यम् । महाकविः कल्हणोपि प्राह यथा—

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते ।
शीला भट्टारिका वाचिवाणोक्तिषु च सा यदा ।।

इति प्रोवाच ।

वस्तुतस्तु स्वानुजीविप्रमाणप्रयोज्यज्ञानविषयत्व सामान्याभाववत् सकलपुमर्थं साधनार्थं विषयकज्ञान साधनत्वं शास्त्रत्वमिति—

प्रवृत्तिं च निवृत्तिञ्च नित्येनकृत्केन वा ।
पुंसां येनोपदिश्येत् तच्छास्त्रमभिधोयते ।।

इति वचन प्रामाण्यात् । तमोक्त शास्त्रलक्षणे स्वानुजीविनि प्रमाणानि न्यायवेदान्तादीनि तत्प्रयोज्यज्ञानविषयता द्रव्यादिपदार्थेषु ब्रह्ममायादिषु तत्सामान्याभाववन्तः सकलपुमर्थं साधनानि च रसादयः तद् विषयकज्ञान साधनत्वात् साहित्यस्य शास्त्रत्वमुपपद्यते ।

साहित्यशास्त्रे काव्यात्मत्वेनालंकारः, रीतयः, वक्रोक्तिः, ध्वनिः, रसः, औचित्यमित्येतदुपपादितम् । शास्त्रे शब्दस्यअर्थस्यतयोः सम्बन्धस्याभिधा-लक्षणा व्यंजनादि वृत्तीनामलंकारगुणरीतिवृत्तिध्वनिरसादीनां काव्यत्व विघटकानां दोषाणां च सम्यक्परीक्षणं विधायोपपादनमभिप्रेतम् ।

महाभाष्यकृद्भिः पतञ्जलिमुनिभिः व्याकरणमुपदिश्य सम्यगुक्तम् 'सर्ववेद पारिषद्यं हीदं शास्त्रम्' इति वाक्यं साहित्यशास्त्रमपि याथातथ्येन व्याप्नोति । काव्यकारणीभूत व्युत्पत्तये सर्वेषां शास्त्राणां

पर्यालोचनं परिशीलनम् परिभावनञ्चावश्यकं भवतीति। काव्ये- विचार्यमाणे सति सर्वा अपि विद्याः परिसमाप्यन्त इति वक्तुं शक्यन्ते। साहित्यशास्त्रस्य जीवातुभूता सर्वाविद्याः लक्ष्यन्तेऽत्र। अतएव दण्डिना- प्युक्तम्—

इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।
यदिशब्दाह्वयं ज्योतिरासारं न दीप्यते॥

भामहेनापिप्रोक्तम्—

सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।
विलक्षणाहि काव्येन दुःसुतेनेव निन्द्यते॥
तदल्पमपि नोपेक्ष्यं काव्यदुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥

एवं दोषे सति गुणानामप्यकिञ्चित्करत्वस्य बहुधा उपपादितत्वात्। तेषु गुणराशिनाशक दारिद्र्य दोषस्येवात्युत्कटस्यानुकरणमन्तरा समाधातुमशक्यस्य नित्यस्य च्युतिसंस्कृतिदोषस्य ज्ञानं व्याकरण- शास्त्रं विना नार्हतीति काव्यव्युत्पत्तये शब्दशास्त्रज्ञानमपेक्षितम् यथोक्तमत्र प्रमाणाय—

असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः।
यदृच्छा शब्दवत्पुंसः संज्ञायै जन्म केवलम्॥

अत्र विषये नैषधकारोहर्षोऽपि बोधयति यथा—

क्रियेच्चेत् साधु विभक्ति चिन्ता
व्यक्तिस्तदा साप्रथमाऽभिधेया।
या स्वौजसां साधयितुं विलासैः
तावत् क्षमानामपदं बहुस्यात्॥
(नै० म० का० ३। २३)

अत्र पद्ये व्याकरणमेवानेकार्थकशब्दैः प्रकृतोपस्कारकतया वर्णितवान् नैषधकारः । दण्डिनापि प्रोक्तम्—

जातिक्रियागुणद्रव्य स्वभावाख्यान मीदृशम् ।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीक्षितम् ।।

चतुष्टयी शब्दानां प्रवृत्तिर्महाभाष्यकार वचनानुगत संकेतितश्चतुर्भेदो जात्यादिर्जातिरेववेति मम्मटाचार्योऽपिव्याकरणागमानुयायित्वमुपकारकारीणि सिद्धान्तवचनानि सम्यगनुभूय साहित्यसंगमसमष्टिं साधयामास ।

इत्थं साङ्गोपाङ्गश्रुतिस्मृतिप्रभृतीतिहासपुराणादीनामप्यर्था काव्यार्थयोनितया राजशेखरेणोक्ताः तस्मादप्युपजीव्योपजीवकभावापन्नतया साहित्यपदार्थकतया सर्वेषां दार्शनिक मतभाजामलङ्कारतयोपादानमपि लक्ष्यते 'इति विचार्यं सर्ववेद पारिषद्यत्वमप्यस्यसाहित्यस्योपपन्नं भवत्येव ।

साहित्यं स्वतन्त्रशास्त्रमपि—सर्वासां विद्यानां निष्यन्दभूतं यद्यपीदं साहित्यं क्वचित् क्वचित्तच्छास्त्रसिद्धान्तकणिकाभणितिं विभर्ति तथाप्यस्य स्वतश्शास्त्रत्वं नाविदितचरम् । गुणालंकाररीतिवृत्तिरसादिप्रभृतीनामुपपादनमस्य स्वतन्त्रविषयतयैव भवति । शब्दार्थवृत्तीनां यद्यपि पदवाक्यप्रमाणशास्त्रेषूपपादनं लभ्यते तथाप्यत्रवैशिष्ट्यं तत्रापि प्रस्फुरत्येव । वस्तुतः साहित्यं व्याकरणपरिशिष्टम् पदसाधुत्वलक्षणेन व्याकरणशास्त्रेण पदानि संस्क्रियन्ते तेषां यथावत् प्रयोगोऽभ्युदयनिःश्रेयससिद्धये भवति ।

तदैवैषा श्रुतिः संगच्छते एकः शब्दः—अत्र दण्डिनापिप्रोक्तम्—

गौर्गौः कामदुधाः सम्यक् प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ।। इति ।।

अपि च यस्तुप्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले इति महाभाष्यकारवचनानुसारं व्याकरण निष्पन्नानां शब्दानां

 

यथावत् प्रयोग एव साहित्यम् । साहित्येन च प्रयोग नियमः क्रियते दोषादिनिवारणपूर्वकं सच्छब्दार्थविन्यासेन ।

व्याकरणस्यैव पुच्छभूतं साहित्यमित्यपि भाषन्ते विपश्चितः । तेनालंकारशास्त्रमिदं व्याकरणपरिशिष्टं सिद्धमेव । तेन साहित्य पदार्थतया काव्यशास्त्रमलंकारशास्त्रन्नाट्यशास्त्रं काव्यञ्चेति सर्वमत्र सुसामञ्जस्यम्भजतितराम् ।

काव्येषु साहित्यशब्दप्रयोगस्तु कथञ्चिदौपचारिकः स्यादपि परन्तथा शास्त्रत्वन्नामशासनत्वन्तेषु प्रतिपाद्यते कैश्चिदिह तदपि शोभनमेत्र प्रतिभाति । काव्यैस्तु लक्ष्यभूतैः स्वयंशास्त्रैरिह लोके लौकिकव्यापारपारलौकिकघटनाप्रदः सदर्थनियामकतया व्यवस्थितः ।

अतएव महर्षि वाल्मीकिरादिकविरपि काव्यशास्त्रेषु तत्तत्साधुशब्दार्थविन्यासमाध्यमेनानुकार्यतया काव्यशास्त्रप्रवर्तकोऽपि तदैवतस्यादिकाव्यत्वं प्रथितञ्चकास्ति । साहित्यपदार्थविषये वहुवक्तव्यमवशिष्यते विस्तारभयादत्रैव सावनतो विरम्यतेऽयञ्जनः सुधिभिरनुग्रहीष्यत इतिविश्वासमावहन् ।

---

# भक्तानां पुरुषार्थः

जगति जगन्नियन्तुर्नियमानुसारं समेऽपि पदार्थाः जगल्लीलालीलायिता बालकन्दुकक्रीडेव सर्वसुखसाधनीभूता मन्यन्ते शास्त्रकारैः। परब्रह्मापि लीलाविर्भूतावस्यामवतरति लीलायै, राम-कृष्ण-नरसिंह-वामनादिविविधलिङ्गैः। शास्त्रेषु धर्मार्थकाममोक्षाख्याश्चतुर्धा पदार्थाः पुरुषार्थतया प्रकीर्तिता नात्र संशयलेशः। तेषु मोक्ष एव परमपुरुषार्थतया गणित इत्यपि मोक्षपदार्थश्चात्मप्रथितः, साक्षात्कारो भगवत्साक्षात्कारो वा विभिन्नमते।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि श्रुतिवचनात् श्रवणमनन-ध्याननिदर्शनक्रमेण मोक्षोपायभूतानि सन्ति।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

प्रायः सर्वासूपनिषत्सु विधेयतया प्रोक्तानि विविधान्युपासनानि ज्ञानोत्पत्तिक्रमेणैव मोक्षप्रापकानि वर्णितानि। यथोक्तं सम्यग्गीतायामपि गीताचार्यैः—

'वेदैश्च सर्वैरहमेव वेद्य' इति।

अत एव योगिनोऽपि ध्यानयोगानुगताः ध्यानयोगस्य मुक्तिसाधनत्वे श्रद्धावन्तः—

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासात् तं देवं द्रष्टुमर्हति॥

श्वेताश्वतरादिश्रुतय एव तत्साधनत्वे प्रमुखं प्रमाणम्। श्रुतिष्वमृतत्वं तरति शोकमात्मवित् विद्वान् नामरूपाद् विमुक्तः तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते अयनाय, इत्यादिषु

नामरूपविमुक्तिः शोकस्यैकान्तात्यन्तनिवृत्तिश्च मोक्षः, तथाविधस्तु-त्रिविधस्याप्यभावस्याधिष्ठानात्मकत्वात् सच्चिदानन्दात्मरूप एव मोक्षः, अत एव सः पुरुषार्थोत्तमः सर्वथाऽद्वैतवादे व्यवहृतः। वस्तुतः—

तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम् ॥

इत्युक्तवचनानुसारं वैधी या भक्तिस्तस्याः कृते भगवतो नारायण-स्यैश्वर्यमयरूपं शास्त्रेषु प्रतिपादितम्। यद्यपि भगवतो नानारूपता प्रोक्ता तथापि परविभुविभवान्तर्याम्यर्चावतारभेदेन पञ्चैव भेदाः तेष्वेव प्रायः सर्वविधावतारोऽन्तर्भूतः।

निर्गुणनिराकारः, सगुणनिराकारः, सगुणसाकारश्चेति—

स्वाराज्यलक्ष्म्याप्तसमस्तकामः स्वयं त्वसाम्यातिशयस्त्र्यधीशः।
बलिं हरद्भिश्चिरलोकपाल किरीटकोटीडितपादपीठः॥

स्वयं राजते=शोभते इति स्वराट् आत्मा, तस्य भावः—स्वाराज्यम् तदेव लक्ष्मीस्तया आप्ताः समस्ताः कामा यस्यासौ स्वाराज्यलक्ष्म्याप्तसमस्तकामः, इत्थं भगवान् स्वयं स्वसत्तया आप्तसमस्तकामः।

साम्यञ्चातिशयश्च, न विद्यते यस्यासौ असाम्यातिशयः। तथा च न कोऽपि भगवतः साम्यं भजते नाधिक्यञ्च, समानताया अतिश-यस्य च स्थितिस्तदा वक्तुं शक्या यदा द्वावीश्वरौ स्याताम् परन्तौ कदापि कयापि युक्त्या कथमपि न सिद्ध्यतः, यतो द्वावपि सत्य-सङ्कल्पौ सर्वशक्तिमन्तौ—स्वीकर्तव्यौ भविष्यतः तस्मादेक एवेश्वरः सिद्ध्यति, श्रुतावपि प्रोक्तं यथा—

'न तत्समश्चाभ्यधिकः कुतोऽन्यः' इति स ईश्वरः एवाध्यात्मा अधिदेवः, अधिभूतः सर्वरूपो जगतः कारणम्। जगतः स्वामी, नियामक अनन्तकल्याणगुणगणनिलयः मधुरो मनोहरः सौन्दर्यसुधासिन्धुः,

मंगलमयः सगुणसाकारविग्रहः। तस्मादेव जगद्रचनारुचिरीश्वरः भगवदर्चनारुचिर्भक्तश्चातिशयेनोपवर्णितौ। अतएव यद् यद् रूपं ध्यायति भक्तः तत्तद् रूपं धारयति भगवान्नारायणोऽपि भक्तजनहिताय, वस्तुतः सगुणसाकाररूपेण भगवान् वैकुण्ठधाम्नि विराजते, तस्यैव रूपस्यानन्तगुणाश्रयत्वमैश्वर्यसम्पन्नत्वं वर्ण्यते, 'बलिं हरद्भिश्चिरलोकपालकिरीटकोटीडितपादपीठ' इत्यादिवचनैः।

भगवतो नाराणस्य चरणारविन्दयोश्शोभा लोकोत्तरा—अनन्तकोटिकन्दर्पदर्पदलनपटीयसी इतिवचनेन सुव्यक्ता सुप्रथिता च।

कथं भगवान् साकारः सगुणः स्वीक्रियते ? तत्र प्रथमं कारणन्तु महामुनीन्द्रान् परमहंसान् विधातुमेव तथोक्तावतारः यथोक्तम्—तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥इति। अत इदं सत्यमेव यत् रावण-कुम्भकर्ण-कंसादिराक्षसानां संहाराय न तदीयोऽवतारः। नहि मशकविनाशाय परमास्त्रस्याणुशक्तिकस्यायुधस्योपयोगः प्रहारे हि क्रियते।

अनन्तकोटिब्रह्माण्डाधिपतिर्यदा कामयते तदैवानन्तब्रह्माण्डस्य सर्जनं संरक्षणं संहारश्च तस्य भ्रुकुटिविलासेन मायानटी नृत्यन्ती सती विदधाति।

तदैवोक्तं यत् तस्य शत्रुहनने कपयः सहायाः इति। स ईश्वरो भूतलवासिनो यक्षराक्षसगन्धर्वानखिलान् लीलयाऽङ्गुल्यग्रभागेन नाशयितुं समर्थः स ईश्वरो नैवासुराणां संहारायावतरति प्रत्युत तस्य रामकृष्णप्रभृतयो मानवावताराः जगतः समग्रमानवजातीयशिक्षणाय सद्व्यवहाराय, सर्वैः सह प्रेम्णा व्यवहारायैक्याय च जायन्ते।

भगवता श्रीकृष्णेन गीतायामुक्तं यत्—

परित्राणाय साधूनां विनाशाय च दुष्कृतां।
धर्मं संस्थापनार्थाय सम्भवामि युगे युगे॥

तेन भगवतोऽवतारा विशेषतः साधूनां परित्राणायप्रकीर्तिताः प्राधान्येन, दुष्कृतां विनाशस्तु आनुषङ्गिकः प्रोक्तस्तत्र। धर्मपदार्थ-

श्चात्र यतोऽभ्युदयनिःश्रेयससिद्धिरेव, अभ्युदयश्च निश्रेयसतया सतां न लौकिकराज्यसमृद्धिसम्पादनेन स्वर्गादिसुखावाप्त्या चात्राभीप्सितः कथञ्चन, किन्तु भगवत्साक्षात्कार एव, यतः गीतोक्तपरित्राण-पदार्थश्च इष्टिप्राप्तिरनिष्टनिवृत्तिरेव। साधूनामिष्टन्न तदतिरिक्त-म्भवति, भगवद्वैमुख्यं दर्शनाभावः सत्स्वपि प्रभूतराज्यसुखसाधनेषु अनिष्ट एव, लौकिकराज्यसमृद्धिः, स्वर्गीयसर्वसुखसमृद्धिश्च नैवेष्टा साधूनाम् उक्तसमृद्ध्यभावेऽपि भगवति रतिस्तदीयन्दर्शनञ्चैवेष्टं भवतीति सिद्धान्तः।

तस्मादेव सर्गस्थितिसंहारं सत्यसंकल्पेन लीलया प्रवर्तितुं समर्थ-स्सन्नपि प्रभुः साधूनामिष्टसाधनाय मानवविग्रहेण लोकेऽवतरति स्वं दर्शनमेवेष्टं तेभ्यः प्रयच्छति। तदवसरे च स्वयं सदाचरति, सद्व्यव-हरति, भृशमनुरागञ्च सर्वविधेषु मातृ-पितृ-भ्रातृ-गुरुजन-प्रजाजनेषु च करोति प्रथयति वर्द्धयति च। अयमेव महान् धर्मः यतः प्रेम्णा सद्व्यवहारेण सदाचरणेन सर्वजनत्राणकर्मणा च प्राणिनः प्रसन्नाः सुखसाधनोपेता लक्ष्यप्राप्तौ लब्धाधिकारा जायन्त एव। 'धर्मो धारयति प्रजाः' इति वचनेन वेदपुराणधर्मशास्त्रानुसारं च सर्वैस्सह सद्व्यवहाराचरणमात्मनः प्रतिकूलानां कर्मणां परित्यागः सर्व-प्राणिनां हि तच्चिन्तनमेव च प्रमुखो धर्मः यं स्वयं संस्थापयति, सर्वैस्सह सद्व्यवहरन्नीश्वरः तदानीमेवानुषङ्गिकरूपेणासुरसंहारमपि विदधाति।

साधवो जना गृहस्थाश्रमिणोऽपि गार्हस्थ्येऽपि सदाश्रमे वसन्तः योगक्षेमनिर्वाहाय परमावश्यकान्यपि वस्तूनि न कामयन्ते। यदिच्छा-लाभसन्तुष्टा इव भगवद्भागवतसेवाबुद्ध्या परिजनसेवां कुर्वाणा निःस्पृहा भवन्ति। कर्तव्यबुद्ध्यैव निखिलमपि कर्म सम्पादयन्ति भक्ताः सततमनासक्तमनसः। एवंविधा भक्ता एव साधुपदैर्व्यवहृता भवन्ति। येषां मनांसि न लौकिक-पारलौकिकविभूतौ संसक्तानि किन्तु सदाऽहर्निशमीश्वरमेव द्रष्टुकामाः तच्चरणारविन्दकैंकर्येदत्ता-वधाना लोके सामान्यजन इव जीवनयात्रायां वर्तमाना जीवनधारणा-यैव किञ्चिद् भगवत्प्रसादरूपेण गृह्णन्ति। तस्मादेव कैवल्य-मुक्तिमपि पाषाणकल्पं मन्वाना न ताङ्कामयन्ते कथञ्चिदपि।

अत एव तेषां विचारे तु यत्र भगवतोलीलामयी मङ्गलमयी काचिदनुभूतिः परमाह्लादकारिणी स्फुरति तामेव परमपुरुषार्थतया मन्यमानास्तत्रैव रमन्ते सुचिरम्। तेषान्तु मुक्त्यपेक्षया भगवद्-भक्तिरेव गरीयसी, यथोक्तं स्वयं भगवतापि साधवो धीरा भक्ता ह्येकान्तिनो मम वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ।। केचन तु भगवतश्चरितामृताब्धिपरिवर्ततः सर्वाश्रमविनिर्मुक्ताः सन्तोऽपि नापवर्गं वाञ्छन्ति यथा—

न परिलसन्ति केचिदपवर्गमपीश्वर ते ।
चरितमहामृताब्धिपरिवर्तपरिश्रमिणः ।। इति प्रमाणम् ।

वस्तुतो भक्ता भक्तिभावाब्धिमन्थाग्रोदभूताह्लादवैभवेन समं मुक्तिं कथमपि न विगणयन्ति । भक्तवैशिष्ट्यमतिशयेन सर्वापेक्षया स्वीकुर्वन्तयेव नात्र सन्देहः उक्तञ्चात्र विषयेऽपि—

ब्रह्मानन्दो भवेदेष द्विपरार्धं गुणीकृतः ।
नैति भक्तिरसाम्भोधेः परमाणुतुलामपि ।।

संसारेऽस्मिन् यावद् भुक्ति-मुक्तिवासना पिशाची प्राणिनोऽनुधावति तावद्भक्तिभागीरथीभक्तिभावोदयो वा न सम्भवः कथमपि ।

अत एव तेषामयं सिद्धान्तः प्रवर्तते यत्—

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ।। इति

अतः कृष्णावतारे गोप्यो हि कालिन्दीतटे श्रुतिपारायणं कुर्वतो मुनीन् प्रोक्तवत्यो यत् "श्रुतयो पलालकल्पा उपनिषदर्थं ऊलूखले बद्ध" 'इतिः तदानीमेव मुनय श्यामसुन्दरं श्रीकृष्णचन्द्रं विष्णोः पूर्णकलावतीर्णं मत्वा भक्तिभावान्विता जाताः । इत्थं भक्तिमार्गे निमग्नानां, रसो वै सः, इत्यादि श्रुतिसिद्धः रसस्वरूपः परमात्मा सर्वंजगतः कारणं भवति । कारणं हि समस्तं कार्यंजातं व्याप्य तिष्ठति, अतो रसात्मिका

भक्तिः स्वभावतः सर्वगता सर्वजनोपास्या मन्यते । कैश्चिदद्वैतवादिभिरपि प्रतिपादितोऽयं सिद्धान्तोऽतीव हृद्यः प्रतिभाति यथा—

न निरोधो न चोपत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्तः इत्येषा परमार्थता ॥

इति रीत्यापि जीवस्य कृते किमपि कर्तव्यन्नावशिष्यते तथापि जन्मगृहीत्वाऽविद्यानिवृत्तये स्वरूपानुभवाय प्राप्तये च किमपि वर्तितव्यमेव भवति, तच्च वर्तितव्यं कर्म लोके किं स्यात् परमार्थतः सेवातिरिक्तं स्वरूपानुसन्धानातिरिक्तम्वा । सेवा च भक्तिरेव स्वरूपमपि सानन्दात्मकब्रह्मातिरिक्तं न सिद्ध्यति, तस्यानुभूतिरपि भाव एव, भावश्चात्र भक्तिपदेनापि प्रोच्यते । यस्तु समेषां सिद्धान्तवादिनां मते सार्वत्रिकी सार्वभौमिकी सर्वविधा प्रगतिरेव प्रकीर्तिता भवति, साच कर्मपरित्यागान्न सम्भवा, कर्म च यत् क्रियते तदवश्यमैहिकामुष्मिक फललाभायैव । ऐहिकामुष्मिकफलबुद्ध्या कृतं न मोक्षसाधकंसिद्धान्तः स्वीक्रियते । निःस्वार्थभावनयैव कृतं भगवत्समर्पण-प्रसादबुद्ध्या मुक्ति प्रयोजकं मन्यतेऽतोध्ययनाध्यापनमपि सत्कर्मतया सेवाबुद्ध्या यथार्थतो यदि क्रियते तदा शास्त्रसेवारतानामुत्तमभक्तेषु गणना कृता विद्यत एव । शास्त्रञ्च विधिनिषेधात्मकमनुभूय तद्वदाचरणाय प्रथितं मन्यते । तस्यैव जीवनं धन्यम्मन्ये यः परार्थं जीवनं धारयति ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनञ्च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥

तावत् कोकिल विरसान् यापय दिवसान् वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥

इति सूक्तिभिरपि भक्तपुरुषार्थं एवोक्तः साधुः ।

# पूर्वोत्तरपक्षव्याप्तिमीमांसा

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
पुराणं धर्मशास्त्रश्च विद्या ह्येताश्चतुर्दश ।।

इति सूक्तिमनुरुद्धय महर्षिगौतममुनिप्रणीतप्रमाणप्रमेयादिषोडशपदार्थ-प्रतिपादकसूत्रानुगतन्यायवैशेषिकोभयसिद्धान्तनिर्धारणपरां न्यायसिद्धा-न्तमुक्तावलीं महामहोपाध्यायविश्वनाथपञ्चाननभट्टाचार्यः प्रणीत-वान् ।

तत्र प्रत्यक्षानुमानोपमानशब्दप्रमाणेषु प्रत्यक्षप्रमाणोपन्यासानन्तर-मनुमानप्रमाणमत्यधिकामुपादेयतामर्हति सर्वशास्त्रतत्त्वसाधकतयेति नात्र कश्चनापि विवादः । यतः काणादं पाणिनीयञ्च सर्वशास्त्रोप-कारकमिति सूक्तिरपि गतार्थयति जिज्ञासिततत्त्वप्रतिपादनाय अनु-मानप्रमाणोपयोगितामपि । अनुमानप्रमाणे व्याप्तिज्ञानस्य करणतया असाधारणकारणत्वेन तत्रत्यविचारा विदुषां बहूनामपि परमोपयोगिनः सन्त्येव नात्राश्चर्यम्; तथापि विषयगाम्भीर्याद् व्याप्तिज्ञानप्रकाशन-कर्कशां दुरूहां भाषाशैलीञ्चावलोक्य जिज्ञासूनां मनोमुकुलं हतप्रभ-मिव सञ्जायत इति । इत्थञ्च यथामति व्याप्तिज्ञानविचारप्रसूनम-वश्यं यथाशक्यं सारल्येनाद्यन्तं सन्धार्य सामान्यप्रतिभाजुषोऽपि मेऽकि-ञ्चित्करं प्रयासं सफलीकरिष्यन्तीति विचार्यैव समर्पयति सादरम् ।

तथाहि—'व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः'[1] इति मीमांस्यमानं वचनम् । तथा च साध्यवतोऽन्यस्मिन् 'असम्बन्धः' व्याप्तिरुदाहृतः, साध्यं साधितुं योग्यो वह्न्यादिः, तदस्यास्तीति साध्यवान् पक्षः पर्वतादिः, साध्यवतोऽन्यः साध्यवदन्यः पक्षादिभिन्नो जलह्रदादिः, तस्मिन् असम्बन्धो वृत्तित्वाभावः, जलह्रदे वृत्तिः मीनशैवालादिः वृत्तित्वाभाववान् धूमादिर्हेतुरिति ।

---

१. न्या० सि० मु० ६८ ।

अत्र साध्यवत्पदोत्तरप्राप्तां षष्ठीं प्रबाध्य 'अन्यादारादि०'[1] सूत्रेण पञ्चमीविभक्तिः, तस्यार्थः स्वनिष्ठप्रतियोगितानिरूपकत्वम्, अन्य-शब्दस्य भेदाधिकरणमर्थः, अन्यपदोत्तरसप्तम्या निरूपितत्वमर्थः, असम्बन्ध इत्यस्य वृत्तित्वाभावोऽर्थः, साध्यवत्पदार्थस्य स्वनिष्ठप्रति-योगितानिरूपकत्वसम्बन्धेन भेदेऽन्वयः, भेदस्य च स्वरूपसम्बन्धेन आश्रयेऽन्वयः, आश्रयस्य च निरूपितत्वसम्बन्धेन वृत्तौ अन्वयः, वृत्ति-त्वस्य च स्वरूपसम्बन्धेन अभावेऽन्वयः। तथासति साध्यवन्निष्ठप्रति-योगिताकभेदाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति लक्षणं सम्पन्नम्।

पर्वतो वह्निमान् धूमादित्यत्र साध्यवन्निष्ठप्रतियोगिताको यो भेदो वह्निमान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं जलह्रदः, तन्नि-रूपितवृत्तित्वं मीनशैवालादौ, वृत्तित्वाभावस्य धूमे सत्त्वाल्लक्षण-समन्वयः। तथापि पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः कथमिति चेत्, इत्थम्—साध्यवन्निष्ठप्रतियोगिताको भेदः 'अभावीयप्रतियोगिता-वच्छेदकतया' समवायेन वह्निमान्नेति प्रतीतिसिद्धो भेदः तादृशभेदा-धिकरणमेव पर्वतः, तन्निरूपितवृत्तित्वं धूमे वृत्तित्वाभावो नायातोऽ-तोऽव्याप्तिः।

एवमेव पर्वतो वह्निमान् धूमादित्यत्र समवायेन वह्निमान् वह्ने-रवयवः, तदन्यो महानसादिरेव, तत्र हेतोर्धूमस्य विद्यमानत्वादव्या-प्तिरिति। तन्निवारणाय साध्यनिष्ठावच्छेदकतायां साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वं निवेश्यते, तथा सति साध्यतावच्छेदकसम्बन्धाव-च्छिन्नसाध्यनिष्ठावच्छेदकतानिरूपित साध्यवन्निष्ठप्रतियोगिताकभेदा-धिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति। एवं कृते सति पर्वतो वह्निमान् धूमात्, समवायेन वह्निमान् वह्नेरवयव इत्यादौ नाव्याप्तिः, कथमिति चेत्, इत्थम्—साध्यवन्निष्ठप्रतियोगिताको यो भेदः, साध्य-तावच्छेदकसम्बन्धः संयोग एव, तेन संयोगेन वह्निमान्नेति प्रतीति-सिद्धो भेदः, तादृशभेदाधिकरणं जलह्रदादिरेव, तन्निरूपितावृत्तित्वं मीनादौ, वृत्तित्वाभावस्य धूमे सत्वाल्लक्षणसमन्वयः। परं तथापि

---

१. अष्टाध्यायी—२-३-२९।

पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः, कथमिति चेत्, इत्थम्—साध्यवन्निष्ठप्रतियोगिताकोयोभेदःसंयोगेन महानसीयवह्निमान्न, एवं संयोगेन चत्वरीयवह्नियोमान्न, एवं संयोगेन गोष्ठीयवह्निमान्नेति, संयोगेन याज्ञीयवह्निमान्नेति प्रतीतिसिद्धो भेदः इति चालनीन्यायेन तादृशभेदाधिकरणमेव तत्तन्महानसादिः, तत्तन्निरूपितवृत्तित्वमेव धूमेसमायातम्, वृत्तित्वाभावोनायातोऽतोव्याप्तिः, तद्वारणाय साध्यवन्निष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्नायाऽवच्छेदकतातदनिरूपितत्वमथ च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकतानिरूपितत्वमेतदुभयं निवेश्यते। तथासति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपित—अथ च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकतानिरूपितसाध्यवन्निष्ठप्रतियोगिताकभेदाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति।

तथा च पर्वतो वह्निमान् धूमादिदित्यत्र नाव्याप्तिः, कथमिति चेत्, इत्थम्—साध्यवन्निष्ठप्रतियोगिताको यो भेदः, संयोगेन महानसीयवह्निमान् न, एवं संयोगेन चत्वरीयवह्निमान् न, एवं गोष्ठीयवह्निमान्नेति प्रतीतिसिद्धो भेदः। एतद् भेदीया या या प्रतियोगिता, सा सा साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेकताभिन्ना या अवच्छेदकता, महानसीयत्वनिष्ठावच्छेदकता, एवं चत्वरीयत्वनिष्ठावच्छेकता, गोष्ठीयत्वनिष्ठावच्छेदकता, याज्ञीयत्वनिष्ठावच्छेदकतेति तयाऽवच्छेदकतयाऽवच्छिन्नैव वर्तते, अत एतादृशप्रतियोगितानिरूपको यो भेदः, स च न लक्षणघटकः, लक्षणघटकश्च संयोगन वह्निमान्नेत्येवं प्रतीतिसिद्धो भेदः, तादृशं भेदाधिकरणं जलह्रदः, तन्निरूपितवृत्तित्वं मीनादौ, वृत्तित्वाभावस्य धूमे सत्त्वाल्लक्षणसमन्वयः।

इत्थं कृतेऽपि पुनरप्यव्याप्तिः—साध्यवन्निष्ठप्रतियोगिताको यो भेदः, संयोगेन वह्निमान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं धूमावयवः, तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य धूमे सत्वात्। एवं साध्यवन्निष्ठाप्रतियोगिताको यो भेदः संयोगेन वह्निमान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं भवतु नाम जलह्रदः, तन्निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वस्य धूमे सत्वादव्याप्तिर—

स्त्येव, तद्वारणाय साध्यवन्निष्ठप्रतियोगिताकभेदाधिकरणनिरूपित-वृत्तितायां हेतुतावच्छेकसम्बन्धावच्छिन्नत्वं निवेश्यते। तथा सति साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना याऽव-च्छेदकता, तदनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठा-वच्छेदकतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवन्निष्ठ-प्रति-योगिताकभेदाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति।

तथा च पर्वतो वह्निमान् धूमादित्यत्र लक्षणसमन्वयः। साध्यव-न्निष्ठप्रतियोगिताको यो भेदः संयोगेन वह्निमान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं भवतु नाम धूमावयवः, तन्निरूपितहेतुता-वच्छेदकसम्बन्धावच्छिन्नसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्य वायुनिक्षि-प्तधूमावयवसम्बद्धतृणादौ सत्वेन वृत्तित्वाभावस्य धूमे सत्वात्। एवं साध्यवन्निष्ठप्रतियोगिताको यो भेदः संयोगेन वह्निमान्नेति प्रतीति-सिद्धो भेदः, तादृशभेदाधिकरणं जलह्रदः, तन्निरूपितहेतुतावच्छेदक-सम्बन्धावच्छिन्नसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्य मीनादौ सत्वेन वृत्ति-त्वाभावस्य धूमे सत्वान्नाव्याप्तिप्रसंगः।

इत्थं हि सद्धेतौ व्याप्तिलक्षणं संसाध्य असद्धेतावपि विचारणीय-मवशिष्यते। तथा च—धूमवान् वह्नेरित्यत्र साध्यवन्निष्ठप्रतियो-गिताको यो भेदः संयोगेन धूमवान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदा-धिकरणं जलह्रदः, तन्निरूपितवृत्तित्वस्य मीनादौ सत्वेन वृत्तित्वा-भावस्य वह्नौ सत्त्वात् लक्षणसमन्वयः। तेनातिव्याप्तिर्लक्षणे जातैव, तद्वारणाय साध्यवन्निष्ठप्रतियोगिताकभेदाधिकरणनिरूपितवृत्तितायां वृत्तित्वसामान्याभावो निवेश्यते। तथा सति साध्यवन्निष्ठप्रतियोगि-ताकभेदाधिकरणनिरूपितवृत्तित्वसामान्याभावो व्याप्तिरिति लक्षणं निष्पद्यते। तथा च धूमवान् वह्नेः—इत्यत्र नातिव्याप्तिः। साध्यव-न्निष्ठप्रतियोगिताको यो भेदः संयोगेन धूमवान्नेति प्रतीतिसिद्धो भेदः तादृशभेदाधिकरणं जलह्रदः, तन्निरूपितवृत्तित्वाभावस्य वह्नौ सत्वेऽपि यावद् वृत्तित्वाभावस्य वह्नावसत्त्वादिति नातिव्याप्तिः, यतो हि वृत्ति-त्वसामान्यान्तर्गततप्तायः पिण्डनिरूपितवृत्तिताऽपि. सा च वह्नौ वर्तत एव।

इत्थं निवेशे कृतेऽपि अतिव्याप्तिः—साध्यवन्निष्ठप्रतियोगिताको यो भेदः संयोगेन धूमवान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं तप्तायः पिण्डः, एकसत्वे द्वयं नास्तीति प्रतीत्या तप्तायपिण्डनिरूपित-वृत्तित्वस्य वह्नौसत्वेपि तप्तायः पिण्डनिरूपितवृत्तित्वजलत्वैतदुभयं नास्तीति, इत्युभयाभावस्य वह्नौ सत्वात् लक्षणसमन्वयः, तस्माद-तिव्याप्तिः।

तन्निवारणाय वृत्तित्वसामान्याभावः परिष्क्रियते। तथाहि—वृत्तित्वसामान्याभावश्च वृत्तितात्वेतरधर्मानवच्छिन्नतादृशवृत्तितात्वा-वच्छिन्नप्रतियोगिताकोऽभावः, तथा च तप्तायः पिण्डनिरूपितवृत्तित्व-जलत्वेतदुभयाभावीया या प्रतियोगिता, सा च वृत्तितात्वेतरेण जलत्वे-नावच्छिन्ना वर्तते। अत एतादृशप्रतियोगितानिरूपको यो भेदः, स च न लक्षणघटकः, लक्षणघटकश्च संयोगेन धूमवान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं तप्तायः पिण्डः तन्निरूपित-वृत्तित्वमेव वह्नौ वृत्तित्वाभावो नायात इति नातिव्याप्तिरिति। एवं सत्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिः—विशिष्टं शुद्धान्नातिरिच्यते इति न्यायात् साध्यवन्निष्ठप्रतियोगिताको यो भेदो द्रव्यत्ववान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणं गुणः, तन्निरूपितवृत्तित्वं यथा शुद्धसत्तायाम्, तथैव विशिष्टसत्तायामपि, वृत्तित्वाभावो नायातः, अतोऽव्याप्तिः। तद्वारणाय तादृशवृत्तितान-वच्छेदकं यद् हेतुतावच्छेदकं तद्वत्वं हेतौ व्याप्तिरिति, तथा सति निष्कृष्टलक्षणं तु साध्यवन्निष्ठप्रतियोगिताकभेदाधिकरणनिरूपित-वृत्तितानवच्छेदकं यद् हेतुतावच्छेदकं तद्वत्वमिति व्याप्तेर्लक्षणं सम्पन्नम्।

तथा च साध्यवन्निष्ठप्रतियोगिताको यो भेदो द्रव्यत्वान्नेति प्रतातिसिद्धो भेदः, तादृशभेदाधिकरणं गुणः, तन्निरूपितवृत्तितान-वच्छेदकं यद् हेतुतावच्छेदकं गुणकर्मान्यत्ववैशिष्टसत्तात्वञ्च, तदेव हेतुतावच्छेदकं तद्वत्वस्य हेतौ सत्त्वाल्लक्षणसमन्वय इति नाव्याप्तिः।

तथापि इदं वाच्यं ज्ञेयत्वात्, तथा च घटः सत्तावान् जातेरित्यादौ अव्याप्तिः, कथमिति चेदित्थम्—साध्यवन्निष्ठप्रतियोगिताको यो भेदो वाच्यत्वान्नेति प्रतीतिसिद्धो भेदः, तादृशभेदाधिकरणमेवा-प्रसिद्धम्, वाच्यत्वस्य केवलान्वयित्वात्। तथा च सत्तावान् जाते-

रित्यपि साध्यवन्निष्ठप्रतियोगिताको यो भेदः सत्तावान्नेति प्रतीति-सिद्धो भेदः, तादृशभेदाधिकरणं सामान्यादिः, तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृतित्वस्याप्रसिद्धत्वाद् अव्याप्तिः।

अतः पूर्वपक्षव्याप्तिलक्षणं लक्ष्यासंस्कारकं विज्ञाय सिद्धान्त-लक्षणस्य उत्तरपक्षव्याप्तेरुत्थानं भवति। तथाहि—

अथवा हेतुमन्निष्ठविरहाप्रतियोगिना।
साध्येन हेतोरैकाधिकरण्यं व्याप्ति[1]रुच्यते ॥ इति ॥

अर्थाद् हेतुसामानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामान्याधिकरण्यमिति व्याप्तिलक्षणम्।

तथा च पर्वतो वह्निमान् धूमादित्यत्र लक्षणसमन्वयः, कथमिति चेदित्थम्—हेतुर्धूमः, तदधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावो घटो नास्तीति प्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी घटः, अप्रतियोगी वह्निः, स एव साध्यः, तेन समं हेतोर्धूमस्य सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

परमेवं सिद्धान्तलक्षणेऽपि कृते पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः कथमिति चेत्, इत्थम्—हेतुर्धूमः, तदधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावो महानसीयवह्निर्नास्ति। एवं हेत्वधिकरणे महानसे पर्वतीयवह्निर्नास्ति, एवं हेत्वधिकरणे चत्वरे गोष्ठीयवह्निर्नास्तीति प्रतीतिसाक्षिकाभावः, एवं हेत्वधिकरणे गोष्ठे चत्वरीयवह्निर्नास्तीति प्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी तत्तद्वह्निरेव, अप्रतियोगी न कोऽपि वह्निः, इति अव्याप्तिरिति। तदवारणाय समानाधिकरणवह्निधूमयोरेव व्याप्तिः। तद्यथा-हेतुर्महानसीयो धूमः, तदधिकरणं महानसम्, तत्र वर्तमानो योऽत्यन्ताभावः पर्वतीयो वह्निर्नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी पर्वतीयो वह्निः, अप्रतियोगी महानसीयो वह्निः। एवं हेतुः

---

१. न्यायसिद्धान्तमुक्तावली—६९।

पर्वतीयो धूमः, तदधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावो महानसीयो वह्निर्नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी पर्वतीयो वह्निः, स एव साध्यः तेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

एवञ्च इदं जगद्वाच्यं ज्ञेयत्वाद् इत्यत्रापि लक्षणसमन्वयः। यथा हेतुर्ज्ञेयत्वम्, तदधिकरणं तत्तत्पदार्थाः, तत्र वर्तमानो (तद्वृत्तिः) योऽत्यन्ताभावः, घटो नास्तीति प्रतीतिसाक्षिकाभावः 'न तु वाच्यत्वाभावः' तादृशाभावस्य प्रतियोगी घटः, अप्रतियोगी वाच्यत्वम्, तदेव साध्यम् तेन समं हेतोर्ज्ञेयत्वस्य सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

एवं सत्तावान् जातेरित्यत्रापि हेतुर्जातिः, तदधिकरणं द्रव्यगुणकर्माणि, तत्र वर्तमानो योऽत्यन्ताभावो घटो नास्तीति प्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी घटः, अप्रतियोगी सत्ता, तया सह हेतोर्जातेरित्यस्य सामानाधिकरण्यमस्ति।

तथापि पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः। कथमिति चेत्, इत्थम्—हेतुर्भवतु नाम महानसीयो धूमः, पर्वतीयो धूमो वा तदधिकरणं महानसपर्वतादिरेव। तत्र वर्तमानोऽत्यन्ताभावः एकसत्वे द्वयं नास्तीति प्रतीत्या पर्वतीयवह्निः, घट एतदुभयं नास्तीत्याकारकप्रतीतिसक्षिकाभावः, तादृशाभावस्य प्रतियोगी वह्निः, घट उभयम्, अप्रतियोगी वह्निर्न जात इत्यव्याप्तिः, तद्वारणाय हेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितायां वैशिष्टयव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं निवेश्यते तथा सति हेतुसमानाधिकरणात्यन्ताभावीयवैशिष्टयव्यासज्यवृतिधर्मानवच्छिन्नप्रतियोगिताकाभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति।

व्यासज्यवृतित्वमुभयवृतित्वम्, (वृत्तिधर्मः), उभयत्वञ्च तेनैकत्वावच्छिन्नप्रतियोगिताकपर्याप्तिकान्यत्व व्यासज्यवृत्तित्वम्, तथा च न भवति पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिः। कथमिति चेत्, इत्थम् हेतुः पर्वतीयो धूमः, तदधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावो

वह्निः जलमेतदुभयं नास्तीत्याकारकप्रतीतिसाक्षिकाभावस्तु धर्तुं न शक्यते। कथमिति चेत्, इत्थम्—एतदभावीया या प्रतियोगिता, सा च व्यासज्यवृत्तिधर्मावच्छिन्नैव वर्तते। अपेक्षते च तदनवच्छिन्ना प्रतियोगिता। अत एतादृशप्रतियोगितानिरूपको योऽभावः, स च न लक्षणघटकः, लक्षणघटकश्च घटो नास्तीत्याकारकसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी घटः, अप्रतियोगी वह्निः। स एव साध्यः, तेन समं हेतोर्धूमस्य सामानाधिकरण्यमस्ति।

तथापि स्थलान्तरेऽव्याप्तिः। कथमिति चेदित्थम्—'घटः गुणवान्, द्रव्यत्वात्' (अत्र साध्यहेतू समवायेन बोध्यौ) तत्र हेतोरेकव्यक्तितया समानाधिकरणविशेषहेतुसाध्ययोरेवं व्याप्तिरित्युक्तावपि न निस्तारः। हेतुर्द्रव्यत्वम्, तदधिकरणं रक्तो घटः, तत्र वर्तमानो योऽत्यन्ताभावः पीतो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः। एवं द्रव्यत्वाधिकरणे पीतघटे श्यामो नास्ति इत्याकारकप्रतीतिसाक्षिकाभावः। एवं द्रव्यत्वाधिकरणे श्यामघटे श्वेतगुणो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, एवं द्रव्यत्वाधिकरणे वायौ गन्धो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, अथ व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽपि भवति, तादृशाभावस्य प्रतियोगिनो नील-पीतगन्धादय एव तेषां गुणत्वाद् गुण एव साध्यो वर्तते, अप्रतियोगिसाध्यं न जातमित्यव्याप्तिः।

एवं तद्रूपवान् तदरसाद् इत्यत्र लक्षणसमन्वयाद् असम्भवाभावादव्याप्तिरुक्ता। तद्वारणाय अनवच्छेदकानुसरणं क्रियते। तथा च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः। तथा सति गुणवान् द्रव्यत्वादित्यत्र नाव्याप्तिः, कथमिति चेद् उच्यते—हेतुसमानाधिकरणो योऽत्यन्ताभावः रक्तघटे पीतो नास्तीति, एव पीतघटे रक्तो नास्ति, श्यामघटे श्वेतगुणो नास्ति, वायौ गन्धो नास्ति, पृथिव्यां स्नेहा नास्ति, द्रव्यत्वाधिकरणे जले गन्धो नास्ति, तादृशाभावस्य प्रतियोगितावच्छेदकं नीलत्वं पीतत्वादिकं गन्धत्वं स्नेहत्वादिकञ्च, अनवच्छेदकं गुणत्वं तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोर्द्रव्यत्वस्य सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

तथापि रूपत्वव्याप्यजातिमद्वान् पृथिवीत्वाद् इत्यत्राव्याप्तिः, कथमिति चेदित्थम्—हेतुः पृथिवीत्वं तदधिकरणं नीलघटः तत्र वर्तमानो योऽत्यन्ताभावः शुक्लो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः एवं हेतुः पृथिवीत्वम्, तदधिकरणं पीतघटः एवमेवपृथिवीत्वाधिकरणे रक्तघटे पीतो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः । एवं चालनीन्यायेन सर्वेषामपि रूपाणामभावग्रहसम्भवात् सर्वा अपि रूपत्वव्याप्य-शुक्लत्वादिजातयः प्रतियोगितावच्छेदिकाः, न तु अनवच्छेदिकाः । ता एव साध्यतावच्छेदिका इति हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नत्वात्मकव्यापकताहान्या लक्षणस्य पृथिवीत्वहेतावव्याप्तिः । तद्वारणाय भवतु नाम तादृशाभावीयाप्रतियोगितावच्छेदकं शुक्लत्वपीतत्वादिकं अनवच्छेदकं तु परम्परासम्बन्धेन रूपत्वव्याप्यजातित्वम्, तदेव साध्यतावच्छेदकं (परम्परासम्बन्धस्तु स्वाश्रयसमवायसम्बन्धः) स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्यजातित्वमेव साध्यतावच्छेदकम्, नहि एतादृशपरम्परासम्बन्धेन क्वापि पृथिव्यां (पृथिवीत्वाधिकरणे शुक्ले नीले वा) कुत्रापि घटादौ स्वाश्रयसमवायसम्बन्धेन तादृशधर्मावच्छिन्नाभावो रूपत्वव्याप्यजातित्वात्मकसाध्यतावच्छेदकवान् नास्ति इति बुद्धिरुत्पद्यते, न तु निरूपा पृथिवी यस्य कस्यचिद् रूपस्य सत्वात्, अतस्तत्र रूपत्वव्याप्यजातिमान् नास्तीति बुद्ध्युदयोऽपि न भवति । अतस्तादृशाभावो धर्तुं न शक्यः, धर्तुं शक्यते च हेत्वधिकरणे नीलघटे शुक्लत्वावच्छिन्नाभावः (अर्थात् शुक्लाभावः) ।

एवं शुक्लघटे नीलत्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदिकाः समवायेन शुक्लत्वनीलत्वादिजातयः, अनवच्छेदकन्तु स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्यजातित्वं साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं पृथिवीत्वे इति लक्षणसमन्वयः ।

एवं मठो दण्डिमान् दण्डसंयोगाद् इत्यत्र साध्यं संयोगेन हेतुश्च समवायेन बोध्यः । तथा च हेतुर्दण्डिसंयोगः, तदधिकरणं समवायानुयोगित्वसम्बन्धेन मठः, तत्र वर्तमानो योऽत्यन्ताभावो भूतलीयदण्डी नास्ति । एवं हेत्वधिकरणे भूतले मठीयदण्डी नास्ति, तादृशाभावीया प्रतियोगिता तत्तद्दण्डिनिष्ठा, प्रतियोगितावच्छेदको दण्डः, स एव

साध्यतावच्छेदकः, अनवच्छेदकः, साध्यतावच्छेदको न जात इत्यव्याप्तिः । तद्वारणाय स्वाश्रयत्वरूपपरम्परासम्बन्धेन साध्यतावच्छेदकदण्डत्वम्, तदवच्छिन्नेन समं हेतोः संयोगस्य एतादृशपरम्परासम्बन्धेन सामानाधिकरण्यमस्तीति लक्षणसमन्वयः । परम्परासम्बन्धश्च स्वाश्रयत्वरूपः । स्वं दण्डत्वम्, तदाश्रयो दण्डः, तदाश्रयः पुरुषः ।

अर्थाद् दण्डिमान् दण्डिसंयोगाद् इत्यत्र हेतुः दण्डसंयोगः, तदधिकरणं समवायानुयोगिकत्वसम्बन्धेन मठः, तत्र वर्तमानो योऽत्यन्ताभावः, तत्तद्दण्डिषु नास्तीत्याकारक प्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगी तत्तद् दण्डी, प्रतियोगितावच्छेदकं तत्तद्दण्डः, प्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकं दण्डत्वं तदवच्छिन्नो दण्डः, तदवच्छिन्नावच्छिन्नो दण्डी, तेन दण्डिना समं दण्डसंयोगस्य सामानाधिकरण्यमस्तीति लक्षणसमन्वयः ।

अतो हेतुसामानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नसाध्यसमानाधिकरण्यमिति व्याप्तिलक्षणाङ्गीकारात् । तथापि—(परम्परासम्बन्धनिवेशेऽपि) द्रव्यगुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिः, कथमिति चेद्, उच्यते 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायाद् विशिष्टशुद्धयोरैक्याद् हेतुर्विशिष्टसत्ता, तदधिकरणं गुणः, तत्र वर्तमानो योऽत्यन्ताभावो द्रव्यत्ववान्नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं द्रव्यत्वम्, तदेव साध्यतावच्छेदकं अनवच्छेदकं साध्यतावच्छेदकं न जातम्' इत्यव्याप्तिः । तद्वारणाय हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यमित्यस्यायमाशयो यद् हेतुनिष्ठाधेयतायां हेतुतावच्छेदकावच्छिन्नत्वं निवेशनीयम्, तथा सति हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यमिति लक्षणमुपपद्यते ।

तथा च द्रव्यगुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र नाव्याप्तिः, कथमिति चेदित्थम्—हेतुतावच्छेदकावच्छिन्नगुणकर्मान्यत्ववैशिष्ट्य·

सत्तात्वावच्छिन्ना विशिष्टसत्तैव, विशिष्टसत्तात्वावच्छिन्नाधेयता-निरूपिताधिकरणता द्रव्ये एव, न तु गुणे, तादृशाधिकरणत्वावन्निष्ठो योऽत्यन्ताभावो न हि द्रव्यत्ववान्नेत्याकारकप्रतीतिसाक्षिकाभावो धर्तुं शक्यते, धर्तुं शक्यते च 'घटो नास्ति' इत्याकारकप्रतीतिसाक्षिका-भावः, तादृशप्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं द्रव्यत्वम्, तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः सामानाधिकरण्य-मस्तीति लक्षणसमन्वयः।

पुनरपि 'पर्वतो वह्निमान् धूमात्' इत्यत्राव्याप्तिः। कथमिति चेत् इत्थम्—हेतुतावच्छेदकावच्छिन्नधूमनिष्ठासमवायसम्बन्धावच्छि-न्नाऽऽधेयतानिरूपिताधिकरणता धूमावयवे तादृशाधिकरणतावनिष्ठो योऽत्यन्ताभावो 'वह्निर्नास्ति' इत्याकारकप्रतीतिसाक्षिकाभावः, तादृ-शाभावस्य प्रतियोगी वह्निः प्रतियोगितावच्छेदकं वह्नित्वम्, तदेव साध्यतावच्छेदकम्। अनवच्छेदकं साध्यतावच्छेदकं न जातमित्य-व्याप्तिः, तद्वारणाय हेतुनिष्ठाधेयतायां हेतुतावच्छेदकसम्बन्धा-वच्छिन्नत्वं निवेश्यते। तथा सति हेतुतावच्छेदकसम्बन्धावच्छि-न्नसंयोगसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नधूमत्वावच्छिन्नधूम-निष्ठाधेयतानिरूपिताधिकरणतावनिष्ठात्यन्ताभावीयप्रतियोगितानव-च्छेदकं यत्साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यमिति व्याप्तिलक्षणम्।

तथा च 'पर्वतो वह्निमान् धूमात्' इत्यत्र हेतुतावच्छेदकसम्बन्धा-वच्छिन्न (संयोगसम्बन्धावच्छिन्ना) अथ च हेतुतावच्छेकावच्छिन्ना धूमत्वावच्छिन्ना या धूमनिष्ठाधेयता, तादृशाधेयतानिरूपिताधिक-रणता तु पर्वते एव, तादृशाधिकरणतावन्निष्ठो योऽत्यन्ताभावः 'घटो नास्ति' इत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगिता-वच्छेदकं घटत्वम्, अनवच्छेदकं वह्नित्वम्, तदेव साध्यतावच्छेदकम्, तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

तथा 'कपि संयोगी एतद्वृक्षत्वात्' इत्यत्रैवाव्याप्तिः, कथमिति चेत्, इत्थम्—हेतुरेतद्वृक्षत्वम्, तदधिकरणमेतद्वृक्षः, तत्र वर्तमानो-ऽत्यन्ताभावः, मूलावच्छेदेन कपिसंयोगो नास्तीत्याकारकप्रतीति-

साक्षिकाभावः, तादृशाभावस्य प्रतियोगी कपिसंयोगः, प्रतियोगितावच्छेदकं कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं न जातमिति कृत्वाऽव्याप्तिः । तद्वारणाय अभावश्च प्रतियोगिताव्यधिकरणबोध्यः, प्रतियोगिव्यधिकरणत्वं नाम प्रतियोग्यनधिकरणवृत्तित्वम् । तथा च 'कपिसंयोगो नास्ति' अयमभावस्तु मूलावच्छेदेन एतद्वृक्षे वर्तते, शाखावच्छेदेन तद्भावप्रतियोगिकपिसंयोगोऽपि वर्तते, अतोऽस्याभावस्य प्रतियोगिसमानाधिकरणत्वात् 'अयमभावस्तु न लक्षणघटकः, लक्षणघटकश्च 'घटो नास्ति' इति प्रतीतिसाक्षिकाभावः 'घटाभावस्य प्रतियोगी घटः, तदधिकरणं भूतलम्, अनधिकरणमेतद्वृक्षः, तत्र वर्तमानो योऽभावः, 'घटाभावः', स एव प्रतियोगिव्यधिकरणः । अतस्तस्यैतल्लक्षणघटकत्वं तत्प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः ।

यदि प्रतियोगिव्यधिकरणत्वं प्रतियोगि 'अनधिकरणवृत्तित्वम्', तदा तथैवाव्याप्तिः, कथमिति चेदित्थम्—कपिसंयोगो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तस्य प्रतियोगी कपिसंयोगः- अनधिकरणं गुणः, तत्र वर्तमानो योऽत्यन्ताभावः कपिसंयोगाभावः, स एव वृक्षे मूलावच्छेदेन वर्तते, सोऽपि प्रतियोग्यनधिकरणवृत्तित्वेन प्रतियोगिव्यधिकरणधर्मावच्छिन्नो जातः । प्रतियोगिव्यधिकरणधर्मावच्छिनाभावस्यैव लक्षणघटककत्वाद् । लक्षणघटकत्वेन धर्तुं शक्यत्वात् तादृशाभावीयप्रतियोगितावच्छेदकं कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं न जातमित्यव्याप्तिः ।

यदि च प्रतियोगिव्यधिकरणत्वं नाम प्रतियोग्यधिकरणावृत्तित्वमित्युच्यते चेत्, तदा द्रव्यं संयोगिसत्वाद् इत्यत्रातिव्याप्तिः, कथमिति चेत्, इत्थम्—संयोगाभावस्य प्रतियोग्यधिकरणवृत्तित्वेन धर्तुमशक्यत्वात् । धर्तुं शक्यते च 'घटो नास्ति इत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं संयोगत्वम्, तदेवसाध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः । इत्थमसद्धेतौ लक्षण-

समन्वयादतिव्याप्तिः। तद्वारणाय हेत्वधिकरणे प्रतियोग्यनधिकरण-वृत्तित्वविशिष्टस्याभावस्य विवक्षितत्वात्ः, अर्थात् स्वप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद् हेत्वधिकरणं तन्निष्ठाऽत्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकम् तदवच्छिन्न-सामानाधिकरण्यमिति व्याप्तेर्लक्षणमुपपद्यते ।

तथा च द्रव्यं संयोगिसत्वान्नातिव्याप्तिः, कथमिति चेत् इत्थम्—स्वं संयोगाभावः, तस्य प्रतियोगौ संयोगः, तदधिकरणं भूतलादिकं (तन्निष्ठाऽऽधेयतानिरूपिताधिकरणता भूतले) अधिकरणतावद् भिन्नं यद्धेत्वधिकरणं गुणः, तत्र वर्तमानो योऽत्यन्ताभावः संयोगो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं संयोगत्वं तदेव साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं न जातमिति नातिव्याप्तिः ।

तथापि विशिष्टसत्तावान् जातेः, अर्थाद् द्रव्यं गुणकर्मभेदविशिष्ट-सत्तावत्, जातिमत्वात् 'इत्यत्रातिव्याप्तिः', कथमिति चेत्, इत्थम्—'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायाद् हेत्वधिकरणे गुणे विशिष्ट-सत्ता नास्तीति अभावो धर्तुं न शक्यते, कथमिति चेत्—विशिष्ट-शुद्धयोरनतिरेकात् शुद्धसत्ताया गुणे वर्तमानत्वेन विशिष्टसत्ताया अपि गुणे विद्यमानत्वमवश्यमेवाङ्गीकरणीय भविष्यति । तथा च तादृशाभावस्तु कथमपि धर्तुं न शक्यते, धर्तुं शक्यते च घटो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं विशिष्टसत्तात्वम्, तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षण-समन्वयः, अतोऽतिव्याप्तिः, तद्वारणाय प्रतियोग्यनधिकरणत्वञ्च प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम् ।

अस्यायमाशयः—प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद् भिन्नं यद्धेत्वधिकरणम्, तन्निष्ठाऽत्यन्ताभावीयप्रतियोगितानवच्छेदकं साध्यतावच्छेदकं, तदवच्छिन्नसामानाधिकरण्यम् इति लक्षणं निष्पद्यते ।

तथा च द्रव्यं गुणकर्मभेदसत्तावद् जातिमत्वाद् इत्यत्र नातिव्याप्तिप्रसंगः, कथमिति चेद्, इत्थम्—प्रतियोगितावच्छेकावच्छिन्नगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद् भिन्नं यद्धेत्वधिकरणं गुणः, तत्र वर्तमानो योऽत्यन्ताभावो विशिष्टसत्ता नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं गुणकर्मान्यत्त्ववैशिष्ट्यं सत्तात्वञ्च, तदेव साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं न जातमिति नातिव्याप्तिः।

तथापि 'आत्मा ज्ञानवान् सत्त्वात्' इत्यत्रातिव्याप्तिः, कथमिति चेदित्थम्—प्रतियोगितावच्छेदकावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद्धेत्वधिकरणं (सत्ताधिकरणम्) घटः, तत्र वर्तमानो योऽत्यन्ताभावः, नहि विषयितासम्बन्धेन ज्ञान नास्तीत्याकारकप्रतीतिसाक्षिकाभावो धर्तुं शक्यते, यतो हि ज्ञानस्य विषयितासम्बन्धेन घट एव विद्यमानत्वाद् धर्तुं शक्यते च 'पटो नेति' इत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावीयप्रतियोगितावच्छेदकं पटत्वम्, अनवच्छेदकं ज्ञानत्वम्, तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः, तेनातिव्याप्तिः, तद्वारणाय हेतुमन्निष्ठात्यन्ताभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यते। तथा सति साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद् भिन्नं यद् हेत्वधिकरणं तन्निष्ठाऽत्यन्ताभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यमिति व्याप्तेर्लक्षणं निष्पन्नम्।

तथा च 'अयमात्मा ज्ञानवान् सत्त्वात्' इत्यत्र नातिव्याप्तिः, कथमिति चेत्, इत्थम्—साध्यतावच्छेदकसम्बन्धः समवायसम्बन्धः, तेन सम्बन्धेन ज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणतया आत्मनि सत्त्वेन अधिकरणतावान् 'आत्मा' तद्भिन्नं यद् हेत्वधिकरणं घटः, तत्र वर्तमानो योऽत्यन्ताभावः, समवायेन ज्ञानं नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकं न जातमिति नातिव्याप्तिः। अन्यथैवं 'पर्वतो वह्निमान् धूमात्' इत्यत्रापि प्रतियोगितावच्छेदकावच्छिन्नघटत्वावच्छिन्नघटनिष्ठाधेय-

तानिरूपिताधिकरणतावद्भिन्नं यद्धेत्वधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावः समवायेन वह्निर्नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तादृशाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वम्, अनवच्छेदकं साध्यतावच्छेदकं न जातमित्यव्याप्तिः स्यात्, अतः साध्यतावच्छेदक-सम्बन्धस्य निवेशेन नाव्याप्तिः, कथमिति चेदित्थम्—भवतु नाम स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपाधिकरण-तावद् भिन्नं यद्धेत्वधिकरणः पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावः, नहि समवायेन वह्निर्नास्तीत्याकारकप्रतीतिसाक्षिकाभावो धर्तुं शक्यते, तस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताका-भावात् ।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् प्रतियोगिनः अर्थात् प्रतियोगितावच्छेदकवच्छिन्नो यः कश्चित् प्रतियोगिनिष्ठाधेय-तानिरूपिताधिकरणातावद्भिन्नं यद्धेत्वधिकरणम्, तत्र वर्तमानो योऽत्यन्ताभावः, स एव प्रतियोगिव्यधिकरणधर्मावच्छिन्नाभावः, तादृशाभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकम्, तदव-च्छिन्नसामानाधिकरण्यमिति लक्षणमङ्गीक्रियते ।

अथवा स्वप्रतियोगितावच्छेदकावच्छिन्नं यावत् प्रतियोगिनिष्ठा-धेयतानिरूपिताधिकरणतावद्भिन्नं यद्धेत्वधिकरणम्, तत्र वर्तमानो योऽत्यन्ताभावः, स एव प्रतियोगिव्यधिकरणधर्मावच्छिन्नाभावः, तादृशाभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकम् तदव-च्छिन्नसामानाधिकरण्यम् ।

अथवा बहुषु प्रतियोगितावच्छेदकेषु धर्मेषु मध्ये यः कश्चनैकः प्रतियोगितावच्छेदको धर्मः, तद्धर्मनिष्ठाधेयतानिरूपिताधिकरणतावद्-भिन्नं यद् हेत्वधिकरणम्, तत्र वर्तमानो योऽत्यन्ताभावः स्वप्रतियोगि-व्यधिकरणधर्मावच्छिन्नाभावः, आद्ये कपिसंयोगी, एतद् वृक्षत्वाद् इत्यत्र, तथैवाव्याप्तिः, कथमिति चेदित्थम्—कपिसंयोगाभावस्य प्रतियोगी कपिसंयोगः, तत्प्रतियोगितावच्छेदकावच्छिन्नः (वृक्षावृत्ति-कपिसंयोगः) अर्थाद् भूतलवृत्तिकपिसंयोगः, तन्निष्ठाधेयतानिरूपिता-धिकरणतावद्भिन्नं यद् हेत्वधिकरणमेतद्वृक्षः, तत्र वर्तमानो योऽत्य-न्ताभावो मूलावच्छेदेन कपिसंयोगो नास्तीत्याकारकप्रतीतिसाक्षिका-

भावः, तादृशाभावस्य प्रतियोगितावच्छेदकमेव कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं जातमित्यव्याप्तिः ।

द्वितीये तु प्रतियोगिव्यधिकरणधर्मावच्छिन्नाभावाप्रसिद्धिः कथमिति चेदित्थम्—सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसामानाधिकरणत्वात् । 'पर्वतो वह्निमान् धूमात्' इत्यत्रासम्भवः । यथा योऽयं घटाभावः, स एव पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावः । यद्यपि घटाभावस्य प्रतियोगी घटः, स च पर्वते नास्ति, तथापि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य प्रतियोगिनः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य पर्वते सत्वाद् नहि घटाभावः प्रतियोगिव्यधिकरणः, अपि तु समानाधिकरण एव सञ्जातः, एवं सर्वोऽप्यभावः स्वप्रतियोगिसमानाधिकरण एव भविष्यति ।

प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशेन साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः, संयोगेन पटो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः, तस्य प्रतियोगिव्यधिकरणत्वात् कथं प्रतियोगिव्यधिकरणधर्मावच्छिन्नाभावस्य दुर्लभत्वं प्रतिपाद्यते । तदनन्तरं घटाभावे यो वह्न्यभावः, तस्य घटाभावात्मकतया घटाभावस्य प्रतियोगी यथा घटस्तथा वह्निरपि, तस्य चपर्वतादौ सत्वात्, इत्येवं क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि च घटाभावादौ वह्न्य भावादिर्भिन्न इत्युच्यते, तदा धूमाभाववान् वह्न्यभावादित्यत्राव्याप्तिः, तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः, तेन सम्बन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यनधिकरणत्वं हेत्वधिकरणस्येति ।

तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावतिव्याप्तिः । यतो हेतुरात्मत्वम्, तदधिकरणमात्मा, तत्र वर्तमानो योऽत्यन्ताभावः कपिसंयोगात्मकः, तस्य कपिसंयोगसंख्यादिसामान्यगुणान्तर्गततया गुणत्वात्, अर्थात् सामान्यगुणत्वाद् गुणसामान्याभावकपिसंयोगाभावयोरैक्यात् कपिसंयोगाभावाभावः, तस्य प्रतियोगी यथा कपिसंयोगाभावस्तथागुण सामान्याभावोऽपि, तादृशाभावस्य प्रतियोगितावच्छेकं

कपिसंयोगाभावत्वं गुणसामान्याभावत्वञ्च । बहुषु प्रतियोगितावच्छेदकेषु धर्मेषु मध्ये यः कश्चनैकः प्रतियोगितावच्छेको धर्मः, गुणसामान्याभावत्वरूपो धर्मः, तद्धर्मनिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद् हेत्वधिकरणमात्मा तत्र वर्तमानो योऽत्यन्ताभावो गुणसामान्याभावाभावः तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वम्, अनवच्छेदकं कपिसंयोगाभावत्वम्, तदेव साध्यतावच्छेदकं तदवच्छिन्नेन समं हेतोः समानाधिकरण्यमस्तीति लक्षणसमन्वय इत्यतिव्याप्तिरिति चेद् मैवम्-यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुर्मतः, तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । अर्थाद् यादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद् भिन्नं यद् हेत्वधिकरम्, तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यमिति लक्षणेन न कुत्रापि दोषावसरः ।

आद्ये 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यत्र नाव्याप्तिः, कथमिति चेदित्थम्—यादृशपदेन योऽभावो धर्तव्यो भविष्यति, तादृशपदेन स एवाभावो ग्राह्यो भविष्यति, यथा घटाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, प्रतियोगितावच्छेदकावच्छिन्नो घटः, तन्निष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद् हेत्वधिकरणमेतद् वृक्षः, तत्र वर्तमानायोऽत्यन्ताभावः, तादृशपदेन घटाभाव एव धर्तुं शक्यते । तादृशप्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकम्, तदवच्छिन्नेन सह हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः ।

द्वितीये तु 'पर्वतो वह्निमान् धूमात्', इत्यत्रापि नहि प्रतियोगिव्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धिः, कुतः ? यादृशपदेन घटाभावस्य स्वीकर्तव्यतया तत्प्रतियोगिताच्छेदकावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद् हेत्वधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावः, तादृशघटाभाव एव धर्तुं शक्यते, नान्यः, तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं वह्नित्वम्, तदवच्छिन्नेन समं हेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः ।

तृतीये तु कपिसंयोगाभाववान् आत्मत्वाद् इत्यत्र नातिव्याप्तिः, कथमिति चेद् उच्यते—साध्याभावो यादृशपदेन कपिसंयोगाभावा-

भावः, तस्य प्रतियोगितावच्छेदकं कपिसंयोगाभावत्वं प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद्भिन्नं यद् हेत्वधिकरणमात्मा, तत्र वर्तमानो योऽत्यन्ताभावः, तादृशपदेन कपिसंयोगाभावाभावः, तत्प्रतियोगितावच्छेदकं कपिसंयोगाभावत्वम्, तदेव साध्यतावच्छेदकम्. अनवच्छेदकं साध्यतावच्छेदकं न जातमिति नातिव्याप्तिः ।

ननु 'कालो घटवान् कालपरिमाणात्' इत्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धः, कथमिति चेत्, इत्थम्—हेतुः कालपरिमाणः, तदधिकरणं महाकालः, तस्य जगदाधारतया साध्यतावच्छेदकसम्बन्धेन कालिकाविशेषणतया सर्वेषामभावानां प्रतियोगिसामानाधिकरणत्वात् । अत्र केचिद् महाकालभेदविशिष्टाभावः प्रतियोगिव्यधिकरणः, इति प्रतिपादयन्ति, महाकालस्य घटाकारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वाद् महाकाले महाकालभेदाभावात् ।

वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावः, तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य हेतुव्यापकत्वं बोध्यम् । प्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद्धेत्वधिकरणम्, तन्निष्ठात्यन्ताभावीयप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व—यद्धर्मावच्छिन्नत्वोभयाभावः, तेन सम्बन्धेन (साध्यतावच्छेदकसम्बन्धेन) तद्धर्मावच्छिन्नस्य वह्नित्वधर्मावच्छिन्नस्य = तद् हेतुः—(धूमः) व्यापकत्वमिति व्याप्तिलक्षणम् ।

तथा च 'पर्वतो वह्निमान् धूमात्' इत्यत्र लक्षणसमन्वयः, कथमिति चेदित्थम्—प्रतियोगितावच्छेदकसम्बन्धेन स्वं घटाभावः तस्य प्रतियोगी घटः, तन्निष्ठाधेयतानिरूपिताधिकरणतावद्भिन्नं यद्हेत्वधिकरणं पर्वतः, तत्र वर्तमानो योऽत्यन्ताभावो घटो नास्तीत्याकारकप्रतीतिसाक्षिकाभावः; तादृशाभावीयप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य सत्वेऽपि यद्धर्मावच्छिन्नत्वस्य वह्नित्वावच्छिन्नत्वस्याभावादेकसत्वे

द्वयं नास्तीति प्रतीत्या उभयाभावासत्वात् । तेन सम्बन्धेन (साध्यतावच्छेदकसम्बन्धेन) तद्धर्मावच्छिन्नत्वस्य तद्धर्मव्यापकत्वं (वह्नित्वावच्छिन्नस्य वह्नेः) धूमव्यापकत्वं विद्यत एवेति लक्षणसमन्वयः। एवं रीत्या सर्वत्रैव लक्षणसमन्वयः । 'धूमवान् वह्निः' इत्यत्र नातिव्याप्तिः, कथमिति चेत्, उच्यते—धूमाभावीयप्रतियोगितायां यत्सम्बन्धावच्छिन्नत्व—यद्धर्मावच्छिन्नत्वैतदुभयसत्वेनोभयाभावस्य चासत्वाद् नातिव्याप्तिरित्यलं पल्लवितेन ।

---

# श्रावणीपर्व–भारतीयसंस्कृतिवैभवम्

प्रातःस्मरणीयैराचार्यप्रवरैर्महर्षिभिरिह कन्दमूलफलाहाराशनशीलैः आरण्यकैः, तपःपूतान्तःकरणैः, समाधिनिष्ठैर्वेदवेदाङ्गादिशास्त्राणां पूर्णतः साक्षात्कारं विधाय वैदिकधार्मिकप्रक्रिययोः रहस्यविज्ञानं विशिष्टानुभवञ्च प्राप्य नित्यनैमित्तिककाम्यकर्माणि व्रतानि पर्वरूपेण संप्रकाश्य मानवजीवनस्य साफल्याय सुगमाः, साध्याः, प्रशस्ताः, विविधव्रतोत्सवपर्वरूपेण पन्थानः प्रकाशिताः।

भारतीया संस्कृतिः सनातनी उत प्राचीनतमेति विषयको विवादो विषयान्तर इति मत्वा न समालोच्यते, किन्तु भारतीया संस्कृतिः, सभ्यता, संस्कृतञ्च दैशिकैः वैदेशिकैः सर्वैरपि विद्वद्भिर्मुक्तकण्ठतः सम्मान्यतेऽत्र न कश्चन सन्देहः। भारतीय संस्कृतिसंस्कृतयोश्च पारस्परिकोऽनुस्यूतोऽन्योऽन्याश्रयसम्बन्धश्चापि वैशिष्टयं स्थापयति नितराम्। तदेव राष्ट्रं राष्ट्रपदवीमारोढुं सर्वराष्ट्रापेक्षयाऽऽदर्शं संस्थापयितुं सक्षमम्, यदीया संस्कृतिरक्षुण्णाऽजराऽमरा च राष्ट्रोद्धाराय, निर्माणाय मानवजीवनस्य परमोपादेयतासाधनाय चादर्शभूता विराजते।

भारतीयसंस्कृतौ यद् गाम्भीर्यमन्यदेशीयसंस्कृत्यपेक्षया यद्वैशिष्टयञ्च तद् वैज्ञानिकमपि। न केवलमत्र संस्कृतो रूढिरेव अपितु संस्कृतेरस्याः प्रभावः शारीरिकमानसिक-अध्यात्मिकक्षेमानुगामी विद्यते, तेन सत्यमेवैतत्—संस्कृतिः संस्कारजनयित्रीति। संस्कृतिजन्यः संस्कारश्च गर्भाधानकालादारभ्यान्त्येष्टिं यावत् शास्त्रानुमोदितो मानवजीवनोन्नायक एव मन्यते। एवं च संस्काराः मानवजीवनोपयोगितायै जन्मतः सम्बद्धाः मानवीयान् क्रियाकलापान् व्यवहारान् शरीरेन्द्रियमनांसि संस्कुर्वन्ति। संस्कृते शरीरे संस्कृतेन्द्रियेषु संस्कृते मनसि चावश्यं संस्काराः संस्कृतमेवात्मानं जन्मलाभाय लोकयात्रायामाबध्नन्ति।

तैश्च संस्कारैश्शक्तयः सम्बद्धा भवन्ति।

शक्तयश्च संस्कारसम्बन्धमन्तरा नैव प्राणिनां सुविकाशप्रसवकारिण्यः। संसारक्षेत्रे मानवजोवनस्य भौतिकाध्यात्मिकसुखशान्त्यै निदानभूतास्ताश्शक्तयः शारीरिक-मानसिक-आर्थिक-सामाजिकशक्तित्वेन सम्वृताः वर्णिताश्च शास्त्रेषु।

तत्र शारीरिकशक्तिः पौष्टिकाहारेण, व्यायामेन, संयमेन, औषधिसेवनेन, समाविष्टा भवति। मानसिकशक्तिः सत्कर्मणां सम्पादनेन, शास्त्राध्ययनेन, ज्ञानेन, देवाराधनेन च लभ्यते। एतदपेक्षया दैवीशक्तिरपि प्रबलाऽमोधा च मनुष्यशरीरे गुप्ता तिष्ठति। सा च यथाकालं विघ्नबाधादि महदुपद्रवैरात्मानं शरीरञ्चाभिरक्षति। एवं विधां दैवोशक्तिमुपासितुं साक्षात्कर्तुञ्च साधनतया एव लोके व्रतोत्सवाः पर्वाणि च सन्ति। दैवीशक्तिविषये प्रमाणम् 'न दैवात्परं वलमि' ति शास्त्रोयवचनमेव।

किं बहुना, धनैषणा-पुत्रैषणा-प्राणैषणा-परलोकैषणा-शारीरिक-मानसिकाऽध्यात्मिकशक्तयश्च व्रतोत्सवपर्वमाध्यमेनैव लब्धुं शक्यन्ते सम्मान्यन्ते सम्पूज्यन्ते चापि। एतद् द्वारैवोक्ताः शारीरिकादि प्रभृतिशक्तयः पूरिताः पुष्टाश्च भवन्ति, सतामनुभववचनानि प्रमाणानि।

उपासनया, पूजनेन, व्रतोत्सवपालनेन, जपकर्मणा भगवद्ध्यानादिना सन्नामकीर्तनेन च दैवीशक्तिरुपासिता भवति। दानेन, परोपकारेण, सदाचारपालनेन, सत्यभाषणेन, प्राणिनामहिंसया, प्राणिनां संरक्षणेन, सेवया च दैवीशक्तिः सम्मानिता प्रसादिता च भवति। एतन्मूलक एव स्वास्थ्यलाभः सुतरां जायते। छान्दोग्योपनिषदि स्पष्टं प्रतिपादितमस्ति यद् धर्मरूपस्य वृक्षस्यैव यज्ञः, अध्ययनम्, दानमिति स्कन्धत्रयं विद्यते, तेन हि व्रतोत्सवेषु पर्वसु च स्वास्थ्यप्रदाः कल्याणकारिण्यः क्रियाः साधनञ्चास्त्यक्षय्यमिति।

अतो व्रतोत्सवाः पर्वाणि च भारतवर्षस्य भारतीयसंस्कृतेश्च मूलभूतानि सन्त्येव। तस्मादेव कारणात् शास्त्रज्ञैर्दिव्यदृष्टिसम्पन्नै-

महर्षिभिः लोककल्याणायैव निरोगप्रदा उपाया नियमा वा धर्मरूपेण मानवीयव्यवहारे नियतदिनचर्यायां पूर्णरूपेण निबद्धाः प्रकाशिताश्च। अतः स्वास्थ्यप्रदेषु सदुपायेषु व्रतोत्सवा प्रतीकरूपेणैव मन्यन्ते। व्रतोत्सवपरिपालनेनावश्यं स्वास्थ्यं स्थिरं निरामयं शान्तकरं च भवतीति चिकित्साशास्त्रस्यापि निर्णीतसिद्धान्तः।

भौतिकाऽऽध्यात्मिकप्रगतिलाभाय एव सर्वे उत्सवाः यथाकालमाद्रियन्ते पाल्यन्ते च। तेनैव देशिका वैदेशिकाश्च विद्वांसः 'ऐकमत्येन वेदवेदाङ्गशास्त्राणि च भारतीयसंस्कृतिसंरक्षणसंवर्धनपराणि, भारतीयसंस्कृत्यागारनिधिरूपेणामनन्ति। तस्य निःश्वसितमेतद् इति प्रामाण्यात् सर्वं खलु परमेश्वरत एवोद्भूतं लोकव्यवहाराय मन्यते। सृष्टाः पदार्थाः लोकव्यवहारसिद्धये विभिन्नेषु सुविभक्ताः सार्थका एव।

इत्थं सत्सु बहुषु पर्वसु प्राधान्यतया व्यापकतया च वर्णव्यवस्थामनुरुद्ध्य कानिचिदेव पर्वाणि महान्ति सन्ति। यथा परमात्मा सर्वत्र सर्वपदार्थेषु व्यापकतया सर्वान्तर्यामित्वेन व्यवस्थितो मन्यते, तथैव वर्णव्यवस्थापि सूक्ष्मातिसूक्ष्मकीटपतङ्गेषु विद्यमानास्ति इति के न जानन्ति ? तेन वर्णव्यवस्थाया भारतवर्षस्य महद् गौरवास्पदं स्थानं विद्यते। विचार्यताम्—गवादिषु पशुसु इयमेतज्जातीया गौः, इयमेतज्जातीया महिषो, अयमेतज्जातीयोऽश्व, हस्ती वा सार्वत्रिको व्यवहारो वर्णाश्रमविरोधिभिरप्यङ्गीक्रियत एव। एवमेव फलादिष्वपि इदमेतज्जातीयकमाम्रादिफलमिति सर्वत्र सामान्यविशेषपदार्थनिरूपणाय व्यवह्रियते। अतो वर्णव्यवस्था न मानवेष्वेव रूढेति मन्तव्या किन्तु सर्वप्राणिषु वनस्पतिप्रभृतिपदार्थेषु च वर्णव्यवस्थामन्तरा व्यवहारो न पदार्थविवेचने सिद्ध्येत्।

वर्णव्यवस्थाश्च वैज्ञानिकदृष्ट्या महदुपयोगिन्यः सन्तीति न सन्देहः तदनुसारमेव सर्वोत्सवेषु प्रायः पर्वसु च ब्राह्मण-क्षत्रिय-वैश्य-शूद्रसंज्ञया कतिपया उत्सवाः बोध्यन्ते सम्मान्यन्ते च भारते वर्षे राष्ट्रिय-धार्मिकपर्वरूपेण च। यथा श्रावणीपर्वणो ब्राह्मणसंज्ञा, न तु ब्राह्मणानामेवेदं पर्वेति तत्र क्षत्रियवैश्यादीनामपि पालनाधिकारात्। प्रायो ब्राह्मणा

एव श्रावणीकर्म कुर्वन्ति इत्येव वक्तुं शक्यते न तु तदितराणां कृतेऽन-धिकृतमिति तात्पर्यम्। तथैव विजयादशमीत्यस्य क्षत्रियसंज्ञा, दीप मालिकाया वैश्यसंज्ञा, होलिकोत्सवस्य शूद्रसंज्ञेति व्यवहारमात्रम्। सर्वोत्सवपालने समेषां यथायोग्यमधिकारः तिष्ठति। एतेन वर्णव्यव-स्था संकुचितविचारधारां जनयति विश्वबन्धुत्वविरोधिनीतिप्रचारो निष्फलो निर्मूलश्चास्ति। प्रत्युत विचारतो हि वर्णव्यवस्थाया नियमा नियम्यन्ते लोककल्याणाय। नहि सर्वोऽपि जनः सर्वं कर्म कर्तुं प्रभुः। अतो यथायोग्यं यथाशक्यं कर्म यदा कोऽपि करोति तदैव तत्फलं लभते नान्यथा। कदापि क्वचिदपि वर्णव्यवस्थानुगामिभिः प्रबलैः दुर्बला असहायाः दण्डयाः पीडयन्तामित्यादि संकेतो नास्ति यदि तथाविधं कोऽपि व्यवहाराचरणं करोति चेत्तदा तद्व्यवहर्तुर्जनस्यैवा-पराधः, स एव दण्ड्यः स्यात् नतु वर्णव्यवस्थोच्छेदप्रयासः समीचीनः।

वर्णाश्रमधर्मस्य संरक्षणेनैव भारतीयसंस्कृतिसंरक्षणं संवर्धनञ्च सिद्ध्यति। यतो हि वर्णाश्रमनियमाः संस्कृतेः पादभूताः नियताश्रया एव मन्तव्याः। यद् रक्षणेन संस्कृतिरस्माकं साङ्गोपाङ्गनिबद्धा धर्मार्थकाममोक्षफलप्रसविनीति निश्चयः। एवं हि श्रावणीकर्म ब्राह्मणसंज्ञयाभिहितं कथञ्जातमिति विचिकित्सायामिदमेव निर्धार्यते यत् ब्राह्मणानामध्ययनाध्यापनं यजनं याजनञ्च शास्त्रविहितं कर्म, लोकाभ्युदयाय श्रावणीपर्वणि समारभ्य नियमेन यथाशास्त्रं यावद् वर्षं पाल्यते। तेन भौतिकाध्यात्मिकसुखशान्तिप्रदाः संस्काराः प्रादुर्भूता लोके सुभिक्षञ्च जनयन्ति। वेद एव भारतीयसंस्कृतेर्महान् निधिः तेनैव सकलाः कलाः ज्ञानविज्ञानविद्या अध्यात्मविद्याश्च सम्प्रकाशिताः समग्रमपि भारतवर्षं भारतीयसंस्कृतिं सभ्यताञ्च संरक्षितुं संवर्धितुं च वेदो निरन्तरं समादिशति, न केवलं भारतवर्षमेव किन्तु निखिलमपि विश्वमुपदिशति। अत एव भगवान् मनुरप्याह—

एतद् देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

इति वचनेन चरित्रबलमेव राष्ट्रसमुन्नतिकरम्। चरित्रनिर्माणाय एव धर्मशास्त्राणि प्रवृत्तानि सन्ति, पुराणेतिहासप्रभृतीनि वेदानामुप-

बृंहणं विधाय लोकव्यवहारेषु शास्त्रव्यवहारेषु च विधिनिषेधात्मक-वचनैः लोकव्यवहाराः प्राणिनां सुखशान्त्यर्थमेव नियम्यन्ते। ते च नियमाः वर्णाश्रमेषु कठोरतया निबद्धाः सन्ति। एतत् सर्वं भारतीय-संस्कृतेरेव विशालक्षेत्रं यत्र हि भारतीयसंस्कृतिः विविधसत्कर्मसम्पा-दनात्मनाऽभिव्यक्ता विराजते। श्रावण्यामेव वेदाध्ययनारम्भकालः, तेनान्वर्थं नाम ब्राह्मण इति तस्या प्रथितं जगति। नतु उत्तमाधमरूपे-णोत्कर्षापकर्षाय मानवेषु भेदभावं दर्शयितुं तात्पर्यं कदाचिदवधार-णीयम्। तेनैव महता समारोहेणाद्यापि समग्रे भारतवर्षे सम्मान्यते संस्कृतिरक्षणपरायणैर्विद्वद्भिः श्रावणीपर्वेति।

एतस्य पर्वणो भागद्वयं विशेषतो ध्येयं ज्ञेयञ्चास्ति। तेन उपा-कर्म, रक्षाबन्धनमिति भागद्वयेन श्रावणीपर्वं राष्ट्रगौरवमावहति।

उपाकर्मणि सद्गुरवो वंशपरम्परानुगतपुरोधसो वा यथाक्रमाचारं शिष्यान् यजमानांश्चादाय प्रातःकाले पवित्रनद्याः सरोवरस्य तटमुपेत्य सम्भूय हेमाद्रिसंकल्पं कुर्वन्ति। तत्र सम्वत्सर-मास-तिथि-वासर योजनया, अमुकगोत्रोत्पन्नः नामाहं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं-देवब्राह्मणसमस्तप्राणिनां कल्याणार्थं प्रसन्नार्थं भगवत्प्रीत्यर्थञ्चोपा-कर्माङ्गतया गणस्नानं करिष्ये इति।

एतदवसरे हि तत्कर्मसम्पादनप्रसंगे प्रकृतिमण्डलमप्यनुरज्यते अत एव सर्व-प्रथमं सर्वाधारभूतां सर्वभोग्यसम्पदप्रदां पृथिवीं वन्दते सर्वो जनः।

उद्धृतासि वराहेण कृष्णेन शतबाहुना।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥

पुनश्च गोमयप्रार्थना:—

अग्र अग्रे चरन्तीनामौषधीनां वने वने।
तासां वृषभपत्नीनां पवित्रं कायशोधनम्॥

एवमेव भस्मनः प्रार्थना, इत्थं मृतिकागोमयभस्मनां प्रार्थनया प्रयोगेण व्यवहारेण च स्वास्थ्यलाभः आयुर्वेदादि चिकित्साशास्त्रेष्वपि भृशं वर्णितो विद्यते। पुनश्च महौषधभूतस्य दुर्वादलस्य, दर्भाणाम्, अपामार्गस्य च धर्मतः स्वास्थ्यलाभाय च महान् सदुपयोगः उपाकर्मणि कृतोऽस्ति। एतत् सत्यमेवास्ति यत् वर्षतौं वर्षणेन प्रायः सर्वा औषधयः उत्पन्नाः सुप्रसिद्धाश्चामृतमय्यो भवन्ति, तद् द्वारा मार्जनेन संस्पर्शतयोपयोगेन च तदीया गुणाः सर्वे जलवाय्वादिसमाघातेन घर्षणेन सह शरीरान्तः प्रविष्टाः महत्स्वास्थ्यमेत्र प्रयच्छन्ति। दूर्वायां वस्तुतोऽमृतं तिष्ठति येन कदापि न नाशमुपैति, तथा चोक्तम्।

निष्पिष्टातिपदाघातैः खरतापैश्च तापिता।
अजाद्यैश्चर्विताप्येषा न दूर्वा म्रियते क्वचित्।

तेनायुर्वेदशास्त्रे दुर्वा-शतवीर्या, सहस्रवीर्या अपारवीर्या, प्रभृति नाम्ना ख्यातास्ति। आयुर्वेदशास्त्रानुसारं कफ-पित्तरुधिरविकार-विसर्पतृषा-दाहत्वग्रोग-पीडाभूतबाधादिकञ्च सर्वोपद्रवं नश्यति।

अपामार्गस्यापि महत्वम्भृशमस्ति—

अपमृज्यते व्याध्यादिरित्यनेनापामार्गं इति विख्यातम्। अपामार्गस्य मन्त्रानुसन्धानेनातीवोपयोगित्वन्तस्य परिलक्ष्यते। यथा—

अपाद्यमपकिल्विषमपकृत्वा मयोरयः।
अपामार्गत्वमस्मदपदु.स्वप्न ॐ सुव॥

अर्थात् हे अपामार्ग ! अस्माकं मानसिकं दोषं दूरीकरोतु, शारीरिकदोषानुद्धरतु, अस्माकं हानिप्रदान् दोषान् परेषां कर्मजनितदोषांश्चापहरतु। परेषां स्पर्शजनितदोषान् दुःस्वप्नञ्चापमृजतु।

दर्भाणामपि महत्व भूरिशोवर्णितं दृश्यन्तेस्वास्थ्यकारित्वेन। कुशाः तेजोगतदोषानुद्धरन्ति, कुशैर्जलान्तर्गतामृतेन मार्जनं प्रशस्तं सकलकर्मसु सकलसंस्कारेषु सर्वयज्ञेष्वपि। अप्स्वन्तरममृतम् इति मन्त्रभागः दर्भाणां विशिष्टं महत्त्वं प्रमाणयति। वैदिकमन्त्रैः कुशद्वारा जलासिक्तेन शिरोमार्जनेन मस्तिष्केषु स्वच्छता शीतलता मेधाशक्ति-

प्रभृतयो महान्तो गुणाः प्रादुर्भूता भवन्ति । तेनैव धार्मिक्यः सकलाः क्रियाः ऋतवश्च कुशान् विना नैव सिद्ध्यन्ति । इत्थमपाकर्मप्रधाने श्रावणीके पर्वणि मृत्तिकाप्रभृति दर्भान्तं यावत् धार्मिकं स्वास्थ्यप्रदं तत्तन्महत्त्वमुपस्थाप्य लोकोपयोगित्वं वैज्ञानिकसिद्धमेव शास्त्रेषु प्रचुरतो लभ्यते ।

उपाकर्माङ्गसाधनीभूतं द्रव्यमेकं पञ्चगव्यं सर्वातिशायी प्रतिभाति यतः पञ्चगव्यसेवनेन शरीरेन्द्रियान्तःकरण—पवित्रीकरणपूर्वकं वात-पित्त-कफ-रक्तजनितदोषाश्च नश्यन्ति ! पञ्चगव्यप्राशनेन विषशमनमपि भवति तथा बुद्धिवर्धकं मूत्रकृच्छ्रदोषवारकं च पञ्च-गव्यमस्ति । ववाक्षोर-अपस्मारादि प्रभृतीन् रोगांश्च नाशयति, असाध्यान् रोगान् दूरीकृत्य अलक्ष्मीभूतादिबाधाञ्च सुतरां निवार-यति अपरञ्चायुवर्धकममृतवद्गुणाकारि कीटाणुनाशनक्षमं पञ्च-गव्यम् । तथैव मृत्तिकया गोमयेन भस्मेनापि चर्मरोगा कुष्टरोगाः दुर्गन्धिः विमर्पादयश्च वातपित्तादिजनितदोषाश्च ह्रासतां नाशताञ्च गच्छन्ति । तेन सह तेजोवृद्धिं कृत्वा रक्षन्ति प्राणिनः । वैज्ञानिकैश्चि-कित्सकैः प्रमाणितञ्च यत् वर्षर्तौ पित्तसंचयो भवति, तस्य च महान् प्रकोपो जायते । सर्वस्य तस्य शमनमुपर्युक्तक्रियाभिः सत्वरञ्जायते तेनोपाकर्मणः कियन्महत्त्वमिति न तिरोहितं विद्यते नैवंतावतैवालं किन्तु श्रावणीके पर्वणि कृतेनोपाकर्मणा वर्षं यावत् विसूचिकादि प्रभृतयो रोगाः नोत्पन्नाः प्रवृद्धाश्च भवन्ति । तस्माच्च तैर्जनाः न पीडयन्ते अतः प्रभूतसुखोपलब्धिर्भवत्येव जगति ।

वर्षाकाले (वर्षर्तौ) एव वृक्षलतादिमहौषधवनस्पतिविशेषाश्च शाखा-प्रशाखाभिश्च वृद्धिमाप्नुवन्ति । स्वास्थ्यकरप्राकृतवाय्वादि-साहाय्येन स्वयञ्चामृतमया भूत्वा संस्पर्शकारिणः छायाश्रितांश्च निरामयं कुर्वन्ति येन पूर्णारोग्यमायुष्यञ्च लभते लोकः । तेनेत्थं वक्तुं शक्यते यत् प्राकृतरूपेणानायासेन प्राणिमात्रस्य पूर्णस्वास्थ्य-लाभाय महतीयं चिकित्सा-श्रावणी-उपाकर्मक्रियाफलवती लोकेसिद्धा ।

समासतः संस्तूयते यत् गोमयप्रभृतिलेपाः शरीरेन्द्रिदोषविकारादि-शामकाः, पञ्चगव्यप्राशनन्तु नितरामाभ्यन्तरिकविकारशमनं करोति ।

अतो भारतीयानां सर्वेषां पर्वणामुत्सवादीनाञ्च विधानं, पालनं, भौतिकाध्यात्मिकसुखशान्तिलाभायैव, तेन न कश्चनापि वर्णाश्रम-कृतभेदीयसंकुचितविचारधाराप्रसवः कदापि जायते, प्रत्युत लोक-कल्याणमेव भवति ।

अत एवैवं भूतेषु पर्वोत्सवेषु मङ्गलाशंसनं ब्राह्मणाः कुर्वन्ति ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशा ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु ।।

सर्वोत्सवादिभिरिह सर्वप्राणिनामुदय एव काम्यते । सम्प्रज्ञातब्राह्मण-संज्ञकश्रावणीकर्मप्रसङ्गे ब्राह्मणाः समाप्य उपाकर्मविधिं, ऋषिपूजनं यज्ञोपवीतस्य सत्प्रतिष्ठाञ्च कुर्वन्ति वैदिकविधिना । तदन्ते रक्षा-बन्धनञ्च येन । शास्त्रानुसारं श्रावणीपर्वणि उपाकर्मादि सम्पादनेन वेदवेदाङ्गशास्त्राध्ययनेन लब्धसद्ज्ञानेन धर्मतो न्यायतश्च समग्र-लोकस्य कल्याणं कामयन्ते ।

एतस्य श्रावणीकर्मणः अपरो मुख्यो भागः रक्षाबन्धनविधिः । रक्षकं—रक्षणीयं रक्षासूत्रस्वरूपमुच्यते ।

सर्षपतण्डुलादिकं कौशेयवस्त्रपोटलिकायां संस्थाप्य कौशेयपटे पीतरक्तसूत्रे वा बद्ध्वा वैदिकमन्त्रैःसम्प्रतिष्ठाप्य रक्षाबन्धनम्महत्क-ल्याणकरं भवति । रक्षाबन्धनविषये भविष्यपुराणे चतुर्विंशतितमे अध्याये विलक्षणमेकमाख्यानं लभ्यते । तत्र भगवान् कृष्णो महाराज युधिष्ठिरं बोधयति 'रक्षाबन्धनविधिम्'—भो युधिष्ठिर ! देवासुरसंग्रामे देवैः दैत्यदानवाः विजिताः बलीं पुरस्कृत्य दैत्यगुरुं शुक्राचार्यमुपेताः पराजयं देवैः कृतं श्रावयामासुः । शुक्राचार्यश्च समय एव करोति वलावलमित्युक्तिमवधार्य दैत्यानाश्वासयामास तथा च सम्बोधितवान् तान् यत् इन्द्राणी स्वपातिव्रतप्रभावेण देवराजमितरैः शत्रुभिरजेयं कृतवती विद्यते तेन शुभकालन्तावत् प्रतीक्ष्वेति । इदमपि कारणं

दैत्यपक्षे यत् वैदिकमन्त्रैः रक्षाबन्धनविधि, हीनतयैव दैत्यराड् बलिर्विजित इन्द्रेणेति शुकाचार्यवचनम्, अतो हे धर्मराज ! युधिष्ठिर ! जयलाभप्रदं, सुखप्रदं, पुत्रारोग्यप्रदं धनधान्यराज्यादिप्रदंश्च रक्षाबन्धनस्य महत्वं जानिहि । तेन श्रावण्यां प्रातर्वेलायां उपाकर्माङ्गतया स्नानादिकं विधाय तदुपाकर्मविधिं समाप्य रक्षाबन्धनविधिरवस्यं पालनीयो होतृभिः । रक्षाबन्धनस्य प्रभावशालिमहत्त्वं रक्षाबन्धनप्रयुक्ते मन्त्रे सुलक्ष्यते । यथा च मन्त्रः—

यथा बद्धो बली राजा दानवेन्द्रो महाबलः ।
तथा त्वामभिबध्नामि रक्षे मा चल माचल ॥

मन्त्रेणानेन न केवलं ब्राह्मणा एव रक्ष्याः किन्तु ब्राह्मण-क्षत्रिय-वैश्य—शूद्रप्रभृति समग्रमानवजातेः कृते रक्षाबन्धनविधिः प्रशस्तः । न केवलं मानवा अपि तु दैत्यदानवा अपि रक्षाबन्धनं मांगलिकं रक्षाप्रदं मनुते ।

एतस्मादेव हेतोः शची देवराज्ञी इन्द्राणी पातिव्रतं सम्यग् विधाय स्वीयां मानसिकीं शक्तिं प्रकाश्य तां शक्तिं तथा पतिव्रततेजश्च रक्षासूत्रे प्रपूर्य्य स्वपतेः देवराजस्य हस्ते रक्षाबन्धनं कृतवतीति शास्त्रप्रमाणितमस्ति । सञ्जाते रक्षाबन्धनविधौ नैव दैत्यदानवा इन्द्रं विजेतुं समर्था जाता इति सदाख्यानेन युधिष्ठिरः बोधितो भगवता कृष्णेन । दैत्यगुरुणा शुक्राचार्येणापि दैत्यदानवाश्च बोधिताः ।

अत एव यथा देवराज इन्द्रः, दानवीरशिरोमणिर्बलिश्च, धर्मराज युधिष्ठिर प्रभृतयो महापुरुषाः दिव्यतेजोमयीं रक्षां विधाय विधिपूर्वकं धारणं कृत्वा सर्वान् शत्रुन् विजितवन्तः अक्षय्यं कोषञ्च प्राप्य जगद्धितसाधने रता यशोभाजो जाताः इतिहास एवात्र प्रमाणम् तथैव 'महाजनो येन गतः स पन्थाः' इति स्मृतिमादधाना वयमपि शिष्टपरम्परामनुसृत्यैव सनातनी परमपुनीताऽऽदर्शपरम्परा रक्षिता यथा स्यात् तथैव श्रावणीपर्वेदं पालयाम इति सदा दत्तावधानाः दृढ़प्रतिज्ञा लोकहिताय भवेम, न त्वन्यत्तात्पर्यम् ।

रक्षाबन्धनविषये रहस्यमयमाख्यानमवगम्यते लोके इतिहासद्वारैव (राखी) रक्षाबन्धनं संसारे अबलानां स्त्रीणां सतीत्व (पतिव्रता) रक्षणे महदुपयोगी च सिद्धम्। अतो यथार्थगुणकमेव नामास्य रक्षाबन्धनमिति। ऐतिहासिकवृत्तानुसारेण ज्ञायते यदन्यधर्मावलम्बिनामाक्रमणेन पातिव्रतधर्मं रक्षितुं तद् द्वारा राष्ट्रधर्मं गौरवञ्च रक्षितुमेव दृढप्रतीज्ञा रमण्या धर्मदृष्टया वीरपुरुषान् राजपूतान् भ्रातृन् मत्वा तेषां हस्ते रक्षाबन्धर्मं कृत्वा तेषां साहाय्येन च पातिव्रतं राष्ट्रधर्मं राज्यञ्च रक्षितवत्यः। प्रथेयं राजपूतशासनकालतः मुगलशासनकालं यावत् निश्चप्रचमासीत्। यदाकदापि कोऽप्यत्याचारी काञ्चिदपि पातिव्रतामाक्रमितुं धर्षितुञ्च प्रवृत्तो भवति स्म तदा कमपि वीरपुरुषं रक्षाबन्धनविधिना धर्मभ्रातरं विधाय सम्मान्य च भाले च विजयतिलकं दत्त्वा सा स्वपातिव्रतधर्मरक्षणे सफला भवति स्म। अत एव धर्मप्रियो राजपूतः वीरः क्षत्रियवंशावतंशः क्षत्रात् किल त्रायत् इति सूक्ति सफलीचकार। अवलानां पातिव्रतधर्मरक्षायै स्वप्राणान्नपि न विगणयन्ति स्म क्षत्रियाः इतीतोऽधिकं सजीवं सरहस्यं मूर्तिमत् तथ्यं किं स्यात् संस्कृतौ। अत एवोक्तमपि 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता' इति। एतस्यायमेवाभिप्रायो यत् स्त्रीषु नष्टासु वार्ष्णेय जायते वर्णसंकरः, संकरो नरकायैव कुलघ्नानां कुलस्य चेति गीताचार्यस्य योगेश्वरस्य कृष्णस्य महानुपदेशो धर्मरक्षायै। सत्यमेवैतत् पातिव्रतधर्मयुक्तानां स्त्रीणां सन्ततयः सत्संस्कारसम्पन्नाः मातृ-पितृगुरूणां सेवकाः सद्विचारसम्पन्नाः धर्मानुगामिनः न्यायप्रियाः सकलविद्याज्ञान विज्ञान कलासु च विज्ञाः स्वजनस्वराष्ट्रसेवापरायणा देशनायका एव भवन्ति। येषां छत्रच्छायाश्रिताः समस्ताः प्रजाः सुखशान्तिमनुभवन्त्यः मानवजीवनं सफलं कुर्वन्ति।

अद्य खलु रक्षाबन्धनस्य महत्त्वं न केवलं हिन्दुजातीयेषु किन्तु तदतिरिक्तेष्वपि समाजेषु परिपाल्यते तत्प्रभावश्च सर्वैरपि मन्यते। अतो रक्षाबन्धनं राष्ट्रीयपर्वरूपेण भारतवर्षं महद्गौरवपदवीं नयति। तेनैव चाद्य सर्वत्र श्रावणीपूर्णिमायां रक्षाबन्धनमहोत्सवः सम्मान्यते। सर्वे च वर्णाः रक्षाबन्धनविधिं श्रद्धयाः पालयन्ति। प्रायो भगिन्यो भ्रातृणां हस्ते रक्षाबन्धनं विधाय सति दूरे च, रक्षासूत्रं सम्प्रेष्य वा

मङ्गलं कामयमाना दृश्यन्ते, भ्रातरः सोदरा भवन्तु धर्मतो वा न कश्चन भेदो व्यक्तो भवति, तेनेदं पर्वं 'वसुधैव कुटुम्बकमि'ति शाश्वतिकं भावं जनयति नतु संकुचितां वृत्ति प्रसूते।

विचार्यतामेतस्यैवमहानेष प्रभावो यत् अस्माकं देशस्य नेतारो राष्ट्रनायका अपि तदीयेनैव संस्कारेण समस्तराष्ट्रैः सह समग्रदेशवासिभिः सह भ्रातृभावं मैत्रीभावमेव च कामयन्ते तथा साहाय्याचरणञ्च प्रकुर्वते न केषाञ्चिदपि मनसाऽपि क्षतिं वाञ्छन्ति। भूयो भूयः पाकिस्तानचीन प्रभृतिदेशाक्रमणेन कष्टापन्ना लब्धानुभवा अपि मैत्रीभावं नैव त्यजन्ति। अस्मादेव कारणात् मन्ये सकलसंस्कारप्रसवित्र्या भारतीयसंस्कृतेः प्रभावं तद्रक्षणे च संस्कृतमेव सक्षमम्। सर्वविद्या-विज्ञानज्ञाने संस्कृतं निदानैकभूतं विज्ञाय भारतशासनं श्रावणीपर्वसंस्कृतदिवसराष्ट्रियपर्वणा सुसम्बद्धम्। ततः प्रभृत्येव श्रावण्यां सर्वत्र सोत्साहेन महता समारोहेण च संस्कृतदिवसः सम्मान्यते इति भारतीयसंस्कृतिवैभवमहात्म्यं सुसमृद्धमक्षय्यञ्चास्तीति न सन्देहः। भारतस्य प्रतिष्ठे द्वे संस्कृतिः संस्कृतन्तथा इति सूक्तया भारतवर्षस्य गौरवाय संस्कृतिसंस्कृतयोश्च संरक्षणमेव वरम्। अतो यावत् संस्कृतिः संस्कृतञ्च तावदेव भारतं भारतवर्षमित्यभिधानम्। संस्कृतिः संस्कृतञ्चापि भारतीयैः पर्वोत्सवपरिपालनेनैव सुरक्षिते भवतः। तेन भारतीयसंस्कृतिवैभवरक्षणपरायणैः श्रावणीप्रभृतयः व्रतोत्सवाः सदा संरक्षणीयाः संपालनीयाश्च।

---

# शक्तितत्त्वनिरूपणम्

लोके प्रवृत्तिनिवृत्तिसाधकः सकलोऽपि व्यवहारः शब्दाधीन इति समेषां सम्मतम्, शब्दश्चापि नियतप्रवृत्ति निमित्तमाधारीकृत्य प्रयुज्यते कामेन, प्रवृत्तिनिमित्तं यद्यपि विसंवादविषयः, तथापि शब्दसाधुत्वान्वाख्यान निदानैकभूतशब्दशास्त्रानुरोधि 'चतुष्टयी' शब्दानां प्रवृत्तिः' इति महाभाष्यकार इति विषयो मुनिवचनप्रामाण्याच्छब्दशास्त्रविदां निर्विवाद एव। यतः शाब्दिकाः सकलोपायभूतशब्दप्रयोगविषयकनिखिलव्युत्पत्तिसम्पदि सुतरां श्रद्दधत्येव, तेन हि व्यवहारेऽर्थबोधाय शब्दः प्रयुक्तो भवति, अर्थबोधश्च शब्दनिष्ठशक्त्यधीन एव, जनैरहर्निशमनेकाः शब्दाः प्रयुज्यन्ते, प्रयुक्ताश्च ते श्रुतिगोचरीभूता अपि सर्वानर्थान् न बोधयन्ति, अपि तु केचिदेव शब्दा ज्ञातार्थाः स्वीयानर्थानुपस्थापयन्ति, तत्र शाब्दबोधे शक्तिधीः सहकारिणीति वचनं सर्वैरपि संस्मर्यते आद्रियते च। तस्माच्छक्तिपदार्थः क इति जिज्ञासोदयः सामयिकः स्वाभाविकश्चेत्यवधार्यैव विवेचनप्रसङ्गेऽपि साधीयानेव प्रतिभाति।

तथा हि—घटशब्दश्रवणेन कम्बुग्रीवादिमदर्थस्यैव बोधः, नहि घटशब्दश्रवणेन पटरूपार्थः श्रोतॄणां मस्तिष्कपटले समायाति। एवञ्च शब्दार्थयोः परस्परं कश्चन सम्बन्धोऽवश्यं वाच्यः। स च ज्ञात एव शाब्दबोधं जनयति, नाज्ञातः, अन्यथा अज्ञातेऽपि तस्मिन् शाब्दबोधः स्यात्। अयमेव सम्बन्धो वृत्तिपदेनोच्यते। वृत्तिश्च शक्तिलक्षणान्यतररूपैव—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थः शब्दानां सम्बन्धो योग्यता तथा॥[2]

---

१. महाभाष्यम्—पस्पशा० १४४।

२. वाक्यपदीयम्—२-३-२९।

इति वाक्यपदीयानुरोधादनादिभूतं शब्दनिष्ठबोधकरणत्वं शक्तिरिति सिद्धान्तितम् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।'[1] इति ।

हृयुक्तिरवश्यं सकलव्यवहारसाधकशब्दौपयिकत्वे शब्दार्थयोः सम्बन्ध-विशेषे वृत्तिविशेषे च समाद्रियते विज्ञैः ।

एवञ्च शाब्दबोधौपयिकोऽर्थप्रतियोगिकः पदानुयोगिकः पदप्रति-योगिकः, अर्थानुयोगिको वा सम्बन्धः, अथवा वृत्तिपदव्यवहार्यत्वं वृत्तित्वम् । एवं हि तन्निष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यताकबोधं प्रति तन्निष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यतानिरूपितवृत्तिज्ञानं कारणम् । यथा घटत्वप्रकारकघटविशेष्यकंबोधे घटत्वप्रकारकघट-विशेष्यकवृत्तिज्ञानस्य हेतुत्वेन घटपदान्नपटादिबोधः, नापिघटप्रकारक घटत्वविशेष्यकबोधः । नाप्यज्ञाद् वृत्तिकाद् बोधः, एतादृशकार्यकारण-भावस्वीकारेण गुडपदाद् गुडत्वप्रकारकगुडविशेष्यकवृत्तिज्ञानेन न मधुरत्वप्रकारकगुडविशेष्यकबोधः ।

## वृत्तेस्त्रैविध्यनिरूपणम्

सा च वृत्तिस्त्रिधा—१. शक्तिः, २ लक्षणा, ३. व्यञ्जना चेति । यथा प्रयोजकवृद्धेन प्रयोज्यवृद्ध उक्तो घटमानयेति । तदनन्तर घटमान-यन्तं प्रयोज्यवृद्ध दृष्ट्वा तत्रस्थो बालकः अनुमिनोति, प्रयोज्यवृद्धस्य चेष्टा घटानयनविषयकप्रवृत्तिजन्या, चेष्टावत्वात्, मदीयचेष्टावत्, ततो घटानयनकार्यताज्ञानं किञ्चित् कारणजन्यं कादाचित्कत्वाद् घटा-दिवदिति सामान्यरूपेण कारणमनुमीयते, ततोऽस्य कार्यताज्ञानं प्रयोजकवृद्धवाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वात् । यो यदन्वय-व्यतिरेकानुविधायी स तज्जन्यः, दण्डान्वयव्यतिरेकानुविधायी घटो यथा दण्डजन्यः, तथा घटमानयेति वाक्यान्वयव्यतिरेकानुविधायि-कार्यताज्ञानं तद्वाक्यजन्यमिति वाक्यं कारणत्वेन निश्चीयते, ततः पटमानयेत्युक्ते पटानयनं दृश्यते, न घटानयनमित्यन्वयव्यतिरेकाभ्यां पदमपि तत्तदर्थबोधे कारणमित्युक्तरीत्याऽनुमीयते ।

---

१. वाक्यपदीयम्—१-१२३ ।

एवञ्च पदवाक्ययोस्तदर्थे ज्ञानरूपकार्येण कञ्चन सम्बन्धोवाच्यः, कार्येणासम्बन्धात्, कारणात् कार्यानुत्पत्तेः। तथा च नैयायिकैरीश्वरेच्छारूपशक्तिरूपः, मीमांसकैर्बोधजनकतावच्छेदकशक्तिरूपः, प्राचीनवैयाकरणैर्बोधजनकतात्मकः सम्बन्धः स्वीक्रियते। वृद्धव्यवहारेण तत्तत्पदनिष्ठशक्तिज्ञानं जायते। तेन शक्तिविषयकः संस्कारो जायते। स च संस्कारः श्रावणप्रत्यक्षविषयीभूतपदरूपोद्बोधकवशादुद्बुद्धः सन् स्वविषयकशक्तिविषयिणीं स्मृतिं जनयति। स्मरणात्मकज्ञानविषयीभूता च शक्तिः पदार्थविषयकं ज्ञानं जनयति। उपस्थितिरूपज्ञानात् शक्तिविषयकसंस्कारादाकाङ्क्षादिकारणान्तरसत्त्वे शाब्दबोधो जायते।

**शब्दार्थयोः सम्बन्धविषये मतवैभिन्न्यम्**

**नैयायिकैः**—'अस्माच्छब्दादयमर्थो बोधव्यः, इदं पदममुमर्थं बोधयतु' इत्याकारेश्वरेच्छाशक्तिः स्वीक्रियते। प्राचीनवैयाकरणास्तु "इन्द्रियाणां स्वविषयेषु"[1] इत्यादिभर्तृहरिवचनानुरोधेनैवं विचार्यते, अर्थादिन्द्रियाणां चक्षुरादीनां स्वविषयेषु घटादिषु यथाऽनादिर्योग्यता, तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थो. सह तद्बोधकारणतयैव योग्यता, सैव शक्तिरिति। अस्याः कारिकाया बोधजनकतारूपा शक्तिः प्राचीनवैयाकरणानां कृतेऽभीष्टेत्येवार्थः, तन्न समीचीनम्, कुतः? शब्दबोधात् प्राक् शाब्दबोधकारणीभूतं शक्तिज्ञानमपेक्षितम्, वृद्धव्यवहारप्रयोज्यवृद्धज्ञानवेलायाम् अस्मात् शब्दादयमर्थो बोधव्य इत्याकारिकाया ईश्वरेच्छारूपाया शक्तेरभावात्, कारणं शक्तिज्ञानम्, कार्यं शाब्दबोधरूपम्, तत्र कारणाभावे शक्तिज्ञानाभावे शाब्दबोधरूपकार्यदर्शनात् कारणाभावे कार्योत्पत्तिर्व्यतिरेकव्यभिचारो नैयायिकानाम्, अथ च प्राचीनवैयाकरणानां शिरस्यापतेत्। अतो नेश्वरेच्छाशक्तिरयं सिद्धान्तो युक्तिमूलकः। ईश्वरेच्छा अथवा, ईश्वरबोधो वा शक्तिरिति नैयायिकानां कथनं तदपि दोषग्रस्तमेव, विनिगमनाविरहेणोभयोः शक्ति कल्पने महद् गौरवम्।

किञ्चैवमिदमस्माद्भवतु इतीच्छाविषयत्वमेव जनकत्वं स्यात्, तदा दण्डाद् घटो जायतामितीच्छाविषयत्वमेव घटादिकारणत्वं स्यात्,

१. वाक्यपदीयम्—३-३-२६।

तथा सति सर्वप्रसिद्धकारणताभज्येत। किञ्चायं घट इत्याकारिका प्रत्यक्षप्रतीतिरपि आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षं भवति 'अयं घटः' इति, तत्र यथाप्रत्यक्षस्थले संयोगसमवायादिसन्निकर्षेण सम्बद्धानामेव चक्षुरादीनां प्रत्यक्षप्रमाजनकत्वम्, न तु बोधघटितेश्वरेच्छादिरूपसम्बन्धेन, तथैव शब्दस्यापि प्रमाणत्वेन तदतिरिक्तसम्बन्धेन सम्बद्धस्यैव शब्दस्य शाब्दज्ञानजनकत्वमुचितम्, अन्यथा 'पर्वतो' वह्निमान् धूमात्' इत्यादि अनुमितिस्थलेऽपि हेतुसाध्ययोर्धुमज्ञानजन्यज्ञानविषयो वह्निर्भवतु इतीच्छाविषयत्वमेव वह्निविषयकबोधजनकत्वरूपेण सम्बन्धेन निर्वाहे हेतुसाध्ययोर्यः साध्यतावच्छेदक आदिलम्बायमानो व्याप्तिसम्बन्ध उच्छिन्नः स्यात्।

'छिद्रेष्वनर्था बहुलीभवन्ति' इति लोकोक्तिदिशाऽपराऽपि विपत्तिर्नैयायिकानां शिरसि नरीनर्ति. सा चेत्थम्—सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो द्विष्ठः, विशिष्टबुद्धिनियामकः। यथा सयोगेन घटवद्भूतलमित्यत्र संयोगसम्बन्धः, एको घटः सम्बन्धी, अपरं भूतलम्। स च संयोगो घटभूतलाभ्यां भिन्न, अथ उभयाश्रितः, घटवद्भूतलमित्याकारको बुद्धिनियामकश्च। तथेश्वरेच्छारूपसम्बन्धस्तु न, इच्छा तु समवायसम्बन्धेन परमात्मनि, न हि घटपटादिषु; अत एव 'इच्छावान् विषयः' इत्याकारकबोधो नैव लोके भवति। तस्मात् पदपदार्थयोर्बोधजनकत्वं तद्घटितेच्छादिरूपश्च सम्बन्धो नोचितः, किन्तु वाच्यवाचकपदव्यवहार्यमुक्तेच्छादिभिन्नम्पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, तत्र वाचकत्वं वाच्यत्वमखण्डोपाधिरूपं पदार्थान्तरम्।

एवञ्च यथा दीपगतप्रकाशकत्वशक्तेः कार्योत्पादकत्वे दीपवस्तुनोः प्रकाशकत्वशक्त्यातिरिक्तसंयोगादिसम्बन्धसत्त्वे एव वस्तुप्रकाशकत्वन्नान्यथा, तथा घटशब्दादिशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्वे एवार्थबोधकत्वन्नान्यथा। स च न संयोगादिः, प्रमाणाभावात्; अतोऽनुमानेन शब्दार्थयोस्तादात्म्यमेव सम्बन्धोऽङ्गीकर्तव्यः। तदुक्तं हरिणा—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसो गुणः ॥[1]

सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारक इत्यर्थः। स च सम्बन्धः पदे वाक्ये चेत्याह न्यायभाष्यकारः—'समयः (संकेतः) ज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्, वाक्यलक्षणाया वाचोऽर्थलक्षणम् । अनेन पदेष्विव वाक्येष्वपीश्वरसमयः स्पष्टमेवोक्तम् । तयमादितरेतराध्यासः संकेतः, तन्मूलकं तादात्म्यञ्च सम्बन्ध इति सङ्घातार्थः, तादात्म्यञ्च इतरस्मिन् इतरधर्मावभासः यथा स्फटिके जपाकुसुमलौहित्यावभासः' ।

पातञ्जलभाष्येऽपि शब्दार्थयोस्तादात्म्यं प्रतिपादितम्, यथा सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थः स शब्दः स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम्। तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते । शब्दार्थयोस्तादात्म्यादेव श्लोकमश्रृणोत, अथार्थं श्रृणोति, अर्थं वदतीति व्यवहारः । शब्दस्यैव श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वेनार्थे तदभावात्, अर्थं वदतीत्याकारको व्यवहारः शब्दार्थयोरध्यासमन्तरा नैवोपपद्यत इत्यर्थः ।

ओमित्येकाक्षरं ब्रह्म 'रामेति द्वयक्षरं नाम मानभङ्गः पिनाकिनः', 'वृद्धिरादैच्'[2] इति शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च तादात्म्यं प्रतिपादयति ।

ननु यदि शब्दार्थयोस्तादात्म्यम्, तदाऽस्यार्थस्यायं वाचक इत्यादिशब्दार्थयोर्भेदबोधकव्यवहाराणामनुपपत्तिः, तथा मधुशब्दोच्चारणे मुखे माधुर्यापत्तिः, वह्निशब्दोच्चारणेन मुखे दाहापत्तिरिति तार्किकानां कथनं न समीचीनम्, तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन

१. वा० प० ३।३।५ । २. अष्टाध्यायी—१।१।१ ।

प्रतीयमानत्वम्, अभेदस्यारोपितत्वान्न विरोधः, गङ्गायास्तटे भक्तित्वेऽपि न तेन स्नानादिकार्यं तथैवाभेदस्यारोपितत्वेऽपि न तेन वास्तविकं कार्यं भविष्यति। वस्तुतस्तु दाहं प्रति अग्निरूपार्थः संयोगेन कारणम्, माधुर्यं प्रति ऐक्षवमधुमधुरपदार्थः कारणम् तथा चात्र मुखादौ तथाविधार्थस्य तेन सम्बन्धेनाभावान्न पूर्वोक्तशङ्काया अवसरः।

अथवाऽस्तु शब्दार्थयोरभेद एव, तथापि न दोषः। यतो हि वैयाकरणानां मते द्विविधौ शब्दार्थौ—बौद्धो बाह्यश्च। तत्र बौद्धार्थेन सह बौद्धशब्दस्य तादात्म्यम्। तेन बौद्धे वह्न्यादावर्थे दाहादिशक्तित्वाभावान्न पूर्वोक्तदोषः। पदार्थानां बौद्धार्थत्वस्वीकारादेव—

एष बन्ध्या सुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसं स्नातः शशशृङ्गधनुर्धरः॥[1]

इत्यादौ बौद्धार्थेनैवार्थवत्त्वमुद्दिश्यार्थवदिति सूत्रेण प्रातिपदिकसंज्ञा, ततः स्वाद्युत्पत्तिः।

तार्किकास्तु—शशः प्रसिद्धः, शृङ्गमपि प्रसिद्धम्। तत्र शृङ्गे शशीयत्वभ्रमः, अतो वस्तुतोऽर्थवत्त्वाभावेऽपि भ्रान्तमर्थमादाय प्रातिपदिकसंज्ञा सेत्स्यति, न कोऽपि दोषलेश इति प्रतिपादयन्ति, तन्न समीचीनम्, बाधज्ञानं यत्र भवति तत्र न निश्चयः, न च भ्रमोऽपि भवति। अत्र शशशब्दवाच्यस्य चतुष्पादजन्तुविशेषस्य दर्शनरूपबाधसत्त्वेन भ्रमः। अतो भ्रान्तमर्थमादाय प्रातिपदिकसंज्ञाविधानं गगनारविन्दवत् कपोलकल्पनैव। अतो वैयाकरणानां बौद्धार्थत्वस्वीकारादेव बन्ध्यासुतादीनां प्रातिपदिकसंज्ञा साधनीया।

**अपभ्रंशानामपि वाचकत्वम्**

इत्थमुक्तविवेचनेन सा शक्तिर्वाच्यवाचकभावापरपर्याया एव स्वीकार्या, सापि साधुष्विवापभ्रंशेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। उत्पत्तिकाले यद्यपि व्यवहारबोधकशब्दाभावात्,

---

१. वै० सि० ल० म०—पृष्ठम् ५१०।

शक्तिग्रहाभावेन भाव्यमथ च दृश्यते बालकेषु स्तन्यपानादिप्रवृत्तिः। तत्र पूर्वजन्मनि व्यवहारेण जातशक्तेः स्मरणं कल्पनीयम्। तेन नास्ति शङ्कावकाशः।

तार्किका असाधुशब्देन साधुशब्दस्मरणद्वारा अर्थबोध इत्याहुः। यथा भूषणे—'ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः'[1]। तत्र साधुशब्द-स्मरणं विनापि बोधानुभवात् साधुशब्दस्मरणद्वारैवासाधुशब्देन मानम् तदा येऽसाधुशब्दवाचकसाधुशब्दं न जानन्ति, तेषां हृदि बोधो न स्यात्, प्रत्युत दृश्यते च बोधः। लोके यदि कथयन्तु असाधुशब्देषु साधुशब्दभ्रमः, तेनैतत्कथनमपि युक्तियुक्तं न प्रतिभाति, यत्रोत्तरकाले बाधो भवति तत्रैव भ्रमः स्वीक्रियते, तद्वति तद्भावप्रकारकज्ञानस्य भ्रमत्वात्। अत्र तु तथा नास्ति, न हि गगरीशब्दश्रवणानन्तरं गगरी-शब्दो वाचकत्वाभाववानिति बुद्धिः कस्यचिदप्युदेति, अतो भ्रमात् शाब्दबोध इति नैयायिकानामुद्घोषो न श्रोतव्यः। अल्पाधीताः स्त्रियो बालकाश्च यदा कदाचित् संस्कृतं व्यवहरन्ति, तदा अशक्त्या तेषा-मस्फुटोच्चारणात् तदुच्चारितशब्देभ्यो विदुषां बोधे संशयो भवति इति तैः शब्दैरसाधूनां स्मरणं सम्पाद्य अर्थनिर्णयो भवति, अपभ्रंशस्या-वाचकत्वे निर्णयः कथं स्यादिति सुधिय एव विभावयन्तु।

असाधुष्वपि शक्तिरस्तीति विषये यथाह वाक्यपदीयकारः— 'वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः'[2] इति कारिकैव प्रमाणम्। वाचकत्वं तूभयतः, किन्तु साधुशब्दोच्चारणे पुण्यजनकतावच्छेदको धर्मः, असाधुशब्दोच्चारणेन पापम्। भगवतो भाष्यकारस्याप्यस्मिन् विषये सम्मतिर्यथा—'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम'[3] इति वार्त्तिकव्याख्यानावसरे 'कोऽसौ धर्मनियमः' इत्युक्त्वा 'समाना-यामर्थावगतौ शब्देनापशब्देन, शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवति'[4] इत्यनेन स्पष्टम्। असाधुष्वपि शक्तिर्निश्चीयते। अपभ्रंशेषु शक्तिस्वीकारादेवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यप्यार्या यवशब्दं दीर्घशूके प्रयुज्यते, म्लेच्छास्तु

१. वाक्यपदीयम्—१।१५०।

२. वा० प०।

३. म० भा० पस्पशाह्निकम् पृ० ६५।

४. म० भा० पस्पशाह्निकम्, पृ० ६७।

प्रियङ्गौ प्रयुज्यते, तमेव च बुद्ध्यन्ते, तथाप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतयैव सिद्धान्तितम् ।

साधुष्वेव शक्तिं स्वीकुर्वतां तार्किकाणां सिद्धान्ते म्लेच्छसमवेतो बोधः । यवशब्दात् प्रियङ्गुविषये शक्तिभ्रम एव । एवं च यथा शुक्तौ रजतत्वभ्रमवतः पुरुषस्य न तद् रजतं पात्राय भूषणाय वा भवति, तद् ज्ञानञ्च न वस्तुसाधकम्, तथैवात्रापि म्लेच्छप्रसिद्धेर्भ्रम-मूलकत्वाद् वस्त्वसाधकत्वेन वस्तुसाधकयोर्द्वयोः समवधान एवैकस्य बलवत्त्वामपरस्याबलवत्त्वं भवति, अप्राधान्य एवापरस्य प्राधान्यं भवति, नान्यथेति । अत्र भ्रमजन्याया म्लेच्छप्रसिद्धेर्वस्तुत्वाभावेन बलावलविचार एव काकदन्तदृष्टान्ततां गच्छतीति विद्वद्भि-रूहनीयम् ।

## शक्तेस्त्रैविध्यम्

सा च शक्तिस्त्रिधा—१. रूढिः- २. योगः, ३. योगरूढ़िश्च । शास्त्रकल्पितावयवार्थमानाभावे समुदायार्थनिरूपितशक्ती रूढिः । यथा मणिनूपुरादौ । नहि तत्र भ्वादिगणस्थमण्धातोरौणादिकेन इनादिनिष्पन्नो मणिशब्दः, अथ च स्तुत्यर्थकनूधातोर्नवनं नूः 'सम्पदादिभ्यश्च' इति क्विपि 'नूः' इति, पुर अग्रगमने 'इगुपधेति' कप्रत्यये पुर इति 'नुवः पुरो नूपुरः' इमौ शब्दौ शब्दकर्तृरूपार्थं स्तुतिसम्बन्ध्यग्रगमनकर्तारं वा बोधयतः, परन्तु रत्नविशेषं भूषण-विशेषं वा ।

शास्त्रकल्पितावयवार्थनिरूपिता शक्तियोगः । यथा पचतीति पाचकादौ । शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्ति-र्योगरूढिः । यथा—पङ्कजपदे 'पङ्काज्जातः' इति योगशक्त्यार्थस्वीकारे शैवालादावपि कमलत्वापत्तिः । अतो योगरूढ़िस्तत्र 'योगाद् रूढिर्ब-लीयसी' इति न्यायेन कमलस्यैव भानम् । सैषा शक्तिः संयोगादि-भिर्नानार्थेषु नियम्यते, तदुक्तम्—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥[1] इति ।

संयोगविप्रयोगादयो नानार्थेषु शब्देषु शब्दार्थस्य संदेहे तदपकरण-द्वारा विशेषार्थनिर्णायका इति तदर्थः। संयोगविप्रयोगयोरुदाहरणे 'सवत्सा धेनुः', 'अवत्सा धेनुः' इति अनेकार्थकस्य नवप्रसूतगो-महिषोस्त्र्यादिवाचकस्य धेनुशब्दस्य वाचकत्वं संयोगविप्रयोगाभ्यां गवि नियम्यते। साहचर्यस्योदाहरणं यथा 'रामलक्ष्मणौ' इति। रामार्जुन-गतिस्तयोर्विरोधस्य, अर्जुनविरोधाद् रामो जामदग्न्यस्तब्दध्यत्वाच्चा-र्जुनकार्तवीर्य एव, न पाण्डवः।

'अञ्जलिना जुहोति' इत्यत्र जुहोतिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलीयस्त्वम्। 'सैन्धवमानय' इत्यादौ प्रकरणेन निश्चयः। 'अक्ताः शर्करा उपदधाति', 'तेजो वै घृतम्' इति घृतस्तुतिरूपा-ल्लिङ्गाद् अक्ता इत्यस्य घृतसाधकाञ्जनपरत्वम्। रामो जामदग्न्य इति जामदग्न्यपदसन्निधानाद् रामः परशुरामः। 'अभिरूपाय कन्या देया' इत्यादौ अभिरूपतरायेति सामर्थ्यात् प्रतीयते।

यश्च निम्ब परशुना यश्चैन मधुसर्पिषा ।
यश्चैनं गन्धमाल्यादौ सर्वस्य कटुरेव सः ॥[2]

इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम्। मधुसर्पिषेत्यस्य सेचना-र्थत्वम्, गन्धमाल्यादेरित्यस्य पूजनार्थत्वम्।

'भात्यत्र परमेश्वरः' इत्यत्र राजधानीरूपदेशात् परमेश्वरपदं राजबोधकम्। चित्रभानुर्भातीत्यादौ रात्रौ अग्नौ दिवासूर्ये चित्रभानु-शब्दः प्रयुक्तः। स्थूलपृषतीत्यादौ स्वरात् तत्पुरुषबहुव्रीह्यर्थनिर्णयो भवति। तथाहि पूर्वपदप्रकृतिस्वरात् स्थूलानि पृषन्ति यस्यां सा इति विग्रहनिष्पन्नबहुव्रीहिसमासशब्दः। समासान्तोदात्तस्वरेण च स्थूला चाऽसौ पृषती इति विग्रहनिष्पन्नसमानाधिकरणतत्पुरुषसमासशब्दो।

---

१. वृत्तिदीपिका—पृ० १४।
२. वै० सि० ल० म० पृ० ९१।

निश्चीयते । एवम् 'प्रणायकः' इत्यत्र णत्वात् प्रणयनक्रियाकर्तुः 'प्रनायकः' इत्यत्र प्रगतनायकदेशस्य च बोधः । क्वचित् प्राकरणिकार्थं बोधोत्तरं वक्तृबोधव्यवैशिष्ट्यप्रतिभादिसहकारेण द्वितीयार्थस्य बोधः, यथा शालकादिप्रयुक्तात् सुरभिमांसमित्यादेर्द्वितीयाश्लीलार्थबोधोऽपि ।

**समासशक्तिविचारः**

इत्थमसमासस्थलीयशक्तिविवेचनानन्तरं समासशक्तिविवेचनमपि समीचीनं प्रतिभाति, अतो विविच्यते । तथाहि विशेषज्ञानं सामान्यज्ञानपूर्वकमिति न्यायात् समासस्य तावत् किं लक्षणमित्यप्युच्यते—समासत्वञ्च पाणिन्यादिसङ्केतसम्बन्धेन समासपदवत्वरूपम् । एकार्थीभावापन्नपदसमुदायविशेषत्वं वा । स च समासः षड्विधः । तद्यथा—

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥[1]

सुपां—सुबन्तस्य सुबन्तेन सह समासो यथा—राजपुरुषः, सुपां तिङा यथा—पर्यभूषयत्, अनुव्यचलत्, सुपां प्रातिपदिकेन यथा—कुम्भकारः, सुपां धातुना कटप्रूः, तिङां तिङा पिवतः खादता, पचत भृज्जता । अनेन प्रकारेण समासः षड्विधो व्याकरणशास्त्रे सुप्रसिद्धः । तत्र 'समर्थः पदविधिः' इति सूत्रभाष्यकारैरनेकपक्षा उद्भाविताः, तेषां पक्षाणां जहत्स्वार्थायामजहत्स्वार्थायां वृत्तावेव पर्यवसानात् । यथा चोक्तं भूषणकारैः—

जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्तीते पुनस्त्रिधा ।
भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः ॥[2] इति ।

तत्र जहत्स्वार्थायां वृत्तौ पदानां कश्चनाप्यर्थो न भवति । यथा पदे वर्णानां कोऽप्यर्थो न भवति ।

---

१. सारस्वतव्याकरणम्—पृ० २८ ।
२. वै० भूषणसारः—पृ० १२२ ।

प्राग्भाविनमर्थमादाय महाबाहुरत्र आत्वम्, अन्यथाऽर्थवत्वाभावत्वं न स्यात् ।

समासशक्त्यैव राजपुरुष इत्यादौ राजविशिष्टपुरुषभानसम्भवेन पूर्वपदस्य सम्बन्धाद्यर्थे लक्षणाया अनावश्यकत्वात् । यथा वृषभपदे शक्तिर्न तु घटकतया प्रविष्टे तदेकदेशे । अत एव राज्ञि ऋद्धस्येति विशेषणान्नान्वेति पदार्थैकदेशत्वात् 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायविरोधात् । देवदत्तस्य गुरुकुलमित्यादौ देवदत्तस्य गुरावन्वयो भवत्येव, कथम् ? सम्बन्धिपदार्थस्य एकदेशेऽन्वयस्वीकारात् । अत एवोक्तम्—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ।। इति ।

एतेन राज्ञोऽपि नित्यसापेक्षत्वाद् ऋद्धस्येति विशेषणयोगः स्यादित्यपास्तम्, राज्ञः पुरुषं प्रति सापेक्षत्वेऽपि ऋद्धं प्रति सापेक्षत्वे मानाभावात्, द्वयोः जहत्स्वार्थाजहत्स्वार्थवृत्त्योस्त्रैविध्यं यथा—१. भेदः, २. संसर्गः, ३. उभयम् ।

समासात् प्राक् पदेषु विद्यमानानामर्थानां समासे कृते भिन्नस्यैवार्थस्य प्रतीतिः । उक्तञ्च भूषणे—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्' पङ्काज्जात इति यौगिकार्थेन शैवालादीनामपि ग्रहणं स्यात् । अत आह पङ्कजशब्दस्य समुदाये शक्तिस्तथैव समासेऽपि समुदाये शक्तिः, न तु वर्तिपदे । चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये समुदायशक्तिरावश्यकी । लक्षणया स्वामित्वस्योपस्थितिरिति नैयायिकमतं न रमणीयं प्रतिभाति पङ्कजपदे रथकारपदेऽपि लक्षणैवं कल्प्यते चेद्, मीमांसादर्शनाद् विरोधो भविष्यति, कथं हि मीमांसायामाशङ्कितम् 'वर्षासु रथकारो अग्निमादधीत' इति मन्त्रे रथकारपदेन शूद्रस्य ग्रहणं स्यात्, तदा अग्न्याधानमन्त्राणामुच्चारणस्यावश्यकता भवति, तर्हि 'स्त्रीशूद्रौ नाधीयेताम्' इति विरोधः स्यात् । पुनः पुनः समाहितम्, अवयवशक्त्या रथं करोतीति व्युत्पत्त्या द्विज एव गृहीतः स्याद् न दोषः, पुनः शङ्का उत्थापिता 'योगाद् रूढिर्बलीयसीति'

न्यायात् समुदायशक्त्या शूद्रस्यैव बोधः, न त्ववयवशक्त्या द्विजस्य। एवमग्न्याधानविधायकश्रुत्या तदुपयोगिमन्त्राणामध्ययनेन न क्षतिरिति सिद्धान्तिम्।

**लक्षणाव्यञ्जनयोर्विचार:**

शक्तिर्लक्षणाव्यञ्जनेति तिसृषु शक्तेः स्वरूपतत्त्वावगाहनानन्तरं लक्षणाव्यञ्जने विविच्य विषयत्वेन शिष्येतेऽतो विचार्यंते तेऽपि। तथाहि लक्षणा कः पदार्थः ? अस्मिन् विषये किञ्चिद् विचार्यंते, भवन्तोऽनुमानप्रियास्तार्किकास्तत्र स्वशक्यसम्बन्धो लक्षणा इति ब्रुवन्ति अर्थाच्छिक्यसम्बन्धत्वं लक्षणायाः स्वरूपम्। शक्यस्यं शक्त्योपस्थापितस्यार्थंस्य सम्बन्धो यः कश्चित् सामीप्यसादृश्यादिर्यंथायोग्यं सम्बन्धः, स एव लक्षणेत्यर्थः। अत्र स्वपदेन शक्तं पदं ग्राह्यम्। स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थंप्रतिपादिका गौणी, तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यतिरिक्तप्रतिपादिका शुद्धा। प्रकारान्तरेणापि सा द्विधा—अजहत्स्वार्था जहत्स्वार्था चेति। स्वार्थंसंवलितपरार्थाऽभिधायिकाऽजहत्स्वार्था, अर्थाद् यत्र शक्त्यार्थंलक्ष्यार्थंयोरुभयोः क्रियायामन्वयो भवति, साऽजहल्लक्षणा यथा छत्रिणो यान्तीत्यत्र छत्र्यछत्रिषु गच्छत्सु छत्रिणा बाहुल्येन छत्रिणो यान्तीत्यछत्रिषु यानकर्तृत्वानुपपत्त्या छत्रिपदस्य छत्र्यछत्र्युभयसाधारणेन एकसार्थंवाहित्वविशिष्टेऽजहत्स्वार्था लक्षणा। यानानुकूलकृतिमन्त एकसार्थंवाहा इत्यन्वयबोधः। अत्रैकसार्थंवाहित्वेन रूपेणाछत्रिणामिव छत्रिणामपि गमनेऽन्वयः। अनया रीत्या कुन्तान् प्रवेशय, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्रिसहितसेना, कुन्तास्त्रसहितपुरुषः, यष्टिसहितपुरुषः, काकसहितसर्वंदध्युपघातकबोधः, स्वार्थंपरित्यागेनेतरार्थाऽभिधायिका जहल्लक्षणा, तत्परित्यागश्च शक्यार्थंस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वम्, तेन गौर्वाहीकं पाठय इत्यादौ गोसदृशलक्षणायामपि न गोस्तदन्वयि पाठनक्रियान्वयित्वम्। सा च तात्स्थ्यादिनिमित्तिका, तदाह—

> तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च।
> तत्साहचर्यात् तादर्थ्याद् ज्ञेया वै लक्षणा बुधैः॥ इति।

गङ्गापदं भगीरथरथखातावच्छिन्नजलप्रवाहबोधकम्। एवञ्च जलप्रवाहरूपस्यार्थस्यघोषेण सहाधाराधेयभावसम्बन्धेनान्वयानुपपत्त्या वा वस्तुतस्तात्पर्यानुपपत्त्या शक्यार्थसामीप्यात्तीरबोधो लक्षणया। तत्साहचर्याद् यष्टीः प्रवेशय, तादर्थ्याद् इन्द्रार्था स्थूणा, इन्द्रः, कुत्रचिदन्वयासुपपत्तिर्लक्षणायां बीजम्। कुत्रचिच्च तात्पर्यानुपपत्तिः। यथा—'आयुर्वै घृतम्' इत्यादौ वेदस्य नित्यत्वेन तात्पर्यानुपपत्त्यभावाद् पदस्य आयुः पदस्य आयुः साधने लक्षणा, प्रयोजके वां कथं तत्र कुत्रचिदन्वयानुपपत्तिरपि लक्षणायां बीजम्।

वस्तुतस्तु तात्पर्यानुपपत्तिरेव लक्षणायां बीजम्, यथा 'गङ्गायां घोषः' इत्यादौ गङ्गापदादुपस्थिते तादृशजप्रवाहरूपे शक्यार्थे घोषपदादुपस्थितस्य आभीरपल्लीरूपस्य शक्यार्थसम्बन्धः संयोगादिः—आधाराधेयभावादिर्वा न सम्भवति, प्रवहणापत्तेः। अतोऽन्वयानुपपत्तिरूपं बीजं प्रवाहार्थे गङ्गापदस्य तात्पर्यानुपपत्तिरूपं बीजं वा प्रतिसन्धीयते, तदा पुनः स्मृतगङ्गापदेन लक्षणाज्ञानजन्येन तीरत्वप्रकारकस्मरणेन तीरत्वावच्छिन्नविषयकबोधः, तेन तीरवृत्तिघोष इति बोधो जायते, यद्यन्वयानुपपत्तिर्लक्षणायां बीजं स्यात्, तदा घोषादिपद एव मकरादिलक्षणापत्तिः तावताप्यन्वयानुपपत्तिपरिहारात्।

> गङ्गागङ्गेति यो ब्रूयाद् योजनानां शतैरपि।
> मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।। इति।

इत्येवं प्रसिद्धिस्तर्हि गङ्गाशब्दश्रवणमात्रेण पापानामभावो भवति, तर्हि पापाभावे पापमस्तीत्यस्य पापी इति व्युत्पत्त्या पापाऽभावे पापिनोऽभावात् पापी गङ्गायां गच्छतीति लक्षणायामन्वयानुपपत्तिबीजस्वीकारे गङ्गापदस्य नरके लक्षणा स्यादेव। तात्पर्यानुपपत्तिबीजस्वीकारे तु न दोष, भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः। 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति श्रुतिमौनव्रतिनो नक्षत्रदर्शने सति वाग्विसर्जनं विदते। मेघावरणे तदसम्भवेन किं कर्तव्यमित्याशङ्कायां नक्षत्रपदस्य तदुपलक्षिते काले लक्षणा। एवमत्रापि तात्पर्यानुपपत्तिरेव लक्षणायां बीजं नान्वयानुपपत्तिरिति, अनेकानुगमकस्वीकारे गौरवात्।

**उपसंहृतिः**

विशिष्टार्थबोधकपदस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः, वाक्यार्थे किञ्चिदंश त्यागः किञ्चिदंशरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे ग्रामो दग्धः, पटो दग्ध इति व्यवहारः। 'तत्वमसि' इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः शुद्ध-चैतन्ययोरभेदान्वयः। सोऽयं देवदत्त इत्यादौ परोक्षरूपतत्तांशस्य च परित्यागेन जहदजहल्लक्षणया शुद्धदेवदत्तस्य बोधः।

मीमांसकास्तु 'गम्भीरायां नद्यां घोषः' इत्याद्यनुरोधात् स्व-बोध्यसम्बन्धो लक्षणा इति वदन्ति, तेऽनया रीत्याऽऽपत्तिमुपस्थाप-यन्ति यद् गम्भीरायां नद्यामित्यत्र सप्तम्यन्तार्थयोः समानविभक्ति-कत्वाद् अभेदान्वय इष्टः। अत्र यदि गम्भीरपदेन तीरं लक्ष्यते, तदा तीराभिन्ना नदीत्याद्यापद्येत्, स चासङ्गतोरनद्योरभेदस्य बाधात्। यदि नदीपदस्य नदीतीरे लक्षणा, तदा गम्भीराभिन्नं तीरमिति बोधः स्यात्, स च न समीचोनः, तीरे गम्भीर्यार्थस्य बाधात्। पदद्वये लक्षणायामपि न कार्यस्य सिद्धिर्भवितुमर्हति, कुतः—द्वयोर्नामार्थयोर-भेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति व्युत्पत्तेर्जागरूकत्वात्। गम्भीर-पदस्य यदि गम्भीरतीरनदीपदस्य नदीतीरे लक्षणा स्यात्, तर्हि गम्भीराभिन्नं यन्नदीतोरं तत्र घोष इति बोधः स्यात्, न तु गम्भीरा-भिन्ना या नदी तीरे घोष इति। एतादृशे स्थले तत्तत्पदे लक्षणाया असम्भवात्। अतः समुदायेन गम्भीरायां नद्यामिति वाक्येन बोध्यो यो गम्भीरत्वाच्छिन्ननदीपदार्थस्तत्सम्बन्धो लक्षणा।

यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षित-लक्षणेति प्रणिगदन्ति तार्किकाः यथा द्विरेफो रौति इत्यत्र द्विरेफ-शब्दस्य कर्तृत्वान्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा लक्षितलक्षणया भ्रमरो बुध्यते, तन्न समीचीनम् तस्यानुचरितत्वेन बोधानापत्तेः, पुस्तकदर्शनस्थले मानसजपवत् सूक्ष्मोच्चारणसत्त्वादर्थबोधः। मानस-जपलक्षणञ्च —

> धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम्।
> उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः ॥[1] इति।

---

१. वै० सि० म० पृ० २९।

अत्राप्युच्चारणप्रयोगः। एवम्—

सूतके मृतके कुर्यात् प्राणायाममन्त्रकम्।
तथा मार्जनमन्त्रास्तु मनसोच्चार्य मार्जयेत्॥[1]
गायत्रीं सम्यगुच्चार्य सूर्य्यायार्घ्यं निवेदयेत्॥ इति।

भरद्वाजोक्तावपि पूर्ववदुच्चारणपदप्रयोगः। अत एव भाष्ये 'उच्चारित एव प्रत्यायको नानुच्चारितः' इति सिद्धान्तितम्।

अतो द्विरेफपदाद् रूढिशक्त्या भ्रमरार्थबोधोऽवयवार्थप्रतीतिस्तु रथन्तरादिपदवन्नास्त्येव, यद्वा पदनिष्ठरेफद्वयस्यार्थे आरोपात् सम्बन्धित्वेनैव भ्रमरबोधः। अतो भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु पाठः। बाधप्रतिसन्धानं विनैव द्विरेफपदाद् भ्रमरबोधे लक्षणाप्रयोजनं न। किञ्च रेफद्वयसम्बन्धित्वेन द्विरेफपदेन भ्रमरपदोपस्थितावपि भ्रमरे शक्ततावच्छेदकानुपूर्वीरूपेणोपस्थित्यभावाद् बोधानापत्तिः।

**व्यञ्जनासामीक्षा**

एवम् 'तिस्रः शब्दस्य शक्तयः' इत्युक्तौ शक्तिलक्षणयोर्विवेचनान्तरमवसरप्राप्तव्यञ्जना-विवेचनमावश्यकमित्यवधार्यैव तद् विविच्यते। तथाहि मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धाऽसम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयका वक्त्रादिवैशिष्टयज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो व्यञ्जना। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यंग्यता च हर्यादिभिरुक्ता सङ्गच्छते। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठशक्तिविशेषव्यञ्जत्वम्। यथा 'प्रज-पति' इत्यत्र प्रकृष्टजपबोधकत्वम्। क्वचिच्च क्रियाक्षेपकत्वमपि तत्।

यथा 'प्रादेशं लिखति' प्रादेशं विनिर्माय लिखतीत्यर्थेन क्रियाक्षेपकत्वम्। एषा हि क्वचिन्मुख्यार्थस्य बाधे, क्वचित्तस्याबाधेऽपि, क्वचिन्मुख्यार्थविशिष्टमर्थान्तरम्। क्वचित्तदविशिष्टमर्थं बोधयन्ती वक्तृवृत्तिवैशिष्टयं तत्रामादिकञ्चापेक्षते। अतश्चाभिधालक्षणापेक्षयाऽस्यां विशेषता प्रसिद्ध्यति। शक्तिलक्षणे च पदवाक्ययोरेव। एषा व्यञ्जना हि पदे पदैकदेशे वाक्ये वाक्यैकदेशे वाक्यसमूहे च तिष्ठति। अतो लक्षणया न गतार्था। किञ्च गङ्गापदात् स्वशक्य-

१. वै० सि० म०—पृ० १३१।

सम्बन्धेन लक्षणया तीरबोधेऽपि शैत्यपावनत्वादिप्रतीत्यर्थं वैयाकरणानामपि व्यञ्जनाऽऽवश्यकी, न केवलमालङ्कारिकाणामेव; यतो हि वैयाकरणा व्यञ्जकत्वमेव द्योतकत्वं स्वीकुर्वन्ति ।

केचित्तु व्यञ्जनानयाः शब्दमात्रवृत्तित्वाच्छब्दस्यैव व्यञ्जकत्वम्, न त्वर्थस्येति वदन्ति, तन्मुधैव—

रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रत्याकुले छादयते दक्षिणं नयनं हरेः ॥

इत्यत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं तत्सङ्कोचेन सूर्यास्तस्तेन पद्मसङ्कोचः, तेन पितामहस्य स्थगनम्, तेनाप्रतिबद्धं रतिविलसितमिति क्रमशो व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीत्याऽर्थस्यापि व्यञ्जकत्वस्वीकारात् । 'गतोऽस्तमर्कः' इत्यादौ शिष्येण सन्ध्यावन्दनादेः कर्तव्यत्वाशयेन गुरुं प्रति प्रयुक्ताद् वक्तृतात्पर्याभावेऽपि प्रतिवेश्यादीनामभिसरणोपक्रमादिबोधस्य वाच्यार्थधीपूर्वकस्य वाच्यार्थबाधज्ञानेऽजायमानस्य लक्षणोपपादयितुमशक्यत्वाच्च ।

ननु 'एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति' इति रीत्यैव व्यङ्ग्यार्थबोधोपपत्तौ 'गतोऽस्तमर्कः' इत्याद्यर्थं व्यञ्जना नावश्यकीति चेत् न, 'गतोऽस्तमर्कः' इत्यादिश्रवणानन्तरं सन्ध्यावन्दनकर्तव्यत्वं मया स्मृतमित्यनुव्यवसायाभावात् तत्रानुलेखाच्च ।

अथ चेदं पदं नैतदर्थस्य वाचकं न वा लाक्षणिकं नापि स्मारकम्, अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण तस्यातिरिक्तत्वमेव, यतोऽसम्बद्धस्यापि व्यङ्ग्यत्वात्, न वा व्यङ्ग्यार्थोऽनुमेय इति वाच्यम्, विरुद्धानैकान्तिकेभ्यो व्याप्तिपक्षधर्मतादिनिश्चयाभावेऽपि व्यङ्ग्यार्थप्रतीतेः, सिद्धिसत्त्वेऽपि व्यङ्ग्यार्थबोधदर्शनेन तत्प्रतिबध्यतावच्छेदककोटौ तद्भेदप्रवेशेऽतिगौरवेण तज्जन्यबोधस्यातिरिक्तत्वे एव लाघवाच्च । अन्यथा शब्दप्रामाण्यं सुतरामेव भज्येत । आलङ्कारिकोऽपि विचार उक्तविषयेषु वैयाकरणपथा प्रायो गतार्थं एवेति मत्वा पृथङ् नोक्त इति शम् ।

# धात्वर्थवादविमर्शः

सर्वशब्दानामुपजीव्यत्वान्मूलभूतत्वाच्च धात्वर्थं निरूपयितुं निः-शेषेणोपक्रमते। धात्वर्थनिरूपणप्रसङ्गे पूर्वं प्रतिज्ञातसर्वशब्दमूलभू-तत्वाच्छाब्दिकनयेन विमर्शः प्रस्तूयते; तत्रापि प्राङ्नव्यमतमुररीकृत्य क्रमशो विचारसरणिरुपादीयते। तदुक्तम्--

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृतः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥[1] इति।

फलनिरूपितवाचकतावान् धातुः। तत्र फलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्ति-रित्येकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरिति सूचितम्। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदेनान्वयः। फलविशिष्टव्यापारे शक्तौ तु 'नित्यो घटः' इत्याद्यापत्तिवारणाय स्वीकृतेन 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायेन स्तोकादिकर्मणोऽन्वयाभावेन स्तोकं पचतीत्यादिप्रयोगाणां गतिश्चिन्तनीया स्यात्, तस्मात् फलविशिष्टव्यापारे शक्तिर्मनसोऽपि न कल्पनीयेति प्राचीनाः।

नागोजिभट्टास्तु फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातूनां शक्तिः, फलव्यापारे च पृथक् शक्तिस्वीकारे व्यापारोद्देश्यक-फलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्यापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वाद्। विशिष्टवाचकत्वमते तु न दोषः, पृथगुपस्थितेरसत्त्वाद्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्। तथाहि फल-विशेषकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृत-धातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम्। धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनञ्चा-तिगौरवमावहति। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने

1. वै० भू० का०–७१।

फले धातूनां शक्तिः, कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्-बोधे नियामक इति नागेशीयः पन्थाः।

यद्यपि फलावच्छिन्नव्यापारत्वस्य व्यापारवच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वकल्पनप्रयुक्तं गौरवमेतेषां मते स्फुटं प्रतिभाति, तथापि भिन्नशक्तिवादिनां फलविशेषणकव्यापारविशेषणकावान्तर-वाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोप-स्थितिः कारणम् व्यापारविशेषणफलबोधे कर्मप्रत्ययसमभिव्याहृतधातु-जन्यसमूहालम्बनात्मकोपस्थितिः कारणमिति कर्तृप्रत्यये कर्तरि कर्म-प्रत्यये कर्मणि, कुतः समानप्रत्ययोपात्तत्वात्। कालस्तु व्यापारे विशेषणम्। एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम्।

तत्रभवन्तो प्राभाकराः—फलमेव धात्वर्थः पचि-गमि-त्यजि-प्रभृतीनां विक्लित्तिसंयोगविभागादिरूपफलमेवार्थं इति स्वीकुर्वन्ति पुरुषप्रवृत्तिरूपा आर्थीभावना आख्यातार्थः, आख्यातार्थवर्तमानत्वादि-कन्तु भावनायामन्वेति, समानपदोपस्थितत्वात्। तेन भावनाविरामे न पचतीत्यादिप्रयोगः।

प्राचीननैयायिका अपि मीमांसकमतवत् 'फलं धात्वर्थः', 'कृति-राख्यातार्थः' इति स्वीकुर्वन्ति, तन्न समीचीनम्, कुतो हि पचतीति कथनेन लोके पाकमुत्पादयतीत्यर्थो लभ्यते। तत्र साक्षाद् भावनायाः प्रतीतिर्जायते। अतो भावनाया विवरणविषयत्वदर्शनेन विक्रिय-माणस्य धातोरेव भावनार्थं इति निर्गलितः। धातोर्व्यापारार्थाङ्गीकारे शक्यतावच्छेदके गौरवात्, लाघवात् कृतित्वमेव शक्यतावच्छेदकम्। रथो गच्छतीत्यादौ व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायि-कानां कथनं न समीचीनम्, कथं हि वैयाकरणानां मते यदि शक्यता-वच्छेदके गौरवं तदा नैयायिकानां प्रकारे लक्ष्यतावच्छेदकगौरवमा-पतति। पचतीत्यस्य पाकं करोति यत्नार्थककरोतिना विवरणाद् यत्न एवाख्यातार्थः; इत्यपि न शङ्कनीयम्, 'रथो गमनं करोति' बीजादिनाऽङ्कुरः कृत इति दर्शनाद् यत्नार्थकताया असिद्धेः।

किञ्च भावनाया अवाच्यत्वे फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वमिति

सकर्मकाऽकर्मकयालक्षणाभावेन घटं भावयतीत्येव घटो भवतीत्यत्रापि द्वितीया स्यात्। घटस्य कर्तृत्वेन कर्तुराज्ञया कर्मसंज्ञाया बाधाद् न द्वितीयेति समाधानमप्यनुगतकर्तृत्वस्याभावेन घटस्याकर्तृत्वात्, कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्। धात्वर्थानुकूल व्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्तु हास्यास्पदमेवेति सुधियो विभावयन्तु। तस्माद् धातोरेव व्यापारोऽर्थं इति सिद्धेः।

सम्प्रति धातोः फलमर्थः। अस्मिन् विषये तत्रभवतां पुरस्तात् काश्चित् शास्त्रीया युक्तय उपस्थाप्यन्ते। फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्, तथा फलव्यधिकरणव्यापारवाचकत्वरूपस्य सकर्मकलक्षणस्योच्छेदापत्तिः। कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं तु न युक्तियुक्तं प्रतिभाति, कुतो व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासम्भवात्, कुतः गङ्गापदस्य तीरे भाक्तत्वेऽपि न हि तेन स्नानादिकार्यं कर्तुं शक्यम्। अत एवाह—

किन्तूत्पादनमेवातः कर्मवत्स्याद् यगाद्यपि।
कर्मकर्तर्यन्यथा तु न भवेत् तद् दृशोरिव॥ इति।

अस्याः कारिकाया अयमाशयः—उत्पत्तिरूपं फलं व्यापारश्च धात्वर्थः। कृञः फलमात्रमर्थो नेष्यते। यतोऽस्य 'उत्पादनार्थकता'[1], अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोऽपि समुपपद्यन्ते, अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात् कर्मवत् स्यात्। यथा दृश्यते घटः स्वयमेवात्र न भवति। सकर्मकतानापत्तिदोषकारणाय कृञादेरिव जानातीत्यादेरपिविषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम्। तेन ज्ञायते घटः स्वयमेवेति किन्न स्यात्? एवं ग्रामो गम्यते इत्यपि स्यादित्याकारकचिन्तासन्तानवितानैकतानो भट्टोजिदीक्षित इमां कारिकामाह—

निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तोऽत्र व्यवस्थितः॥

१. वाक्यपदीयम्—३।७।७९।

अस्याः कारिकाया एततात्पर्यम्-निर्वर्त्ये विकार्ये च कर्मवद् भावो भवति । 'घटं करोति', 'सोमं सुनोति' इत्यादौ, न तु प्राप्ये तेन दृश्यते घटः स्वयमेवेति रूपमसाधु, किञ्च धातूनां फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिर्वज्रलेपायिता, क्रियावाचकत्वाविशेषात् । फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषस्तादवस्थ्यमित्यपि वदन्ति । तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम् । अकर्मकाणान्तु तन्निर्विवादमेव, भूसत्तायामित्याद्यनुशासनात् । अत एव द्व्यर्थः पचिरिति भाष्यं संगच्छते ।

मण्डनमिश्रास्तु— प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायात् तदागमे हि दृश्यते इति न्यायात् आख्यातप्रयोगे व्यापारस्य स्फुटदर्शनाद् धातोः फलव्यापारयोर्वाच्यत्वेऽपि व्यापार आख्यातार्थ इति प्रणिगदन्ति । किन्तु सिद्धान्तोऽयं निर्मूल एव, कुतो धातोर्यदि फलमात्रमर्थः स्वीक्रियेत, तदा 'ग्रामो गमनवान्' इति प्रयोगापत्तिः स्यात् । फलव्यापारयोः पृथग्धात्वर्थमतेऽपि केवलं फलार्थत्वमादाय तदापत्तिस्तु न शंक्या, अन्तरङ्गत्वात् फलस्य व्यापारे एव प्रागन्वयात् । किञ्च सर्वं हि वस्तुजातं प्रतीत्या व्यवस्थाप्यतेऽत्र प्रतीतिविरुद्धतापि स्पष्टैव ।

कथं हि फलमात्रार्थस्वीकारे फलानुत्पाददशायां सत्यपि व्यापारे पाको भवतीति प्रयोगो न स्यात्, व्यापारविगमे सति फले पाको विद्यत इति प्रयोगः, स्यात् । 'नखैर्भिन्नो नखभिन्नः', 'हरिणा त्रातो हरित्रातः' इत्यत्र, 'कर्तृकरणे कृताबहुलमिति समासो न स्यात् । कारकाणां क्रियायामेवान्वयाद् धातोर्व्यापारार्थाभावेन क्रियान्वयस्य दुर्लभत्वात् । उभयार्थत्वे तु त्रातभिन्नपदान्तर्गतधात्वर्थक्रिययोः कर्तृकरणकारकान्वयेन सामर्थ्यं तत्र सुखेन प्रतिपादयितुं शक्यम् । धातोर्व्यापारार्थाभावे 'भूवादयो धातवः'[1] इति सूत्रे महती दुर्व्यवस्था आपतेत् । कथं हि सूत्रमिदं क्रियावाचकत्वे सति भ्वादिगणे पठितो यो भवति स एव धातुसंज्ञक इति बोधयति । फलमात्रार्थे क्रियाया असत्त्वात् सूत्रासङ्गतिः स्पष्टैव । भ्वादिगणपठितत्वे धातुत्वमित्यर्थे

१. अष्टाध्यायी—१।३।१ ।

याः पश्यतीत्यादौ 'आतो धातोः'[1] इत्याकारलोपापत्तिः। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्'[2] इति परिभाषया तत्र दोषवारणेऽपि अव्यय 'वा' इत्यादावतिप्रसङ्गः, असत्त्वभूतक्रियाया धात्वर्थे पाक इत्यत्राप्यसत्त्वभूतायाः क्रियायाः प्रतीतिः स्यात्। तथा च 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति भाष्यविरोधः कथं वारणीय इति शंका न कार्या, कुतो हि घञादिस्थले उभयविधक्रियायाः स्वीकारः।

प्रकृत्या साध्यावस्था प्रत्ययेन साधनावस्था गम्यते। अत्र फलमयमेव विशेषो यत् तिङाद्युपस्थाप्य क्रियायां लिङ्गाद्यन्वयेन घञाद्युपस्थाप्यायां क्रियायां लिङ्गाद्यन्वयो भवत्येव, कारकाणामुभयांशे सम्बन्धात्; अतो धातुत्वव्यवहारः। कारकाणां भावनान्वये प्रमाणे भट्टोजिदीक्षितस्येयं कारिका—

सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनम् ॥[3]

सम्बोधनान्तस्य क्रियायामन्वयः, त्वं ब्रूहि देवदत्त। इत्यादौ निघातानुरोधात् 'समानवाक्ये निघातयुस्मदस्मदादेशाः' इत्यनेन समान वाक्य एव तन्नियमात्। उक्तञ्च वाक्यपदीये—

सम्बोधनपदं यच्च तत्क्रियायां विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥[4] इति।

तस्माद् धातोर्फलं व्यापारश्चेत्यर्थद्वयं सर्वैः स्वीकरणीयम्। प्राचीनानामेष राद्धान्तः।

नागोजिभट्टा अपि 'लः कर्मणि'[5] इत्यादिसूत्रविरोधापत्तेः फलमात्रं न धात्वर्थं इति प्राहुः। न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते। पचति, पक्ष्यति पक्वानित्यादौ फूत्कारादि प्रतीतये। तत्राने–

---

१. अष्टाध्यायी–६।४।१४०। २. प० शेखर–११४।
३. शब्दकौस्तुभः, का० १७। ४. वाक्यपदीयम्—२-५।
५. अष्टाध्यायी—३-४-६९।

कप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता। यत्तु तार्किकाः फलव्यापारो धात्वर्थः, लकाराणां कृतावेव शक्तिर्लाघवात्, न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् प्रथमान्तपदे नैव तल्लाभाच्च। अख्यातार्थे धात्वर्थो विशेषणम्। प्रकृतिप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात्, प्रथमान्तार्थे आख्यातार्थो विशेषणम्। अनुकूलत्वमाश्रयत्वञ्च संसर्गः।

एवञ्च 'चैत्रः पचति' इत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैव इति बोधः। रथो गच्छतीत्यादौ रथस्याचेतनत्वाद् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वाऽऽख्यातस्य लक्षणेत्याहुः, तन्न समीचीनम्, युस्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थानापत्तेः। पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिवादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। न चेष्टापत्तिः, आश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम्, नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः।

एवञ्च नामार्थनिष्ठभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबोधं प्रति मुख्यविशेष्यतया प्रत्ययजन्योपस्थितिः कारणमिति कार्य्यकारणभावमूलिकेयं व्युत्पत्तिरिति। नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां कर्तरि शक्तिर्न वाच्या, 'पचति कल्पम्', 'पचतिरूपं देवदत्तः' इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्यौचित्यादित्यास्तां तावत्।

वस्तुतस्तु एतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। अत्रैव सकर्मकशब्दमर्यादा तेनाध्यासिता भूमय इत्यादौ क्तोपपत्तिः, अन्वयस्य पृथगुपस्थितयोः संसर्गरूपतया न जीवत्यादिषु दोष इति मञ्जूषासिद्धान्तः। आत्मानं जानातीत्यादौ सकर्मकाकर्मकलक्षणस्याव्याप्त्यतिव्याप्तिमाशंक्य द्वावात्मानौ शरीरावच्छिन्नः, अन्तःकरणावच्छिन्नश्च। तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे

अनुभवतीति भाष्योक्त्याऽऽत्मन एकत्वे शरीररूपोपाधिभेदपरिकल्पितं भेदमादाय वैयधिकरण्यस्य सूपपादत्वान्न क्वचिद् दोषावसर इति समाहितं मूलसारकृताऽपि ।

यदपि मीमांसका इत्थं सङ्गिरन्ते यत्—बोधकतारूपशक्तिराख्यातेऽप्यबाधितैव, यतस्ततो भावनाबोधस्य जायमानत्वाद् धातोरेव भावना वाच्या, नाख्यातस्येति कथं निर्णय इति । तथापि न तत्समीचीनम्, यतः—'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः'[1] इति हर्यादिसम्मतेन व्याकरणस्मृतिः शब्दसाधुत्वपरा साधुशब्दे च बोधजनकतावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वमिति वदतां मीमांसकानां मते शक्तं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते ।

व्याकरणेन भावनायां साधुत्वाविधानेनाख्यातस्य तत्र शक्तेरसम्भवतरत्वात् । तथा च यादृशविशेषणान्वित यादृशविशेष्यबोध· यादृशानुपूर्व्या सूत्रकृतादिसम्मतत्वम्, तादृशबोधे तादृशनुपूर्वीकः शब्दः साधुर्नान्यत्रेति लभ्यते ।

एवञ्च भावनायामाख्यातस्या शक्तिभ्रमेण प्रयोगे 'नानृतं वदेत्' इति निषेधोल्लंघनप्रयुक्तं प्रायश्चित्तं मीमांसकैर्दुष्परिहरणीयमेवेति । वैयाकरणमते तु नानृतं वदेदिति निषेधस्य क्रत्वर्थत्वं सिद्ध्येत् किन्त्वाख्यातेन कर्तुरुक्तत्वमिति श्रुत्या पुरुषार्थत्वमेव स्यात् ।

यद्यपि प्रकरणात् क्रत्वर्थतासम्भवः, तथापि श्रुतिलिङ्गवाक्यप्रकरणे स्थानसमवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रेण प्रकरणतः श्रुतेर्बलवत्त्वेन बाधादिति मीमांसकोक्तं युक्तमिति प्रतिभाति, तथाप्याख्यात श्रुत्या कर्तृरुपस्थितावपि न तस्य प्राधान्यं येन निषेधस्य पुरुषार्थता शक्येत । तथा च विशेषणतयोपस्थितस्य कर्तुः श्रौतमर्थसम्बन्धाभावान्नात्र श्रुत्या प्रकरणबाध इत्यदोषात् । कर्तुरप्राधान्येऽपि कर्तृवृत्तिभावनायाः प्राधान्यात् तस्या नञर्थान्वये तद्द्वाराऽऽख्यातकर्तुरप्यन्वयान्न श्रौतपुरुषार्थत्वानुपपत्तिरिति चेत्, सत्यं जञ्ज-

१. वाक्यपदीयम्–१ । १४२ ।

भ्यमानोऽनुब्रूयाद् मयि दक्षक्रतू इति वाक्योक्तमन्त्रविधिवद् नानृतं वदेदिति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यात् प्रधानीभूतकर्त्रैवानृतवचनं वर्ज्यं स्यात् । क्रत्वर्थत्वे तु कर्त्रनपेक्षत्वेन यज्ञप्रवृत्तैः पुरुषैस्त्वैरपि वर्जनं सिद्ध्यतीति विशेषसत्त्वेऽपि श्रुतिप्रकरणाभ्यां क्रतुसम्बद्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेति बोधे मानाभावेन क्रतुयुक्तपुरुषधर्मत्वेऽप्यनुष्ठाने विशेषाभावादित्यलं धातोः फलमात्रमर्थं इति विभिन्नतर्कग्रहिलैर्मीमांसकैरायासबहुलपरायणैरिति । प्राङ् नव्यशाब्दिकैः सर्वैरपि समुचितयुक्त्या—सूत्र-वार्त्तिक-भाष्यकारमतावलम्बिभिः साधुसमर्थितफलव्यापारयोः धातुरिति न क्वचिदपि विसंवादावसरः । इतोऽग्रेऽपि विचारपन्था अवशिष्टः सुधिभिर्विभावनीय इति शम् ।

---

# न्यायसूत्राणि

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वं धर्माणां शश्वदान्वीक्षिकी मता ।।

इति सूक्तिरेव भगवतो गोतममुनेः तत्कृतन्यायसूत्रस्य च प्रभूततमं महत्त्वं प्रख्यापयति । स्मृतिपुराणादिषु न्यायशास्त्रस्य (सूत्रस्य) चतुर्दशविद्यास्वेकतमत्वेन महामहत्त्वमुपयोगित्वञ्च लोके सर्वदाऽभ्युपगतं प्रकाशतेतराम् ।

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।"

इत्थमल्पेन कालेन सर्वविद्यालाभो नैव शक्यस्तासाञ्चतुर्विधोपायैर्गम्यत्वात् । 'यथाऽऽह भगवान् पतञ्जलिः—चतुर्भिः प्रकारैर्विद्योपार्जिता भवति । आगमकालेन, स्वाध्यायकालेन, व्यवहारकालेन, प्रवचनकालेनेति । विद्योपार्जनाय एकस्यैवोपायस्य कृते पर्याप्तमायुर्न भवति' । तर्हि कथं सर्वैरुपायैर्विद्योपार्जिता स्यात् अतः समासतो वस्तुतत्त्वमधिगन्तुमेव न्यायशास्त्रावतारः । विद्यास्वपि साध्यसाधनरूपत्वाद् द्वैविध्यं विद्यते । तत्र 'सा विद्या या विमुक्तये' इति वचनेन उपनिषद्विद्या साध्यविद्या, अन्याः सर्वाः साधनविद्या एव । एवं चात्मसाक्षात्कारप्रयोजिकाया उपनिषद्विद्यायाः सदर्थंप्रतिष्ठापिन्यः सर्वाः साधनविद्याः उपजीव्यत्वेनातीवोपयोगिन्य इत्यत्र न संशयलेशः । सर्वातिशायिनी भगवती श्रुतिः प्रतिपादयति—

आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्चेति । एतस्या एव श्रुतेः याथार्थ्येनाशयं निष्कृष्टार्थमभिधातुं प्रकाशयितुञ्च दर्शनशास्त्रप्रवर्तकाचार्या महर्षयो दर्शनसूत्राणि प्रणीतवन्तः । आत्मसाक्षात्कारात्मकदर्शनपरतयैवान्वर्थं नाम दर्शनशास्त्रमिति प्रथितमभूत् । एवञ्च दर्शनशास्त्रप्रवर्तकाचार्येषु भगवान् गोतममुनिः तदीयं न्यायदर्शनञ्चातिशयितख्यातिमभजताम् ।

यथोक्तञ्चरितार्थं च शश्वदान्वीक्षिकी मतान्तवचनेन। एवं हि प्रत्यक्षागमाभ्यामीक्षितस्य अन्वीक्षणमन्वीक्षा तथा प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या (न्यायसूत्रम्)। एवम्भूतस्य महोपकारकस्य न्यायशास्त्रस्य प्रणेता भगवान् गोतमः कः क्व कदाऽभूदिति विचारः प्रथम आवश्यक इत्यवधार्यं तद्विषयको विचार उपस्थाप्यते।

पद्मपुराणोत्तरखण्डे २६३ अध्याये यथा—

कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।
गोतमेन तथा न्यायं सांख्यन्तु कपिलेन वै॥

इति वचनेन न्यायशास्त्रप्रणेतृत्वं गोतममुनेः सिद्धम्। अपरञ्च नैषधीयैकोनविंशतिसर्गे—

मुक्तये यः शिलातत्त्वाय शास्त्रमुचे सचेतसाम्।
गोतमं तमवेतैव यथा वित्थ तथैव सः॥

एवम् प्रतिमानाटकस्य पञ्चमाङ्केऽपि भोः! काश्यपगोत्रोऽस्मि साङ्गोपाङ्गं वेदमधीय मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रम्, मेधातिथेर्न्यायशास्त्रं प्राचेतसं श्राद्धकल्पं चैतद्वचनानुसारं न्यायशास्त्रनिर्माता मेधातिथिः। न्यायभाष्येऽपि—

योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्॥

इत्थं वक्तृषु श्रेष्ठतमेऽक्षपादर्षौ यस्य न्यायस्य स्वतः स्फुरणमाविरभूत तस्यैव न्यायस्य भगवान् वात्स्यायनमुनिः भाष्यं रचयामास। समग्रं जगत् मायामोहतो मोचयितुं यस्य न्यायशास्त्रस्योपदेशञ्चकार तत्र कुतार्किकैः प्रसारिताज्ञाननिवृत्तये न्यायशास्त्रोपरि निबन्धो विधास्यत इत्युक्तिर्न्यायवार्तिककारस्य—

यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद।
कुतार्किकाज्ञाननिवृत्तिहेतोः करिष्यते तस्य मया निबन्धः॥

इत्यपि प्रमाणयति न्यायशास्त्रप्रणेतारम् ।

परमत्र विचारणीयो विषयो यत् तदुक्ततथ्येन त्रयः पुरुषा न्यायशास्त्रप्रणेतृत्वेन व्यवहृता दृश्यन्ते-गोतमो मेघातिथिरक्षपादश्च । तर्हि त्रयोन्यायशास्त्रप्रणेतारः सम्भूय वा ? एक एव ? भिन्नो भिन्नो वा ? यदि त्रयो भिन्ना एव तर्हि न्यायशास्त्रप्रणेतुर्निर्णयोऽसम्भवः । यदि कस्यचिदेकस्य विषये प्रमाणोपलब्धिः स्यात् तर्हि द्वयोरन्ययोः न्यायशास्त्रप्रणेतृत्वे न प्रमापकं किमपि तथ्यं युक्तिसङ्गतमित्यपि विवादविषयतामुपैति । अतो महाभारतस्य शान्तिपर्वणि २६५ अध्याये श्लोकः—

मेधातिथिर्महाप्राज्ञो गोतमस्तपसि स्थितः ।
विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ॥

इत्येव प्रमाणयति यत् स्वपत्न्या अहल्याया मर्यादातिक्रमणं विज्ञाय महान् प्राज्ञो गोतम एव मेधातिथिः महति तपसि समवस्थितोऽभूत् । एतेन मेधातिथिरेव गोतम इति सम्यक् प्रमाणितम् । न द्वौ ऋषी तौ । पुनरपि गोतमोऽक्षपादश्च द्वौ न्यायशास्त्रप्रणेतृत्वेन सिद्धयतः । एतद्विषयेऽपि न्यायवार्तिकटीकाप्रारम्भे,अद्य भगवताक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते इति वचनेनाऽक्षपादनाम्नः चर्चा, न्यायसूचीनिबन्धे च यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् श्रीगोतमसुगवीनामतिजरतीनां समुद्धरणम्, इत्थञ्च भाष्यवार्तिककारादिवचनानुसारं न्यायशास्त्रप्रणेतुः गोतम इति स्वाभाविकं नाम । अक्षपादस्तु औपाधिकं नाम वर्तते ।

न केवलं न्यायवार्तिकादावेव गोतममुनेश्चर्चा अपि तु ऋक् १ अष्टके पञ्चमाध्याये ६२ सूक्तेऽपि—

समायाते गोतम इन्द्र नव्यमतक्षं ब्रह्म हरि योजनाय ।
सुनीथाय नः शवसा न नोधाः प्रातर्मक्षू धिया वसुर्जगम्यात् ॥

इत्थं न्यायशास्त्रप्रणेतुर्गोतममुनेर्निश्चयो जातः । यद्यपि गोतमनामानोऽनेके श्रूयन्ते तथापि मिथिलास्थगोतमादन्यगोतमाः नैव

न्यायसूत्रकाराः सिद्धयन्ति । तेषामतिसंन्निहितकालविधिकत्वात् कणादप्रभृतिदर्शनकाराणामेव किञ्चिदपि पूर्वापरभावित्वेन गोतम-मुनेरपि कालः सिद्धयति । न्यायमुक्तावल्यां प्रस्तावनायां श्रीकृष्णवल्लभाचार्यो वदति यत् कणादमुनिकृतवैशेषिकसूत्रोपरि रावणकृत-भाष्यमस्ति । तेनैव निश्चितं भवति यत् त्रेतायां गोतम-मुनिरप्यासीन्निःसशयम् । वस्तुतो न्यायशास्त्राध्ययनाध्यापनपरम्परानुगत-प्रसिद्धिमाधारीकृत्य गोतममुनेर्निम्नान्तनिर्णयो भवति यन् मिथिलायामेव गोतमाश्रम आसीत्, गोतमो विदेहराजजनकस्य पुरोधःशतानन्दस्य पिता, अहल्यायाः पतिरेव । अहल्योद्धारस्तत्रैव तदीयशापतो भगवता रामचन्द्रेण कृत इति । एतेन न्यायशास्त्रस्यातिप्राचीनत्वं सिद्धम् । न्यायशास्त्रस्य चतुर्थेऽध्याये शून्यवाद-बाह्यार्थ-भङ्गवादादि-आधुनिकतमबौद्धमतखण्डनमवलोक्यैवाऽऽधुनिकत्वं कल्पयन्ति केचित् तन्न शोभनं, यतो वेदवदेव समग्रा विद्याः सृष्टिप्रारम्भतो विद्यमानाः सन्ति ।

वास्तविकज्ञानप्राप्तये परिष्कृतपद्धतेरभावे सति प्रकृतिपुरुषयोरौपनिषत्सिद्धान्तानुसारं विवेचनमशक्यमिति स्थितौ, तज्ज्ञानस्य शास्त्रीयपद्धत्या निरूपणाय विवेचनाय च न्यायदर्शनं प्रणिनाय भगवान् गोतमो मुनिः । न्यायदर्शनं हि तर्कबुद्धिमनुसृत्याऽऽत्मानमनात्मभूत-विषयेभ्यो विविच्य पृथक् करोत्येव । आत्मदर्शनमेव मुख्यं लक्ष्यं मोक्षपदार्थं को नाङ्गीकरोति ? तेनान्वर्थदर्शनमिति संज्ञया सिद्धान्त-जातो निखिलोऽर्थः प्रतिभावितः । निःश्रेयसाधिगमः सर्वैरपि स्वीकृतः । तेन तत्सिद्धौ साधकोपायश्चिन्तनीय एव, स चावतरण-प्रसंगे विहितो धर्म एव, यतः 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म' इति कणादमुनिनापि प्रत्यपादि । धर्मेण सह न्यायशास्त्रस्य शाश्वतिकः सम्बन्धः ।

गंगायमुनयोः सङ्गम इव धर्मदर्शनयोश्च पारम्परिको मधुर-सम्बन्धो भारतीयसंस्कृतेः प्राणभूतः । यद्यपि प्रायः सर्वदर्शनेष्वात्म-सिद्धान्तश्चर्चितो विद्यते तथापि गोतममुनिप्रणीतन्यायदर्शनमेव महत्त्व-पदवीमधिरोहति । यतः प्रमाणप्रमेयेत्यादिप्रथमे सूत्रे नामरूपात्मकमखिलं जगत् प्रमाप्रमेयत्वरूपेण प्रदर्श्य सर्वदर्शनानामुपजीव्यत्वं

न्यायदर्शनस्य व्यवस्थितम्। कार्त्स्न्येन वस्तुतत्त्वस्य निर्धारणार्थं प्रमाणानामुपयोगक्षमप्रणाल्या न्यायो नामान्वर्थताम्भजति। न्यायः एवं च निःश्रेयसाधिगमसाधनतत्परं प्रमाणप्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति महत् सूत्रं महाब्रह्माण्डबोधकं प्रणीतवान् गौतममुनिः। एतस्यैव सूत्रस्य पञ्चाध्यायेषु विभक्तं न्यायदर्शनं व्याख्यान भूतमस्ति। सूत्रघटक-पदानामर्थाः क्रमशो निःश्रेयससिद्धौ महद् वैशिट्यमावहन्ति।

परमकारुणिको भगवान् गोतममुनिः सकलप्राणिकल्याणं कामयमानो द्वितीयं सूत्रमवतारवति—दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति। सूत्रेणोक्तमर्थं सुविविच्य लोकहितसिद्धिः सेत्स्यति, यतो विविधाभिर्यतनाभिः पीडित-प्राणिवर्गस्य कल्याणाय पन्था अत्र सूत्रे साधु निर्दिष्टः।

इत्थं न्यायदर्शनेऽस्मिन् पञ्चाध्यायेषु प्रत्येकमाह्निकद्वयं वर्तते। प्रत्यध्यायं चानेकानि प्रकरणानि सन्ति। इत्थं सम्भूय चतुर्दशोत्तर-पञ्चशतं यावत् सूत्राणि सकलार्थसाधकानि परमोपयोगीनि सन्ति।

न्यायशास्त्रमिदं प्रमाण-प्रमेय-धाराद्वये विभक्तं सत् प्रमेयप्रधान-प्रमाणप्रधान-विषययोः प्रतिपादनमुपयुक्तमेव विदधाति। चेतना-चेतनात्मकं जगदिदं याथातथ्येन सुस्पष्टन्न्यायतो ज्ञायते। अत एव मुनिना न्यायदर्शने प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति सूत्रेण प्रमाणचतुष्टयं प्रतिपादितम्। तदेव च प्रायः सर्वैरपि शास्त्रकारैरङ्गीकृतम्। केषाञ्चिदधिकानि प्रमाणानि तेष्वेवान्तर्भूतानि।

वस्तुतः प्रस्थानत्रयीमवगाहितुमारूढञ्चापि न्यायसोपानमतीव हृद्यं मन्ये। आत्मा वा अरे इत्यत्रात्मश्रवणं वेदपुराणादिभ्यः, मननं तु बहुभिर्हेतुभिरनुमानमेव 'मन्तव्यश्चोपपत्तिभिरिति' वचनात्। तथा च, तर्काऽनुगृहीतेन मननेन वेदादवगतमर्थं सम्यगवधार्य पुनः पुनर्ध्यान-रूपन्निदिध्यासनं भवति। आत्मपदञ्चात्र श्रुतौ परब्रह्मपरमेश्वर-रपरमेव। 'तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय' इति शम्।

# गायत्री महाशक्तिः

मानवदेहो विभिन्नाध्यात्मिकताया महामन्दिरमिति विलक्षण-विज्ञानाधिष्ठानम्, तस्मिन् भोगायतने सूक्ष्मस्थूलप्रक्रियानुस्यूते त्रिविधतत्त्वेनाधिकृते विग्रहे विद्यमाने परमचैतन्येकाचनाम्नोघाशक्ति-रेव समग्रदैवी महाविभूतिरिवानन्दसन्दोहजनयित्री युगयुगान्तरात्म-कल्प कल्पान्तरादद्यावधि ब्रह्माण्डमखिलमभिरक्षन्ती, प्राणिमात्रं संवहन्ती, मानवान् शिक्षयन्तीवा बालमहर्निशं जननीवलालयन्ती पालयन्ती माता गायत्री कथन्न लोक विधात्री भवित्री ? इयं भग-वतीगायत्री निश्चयेनेश्वरीय चेतना, भौतिकाध्यात्मिक सर्वविध सुखशान्तिसमुद्भाविनी भवानीव मान्या, सकल विद्यावितान-स्यानादिकालतः प्रसवित्री, सर्वापदनिवारणायामोधा परमौषधौवा-मृतसंजीवनी विद्या, देहेन्द्रियमनः समष्टिसंसाधनतयाऽऽत्मानन्दलाभ-प्रदानाय परिपूर्णा पराविद्या, इयमेव भारतीय संस्कृतिसभ्यतयोः संस्कृतस्य च सेवनावधिः चतुर्णां वेदानां चतुर्विंशत्यक्षरमयी विशुद्धा, निर्भ्रान्ता, सर्वं दर्शनतत्त्व प्रदर्शिकेव महाभाष्यात्मिका मूलमन्त्रव्याख्या, समग्रवेदवेदांगशास्त्राणां वटबीजवत् बीजरूपाऽविच्छिन्नज्ञान-विज्ञान समग्रकलाकौशलकुशलताया अमरलता, भारतीय सर्वविधो-पासनापद्धतिषु सर्वोत्तमा साधना, सुरमुनिप्रभृतीनामवलम्बनभूता सर्वविधिविधानमयी साध्यरूपाणि, स्थूल प्रकृतिशक्तीनां वैज्ञानिक-ताया अपि प्रथाप्रड़ालीव परमाद्भुतशरणो रूपेयं प्राचीनकालतस्तत्त्व-दर्शिभिर्महर्षिविज्ञान विद्यापारंगतै चेतनेजगति समाविष्ट प्रथम-संख्यातो द्विशप्ततिशक्तयो ज्ञाताः सम्यगनुभूताः सदोपयोगिन्यो मानवमात्रस्याभ्युदयापरिमितोपहारास्तासूपलब्धिकारिणीगायत्री सम-वतीर्णात्रिभुवने वर्णिताभवदिति ।

जडात्मकेऽपि जगति निखिलकार्यंकर्त्री विद्युच्शक्तिरिव गुरुत्वा-कर्षणमणुविकिरणं ब्रह्माण्डव्यापि परमेश्वरीयमुद्भवविलय-विकास-प्रवर्धनमयी परमार्थतोऽनन्तागणितशक्तीनां महाशक्तिरिति रहस्यम् । एवमेव चेतनात्मके जगति व्याप्त समस्तशक्तिपुञ्जेषु यावन्मात्रं या

काचन शक्तिः विविधनियतिः सघन-विरल प्रजननावनमयी शान्तिमयी सदा स्फुरन्तीव विविधविचारतरंगायित तन्त्रमयी यन्त्रमयी चापि सूक्ष्माराधनाधारभूमिरपि गायत्री गीयते। यथाणुसमूहस्य गतिशीलतया भौक्तिकजगतः सम्पूर्णः क्रियाकलापः प्रवर्तते तथैव सूक्ष्मजगतोहि महदाकाशे चेतनताया काचिदविच्छिन्ना धाराप्रसरन्तीवालिंगति जगज्जातं निखिलम् । तत्प्रतिफलस्वरूपमेव जीवनस्य यावत्स्वरूपं विकसितं जीवेषु तत्सवं खलु दिव्यचेतनस्यैवसवंतः सम्यग्गतिशीलतां ज्ञापयन्ती प्रवण-प्रवहणशीलाश्शक्तिधाराः। सर्वास्ता धाराः कुतः कथमुद्भाविताः इति विचिकित्सायामिदमेव समाधानम्मनोमोमुद्यते सचेसां सततं यत् अचिन्त्यागोचरानुपमा निखिलब्रह्माण्डे प्रदीप्तापरमविशुद्धासदसद्भ्यामनिर्वचनीया परब्रह्मणः परमाह्लादिका काचनशक्तिरेव गायतस्त्रायमाणा गायत्रीभगवती प्रकीर्तिता।

सैव चेतना, सैव ब्रह्म, पदबोध्यापि, समस्तेषु भुवनेषु ब्रह्माण्डान्तर्गतेषु समभिव्याप्तं ब्रह्म वा गीयतां ब्रह्माणी वा गीयतामत्र को विशेषः? यस्य यस्या वा समुपस्थित्याविरहित न किमप्यवभासतेऽवभासितुम्वाशक्यते त्रिषु लोकेषु। तादृशब्रह्मणः सकाशादेव भाक्तिकस्य गतिशीलस्यजगतो गतित्वं सार्थक्यं भजते गतिविधिप्रेरणास्रोतरूपा ब्रह्माऽपरपर्याया वा वावर्ण्यंते शास्त्रज्ञैः। विधि शम्भु सत्ताश्वती शक्तिमत्तागायत्र्यामेव सुप्रतिष्ठिताः महीयते जगति।

समस्तां प्रकृतिमपि क्रियाशीलतामुन्नयन्ती या समस्तकार्यंकारणभावस्य सहास्तित्वं ख्यापयन्ती अणोरणीयान्महतोमहीयांश्चेतिप दार्थनाताननुग्राहयन्ती या काचनाज्ञाताप्रत्यक्षापरमाशक्तिर्विमृश्यमाणासिद्धैर्योगिभिरनुदिनमानन्दलहरीमनुप्राणकुर्वन्ती निखिलभुवनमध्येऽविचरन्त्यपि सुविचरन्ती मन्यते सैव निर्जीवमपिजगद्विशेषं सजीवं निर्विशेषमपि सविशेषं निर्गुणमपि सगुणं निराकारमपिस्वाकारंलीलावितानमारचयन्ती गतिमतां मतिमताञ्चापि भावान् क्वचिदाकर्षन्ती सततमुन्मधश्चपथमानयन्ती मोहं व्यामोहञ्चाशुनाशयन्ती सर्वं पदार्थजातम्भासयन्ती पतिम्वरेवविश्वपतिंमोहयन्ती ब्रह्माण्डाधिपतिसत्यपि पतिः पतित्वेनवरतिलीलयाब्रह्मगायत्रीति समभिधानं चरितार्थयन्तीव वेदार्थानात्मानञ्चालंकृतवती।

सम्प्रति वैज्ञानिका यद्यपि तां शक्ति न मन्यते न वा तस्याः स्वरूपं प्रति श्रद्धधते न वा तां ध्यायन्ति तथापि कालान्तर एव तेऽपि ताम-वश्यमेवाङ्गीकरिष्यन्ति, तस्याश्शवते रस्तित्वं सर्वोपकारिसामर्थ्यञ्चा-वश्यमेवभजिष्यन्तीतिनिश्चयः। अणुरात्मा यांप्रक्रियामवलम्ब्य विभुत्वमाप्नोति नरो नारायणो भवेत् जीवोब्रह्मत्वं प्राप्नुयात् अल्पज्ञः सर्वज्ञो भवेत् असमर्थः समर्थो भवेत् अबुद्धिर्बुद्धिमान् भवेत् अज्ञो-विज्ञतामापद्येत् स्थूलभावःसूक्ष्मतामापद्येत् परस्परमभिन्नभावो मैत्री धारां यायात् दुःखी सुखं प्राप्नुयात् सर्वमेतल्लीलाभवं तथ्यं तस्या-गायत्र्यादेव्याः निमेषमात्र प्रभावात्सुलभम् न किमपि तदतिरिक्तमव-तिष्ठते।

गायत्र्या मध्यात्मतत्त्वं प्राधान्येन विद्यत एव। तदेवात्मबलं सर्वैर-ध्यात्मपदेन बोध्यते येनान्तर्जगतः अगणिताः सूक्ष्मशक्तयः विकसिताः मानवेषु देवतात्वं भावयन्ति। अस्यैवाध्यात्मबलस्य नियन्त्रणे स्थूल-सृष्टेः कार्यकर्त्र्यो भौक्तिकशक्तयस्तिष्ठन्ति। तेनेदं प्रमाणितं भवति यन्मनुष्येषु या विलक्षणशक्तयो भृशं वर्णिताः तासामाचरणमपि गायत्रीमन्त्रेणैव सम्भवम्। गायत्र्याः प्रत्येकमक्षरं शक्तिबीजरूपं-विद्यते। एतेषां शक्ति बीजानां संस्पर्शमात्रेण शरीरस्थित षट्चक्राणा-मष्टादशानामुपचक्राणाञ्च जागरणं भवति गायत्रि मन्त्रोपासनया। एषु चक्रेषु प्रत्येकं तास्सिद्धय आश्रिताः पूर्णतया याः प्राचीनकाले ऋषयोमुनयश्चसम्प्राप्यैव स्वमीश्वरीयतत्त्वाधिकारत्वेन मन्यन्तेस्म यथोक्ममत्रविषये—

चतुर्विंशाक्षरी विद्या परतत्त्वविनिर्मिता।
तत्कारात् यातकार पर्यन्तं शब्दब्रह्मस्वरूपिणी॥

गायत्रीतंत्रे अर्थात्तच्छब्दत आरभ्य प्रचोदयाच्छब्दपर्यन्तं चतुर्विंशाक्ष-रीगायत्री परतत्त्वरूपा पराविद्याधिष्ठिताऽभिधीयते। तेनात्रवक्तुं शक्यते यत् परमात्मनस्तथा तस्या विधानशक्तेश्च लिंगभेदेन विभा-जनं न भवतीति। न सा नररूपा न वा नारीरूपा तथापि भक्तैर्यैर्भा-वैराराध्यते तदनुसारमेवाभिमुख्यमाधत्ते। भक्तभावनानुरूपा चेयं महाशक्तिरपि मृदिवघटशरावादीनामाकृतिविधानमिव भक्तानुसारि स्वीयमस्तित्वमुपस्थापयति पुरस्तात्। एवं विधामिमां गायत्रीं त्रिपदा-मामनन्ति मनीषिणः, तस्याः प्रत्येकं चरणं लोकत्रयान्तरं यावद्

विस्तृतं मन्यते । तन्माध्यमेनात्मगतिर्नकेवलमिमं लोकं यावदेवसीमिता विद्यते किन्त्वन्यलोकं यावदपि समभिव्याप्ता भवति ।

यथोक्तमपि बृहदारण्यके (५।१४।१)—

भूमिरन्तरिक्षद्यौरित्यष्ठावक्षराण्यष्याक्षर हवा एवं गायत्र्यै पदमेतदुहैवास्या एतत्स यावदेतेषुलोकेषु तावद्धि जयति योऽस्या एतदेवं पदवेद ।

अर्थात् भूम्यन्तरिक्षंद्यौश्चेति त्रयो गायत्र्याः प्रथमपादस्याष्टाक्षर तुल्या भवन्ति य इमां गायत्रीं जानन्तिते स लोकत्रयं जेतुं प्रभवंति। यथा बाह्ये जगति नानालोकास्तथा शरीराभ्यन्तरे पञ्च-सप्त-प्राणाः षट्चक्रग्रन्थयः सन्ति सामान्यजनेषु ता अज्ञाता एव भवन्ति । यदा गायत्री समुपासकः स्वयं जागृतो भवति तदाविज्ञातानिशक्तिकेन्द्राणि कम्प्यमानानि जायन्ते तदैव षट्चक्राणां जागरणमारभते ।

भौतिके बाह्ये जगति वैज्ञानिकैरन्वेष्यमाणानि शक्तितत्त्वानि यथा प्रत्यक्षीक्रियन्ते तथैवात्मविज्ञानसिद्धसाधकैः पिण्डेदेहे, अन्तर्जगति सन्निहिततत्त्वानि साक्षात्कृत्यतेषां दिव्यशक्त्या परमलाभः प्राप्यते आत्मसाक्षात्कारः ब्रह्मप्राप्तिः स्वर्गलोकप्राप्तिश्च तेषां साधकानां कृतेऽतीव सरला सुलभा जाता सती ब्रह्मगायत्र्या महिमानं प्रकाशयत्येव । हृदयचैतन्यज्योतिर्ज्योति गायत्रिरूपब्रह्मप्राप्तिस्थानस्य प्राणाः व्यानमपानं समानोदानादयः पञ्चद्वारपालभूताः स्वीकृताः सन्ति । एतेषां वशीकरणमावश्यकम् । येन हृदयस्थित गायत्रिस्वरूपब्रह्मणः प्राप्तिस्स्यादेतादृशा उपासकाः स्वर्गमनायासेन लभन्ते । तत्कुले चापि वीराः पुरुषाः पुत्राः शिष्य श्चापिप्रादुर्भवन्ति । बृहदारण्यकोपनिषदि यस्या मधुविद्यायाः सविस्तरं वर्णनमुपलभ्यते तस्याः सम्बन्धो गायत्र्या एव विद्यते । अस्या मधुविद्यायाः प्रभावशालिन्याः प्रभावातिशयो गायत्र्या महिम्न एव वैशद्येनाभिभाषितुं शक्यते—

यथा पारसमणेः संस्पर्शमात्रेणायसो लौहस्य खण्डसमुदायोऽपि काञ्चनत्वमुपैति तथैव निखिलजगतः सर्वंविधकटु-कुरूप-कष्टप्रद-

प्रतिकूल निखिलान्यपि वस्तूनि परिस्थितयश्चापि सर्वथोपयोगिमधुराः सौन्दर्यमया सुखदायिन्योऽनुकूलाश्च जायन्ते—गायत्रिमन्त्रमाहात्म्यात्। गायत्र्याश्चरणत्रयं सम्पूर्णां सृष्टिं स्वकृतेऽतिशयेनानन्दपूर्णं मधुमयन्निर्मातुं पूर्वतः समर्थम्मन्यते, तथा तस्या गायत्र्या एव प्रथमपादो नदीं जलपूर्णां समुद्रांश्चरत्नपूर्णान् औषधि वनस्पतींश्च जीवनीशक्ति परिपूर्णान् कर्तुं प्रभवत्येव।

दिवारात्रिश्च कस्याश्चिदपि प्रतिकूला प्रकृतेर्जगति झंझावात-भूचालातिवृष्टि शीतोष्णाधिकताप्रभृति विकृतिभिर्मुक्ते परमानन्दमये स्याताम् पृथिव्याः परमाणवः पर्याप्तरूपेण सदन्न-धातु-खनिज- रस-रत्नादि प्रदानकारिणोहि किरणविशेषा द्युलोकस्य मंगलमयाः पूर्णतः समुपलब्धा जायेरन् इत्येतादृशीशक्तिर्गायत्र्याद्वितीये चरणे सुप्रतिष्ठिता वर्णिता विद्यते। गायत्र्यास्तृतीयचरणं सूर्यस्योत्पादन-प्रेरक विकासोन्मुखशक्तींश्च सुनियन्त्रिताश्चावश्यकमात्रायां पृथिव्यां समाह्वयति। सूर्यशक्तिः तदन्वितकिरणविशेषाश्च पृथिव्यां यथा-मात्रायामपेक्ष्यन्ते ततोन्यूनाधिकरूपं विना सूर्यशक्ति किरणतापैर्जीवन-रसजले समतैव विकाशो निर्बाधस्तिष्ठेत् वनस्पतयोजन्तवो जड़-चेतनरूपाः सर्वेऽपि जीवनतत्त्वं सूर्यत एव प्राप्नुवन्ति। तस्मादेव गायत्र्या अधिष्ठातृ देवताभुवनपतिर्भास्करः सुव्रति लोकं प्रेरयति निखिलकर्मसु, स्वशक्त्या तादृश्या सर्वानप्यभिसिंचतीति व्युत्पत्या च महच्छक्तिप्रदत्वेन सूर्यः प्रोच्यते।

एतच्छक्तिप्रदत्वं सूर्यस्य वैज्ञानिका अपि नापलपन्ति समस्त मानवप्राणिभ्यश्चेतनत्वं विशेषप्राणक्षमत्वं च प्रदायैव विश्वपा सूर्यः प्रोक्तः तस्मिन् भुवनाधिपेसूर्ये विश्वप्रसवित्री पूर्णप्रभावं निक्षिप्य सावित्री गायत्री सूर्यमपि सवितारं लोके प्रथितवती। येन गायत्री-मन्त्रे तत्सवितुर्वरेण्यमिति पदे प्रसिद्धतेजोराशेर्वरेण्यत्वेन महन्महत्त्वम-भ्युपगम्यते। एतद्धि सावित्र्यागायत्र्यास्तृतीयचरणमाहात्म्यम्। तस्मादेतद् वक्तुं शक्यते यत् सृष्टेस्समस्तसुसामञ्जस्य पूर्णं सन्तुलनं गायत्रिशक्तेः परमाधारेणैव सुव्यवस्थितं प्रतिष्ठितम्भवति।

अत एव तत्सवितुर्वरेण्यमित्यस्य रहस्यसारः शीतलमन्द सुगन्धम-धुरवायुश्चलेत्, सरितः समुद्राश्चरसमया भवेयुः, औषधयः सुखसमृ-

द्धया पूर्णाः भवेयुरिति विद्योतते। एवमेव भर्गोदेवस्य धीमहि पदस्यापिस्वारस्यम् रात्रिन्दिवमस्मभ्यसुखकरं भवेत्—पृथिव्यापरमाणुकणा मंगलमयाः सन्तु द्युलोकस्सोऽस्मभ्यं सुखप्रदो भवेत् तथैव धियो योनः प्रचोदयात् इत्यपि वनस्पतयो रसमय्या सूर्यश्च सुखकरस्ते गावश्च=किरणसमूहाः कल्याणकारिणः सर्वेषांकृते मधुरा भवेयुः। एतद्धिसर्वं सवितुर्देवस्य सावित्र्या गायत्र्याश्चमाहात्म्यादेव शक्यं वक्तुं तस्या जगदीश्वरत्वात् यथोक्तं शक्तिदर्शने—

जयाखिला सुराराध्ये जयेकामेति कामदे।
जयब्रह्ममयी देवी ब्रह्मानन्दरसात्मिके॥

इति ललितोपाख्याने (८।१) प्रोक्तमेवेत्यपिप्रमाणम् अर्थात् हे महादेवि! त्वमेव सर्वदैवैराराध्यात्वमेव सर्वकामत्ररेश्वरी, पूर्णकामा कामधुक्।

यथा च ब्रह्म वै० पुराणे प्रकृति २१६६-७-१० इत्यत्रापि—

त्वमेव सर्वजननी मूलप्रकृतिरीश्वरी।
त्वमेवाद्यासृष्टिविधौ स्वच्छाया त्रिगुणात्मिका॥
कार्यार्थे सगुणात्वञ्च वस्तुतो निर्गुणा स्वयम्।
परब्रह्मस्वरूपात्वं सत्या नित्या सनातनी॥
तेजः स्वरूपापरमा भक्तानुग्रहविग्रहा।
सर्वस्वरूपासर्वेशा सर्वाधारा परात्परा॥
सर्वबीजस्वरूपा च सर्वपूज्या निराश्रया।
सर्वज्ञा सर्वतोभद्रा सर्वमंगलमंगला॥

एतैर्माहात्म्यप्रकाशनक्षमैश्श्लोकस्सर्वं हि सुप्रमाणितमेव न किमप्यवशिष्टमवधार्याविभाषितुमितोऽधिकम् सर्वं सुस्पष्टमेव।

"मायाख्यामाः कामधेनोर्वत्सौजीवेश्वरावुभौ" इति सूक्तिश्रुतिरपि परब्रह्मैव नारीरूपतया लोके जगन्मातृत्वख्यापनाय प्रथमाराध्यता प्रकाशनाय च परिवृ हितम्। तस्मादेव परमात्मनोहि कार्यंशक्तिर्देवशक्तिरुच्यते, तेन सृष्टिप्रारम्भं कुर्वाणः परमेश्वरः स्वस्मिन् शक्ति-

तत्त्वं प्रादुर्भाव्यैव सृष्टिसंचालनात्मक-समग्र सर्गस्थितिलयात्मकाधार भारं शक्त्यै समर्प्य सन्निधाय च तस्यां स्वयं निश्चिन्तितोऽभवदिति नाश्चर्यम्। अतएवाद्वैतवादेनिर्लिप्तं निरधिष्ठितं निरवद्यमविकारं निर्विशेषमव्ययमेव ब्रह्म स्वरूपन्निर्धारितं संगच्छते। निखिल ब्रह्माण्ड जास्यखिलकार्यं प्रादुर्भूतशक्तिमाध्यमेनैव सम्पादितं प्रथितं शास्त्रान्तरेष्वपि। अत्र प्रमाणायेयमपि श्रुतिरवधार्यते—

देवीह्येकाग्र आसीत्। सैव जगदण्डमसृजत............तस्यै एव ब्रह्मा अजीजनत् विष्णुरजीजनत् सर्वंमजीजनत् सैषापराशक्तिः .. ........यथा लक्ष्मीतन्त्रेऽपि—

निर्दोषो निरधिष्ठेयो निरवद्य सनातनः।
सर्वंकार्यंकरी सोऽहं विष्णोरव्ययनिरूपिणः॥

इयञ्च विष्णोरनपायिनी महाशक्तिरेवलक्ष्मीः त्वं भूमिः सर्वंभूतानां प्राणः प्राणवतां तथा श्रीः श्रीः कान्तिः क्षमा शान्तिः श्रद्धामेधावृति त्वमुद्गीथेर्ध्वमात्रासि स्मृतिः गायत्री व्यवहृतिस्तस्था। इति देवी भागवतपुराणानुसारं सवं तत्त्वं (पृ० १-५)—

गायत्र्यां सावित्र्यामवबोधितमेव।

अर्थात् त्वमेव सर्वप्राणिनां धारयित्री भूमिः प्राणिनां प्राणाः श्रीः श्रीः कान्तिः क्षमाशान्तिः श्रद्धामेधावृतिः स्मृति तथा ओंकार-स्वरूपा तदर्धमात्रा च उद्गीथरूपा गायत्री व्याहृतिरपि।

कथञ्चेयं गायत्री सर्ववाङ्मयी समधिष्ठातृरूपा सर्वंचेतनचेतना सर्वशान्तेश्शान्तिः, सर्वंबलवतां बला, सर्वाराधनासु परमाराध्या सर्वं-जगद् विग्रहमयी विराजते? एतद् विषये वशिष्ठ संहितायां सुप्रति-पादितमेव यथा—

पूषार्यमामरुत्वाँश्च ऋषयोऽपि मुनीश्वराः।
पितरो नागयक्षाश्च गन्धर्वाप्सरसां गणाः॥
ऋग्यजुस्सामवेदाश्च अथर्वाङ्गिरसानि च।
त्वमेव पञ्चभूतानि तत्त्वानि जगदीश्वरि॥

ब्राह्मी सरस्वती सन्ध्या तुरीया त्वं महेश्वरी ।
त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिता ।।
पुराणानि च तन्त्राणि महागम मतानि च ।
तस्माद् ब्रह्मस्वरूपात्वं किञ्चित् सद्सदात्मिका ।।
परात्परेशी गायत्री नमस्ते मातरम्बिके ।

सर्वं नामरूपात्मकं जगदत्र सावित्र्यां गायत्र्यामवस्थितं वर्णितं न किमप्यवशिष्यते वर्णनाय ।

परमात्मातु या लोके ब्रह्मशक्ति विराजते ।
सूक्ष्मा च सात्त्विकी चैव गायत्रीत्वय्यभिधीयते ।।

अर्थात् सर्वलोकेषु विद्यमाना सर्वव्यापका परमात्मनश्शक्तिरत्यन्त-सूक्ष्मा सत्त्वगुणवती भगवती गायत्री प्राकृत-प्रकृति प्राणस्थानीया चेतनशक्तिः गीर्वाणवाणीमयी मन्त्रायिता सर्वमान्यतामवाप्तादृता-ऽवर्तत । यथा च विष्णु धर्मोत्तरे—

एवं विधो यो भगवान् चिदात्मा सा एव गायत्री ········ गायत्री परमेश्वरावेवास्यैव चेतनपुरुषस्य द्वे नामनी ध्यायेते इति ·····।

अतः स्पष्टमेवैतत् यत्—

अचिन्त्यस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ।
उपासकानां सिद्धयर्थं ब्राह्मणेरूप कल्पना ।।
अरूपं भावनागम्यं परब्रह्म कुलेश्वरि ।
अरूपां रूपिणीकृत्वा कर्मकाण्डरतोनरः ।।

इति दिशा यथाकल्पं यथाकल्पं यथायुगमवर्तत । इति शम् ।।

---

# रसमीमांसा

'रस्यते आस्वाद्यतेऽसौरस.', 'रसो वै सः', 'रस ह्येवायं लब्ध्वाऽऽनन्दीभवतीत्यादिश्रुतिप्रामाण्याद् रसस्य ब्रह्मानन्दसहोदरत्वं, ब्रह्मरूपत्वे चेत्यादिकं तत्त्वमामनन्ति यथामति विभिन्नाः शास्त्रकाराः सचेतसः ।

विभावानुभावसञ्चारिसंयोगाद् रसनिष्पत्तिरितिभरतमुनिना नाट्यशास्त्रे परिभाषितमेवोररीकृत्य सर्वेऽपि काव्यशास्त्रिणोऽलङ्कारिकाः स्वीयां लेखनीमप्यानन्दातिरेकेण चरितार्थयंत आत्मानं धन्यमन्यन्त । तेनात्र वक्तुं शक्यते विभावादिसमूहलम्बनात्मकावरणमंगावच्छिन्न रत्याद्यवच्छिन्न चिदानन्दरूपारसाः श्रृङ्गारवीरकरुणाद्भुतहास्यभयानकवीभत्सरौद्रशान्तेति नवप्रभेदाः, भावाः रसरूपतासम्पादक विभावादि सम्पर्करहिताः—

रतिर्हासश्च शोकश्च क्रोधोत्साहोभयं तथा ।
जुगुप्साविस्मयश्चेत्थमष्टौ प्रोक्ताशमोऽपिच ।।

इति प्रतिपादिताः स्थायिभावा नव, निर्वेदादयस्त्रयस्त्रिंशत् संख्याकाः व्यभिचारिभावाश्च भावपद वाच्याः । तदुक्तं यथा—

सञ्चारिणः प्रधानानि देवादिविषयारतिः ।
उद्बुद्धमात्रा स्थायी च भाव इत्यभिधीयते ।।

तदाभासानाम रसाभासा भावाभासश्च, अनौचित्येन प्रवृत्तेर्दुष्टा रसा रसाभासाः, दुष्टाभावाः भावाभासाश्चेति । तत्प्रशान्तिः भावस्य शान्तिः, प्रशाम्यदवस्था, एवमादिपदेन भावस्योक्तरूपस्योदयः, उद्गमावस्था, भावसन्धिः = समकक्षयोर्भावयोर्युगपदास्वादः—

भावशबलता = निरवच्छिन्नतया तेषां पूर्वपूर्वोपमर्दिनामपरेषामास्वादः, एतादृशो रसादिः अक्रमः = असंलक्ष्यक्रमः, अंगित्वेन

प्रधानतया भासमानः सहृदयहृदयाह्लादकतया चर्वणाविषयीभवन् ध्वनेर्विवक्षितान्यपरवाच्यरूपस्य आत्मास्वरूपं व्यवस्थितः निर्णीत इत्यर्थः ।

अत्र रस्यत आस्वाद्यत इति व्युत्पत्त्याचर्वणाविषयीभूतत्वेनास्वाद्यमानतया सर्वेऽप्यमी रसपदबोध्याभवन्तीति न सन्देहः । यत्र रसादिः व्यंग्योऽर्थः वाच्येनविभावादिना उत्पलशतपत्रव्यतिभेदवत् सह इव न तु सहैव न वा विलम्बेन प्रधानतया प्रतीतिविषयो भवति तत्रासंलक्ष्यक्रमो व्यंग्यो ध्वनिः । तल्लक्षणमपि यथा—

वाच्यवाचकचारुत्व हेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ।। इति ।

तथा च यत्र रस-भाव-तदाभास भाव प्रशम-भावोदय भावसन्धि भावशबलतास्वरूपं चेते प्रधानीभूतव्यंग्यार्थमुपस्कुर्वन्तः शब्दार्थलिंकाराः गुणाश्च परस्परंध्वन्ययेक्षया च विभिन्नरूपेण गौणतया व्यवस्थितास्तत्रकाव्येऽसंलक्ष्यक्रमव्यंग्यरसादि ध्वनिरितिव्यपदेशः । एवञ्च शब्दार्थलिंकाराद्युपस्कृतत्वे सति प्रधानतया प्रतीतिविषयीभूतव्यंग्य रसादित्वमेवासंलक्ष्यक्रमव्यंग्यध्वनेनिष्कृष्टं लक्ष्यमितिभावः ।

अस्तु प्रकृतविषयो रस कः ? इति जिज्ञासायाम् ।—

समुचित ललित सन्निवेशचारुणा काव्येन समर्पितैः सहृदय हृदयंप्रविष्टैस्तदीय सहृदयता सहकृतेन भावनाविशेषमहिम्ना विगलित दुष्यन्तरमणीयत्वादिभिरलौकिकविभावानुभावव्यभिचारि शब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बन कारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपासादिभिः कार्यैः चिन्तादिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकव्यापारेण तत्कालनिर्वर्तितानन्दांशावरणेन अतएव प्रमुष्टपरिमित प्रमातृत्वादि निजसहजधर्मेण प्रमात्रास्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सहगोचरी क्रियमाणः प्राग् विनिविष्टवासनारूपोरत्यादिरेव रसः । तथा चोक्तमप्यत्र—

व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृत ।
इति परमाचार्यस्याभिनवगुप्तस्याभिमत मेतत् ॥

एवमस्याशयोऽवधारणीयः—तथाहि—यदा सामाजिकाः = सहृदयाः श्रव्यकाव्यान्याकर्णयन्ति, तत्तद्रसानुकूल सुललितरचनासंवलितानि नाटकानि वादृश्यकाव्यानि पश्यन्ति तदा तत्र वर्णिताः कारणकार्यसहकारिणो लोके तत्तन्नायकगतानां स्थायिभावानां यान्यालम्बनतयोद्दीपनतया वा कारणत्वेन प्रसिद्धानि तानि नायकादीनि चन्द्रिकादीनि च, यानिचाश्रुपातादीनि, कार्यतया प्रसिद्धानि, यानि च व्यभिचारपदवाच्यानि = व्यभिचरन्ति तानि चिन्तादीनि ज्ञानद्वारेण सहृदयहृदयं प्रविशन्ति। तत्र तेषां व्यक्तिविशेषसम्बद्धा दुष्यन्तत्वादिका धर्माः, सामाजिकनिष्ठ सहृदयता महिम्नाऽपोह्यन्ते। ततस्ते विभावानुभावव्यभिचारिशब्दैर्व्यपदिश्यंते।

एते विभावादय एव मिलित्वाऽलौकिकं व्यञ्जनाव्यापारं जनयन्ति, अयं व्यञ्जनाव्यापारः सामाजिकस्यात्मानन्दाच्छादकमज्ञानं निवर्त्तयति, अज्ञाने दूरीभूते सति सहृदयस्य परिमित प्रमातृत्वादिका स्वकीयधर्मो अपि विलयं यान्ति। तथाविध दशायां सामाजिकात्मानन्देन सहानुभूयमानः, पूर्वंकालादेव संस्काररूपेण वासनारूपेण वा स्थितो इत्यादिस्थायिभाव एव रसः। यथाहि शरावादिनापिहितोदीपः शरावादि निवृत्तौ सत्यामेव सन्निहितान् पदार्थान् रवंश्च प्रकाशयति। एवमेवात्मचैतन्यं विभावादि सम्वलितान् रत्यादीन् स्थायिभावान् तथा,-ज्ञाने निवृत्ते सति प्रकाशयति स्वयञ्च प्रकाशते।

आत्मचैन्यं द्रवीभूयस्वगतस्थायिरत्यादिभिश्च सम्मिल्य एकीभूयाभिन्नतयैवानन्दांशमात्रमनुभवति। न तु पृथगात्मानं रसं विभावादींश्च विजानाति। अथवा—आवरणभङ्गस्य कल्पनामन्तरेणैव-रससिद्धिः अभिव्यक्तिः सम्भाव्यते। तद् यथा—व्यञ्जना सहकृतेन सहृदयतयोन्मिषितेन विभावादिचर्वणा महिम्ना तत्तत्स्थाप्युपहित स्वस्वरूपानन्दाकारा चित्तवृत्तिरुपजायते। सा चित्तवृत्तिरेव रसः। अस्याश्चित्तवृत्तेः सविकल्पलक समाधिस्थितयोगिवृत्ति समकक्षत्वम्। निरवछिन्न विषयकत्वेन चास्या अलौकिकत्वम्।

रसास्वाद जनितो रसचर्वणा जनितो वायं सहृदयैरनूभूयमान आनन्दो न लौकिकसुखान्तर साधारणो घटपटाद्यन्तःकरणवृत्ति

भिन्नत्वात् । यथा वेदान्तिनां मतेऽद्वैतवादे, आत्मातिरिक्तं न किमपि सत् ।

प्रतीयमानाः घटपटादि वाह्यपदार्थाः वृत्तिरूपाः । तानन्तः-करणसंयोगेनात्मा प्रकाशयति । किन्त्वन्तःकरणधर्मान् साक्षादात्मैव भासयति । तत्रान्तःकरणस्य संयोगो नापेक्ष्यते । एवं रसप्रसंगेऽपि प्रथमतो व्यञ्जनाबलेनात्मनोऽज्ञानमपोह्यते = दूरीक्रियते = बिधीयते वा ततश्चात्मचैतन्यं विभावादि संवलितान् रत्यादीनन्तःकरणधर्मान् भासयति । तेनैव ते साक्षिभास्याः = आत्मनाप्रकाश्याः प्रोच्यन्ते ।

एवमेव विभावानामपि साक्षिभास्यत्वमविरुद्धम् । यथा केवलं काल्पनिकत्वात् स्वप्ने तुरगादीनां जाग्रदवस्थायाञ्च रङ्गे रजतादीनां साक्षिभास्यत्वं तथा भावनामयानां ललनात्वादिरूपेण साधारणी-कृतानाम् विभावादीनामपि साक्षिभास्यत्वे न कोऽपि विरोधो-विरोधाभासश्च ।

तदित्थमभिनवगुप्त मम्मटाचार्यादि ग्रन्थस्वारस्येन भग्नावरण-चिद्विशिष्टो रत्यादिः स्थायीभावो रस इति समवस्थितम् ।

एवंविधरसस्य रत्यादि स्थायिरूपतया चैतन्यभिन्नत्वे चैतन्या-भेद प्रतिपादिकाः "रसो वै सः" इत्यादिश्रुतयो विरुध्यन्तीति विचारः प्रस्तुतस्तर्हि विषयेऽस्मिन् पण्डितराजजगन्नाथमतेनापि विचार्यते तन्मतेन वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा-चिदेव रसः, अर्थाद् रत्यादि विषयकं भग्नावरणं चैतन्यमेवरसो न तु चैतन्यविषयीभूत रत्यादिः श्रुतिस्वारस्य भङ्गप्रसङ्गात् ।

परमत्र विचारणीयमिदमस्ति यत् अभिनवगुप्तरसविषयकमत-निरूपणक्रमे "रसो वै सः" इति श्रुति प्रामाण्यमभाणीञ्जगन्नाथः स्वयम् । सा च श्रुतिः रस्यते = आस्वाद्यते 'इतिव्युत्पत्तियोगात् ब्रह्मण आनन्दमयतां ख्यापयति । यतोऽभिनवगुप्तो रसमात्मानन्दरूप-माह, अत एवानन्द रूपयो रसब्रह्मणोरैक्यं स्वाभाविकम् ।

परमत्र साक्षात्कारे द्वयोरेतयोर्भेदः, तथाहि परब्रह्मसाक्षात्कारो विषयासंवलितत्वाद विशुद्ध ब्रह्मविषयकः, श्रवणादिव्यापार-

जन्यश्च । रसास्वादस्तु विभावादि संवलितत्वाद् विशिष्टरसविषयको व्यञ्जनामात्र जन्यश्च । न चात्र भेदाङ्गीकारे 'ब्रह्मैव रसः', 'रसो वै सः' इत्याद्यभेदप्रतिपादकश्रुतिविरोध इति वाच्यम् तासामपि-श्रुतीनाम् "आदित्यो यूपः" इत्यादीनामिव साध्य एव तात्पर्यं पर्यव-सानात् ।

इत्थमत्र तेन वक्तुं शक्यते यत्—

१—भग्नावरणचिदविशिष्टो रत्यादिः स्थायीभावो रसः ।

२—रत्याद्यवच्छिन्नो भग्नावरणा चिदेव रसः सिद्धान्तद्वयं व्यवस्था-पितम् । अयमेव पण्डितराजस्याकूतः मतद्वयेऽपि चिदंशमादाय नित्यत्वम् स्वप्रकाशत्वञ्च सिद्धं भवति । रत्याद्यंशमादायपुन-रनित्यत्वमितर भास्यत्वञ्च ।

यद्युच्यते—अथास्यां रसचर्वणायां सुखांशभाने किं मानम् ? तर्हि इदमपि प्रष्टव्यं भवति समाधावपि सुखांशमाने किं मानमिति ?

द्वावपि प्रश्नौ समानौ, यद्युत्तरं समाधौ सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियमित्यादिः शब्दोऽस्ति प्रमाणमिति चेत् अस्त्य-त्रापि 'रसो वै सः', 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इत्यादि श्रुतिः सकल सहृदय प्रत्यक्षञ्चेति प्रमाणद्वयेन प्रपञ्चितं सम्यक् । अत्रोक्तो विषयः पण्डितराजेन तत्तन्मतमभ्युपगम्य प्रकाशितः । स्वयञ्चात्रेत्थम-भिभाषते—तथाहि काव्ये नटेच कविना नटेन च प्रकाशितेषु विभाषादिषु व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायां तदनन्तरञ्च सहृदयतोल्लासितस्य भावना विशेषरूपस्य माहात्म्येन कल्पित दुःष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्नेः, शुक्तिकाशकल इव रज-तखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः न कुन्तलादिविषयक रत्यादिरेव रसः ।

विभावादि (कारण-कार्य-सहचारि ज्ञानानन्तरम्) व्यञ्जनाशक्त्या दुष्यन्तः शकुन्तलादि विषयकरतिमान् इति ज्ञानं भवति, तदनन्तरं सहृदयस्य दुष्यन्तेन सह सहृदयता (समानहृदययुक्तता) सम्पद्यते, या शनैः शनैः परिपाकमासाद्य भावनाविशेषरूपं दोषं (मानसिक

दशा विशेषं) जनयति। भूयोभूयो दुष्यन्तविषयकानुसन्धानप्रवणोऽन्तरात्मा तद्येष महिम्ना कल्पित दुष्यन्तत्वावच्छादितो जायते। यदा सचेता=सहृदयः, स्वाभिन्नत्वेन स्वात्मानं दुष्यन्तत्वेनानुभवति=गृह्णाति तदा शकुन्तलाया अपि स्वकान्ताभिन्नत्वेन=स्वकान्तात्व स्वीकृतौ सत्यां ( तस्यां विशिष्टमानसिकदशायाम् ) न कोऽपि विरोधः संगच्छते।

अस्मिन् नवीनमते पण्डितराजेन प्राक्तनानां साधारणीकरणसिद्धान्तोपरि महान् प्रहारो विहितः। साधारणीकरणव्यापारेण, शकुन्तलादयः स्वव्यक्तिनिष्ठ शकुन्तलात्वादि धर्मान् विहाय कान्तात्वादि साधारण ( विश्वजनीन ) धर्म पुरस्सरं सामाजिकानां समक्षमायान्तीति मन्यन्तेऽभिनवगुप्त मम्मटादय आचार्याः। तत्र पण्डितराजोऽभिभाषते यत् यदा शब्दाः ( शकुन्तलादयः ) शकुन्तलात्वेन शकुन्तलाया एव बोधकास्तदा कथन्तैः कान्तात्वादयो बोध्याः स्युरिति ? तस्मादेवात्र दोषविशेषकल्पनमनिवार्यम्। एवञ्च दोषविशेषस्यावश्यं कल्पनीयत्वेन तेनैव सहृदयैः स्वात्मसु दुष्यन्ताद्यभेदबुद्धिरपि स्वीकार्या एतादृशोऽयं रसः पण्डितराजमते न नित्यः किन्तु नश्वरः पूर्वोक्त दोष एवतत्प्रतीतौ कारणम् तन्नाशे तस्यापि नाशः।

पुनश्चायं रसो याथार्थ्येन न व्यंग्यो न च वर्णनीयः, परन्तु रसोत्पत्तेः प्राक् व्यञ्जनावृत्त्या शकुन्तलादि विषये दुष्यन्तादिनिष्ठरत्यादीनां यद् आसीद् ज्ञानं तस्य दोषविशेषप्रभावेण स्वात्मनि भासिताया अवास्तविक्या रसरूपायाः शकुन्तलाविषयकरतेः ज्ञानस्य च भेदानवगमात् रसोव्यंग्योवर्णनीयश्च व्यवहृतो भवति। स्वापूर्वोपस्थितेनरत्यादिना तदग्रहात् तद् रतित्वेनैकत्वाध्यावसानात् व्यंग्यो वर्णनीयश्चोच्यते।

रसोऽयमस्मिन्मते नास्ति वस्तुतः व्यञ्जनाव्यापारजन्यः। अतः काव्यव्यापारजन्यत्वमित्यस्यार्थः काव्यव्यापारजन्य भावनाजन्य इत्यादि विषयकत्वमिति वेदितव्यम्।

मनः कल्पित ज्ञानवादिनां मतम्—

रसो न व्यंग्यो न चानिर्वचनीयः किन्तु शकुन्तलादौरत्यादिमता दुष्यन्तादिना सह भ्रमात्मकं मनःकल्पितभेदज्ञानमेव रसः। मतेऽस्मिन्—

एतज्ज्ञानस्य त्रैविध्यं भवति—

१—दुष्यन्ततत्त्वावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयीभूत शकुन्तलारतिविशिष्टोऽहम् ।

२—शकुन्तला विषयकरतित्वावच्छिन्न प्रकारतानिरूपित विशेष्यताश्रयीभूतदुष्यन्ततादात्म्यवानहम् ।

३—अहं दुष्यन्तत्ववान् शकुन्तलाविषयकरतिमांश्च ।

रसविषये पूर्वोक्ता भेदाश्चत्वारः सन्ति यद्यपि परमत्रान्येऽपि भेदा सन्त्येव यथा—

(क) मुख्यतया दुष्यन्तादिगत एव रत्यादिः दुष्यन्ताद्यनुकर्तरि नटे समारोप्य गोचरीक्रियते ।

(ख) दुष्यन्तादि गतोरत्यादिः दुष्यन्तत्वेन गृहीतनटे कृत्रिमैरपि स्वाभाविकतया गृहीतैः विभावादिभिर्भिन्ने विषयेऽनुमिता सामग्र्या बलवत्वादनुमीयमानः सन् रस पदवीमारोहति।

(ग) विभावादयस्त्रयः समुदिताः रसाः।

(घ) विभावादिषु त्रिषु य एव चमत्कारी स एव रसः,

(ङ) भाव्यमानो विभाव एव रसः,

(च) भाव्यमानोऽनुभाव रसः,

(छ) भाव्यमानो व्यभिचार्य्येव रसरूपेणपरिणमति। परमेते सर्वे पक्षा न भान्ति प्राङ्नव्याभिनवगुप्त मम्मट पण्डित राजादिसिद्धान्ते।

यद्यपि रस विषयेऽलंकारशास्त्रकाराणां नैकमत्यं न वा सर्वेशास्त्रकारा रससत्तामङ्गीकुर्वन्त्येव तथापि येषां मते रससत्ता स्वीकृता

तेषामपि रसप्रक्रिया श्रव्यदृश्यकाव्ययोर्नैकविधा न वा रसोत्पत्ति प्रक्रिया-रससिद्धिविषयेकोऽप्येकः सिद्धान्तपक्षः निखिलेष्वपि रस-भावादिसिद्धान्तेषु प्रमुखानामेव सिद्धान्तः प्रदर्शितः। परमत्र सत्य-मिदमपि तत्त्वमवशिष्यत एव विचारणाय यत् रसविषये भावाभाव प्रधानाप्रधानरूपेण कियन्तः पक्षाशास्त्रसम्मता इति ? अतोऽत्र समासतः प्रमुखानां पक्षोऽपि समुपस्थाप्यते विमर्शनाय। तथाहि—

वस्तुतो हि रसो महान् विषयः नास्ति कश्चनः सन्देहः "रसनाथर्व-णादपि" इति भरतमुनिनाट्यशास्त्रकारेण प्रोक्तम्। रसा अथर्व-वेदाद्गृहीता इति तन्मतम्, वेदादेव रसोदय, वेदेनैवानुगृहीतो रसः विषयेऽस्मिन् सिद्धान्तपक्षः तत्स्वरूपस्य वर्णनं परमावश्यकमेव प्रति-भाति।

अत एवात्र यथामति निरूपणमालोच्य प्रक्रियया क्रियते। सम-ग्रास्वपि सृष्टिसु परममेकमिदमेवतत्त्वं हृद्यम्मनोहरमनुपमञ्चास्ति, यस्य सम्बन्धेन सत्त्वरजस्तमोमयी त्रिगुणात्मिकेयं सृष्टिः परब्रह्मण आनन्दमयी प्रतीयत एव न केवलमपितु सत्यमेवानुभूयते। तस्मादेव कविकुलगुरुणा कालिदासेन प्रत्यपादि यत्—

"त्रैगुण्योद्भवमत्र लोकचरितं नानारसं वर्तते" इति अर्थात् सत्त्वरजस्तमस्त्रिगुणात्मिका सृष्टिः सम्पूर्णा खलुरसमयो गीयते कविभिः। पाठ्य-श्रव्य-दृश्यरूपासृष्टिरपि माधुर्योजः प्रसादात्मक-गुणत्रयवती रसवती भवन्ती प्रवर्तते, सुखार्थः सर्वभूतानां प्रवृत्तिः; अर्थात् आकीटपतङ्गतो ब्रह्मपर्यन्तं सुखानन्दरसमनुभवितुं प्राप्तुञ्चे-च्छत्येव। तस्मादेव कारणाद् भरतमुनिना साध्वेवक्तं यत्—

"लोक वृत्तानुकरणं नाट्यमेतन्मयाकृतम्" इति वस्तुतः सुखमेव प्राप्तमधिगन्तुं हि सर्वभूतानां प्रवृत्तिः चेष्टामयी भवत्येव। सुखाय प्रवृत्तिरेव प्राणिनां सहजस्वभावा भूरिशश्शास्त्रेषु नैकत्रविस्तरतः प्रतिपादिताः। प्राणी निश्चयेन सुखेन जन्मग्रहीतुं सुख एव भरण-पोषणञ्चलब्धुं सुखे चैव लयमेतुं सहजः प्रवर्तते। तस्मादेव प्राणिनां सुखस्वभावः सम्यगौचित्यमावहति नात्र संशयः। एतदवश्यमवधार-णीयं विद्यते यत् सुखातिरिक्त विषयेसर्वैरपिविजिज्ञास्यते किमर्थमेत-

दारभ्यते किमर्थमेतत्संगृह्यत इति ? परं सुखविषये न केनापि कदापि जिज्ञास्यते यत् किमर्थं सुखमीहते ? तस्मादत्रसुखमेव परमं-लक्ष्यम् । सुखंभौत्तिकमाध्यात्मिकऐहामुष्मिकं किमप्युच्यतामन्य-देतत् । फलतो हिततमपदार्थं एव सुखं मन्यते । तस्मादिह रससुखयोः पर्यायताऽपि वक्तुं शक्या ।

अतो रसस्य महतो विषयस्य सम्यगाख्यानमावश्यकं विभाति । रसशब्दस्य च नानार्थाः सन्ति । यथा—रसः स्वादे, जले वीर्ये, शृंगारादौ, विषे, द्रवे, रागे, गृहे, धातौ, तिक्तादौ, पारदेपि च, प्रेम्णि, भावे, ह्यात्मनि, सुपेये, स्वरसे सुखे चाप्येभिर्बहुविधैरथैः सह वाच्यवाचकतामुपगतो रसो महाराज इव भातिभुवनत्रये, लोके तु रस पद प्रयोगः ततोऽप्यधिकेष्वर्थेषु व्यवह्रियते निन्दारसः, निद्रारसः, क्रीडारसः विमर्दरसः, रणरसः, सुनुरसः, हिंसारसः, मदनरसः, सुख-रसः, सेवारसः, विषयरसः, लावण्यादि प्रभृतयोनानाः सन्ति । यद्यपि प्रोक्तेष्वेषु प्रायः शास्त्रीयपक्षाभिमत्तरसवत्तायां सम्यगन्तरर्भावस्त-थापि सामान्य व्यवहार परिज्ञानाय पृथक् प्रतिपादितः । अपि च—

रसास्तु त्रिविधावाङ्नेपथ्य स्वभावगाः ।
कालानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा ॥
नानालंकार संयुक्तैर्वाचिको रस उच्यते ।
कर्मरूपवयो जाति देशपात्रनुवर्तिभिः ॥
माल्यभूषणवस्त्राद्यै र्नेपथ्यरस उच्यते ।
रूप यौवन लावण्य स्थैर्यधैर्यादिभिर्गुणैः ॥
रसः स्वाभाविको ज्ञेयः स च नाट्ये प्रशस्यते ॥

इत्थमत्र वाचिक-नेपथ्य-स्वाभाविक रसाः प्रकीर्तिताः, लेखोऽयं समय मातृकायाँ विद्यते एवं विध एव कुट्टिनीमतव्याख्याकारेण बोध्यते ।

शृंगारं द्विविधं विद्यात् वाङ्नेपथ्यक्रियात्मकम् ।
—अग्निपुराणे ३४२ अ० ।

किन्तु रस शब्द आनन्दमेव प्रत्याययति अयमेव रसः काव्यात्मा-मन्यते। रस विषये न केवलं भरतनाट्यशास्त्रं तथाऽलंकारशास्त्र-कारा एव सहमताः किन्तु वेदेऽपि रसविषये यथा पूर्वमुक्तमेव "रसानाथर्वणादपि "तेन सुस्पष्टमेतद् वैदिककाले रस सम्प्रदायः स्पष्टतया सुव्यक्तः प्रस्फुटित इति न विवादः। वेदे हि रसशब्द-प्रयोगः प्रचुरतया जले-दुग्धे, सोमरसे, तथा वस्तूनां सारभागीय-विषये च कृतो लभते।

तैत्तरीयोपनिषदि च रस शब्द प्रयोगः वास्तविकाय नित्य सत्या परब्रह्मणे कृतः। यस्यैकवारमनुभूतिं विधाय स्थायित्वेन सुखं मोक्षं लभन्ते विज्ञाः। रसविषये—अग्निपुराणे सुस्पष्टं प्रतिपादितं विद्यते-तत्परं ब्रह्माक्षरं सनातनमजमामनन्ति मनीषिणः वेदान्तशास्त्रकार उत्तरमीमांसायां समुल्लिखति यदेकश्चैतन्य ज्योतिरीश्वर इति, तस्यानन्द स्वरूपं सहजमेव। स आनन्दः प्रायः कदाचिद् व्यक्तो-भवति, यदाव्यक्तो भवत्यानन्दस्तदा तद्व्यक्तेर्नामानन्दमयी संविद्-भवति। तमेवानन्दं चैतन्यं चमत्कारि रसाह्वयमाभाषन्ते शास्त्रज्ञाः। यथोक्तमत्र —

अक्षरं परमं ब्रह्म सनातनमजंविभुम्।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥
आनन्दस्सहजस्तस्य व्यज्यते स कदाचन।
व्यक्तिः स तस्य चैतन्य चमत्काररसाह्वया॥
आद्यस्तस्यविकारोयः सोहंकार इतिस्मृतः।
नतोऽभिनास्तत्रेदं समाप्तभुवनत्रयम्॥
अभिमानादरतिः सा च परिपोषमुपेयुषी।
व्यभिचार्योदिसामान्याच् शृंगार इति गीयते॥

पुराणेषु विष्णुधर्मोत्तरे च रसानां नव संख्या प्रोक्ता—

शान्तोरसः स्वतन्त्रोऽथ पृथमेव व्यवस्थितः॥

अयमंशो नाग्निपुराणे, शेषांशश्च नाट्यशास्त्रेऽग्निपुराण समान एव । अग्निपुराणेऽपि रसानां वर्णविषये देवताविषये च न किमप्युक्तं किन्तु विष्णुधर्मोत्तरे निर्देशो नाट्य शास्त्रवद् दृश्यते । प्रकृतमनुसरामः । यथापूर्वमेव रससत्ता अभाव प्रधानाप्रधान विषयत्वेन संकेतः कृतस्तदनुसार मत्र किञ्चिद् विचार्यते ।

भामहो दण्डी, वामनाचार्यस्त्रयोऽप्येते न रसं स्वीकुर्वन्ति न वा काव्येषु तस्य प्राधान्यमङ्गीकुर्वन्ति । एषु भामहस्तु रसविरोधि मन्यते । तन्मते—कवितायाः काव्यस्य प्रधानो विषयोऽलङ्कार एव । अनेन श्रव्यकाव्ये रसो गौण एवाङ्गीकृतः । दण्डी दशगुणान् पुरस्कृत्यरीतिप्रणालीं प्रथयन्नेव भामहवदयमपि प्राधान्येनालंकारमेव काव्यवस्तु स्वीकरोति । परन्तु भामहापेक्षयाऽस्य काव्ये रससत्तामङ्गीकरोति पररसोऽलंकारेष्वन्तर्भूत एव तन्मते । वामनाचार्यस्तु दण्डिनः-परं रीतिरात्मा काव्यस्येति परिभाषयन् काव्यात्मनो रीतेः स्वरूपं प्रतिपादितवान् । वैदर्भी गौणी-पाञ्चाली चेतितिस्त्रः । परमस्यमते रसो गुणेभ्यः कञ्चनावश्यकं रूपं प्रयच्छति येन कान्तिपदेन तद् व्यवहृतं भवति । वामनमते नाट्ये रसः कथञ्चनाङ्गीकृतः ।

उद्भट रुद्रटावपि प्रायस्तथैव रससत्ताविषयेऽरुचिपक्षधरौ निसर्गतः क्वचिद् रसोद्गमेऽपि न तस्य प्राधान्यमङ्गीकुर्वतस्तावपि । इत्थमेतावता-अलंकार-गुणरीति-सम्प्रदायत्रयेषु रुद्रटमतं विशेष्यतेऽत्र यतस्तेन स्वकाव्यालंकारे स्पष्टं प्रतिपादितं यत् रससहितं किमपि काव्यंशास्त्रमेव शास्त्रतुल्यमेव तस्मात्तन्मते कविभि सदारसनिरूपण-प्रसंगे सावधानेन भाव्यमिति प्रोक्तंविद्यते । काव्येषु रसपक्षं संस्थापयितुं भरतमुनिकृतनवरसेषु प्रेमसम्बन्धोऽपि युक्तः कृतस्तेन । एवमेव व्यभिचारिणा सात्त्विकभावानां निरूपणे सीमातिक्रमणमपिकृतं रसस्य व्यभिचारिणाः सात्त्विकभावाश्चाङ्गभूता इति प्रतिपाद्य काव्य-निर्माणस्य प्रधानं लक्ष्यं रसमेव प्रोवाच रुद्रटः ।

इदमत्र तथ्यमेकं ध्येयमस्ति यत् शास्त्रेषु भगवतो नाम पशुपतिरपि विद्यते—जीवनामधारी पशुरेव नान्यः, तस्य जीवस्य पतिः स्वामी

पशुपतिः, पालकः। कथं जीवाः पशवः इति जिज्ञासायां प्रोच्यते समाधानाय—पशुपाशाष्ट वेष्टितः अर्थात् अष्टभिः पाशैर्वेष्टितत्वेन बन्धनतया जीवः पशुरित्यभिधीयते। अष्ट पाशाश्च—

घृणा (करुणा) जुगुप्सा, भय-शोक-रति-(इच्छा) द्वेष उत्साह-विस्मयाश्चेत्यष्टौ पाशाः सन्ति जीवानां—बन्धनकारकाः वासनाख्याः—

इमा अष्टवृत्तयः जीवानाम्। जीवो ब्रह्मैव नापरः, ममैवांशो जीवलोके जीवभूतः सनातनः, ब्रह्मणोंशत्वेन जीवः सनातनः आनन्द रूपः परं मायावशाद्धि ते जीवा अष्टवृत्तिभिरावृताः भोक्तारः सुखदुःख मोहानां भवन्ति। इमाश्चाष्टवृत्तयोनिरानन्दाः सत्योऽपि आनन्दरूप-जीवैः संयुक्ताः आनन्दमयतां भजन्ति न संशयः।

अत एव व्यक्ता रतिरेव रसः अर्थादभिव्यक्ता रतिरेव रसरूपता-मेति। परन्तु इदं तत्त्वं कथं स्यात् 'रसो वै सः "इति श्रुतिप्रमाणतः रसो ब्रह्मैव नापर इत्यपि सत्यम्। यदा ब्रह्मैव रसः आश्वाद्यश्चर्व्य-माणस्तदैवानन्दरूपः। एवंविधायां स्थितौ रतिः कथमानन्दात्मिका आस्वाद्या इति ? प्रश्नस्य समाधानमिदं यत् अष्टभिरुपाधिभिरवि-च्छिन्नो जीव एव रसः। जीवो रसिकः 'इति व्यवहारस्तु राहोशिरः इतिवद् भेदबुद्धि प्रभवः। तस्मादेवाष्टवृत्तिरूपत्वात्स्थायिभावा नामष्टावेव रसाः परमेषामष्टानां स्रोतसामुद्गमस्थलं—शान्त एव। तस्मादेव निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमोरस इति भणिति शास्त्रोपचारिकी। यतोहि—

"शान्तं शाश्वतमप्रमेयमनघम्" इत्यादि सूक्तयो विदुषां प्रमाण-भूताः।

तथाचोक्तमत्र विस्तारभयानल्पवचांसिः उद्धृताः उपस्थाप्यन्ते। तथाहि—

न यत्र दुःखं न सुखं न द्वेषो नापिमत्सरः।
समः सर्वेषु भावेषु स शान्तः कथितो रसः॥

भावाः विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्त्तते ।
पुनर्निमित्तापाये च शान्त एवोपलीयते ॥
एवं नव रसादृष्टा नाट्यज्ञैर्लक्षणान्विताः ॥

इति रस परिषाक परिवारः परमात्मनो रूपत्वेन चर्चितः स्वान्तः-सुखाय सचेतसामपि ।

---

# शाब्दबोधेचैकपदार्थे इत्यत्र एकत्वापरत्वयोरन्वय-विचारः

ननु एक पदार्थेऽपरपदार्थस्येत्यत्रैकपदार्थस्य पद-पदार्थपदार्था-वच्छेदकेषु कुत्रान्वयः पदे, पदार्थे, पदार्थतावच्छेदकेवा ? इति जिज्ञासायामुत्तरयति—

अथैक पदार्थेत्यत्रैकत्वस्या परपदार्थेत्यत्रापरत्वस्य च यदि पदेऽन्वयस्तर्हि एकं यत् पदन्तदर्थानुयोगिकः, अपरंयत् पदन्तदर्थप्रति-योगिकः संसर्ग आकांक्षाभास्यः। तथा सति. पचति 'इत्यत्र खण्डशः शक्तिस्वीकारे पच्धातोरर्थः विक्लितिर्व्यापारश्च भवति अनुकूलत्व सम्बन्धआकांक्षाभास्यः, तथा च व्यापारानुयोगिकः विक्लित्तिप्रति-योगिकः अनुकूलत्वसंसर्ग आकांक्षाभास्यः इति बोधो भवति। परञ्च पदेऽन्वये कृते सति एकं यत् पदमित्यनेन पचतीत्यत्र पच् पदम् तदर्थो व्यापारस्तदनुयोगिकः अपरमित्यस्यार्थो भिन्नः, भिन्नं पदमुदासीनं कञ्चित् यथा विपदम् तदर्थं आश्रयः न तत्प्रतियोगिकः संसर्गो भवति, यदर्थं प्रतियोगिकः संसर्गो भवति न तस्माद् भिन्नं पदं भवति, यद् भिन्नं पदं भवति न तदर्थप्रतियोगिकः संसर्गः। अतएव एकत्वापर-त्वयोः पदेऽन्वयाभावात् न तस्याकांक्षाभास्यत्वम्।

पदार्थे यदाऽन्वयस्तदा एकपदार्थानुयोगिकः अपरपदार्थप्रतियो-गिकः संसर्गआकांक्षाभास्यः। यथा पचति 'इत्यत्रएकपदार्थः व्यापारः तदनुयोगिकः स्वेतरपदार्थो विक्लित्तिः तत्प्रतियोगिकः संसर्गः स एवाकांक्षाभास्यः इति शाब्दबोधो भवति परमेवं पदार्थेऽन्वयेकृते पचतीत्यत्र दोषाभावेऽपि नीलो घट इत्यत्राभेदान्वयस्थले दोषःस्यदिव, तत्र प्रतियोगिन एवानुयोगित्वात्, अत एवैकत्वस्य पदार्थतावच्छेद-केऽन्वयः कर्तव्यः।

पदार्थतावच्छेदकेऽन्वये कृते—एक पदार्थतावच्छेदकावच्छि-न्नानुयोगितानिरूपकः स्वेतरपदार्थतावच्छेदकावच्छिन्नप्रति-

योगितानिरूपकः संसर्ग आकांक्षाभास्यः तथा च नीलोघट इत्यत्र "एकपदार्थतावच्छेदकं घटत्वम् तदवच्छिन्नानुयोगिता घटनिष्ठा तन्निरूपकः स्वेतर पदार्थतावच्छेदकम् नीलत्वम् तदवच्छिन्ना प्रतियोगिता नीलनिष्ठा, तन्निरूपकोऽभेद संसर्ग आकांक्षाभास्यः।

परमेवं पदार्थतावच्छेदकेऽन्वयेकृते नीलोघट इत्यादौ दोषाभावेऽपि पशुपदमादाय दोषापत्तिः, यथा लोमवल्लाङ्गूलादिमान् पशुपदाद् बोधव्यः तत्रालांगूलानुयोगिक लोमप्रतियोगिकसमवाय संसर्गः वृत्तिभास्यः नत्वाकांक्षाभास्यः, प्रकृवेतऽत्र 'एक पदार्थतावच्छेदकंलांगूलत्वम् तदवच्छिन्नानुयोगिता लाङ्गूलनिष्ठा, तन्निरूपकः स्वेतरपदार्थतावच्छेदकलोमत्वम्, तद्वच्छिन्ना प्रतियोगिता लोमनिष्ठा तन्निरूपकश्च संसर्गो वृत्तिभास्यः। परमित्थंभूतेऽपिएक पदार्थानुयोगिका परपदार्थप्रतियोगिक संसर्गत्वरूपोद्देश्यतावच्छेदकस्य सत्त्वेऽपि आकांक्षाभास्यत्वरूपविधेयस्याभावेन दोषापत्तिः। एवं राज्ञो राजा राजराजइत्यादौ एकपदार्थतावच्छेदकं राजत्वम्, तदवच्छिन्नानुयोगिता राजनिष्ठा तन्निरूपकः स्वेतरपदार्थतावच्छेदकमुदासीनं कञ्चित् यथा घटत्वम् तन्निष्ठा प्रतियोगिताघटनिष्ठा न तन्निरूपकः संसर्गो भवति, यदवच्छिन्नप्रतियोगिताकः संसर्गः न तत्स्वेतर पदार्थतावच्छेदकम्, अतएवराजराज इत्यादावाकांक्षा भास्यत्वान्नापत्तिः॥

एवं समवायेनाभावो नास्ति "इत्यत्र नञर्थाभावानुयोगिकः अभाव प्रतियोगिकः स्वप्रतियोगितानिरूपकः—संसर्ग आकांक्षा भास्यो भवति, प्रकृते पदार्थतावच्छेदकेऽन्वयेकृते पदार्थतावच्छेदकम् नञर्थाभावत्वम्, तदवच्छिन्नानुयोगिता नञर्थाभावनिष्ठा तन्निरूपकः स्वेतर पदार्थतावच्छेदकम्, नाभावत्वमभिन्नत्वात् 'अतोऽन्यत्किञ्चित् यथा पटत्वम् तद्वच्छिन्ना प्रतियोगितापटनिष्ठा न तन्निरूपकः संसर्गः यदवच्छिन्न प्रतियोगितानिरूपकः संसर्गो न तत्स्वेतर पदार्थतावच्छेदकम्। अतः अभावो नास्तीत्यात्रादावप्याकांक्षाभास्यत्वानापत्तिः।

अतएव उपस्थितीयविशेष्यताविशिष्टः संसर्ग आकांक्षाभास्यः। वैशिष्टचञ्च स्वप्रयोज्यविशेष्यता—निरूपकत्व-स्वनिरूपितत्वाभाव-

वदुपस्थितीयविषयताप्रयोज्यप्रकारतानिरूपकत्वोभयसम्बन्धेन। तथा सति—राज्ञो-राजा राजराज इत्यादौ स्वस्वामिभावसंसर्गे यथा—स्वमुपस्थितीयाविशेष्यता राजनिष्ठा, तत्प्रयोज्यविशेष्यता शब्दबोधीया विशेष्यता राजनिष्ठा तन्निरूपकत्व, स्वमुपस्थितीयाविशेष्यता राजनिष्ठातन्निरूपिताविषयता राजत्वनिष्ठा, अभाववदुपस्थितीया विषयताराजनिष्ठैव तत्प्रयोज्या प्रकारता शब्दबोधीयाराजनिष्ठातन्निरूपितत्वम्। अतएव स्वत्व संसर्गस्याकांक्षामास्यत्वम्। एवमभावोनास्तीत्यादावपि स्वप्रतियोगितानिरूपकत्व संसर्गस्याकांक्षा भास्यत्वम्। यथा—स्वमुपस्थितीयाविशेष्यता नञर्थाभावनिष्ठा, तत्प्रयोज्याविशेष्यता शब्दबोधीया विशेष्यता नञर्थाभावनिष्ठा, तन्निरूपकत्व एवं उपस्थितीया विशेष्यता अभावनिष्ठा तन्निरूपिताविषयता अभावत्वनिष्ठा, अभाववदुपस्थितीया विषयता अभावनिष्ठैव, तत्प्रयोज्याप्रकारता शाब्दबोधीया प्रकारता अभावनिष्ठा, तन्निरूपितत्वम् अतएव स्वप्रतियोगितानिरूपकत्व संसर्गस्याकांक्षा भाष्यत्वम्। न च अभाव प्रतियोगिक स्वावच्छिन्न प्रतियोगिताकत्व संसर्गस्यासंमूह एव। अभाव पद जन्योपस्थितीयाभावत्वनिष्ठविषयतायाः नञ् पदजन्योपस्थितीयाभावत्वनिष्ठविषयतानिरूपिताभावत्वनिष्ठविषयताभेदे मानाभावेनाभावनिष्ठविषयतानिरूपितत्वादिति वाच्यम्। अभावस्यैव स्ववृत्त्यभावत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावेऽन्वयात्।

स्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीय विषयताप्रयोज्योपस्थितीयविषयताप्रयोज्यप्रकारता निरूपकत्व सम्बन्धस्य द्वितीयसम्बन्धस्थाने निवेशनीयत्वाच्च। अभावपदनिष्ठवृत्तिज्ञानीय विषयतायाः नञ् पदनिष्ठवृत्तिज्ञानीयविषयताया निरूप्यनिरूपकभाव विरहेणासंग्रहासम्भवात्। न च समवायस्यैकत्वेन घट इत्यादौ विभक्त्यर्थेकत्व प्रतियोगिकाकांक्षाभास्य समवायादभिन्नस्य घटत्वप्रतियोगिकसमवायस्य वृत्तिभास्यस्यसंग्रहापत्तिः। एकत्व प्रतियोगिक समवायस्योपस्थितीयविषयताविशिष्टत्वे घटत्वप्रतियोगिकस्य तस्य न तच्चमित्यस्यवक्तुमशक्यत्वादितिवाच्यम्। समवायस्यैकत्वे एकत्वप्रतियोगिकसमवाय आकांक्षाभास्यो घटत्वप्रतियोगिकः समवायो नाकांक्षा भास्य इत्यस्यापि वक्तुमशक्यतया इष्टत्वस्यैवाङ्गीकरणीयत्वात्।

न च घटत्वनिष्ठ प्रकारता निरूपिता समवायनिष्ठासंसर्गता आकांक्षाप्रयोज्येतिव्यवहारापत्तिः तस्याघटपदनिष्ठवृत्तिप्रयोज्यत्वस्यैव सत्वेनेष्टापत्तेरयोगात् । निरुक्तोपस्थितीयविषयताविशिष्टसंसर्गनिष्ठसंसर्गताया एवाकांक्षा प्रयोज्यत्वादिति वाच्यम् । उपस्थितीयविषयताविशिष्टासंसर्गता आकांक्षाप्रयोज्या इत्यत्रैव तात्पर्यात् । वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यतानिरूपितत्व, स्वप्रयोजकवृत्तिज्ञानीयविषयत्वानिरूपितवृत्तिज्ञानीयविषयता प्रयोज्योपस्थितीय विषयताप्रयोज्यप्रकारतानिरूपितत्वोभयसम्बन्धेन । समवायस्यैकत्वेऽपिसंसर्गतयाभेदेनाकांक्षाप्रयोज्यत्वाप्रयोज्यत्वयोरूपपत्तेरितिदिक् ।

---

# व्याकरणेऽनुसन्धानसम्भावनाः समस्याश्च

बुद्धिं योऽष्टगुणां ददाति सदयं भक्ताय सक्तात्मने
तत्प्राप्त्या चिदचिद् विभागमहितं विश्वं समुद्भासते ।
योऽन्तःस्थो वहिरेत्य योगकलया तत्त्वान्तरङ्गत्रयं
दत्वा पूतमनस्कतां वितनुतां नारायणः सोऽचिरात् ॥

निखिलविश्वस्य सनातनं सर्वविधकल्याणसाधकं च साहित्यं मन्त्रब्राह्मणात्मको वेद एव, व्याकरणन्तस्याङ्गतया प्रशस्तं विराजते, तथाहि—गोपथब्राह्मणे प्रोक्तम्—'षडङ्गविदस्तत्तथा धीमते' इत्युक्त्याब्राह्मणेन निष्कारणोधर्मः षडङ्गो वेदोऽध्येयोज्ञेयश्चेति, भगवतोमहाभाष्यकारस्य सदुक्त्या वेदस्य षट् संख्यकान्यङ्गानि सन्तीति ज्ञायते । तानि च शिक्षाः कल्पः, निरुक्तम्, छन्दः, ज्योतिषम् व्याकरणञ्चेति प्रतिष्ठितानि । इतोऽप्यधिकं वाक्यं भाष्यकारस्य तदवधारणीयं सर्वैरपि शास्त्ररसिकैर्यत् षट्ष्वङ्गेषु व्याकरणस्याङ्गान्तरापेक्षया प्राधान्यमिति प्रधानञ्च षट्ष्वङ्गेषुव्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति; इति यथा शरीरस्य रक्षार्थमङ्गानां महत्यावश्यकता तथैव वेदानां स्वरूपस्य तदर्थस्य चापगमाय शिक्षाद्यङ्गानामस्ति महत्प्रयोजनं तर्हि मुखस्थानीयस्य व्याकरणस्योपादेयता आवश्यकता कीयतीति सर्वथा विशिष्टा विलक्षणाचेति न विसंवादः ।

वस्तुतो लौकिकश्शास्त्रीयश्च निखिलोऽपि व्यवहारश्शब्दाधीन एव, स च शब्दः साधुरेव सदर्थं प्रयोजकः, एवं विधविचिकित्सायां किमिदं व्याकरणम् ? किञ्च तस्य दर्शनत्वम् ? यथोक्तं हि साधुरेवशब्दः सदर्थं प्रयोजकः, शब्दसाधुत्वविषयाश्रुतिरेषा व्याकरणपदाभिहिता महिता विज्ञैः, अपरञ्च तस्य दर्शनत्वे प्रतिपादिते सति प्रयोजनन्तदध्ययनस्य फलीभूतं भवत्येवेति पाणिनीयव्याकरणे सकलदर्शनानां तदीय सिद्धान्तानामूहापोहात्मकमनुसन्धानं शाश्वतमेवेत्यवधारणीय भवति ।

अस्तु एतावता व्याकरणस्योपादेयता तदध्ययनस्य च समेषां शास्त्रज्ञानां शास्त्राध्ययनप्रवृत्तिशीलानां सकलशास्त्रविषयकानुसन्धातॄणां परमावश्यकता पाणिनीयव्याकरणानुरोधिसाधुत्वप्रक्रियाज्ञानं दर्शनभूमितया व्याकरणस्य सर्वविद्या पारिषद्यं सर्ववेद पारिषद्यञ्चेति कथमितिविषये प्रभूतानुसन्धानसामग्री समवहिता विद्यते नात्र संशयः अत इदं वक्तुं शक्यं यत् साधुशब्दबोधक शास्त्रत्वं शब्दगतसाधुत्वबोधकशास्त्रत्वम्वा व्याकरणस्य सामान्यलक्षणं प्रवृत्तं पर्यवसितञ्चेति। ततोऽन्यत्सर्वमसाधुशब्दज्ञानं प्रकृति प्रत्ययादि ज्ञानं परिचायक फोटावेवं प्रविष्टं न लक्षणशरीरे निविष्टं मन्यते। तथाहि—व्याक्रियन्ते = व्युत्पाद्यन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्कृत्य ज्ञायन्ते येन तद् व्याकरणमिति करणव्युत्पत्त्या असाधुशब्दावधिक साधुशब्दकर्मक पृथक्कृतिपूर्वकसाधुशब्दविषयक ज्ञानकरणं व्याकरणमित्यर्थो योगशक्त्या लभ्यते।

यथा गावी-गोणी-गोता इत्यादिभ्योऽसाधुशब्देभ्यो गो इति साधु शब्दस्य पृथक्कृत्य बोधनम्। साधुत्वज्ञानविषयासैषा व्याकरणस्मृतिरिति वाक्यपदीयकारोऽभिभाषते। इत्थं सकलशब्दप्रकृतिभूत धातुपाठज्ञानं तत्तत्साधुत्वपूर्वकं सर्वं साधुशब्दज्ञानमुपपद्यते। व्याकरणस्य स्वरूप परिचयानन्तरं दर्शनत्वं विमर्शं पथमारोहत्येव। तत्र दृश्यते आत्मतत्त्वं विचार्यते येन तद्दर्शनमिति निर्वचनेनात्मतत्त्व विचारक शास्त्रत्वं दर्शनलक्षणमित्येव सामान्यतयाऽन्यदर्शनेष्वपि प्रथितं विद्यते। भारतीयसमग्रदर्शनानामेष स्वभावो यत् सर्वेषां जीवानां कृते कल्याणमार्गं दर्शयेत् स च मार्गं आत्मतत्त्व विवेचनात्मक एव।

अत्र व्याकरणस्यापि परमं प्रयोजनात्मन्तत्त्वविवेचनमेव शब्द ब्रह्मापरपर्यायस्फोटात्मना, तथा च श्रुतिः—'सर्वं खल्विदं ब्रह्म', 'अयमात्मा ब्रह्म' इत्याद्याः श्रुतयः ब्रह्मसूत्राणि च दर्शनपदेन व्यवह्रियन्ते। एतद् विषये व्याकरणं पश्चात् पदं न भवति यतश्चास्तीदमपि आत्मतत्त्व विवेचनम्, उक्तञ्च—

दृष्ट्वारूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धानृते दधाच्छ्रद्धां सत्त्वे प्रजापतिः॥ इति।

प्रजापतिः शब्दोपादानक सृष्टिविधाता वैयाकरणः, संमिलिते सत्यानृते पृथक्कृत्य परमार्थभूते वस्तुनि श्रद्धामसत्येऽनात्मनि अश्रद्धां प्रत्यतिष्ठिपत् इत्यर्थिकयाऽनयाश्रुत्या व्याकरणस्य दर्शनत्वं प्रतिपादित मेव ।

एवं च नाम रूपे व्याकरणपि 'इति श्रुतिरपि संश्लिष्टयोः शब्दार्थयोः पृथक् कृतिं साधुशब्दात्मिकां बोधयन्ती व्याकरण सत्याऽसत्यविवेचनलक्षणं दर्शनत्वं सुस्पष्टीकृतवती । यथा—प्रकृति-प्रत्ययौ असत्यौ तदपेक्षया पदानि सत्यानि, ततोऽपि वाक्यानि, पश्यन्त्यादिकञ्च सर्वं जगदसत्यम् सर्वापेक्षया पराख्यं वाग्ब्रह्मसत्यमित्येव निगूढं तात्पर्यम् । वाग्वै ब्रह्म, वाग्धिब्रह्म, ते मृत्युमतिवर्तन्ते ये वैवाचमुपासते 'इत्याद्याश्श्रुतयोऽपि वाचोव्याकृति रूपोपासनया व्याकरणदर्शनत्वं सम्यक्प्रतिपादयन्ति ।

एतत्सर्वमनुसन्धातॄणामनुसन्धेय विषयः । व्याकरणं न केवलं व्याकरणाध्ययनशीलानांकृतेऽनुसन्धेय विषयः किन्तु समेषांकृतेऽपि । सम्प्रति व्याकरणमतिक्लिष्टंकठिनम्वेति कृत्वा नोपेक्षणीयम् । व्याकरणस्य वेदार्थप्रतिपादत्केनेतरशास्त्रार्थं प्रतिपादनपरत्वात् सर्वथातदध्ययनानुसन्धानस्य महत्यावश्यकतावरीवर्ति । विशेषतोऽद्य यादृशां संस्कृतज्ञानां शास्त्राध्ययनाध्यापनानुसन्धानशीलानां दशा दरीदृश्यते सावश्यमेव दयनीया चिन्तनीया चेति । तत्र कारणमिदमेव यत् केचनैव विरलाः संस्कारसम्पन्न भाग्यवशादेव व्याकरणमधीत्य शास्त्रान्तरेषु विज्ञाः ।

प्राचीना या प्राणाली व्याकरणाध्ययनस्य समीचीना आसीत् तदद्य विलुप्तप्राया प्रतिभाति, अतस्तद्रक्षणंयथाशक्यमादरेण कर्तव्यबुद्धया विधेयमेव, अन्यथा कालान्तरे सामान्यप्रक्रिया प्रतिमापि स्वप्नायितास्यात् । येन व्याकरणाध्ययनेरतास्तेषान्तु प्रथममिदं कर्तव्यं विशेषः यत्तेऽवश्यमस्यपाणिनीय व्याकरणप्रक्रिया ज्ञान सम्पादनपुरस्सरं मुख्य प्रयोजनान्तं यावदुपासनीयमिदं व्याकरणं कथमपिनोपेक्षाविषयतां नयन्तु ।

अद्य जागरणमेतद् विषये परमावश्यकं यत् पाणिनीय व्याकरणस्यैव कथं वेदाङ्गत्वम् ? पाणिनीयप्रक्रियानुसारं प्रयोगा लक्ष्य ग्रथेषु कृतास्सन्ति न वा ? यदि न कृतास्तर्हि कथन्तत्र तथानुसन्धात्मना संस्कारः तत्रत्यप्रयोगाणाम् । बहुधा यथा भट्टोजिदीक्षितपादाः विभिन्न काव्यप्रयोगाणां वैयाकरणसिद्धान्तकौमुद्यां विचारं कृतवन्तः तत्र केषाञ्चित् प्रामाण्यं केषाञ्चिदप्रामाण्यं प्रामाणिकं वा तत्तद् वाक्यघटकप्रयोगं प्रदर्शितवन्तः । एवमेव लौकिकप्रयोगा विहिता विभिन्नैश्शास्त्रज्ञैस्तत्तच्छास्त्रेषु समुचिताः पाणिनीय नियमप्रक्रियानुरूपा के प्रयोगा न सन्ति ? कथञ्च चैतेषां पाणिनीयत्वं सर्वमनुसन्धेयविषयतामर्हन्ति । पुराणेष्वपि महाभारतादिष्वपि च पाणिनीयाः प्रयोगाः पाणिनीया प्रक्रियानुसारमनुसन्धेया एव । लोकव्यवहारेऽपि शास्त्रव्यवहारेऽपि च व्याकरणसाधुत्वानुरूपा एव साधवश्शब्दाः प्रयुक्ता स्युरिति सत्प्रयासरतैर्भाव्यमेव ।

पाणिनीयव्याकरणेऽत्यन्तः पूर्ववर्ति चान्द्रेन्द्रशाकटायनप्रभृति व्याकरणापेक्षया किं वैशिष्ट्यं वैलक्षण्यञ्चेतिसर्वथाऽनुसन्धेय विषयताऽनुसन्धातृणांकृते सम्यगालोचनाविषयः । अथ च पाणिनीयाष्टध्याय्या यावन्ति सूत्राणि तावतां प्राङ्नव्यऽवैयाकरणटीकाऽकारैर्व्याख्यासम्यक्कृता न वेति ? व्याख्यातृषु भट्टोजिदीक्षित प्रभृति प्राचीनेषु कैयटादिषु नागेशप्रभृतिषु नव्येषु च को विशिष्यते ? तथा च—

संज्ञासूत्राणि यानि-यानि परिभाषासूत्राणि विधिसूत्राणि नियमसूत्राणि अतिदेशसूत्राणि अधिकारसूत्राणि च पाणिनेः पूर्ववैयाकरणसूत्रेषु सामञ्जस्यमसामंजस्यं वा भजन्तीति सम्यगालोचनाविषयोऽनुसन्धित्सुनांकृतेऽद्यापि । यद्यपि नैकविधक्षेत्रेषु विभिन्नैर्विद्वद्भिरनुसन्धानकार्याणि कृतान्येव तथापि सम्प्रत्यपि प्रक्रियाविषयाः सम्यगनुसन्धातुमपृष्टा अनुसन्धेयतामर्हन्ति । कोऽपिविषयोऽनुसन्धात्रागृह्यतां परमोदेयतया तत्रावश्यमेव व्याकरणस्मृतिरूपकारकतया तत्रानुसन्धानसाधनीभूतासतो शास्त्रान्तर विषयकानुसन्धाने सर्वतो भावेनोपयोगितां पुष्णाति येनानुसन्धानागृह्यमाणेऽनुसन्धेयविषयः याथातथ्येन प्रकाशितस्सन्नैहिकामुष्मिकफलकतया परमोत्साहोऽध्ययनशीलानां कृते परमपदार्थपदवीं नयति ।

# व्याकरणवद्-वेदान्तेऽनुसन्धानसम्भावनाः समस्याश्च

वेदान्तो नाम वेदशिरोभागः, उपनिषद् विद्या, वेदान्तसूत्राणि, गीताशास्त्रम्, वेदशिरोभागानुगामि पुराणेतिहासादयश्चापि, तत्र कियती कीदृश्यनुसन्धानसम्भावनेति विषये नाल्पेन कालेन विचारः परिवर्तितुं शक्यः, अद्यावधि वेदान्तशास्त्रे प्रभूता गवेषणा विवदमानविषये पूर्वोत्तरपक्षोपपादनपूर्वकं सिद्धान्तप्रतिपादनानातमाचार्याणां श्रीमज्जगद्गुरुशंकराचार्याणां श्रीरामानुजाचार्याणां निम्वार्काचार्याणां वल्लभाचार्याणां श्रीमाध्वाचार्याणां चैतन्यमहाप्रभुप्रभृतीनां प्रावर्तन, तत्तदनुगामिनामन्येषामप्याचार्याणां टीकासमालोचनाकाराणामपि नाल्पप्रयासोऽभवत्, यद्यपि तैराचार्यैं स्वसिद्धान्तानुसारं वेदान्तशास्त्रतत्त्वं प्रकाशमानोतम् सुव्यवस्थापितं प्रवर्तितञ्चापि, तथापि तत्र तत्रानुसन्धातॄणांकृते न विषयाभाव इति वक्तुमुक्तम् ।

प्रायः सर्वैरपिविद्वद्वरेण्यैराचार्यैरैहिकामुष्मिकफलप्रदसिद्धान्तप्रतिपादने भूयांसाः सत्प्रयासा विहिता एव सन्ति, तेषां तथाविधानन्तप्रयासेष्वपि समीक्षा सर्वतोभावेन नाद्यापि कुत्रचिल्लभ्यते । विशालकायस्य वेदान्तशास्त्रस्य यावत्यस्समालोचनास्सञ्जतास्सम्यक्तया प्रकाशिताश्च तावतीष्वपि समालोचनासु देशकालपरिस्थित्यनुरूपा समालोचना गवेषणाद्यापि महन्मूल्याय प्रकल्प्यतामनुसन्धातृभिर्यदि तदा लोकपरिपस्थौ साम्प्रतिकानां विविधानां समस्यानां सम्यक् समाधानं लोकहिताय स्यादेव ।

अतः याः सम्भावना वेदान्तानुसन्धानविषयिष्यस्ता अपि सावधानतयाऽनुसन्धानकर्तृभिरवश्यमेव गवेषणापथमानेयाः । तत्र च तादृश्यः प्रक्रियाः गवेषणाभिधाश्चिन्तनीया येन मानवजीवनस्य परमलक्ष्य सिद्धौ परमोपयोगिन्यो धारणाः भावनाः सत्संस्काराः सद्व्यवहाराः प्रेमानुरागः, दयालुता परोपकारः अहिंसा,, समता, एकता सुहृद्भावनाः गुरुशिष्य पवित्रपरम्परा, मातृपित्रोर्भक्तिः, सर्वत्र भ्रातृभावः सर्वाङ्गनासु यथावयः स्वसृ-मातृ-दुहितृ भावाश्च प्रपद्येरन् । तथाविघ विशिष्टानुसन्धानकार्येणात्मनः परेषाञ्चापि महानुपकारः सत्कीर्तिः सदाचारदर्शनम् निखिलजनहिताय सरला सरसा पवित्रधारा

भक्तिभावभाविता प्रवाहिता यथा स्यादयमेव वेदान्तप्रतिपाद्यः पन्था परमधर्ममयोद्यसमपेक्षाविषयो विषमपरिस्थिवस्यां लोके।

एतदपि सत्यं यत् सार्वभौमसिद्धान्तसंस्थापनं विभिन्नैराचार्यैः कृतमेव वेदान्तानुसारम्। येनैवं विभिन्नास्सम्प्रदाया दृष्टिपथमवतरन्ति परस्परञ्च विवदन्तस्तत्तत्सिद्धान्तप्रचारका सम्प्रत्यपि, तत्र तत्र वेदान्तविषये भूयांसो विवादा जीवात्म-परमात्मजगदादिविषयका न स्थैर्यमागता न च स्थैर्यसम्भावना प्रतिभाति, तत्र कश्चनाग्रहो दुराग्रहोवा प्रचुरतया दृश्यत एव परमेतदपि सत्यं यत् सर्वेऽपि वेदान्तशास्त्रप्रवर्तका वा स्युः सूत्रव्याख्यातारः टीकाकाराश्च श्रुतिमूलकतया संहिताऽऽगमानुरोधि पुराणानुरोधि सिद्धान्तप्रकाशका एव मन्यते, यतस्सर्वेऽपि श्रुतिवचनप्रमाणतर्कैरेव युक्तियुक्तं सिद्धान्तंस्वं सर्वोत्कृष्टं वर्णयन्त आत्मानं धन्यम्मन्यन्तेऽपि।

एतादृशेषु विसंवादेषु प्रवृत्तेषु कश्चनापरपरिहारपन्थाः सरलः सर्वलोकप्रियः सर्वजनमान्यः सर्वथा शास्त्रसम्मतः परस्परमिर्ष्याद्वेषदम्भादिमुक्तः कालक्रमानुसारी शास्त्रपरम्परा वंशपरम्परोभयविध प्रक्रियया लोकव्यहारोपयोगी सिद्धान्तः वेदान्तेषु—तदीय विभिन्न भाष्यटीकादिषु प्रच्छन्नस्तिरोहितः सम्यगनुसन्धेय एव शोधच्छात्रैरात्मप्रसादायापि। येनाद्वैतवादस्य विशिष्टाद्वैतवादस्य, शुद्धाद्वैतवादस्य द्वैताद्वैतवादस्य, द्वैतादिवादस्य च रहसि रहस्यं प्रकाशमानीयजगदखिललीलानुरूपं विज्ञाय विस्तार्य वा प्रपञ्चयित्वा वा सकल सम्प्रदायसिद्धान्तप्रसवनविधिमुपयोगितया यथाधिकारि यथा योग्यं यथाकालं यदादेशं यथासंस्कारानुरूपं परमेश्वरेच्छयैवलीलयाऽऽकलितं सदा प्रतिकल्पमिति न कश्चन सन्देहो विवादो वा मिथो विज्ञापनीयोऽनुसन्धानकार्यं परायणैश्शोधच्छात्रवर्गैरिह।

एवंविध प्रपञ्चलीलाविस्तारकस्य शिवस्य विष्णोः हिरण्यगर्भस्य च यथाकल्पं सर्गस्थितिलयप्रक्रियाऽनुरूपमेव कार्यमखिलं प्रवृत्तम्भवति, तदीय विभूतोनाञ्च तत्तदवसरे लोके जन्म ग्रहणमाचार्यात्मनादिरूपेणातीव महत्वं ख्यापयतीति सर्वमनुसन्धानस्य विशालपादपः प्रतिभाति यस्यैकस्याशाखायाः उपशाखाया शाखांशस्योप-

शाखांशस्य चान्वेषणं गवेषणं सर्वथा परम फलप्रदम्भवतीति निश्चप्रचम् ।

न केवलं वेदान्ते जीवात्मपरमात्मवाद एव मुख्यो विषयः किन्तु जीवात्मसंस्कारविषये जीवात्मपरमात्म सम्बन्ध-समवाप्तिविषये ज्ञानविषये तथा तयो विश्लेषविषये संयोगप्राप्तिविषये तदैक्याधिगमविषये स्वस्वरूपनिर्धारणविषये परमात्मस्वरूपनिर्धारणविषये विरोधिस्वरूपज्ञानविषये विरोधिपरिहारविषये, उपायविषये फलस्वरूपादिविषये चापि बहूक्तं विद्यते यदधिगमो जीवने परमावश्यकः विशेषतोध्ययनाध्यापनानुसन्धानकर्तृणांकृते तु महानुपदेशस्तत्रसन्निहितो वर्तते । तदनुसारमाबालवृद्धानां नरनारीणां ब्राह्मणक्षत्रियविटशूद्रादिसमग्रमानवानांकृते परमोपाय आत्मनउद्धाराय लोके भौतिकाध्यात्मिकसुखसम्पत्तिलाभाय च सुव्यवस्थितं तत्त्वं विहितत्तिष्ठति, यस्यानुसन्धानमतीवावश्यक सर्वजनहिताय ।

यद्यपि विभिन्नशोधविषयेषु संसक्तानामनुसन्धातृणां विषयप्रतिपादनदृशा वेदान्तस्य न कश्चनोपयोगस्तथापि यादृशोधिकारीशोधकर्ताऽनुसन्धाता रिसर्चस्कालर वाऽनुसन्धानाय सर्वतोभावेन योग्योऽपेक्ष्यते तथाविधानुसन्धातुरात्मनः संस्कारः बुद्धेः संस्कारः, मनसस्संकारा वाचां संस्कार इन्द्रियसंस्कार कथं स्यादिति विषये वेदान्तः सर्वथा उपयुक्तः परमोपायः साधनञ्च वक्तुं शक्यते येन स्मृतिः प्रतिभा-कथं प्राप्येदेतत्सर्वं तत्र तत्र वेदान्ततथ्याध्ययनेनाधिगतं स्यादेव । तदर्थमनुसन्धानविधौ वेदान्तस्योपयोगिता यथा साक्षाद् वेदान्तविषयानुसन्धातॄणां तथाऽन्यविषयानुसन्धातॄणामपि मन्मतेनापि समीचीनं भाति । भवताज्जीवनेऽनुसन्धानस्य यन्मूल्यं तद् रक्षार्थं स्वाभिमानरक्षणं कर्तव्यपालनपूर्वकमेव भौतिकाध्यात्मिकसुखसम्पदावाप्तिः शक्या नान्यथा । इदानीं वेदान्ते विविधाः सम्भावना परिशीलिता यथा तथा समस्या अपि नाल्पीयसी विद्यते ।

वेदान्त विद्याधिगमाय न्यायशास्त्रस्य व्याकरणस्य मीमांसायाश्च यथास्थलं सांख्ययोगयोः पुराणेतिहासादीनामध्ययनमावश्यकमेव, परमल्पीयसि वयसि सर्वं कथं शक्यमित्यपि विचारणीयमेव, तत्र सार-

भूततत्त्वमात्मन: सामर्थ्यानुरूपं कथङ्कारं प्राप्यतामित्यत्र कश्चन सत्प्रयास विधेय एव। प्रमुखा उपनिषद: का: ? यासामध्ययनमावश्यकम् ?

वेदान्तसूत्रभाष्यकर्तृषुं तत्तट्टीकाकर्तृषुच परमश्रद्धापरमास्था दृढभक्तिस्तत: परमेव गुरुमुखादध्ययनं यथाविधि कृत्वा मननं स्वाध्याय प्रवचनादिकञ्च नियमत: कथं प्रवर्तेत् तदवसर: कथं लभ्येत् विशिष्टसूत्रेष्वपि स्वसंस्कारानुरूपोऽनुराग: संयमो वाचामित्थं-समग्रैरिन्द्रियैस्सहापेक्ष्यते ये नाल्पेनायासेन भववाधाविभञ्जनमपि स्यात् जीवनेऽन्तरायबाहुल्यस्य च परिहारोपायश्चापि तत्र तत्र यथा-शक्यमवश्यञ्चिन्तनीयश्शोधच्छात्रै:। साधनातपश्चर्या त्याग: काम-क्रोधादि दोषनिरास: तीक्ष्णतामसोच्छिष्ट भक्ष्ययेयचोष्य पदार्थ जात-स्यापि परिहार: समय सदुपयोगश्च: शोधच्छात्रैस्सर्वदा विधेय एव। क्षणात्मकोऽपिकाल: सदुपयोगाय ग्राह्यो न स त्याज्य: कदापि। तदैवा-नुसन्धानं श्रवणानन्तरं सम्यग्धारणं प्रतिफलितं भवति यत: डुधाञ्-धारणपोषणात्मक घातुना संपूर्वकेण भावे करणेऽधिकरणे चार्थेल्युटि-कृते सति रूपं सिद्धयति, सदाऽवहितेन मनसाऽनुसन्धात्रा भाव्यम्। तदावश्यं शोधकार्यं यथाविधि यथासमयमेव सम्पूर्णतां भजिष्यति।

प्राचीनकालेऽपि ऋषिमुनयोऽनुसन्धानं कृत्वैव विविधान् रहस्य-भूतानर्थान् वेदान्तादीनां समस्त स्यलोकस्य हिताय प्रकाशमानीतवन्त:। तदीयानेवांशान् कतिपयान् जीवनोपयोगिनो यथायोग्यमनुसन्धाय कृतिनस्स्युश्शोधच्छात्रा इति शुभकामना:।

## अनुसन्धानपदार्थः

अनुसन्धानमपि बाह्याभ्यन्तररूपेण द्विधाविभक्तम्। प्राचीनकाले शास्त्रश्रवणानन्तरं विशेषतो मननं निदिध्यासनादिकं प्रवर्तते स्म तदेवाभ्यन्तररूपतया परिगीयते। तदानीमपि उपदेश्यानधिकारिण उद्दिश्य प्रवचनमाध्यमेन स्वाध्यायाभ्यास: प्रचुरतया प्रचलित आसीत्। तदनन्तरमाचरणमेव प्रमुखं लक्ष्यमासीत् सम्प्रति न तद्भाव: किन्तु भाग्यवन्त: संस्कारोपेता: केचनविद्वान्स: समधीतव्याकरण

काव्यकोशदर्शनशास्त्राः वेदार्थानुसन्धानपरायणाः वेदान्तवाक्यानुसन्धानद्रवितान्तःकरणाः सम्यगभ्यासवासनामय प्रकृतयो विराजन्ते। बाह्यानुसन्धान प्रक्रियाऽद्यतनी प्रत्यक्षैव, या शोधच्छात्रैरङ्गीकृता विद्यते। परमिदमपि सत्यं यत् कस्यचिदपि शोधविषयस्य सम्यगनुसन्धानन्तदैव सफलं यदा तदाधारित ग्रन्थस्य सम्यगध्ययनं स्यात्। यदि कथञ्चित्कारणविशेषान्नतथाऽध्ययनन्तदाऽवश्यमधीत्यैवानुसन्धानं कर्तव्यम्। येनानुसन्धेय विषयस्य याथातथ्येनावगाहनमालोचनं कर्तुं प्रभवेदनुसन्धाता। तत्रापि संस्कृतभाषाज्ञानमपि न प्रयासे प्रमादो विधेयः।

प्रायोऽनुसंधानं कस्यचिद् ग्रन्थस्य ग्रन्थान्तरेण सह तुलनात्मकमध्ययनं वा तदीय कतिपयांशस्थ समीक्षणम्, क्वचित् कस्यचिद् ग्रन्थस्यटीकाया अन्यया टीकया सह तुलनात्मकमध्ययनं क्वचिच्च शास्त्रीयं तथ्यानुसन्धानम् क्वचित् ग्रन्थस्थ प्रतिपाद्यविषये बहुव्याख्यातॄणां विवादविषयकं समीक्षणं तत्र मौलिकमपि तथ्यभूतं प्रकाश्य शोधच्छात्रः कृतीभवति।

क्वचिद्धि पाण्डुलिप्यां विद्यमानस्याप्रकाशितस्य सम्वादनं क्रियते तत्र न केवलं प्रतिलिपित्रय पाठभेदपर्यालोचनमेवानुसन्धानं किन्तुतदीय प्रतिपाद्यविषयस्य संक्षेपतोऽध्ययनं विधाय स्वीय विचारानुसारमेव ग्रन्थानुगतविषयस्य विलक्षणतयाख्यापनं शोधकर्मणि महत्वाधायकम्।

वस्तुतस्तु वेदान्ते तत्प्रतिपाद्ये जीवात्मनि परमात्मनि जगति च ज्योतिश्शास्त्रस्य, महत्त्वपूर्णंस्थानं विद्यते जीवात्मनः संस्कारे ज्योतिश्शास्त्रस्य जीवने प्रवर्तते सुमुहूर्त्तानुसारन्तस्य जीवनोपयोगिसकलैश्वर्यसम्प्राप्तौ ग्रहणगणयोगेन बलाबलविचाराय तदुत्तरं परमात्मनोऽपि साक्षात्कारायाध्ययनाध्यापनाय यजनयाजनादिषु समस्तविधिनियोजितफललाभायापि ज्योतिःशास्त्रमुपकारकं वेदान्तस्य, वेदान्तोऽपि नैक क्षेत्रेषु ज्योतिःशास्त्रमुपकरोति, एवान्यान्यप्यङ्गानि वेदस्य शिक्षाकल्पनिरुक्त छन्दोव्याकरणादीनि वेदान्तोपादेयतां बिभ्रति, वेदान्तोऽपि तानि प्रति तथैव सम्बन्धमुपपाद्य परमार्थं सारनिरूपणे

प्रशस्तो मन्यते । एवमलङ्कारशास्त्रमपि पुराणेतिहासादीन्यपि न वेदान्त विरुद्धकार्यंकारी किन्तु वास्तविक रूपेण शाश्वतमनुगामिन्येव सर्वाणि, एवं तानि प्रति वेदान्तस्यापि पूर्णानुकूल्यमेवफलजनकत्व-मभिहितं सर्वत्र ।

इत्थं कथङ्कारङ्कस्य शास्त्रान्तरस्य मीमांसादेः सांख्यस्य न्यायवैशे-षिकयोर्योगदर्शनस्य पूर्वोक्तानाञ्चाङ्गानामितिहासपुराणादीनामुप-कारकत्वमुपकार्यत्वम्वा सर्वमेतदवश्यमनुसन्धेय विषयतयावधारणीयं-शोधच्छात्रैः । तदेव हि वेदस्य पारमार्थिकदृष्ट्या वेदता लौकिक-दृष्ट्या चोपयोगिता सर्वप्रिया सर्वजनहितावहा सेत्स्यतीति सत्यम् ।

उक्त प्रस्ताविते विषये व्याकरणम् तत्रानुसन्धानम् तत्रापि सम्भावनाः ततः समस्याश्चेति चत्वारोऽनुसन्धेयाः पदार्थाः यथाक्रम-मेवाधुना विमर्ष्टुं स्मृतिपथमानोयन्ते ।

प्रस्तावितक्रमे प्राथम्येन व्याकरणपदार्थे **विमर्शाय प्रस्तूयते ।** अत्रैवेदमपिवक्तुं शक्यते प्राधान्येन यद् यावद् विषयाधिकारि सम्बन्ध-प्रयोजनात्मकमनुबन्धचतुष्टयं प्रस्तुतेऽनुसन्धेयविषयेऽनुसन्धातॄणां शोधकार्यंप्रवृत्तिकारणतया न बोध्यन्ते तर्हि सर्वोऽपि विमर्शप्रयासो न सार्थक्यं भजिष्यति । अतस्तदप्यनुबन्धचतुष्टयं संक्षेपतः प्रस्तो-तव्यमेव । तद् यथा—

> प्रस्तुतो हि चतुः पदार्थात्मा व्याकरणेऽनुसन्धान सम्भावनाः समस्याश्चेति विषयः सपदकृत्यं तज्ज्ञानमेव प्रयोजनम्, तज्जि-ज्ञासुरेवाधिकारी, शोधकर्ता, अनुसन्धेयानुसन्धायकभाव सम्बन्ध एवानुबन्धचतुष्टयमत्र तद्विषयकानुसन्धान प्रवृत्तिप्रयोजकम् ।

अस्तु, प्रथममनुसन्धेयविषये प्रथमोपात्तं व्याकरणमेव किमिति जिज्ञास्यम् ? तत्र शब्द साधुत्वान्वाख्यायकं व्याकरणमिति सामान्यलक्षणम्, येन व्याक्रियन्ते=व्युत्पाद्यन्तेऽसाधुशब्देभ्यो विविच्य पृथक्क्रियते पुण्यजनकतया प्रयोगार्हः विषयीक्रियंते साधुशब्दा अनेन तदेव व्याकरणपदार्थः । वि-आङ् पूर्वकं कृ धातुः डुकृञ्-करणे इत्यस्मात् करणाधिकरणयोश्चेति पाणिनीयसूत्रेण ल्युटि

'युवोरनाकौ इति सूत्रेणादेशे गुणेरपरे प्रातिपदिकत्वात्सुपि स्वादि कार्ये व्याकरणशब्दो निष्पद्यते ।

तच्च व्याकरणं न केवलं पाणिनीयमेव किन्तु ततः पूर्ववर्तिनामपि ब्राह्मेन्द्र चान्द्रकात्स्यंकृस्न बार्हस्पत्यापिशालिकाश्यप-गार्ग्य-गालव-चाक्रवर्मण भारद्वाज-शाकटायन-शाकल्य सेनक स्फोटायनादीनां व्याकरणेषु सत्स्वपि साम्प्रतं भारतोयशब्दविद्यायाः पुरातनतमं व्याकरणं पाणिनीयमेव, महतीयं परम्परा वैयाकरणानां ज्ञायते । वर्णसमाम्नाय मूलकत्वात्पाणिनीयव्याकरणस्यैव वेदाङ्गत्वप्रतिपादनन्ते नैवास्य सर्वापेक्षयाऽभ्यर्हतापि—

१. पुरातनानि व्याकरणानि पणिनीयव्याकरणापेक्षया कथन्नोपादेयानि ? इत्येका प्रथमा सम्भावना शोधकार्यकर्तॄणां कृते ।
२. पाणिनीयव्याकरणस्यैव वेदाङ्गत्वे प्रमाणयुक्तीनामनुसन्धानविषयिणो द्वितीया सम्भावना ।
३. पाणिनेः पूर्वं वेदानां पञ्चाङ्गत्वापत्तौ तदानीं षडङ्गत्वप्रतिपादने का वाचो युक्तिरिति तृतीयाऽनुसन्धान सम्भावना ।
४. पाणिनेः पूर्ववर्तिनां व्याकरणानां किं प्रक्रिया स्वरूपमिति सम्भावना ।
५. पाणिनीयव्याकरणस्य पूर्वोक्तैर्व्याकरणैस्सह समीक्षायाः सम्भावना ।
६. तेषु व्याकरणेषूपलब्ध व्याकरणस्याध्ययनविषयकसम्भावना,
७. तेषां व्याकरणानामध्यापनपद्धतिः प्रक्रिया च क्वचिल्लभ्यते-न वेति सम्भावना ।
८. अद्यत्वेऽपाणिनीय व्याकरणानामुपयोगिताया ह्रासः तदध्ययनस्य व्यवस्थायाः साधनस्य वाऽभाव इति सम्भावना ।
९. प्राचीनैरद्यतनैश्चोक्तविषये कश्चनानुसन्धानविषयकः प्रयासो विहितो न वेति विषयानुसन्धान सम्भावना ।
१०. तत्तद् व्याकरणानां त्प्रणेतॄणाञ्च कालनिर्धारणसम्भावना ।

## पाणिनीय व्याकरणेऽनुसन्धानसम्भावना

११. पाणिनीयव्याकरणव्याख्यातृषु प्राचीनाः के ? इतिविमर्शं सम्भावना।

१२. तत्रापि प्राचीना-प्राचीनतरा-प्राचीनतमाः के ? इत्यपिशोधच्छात्राणां कृतेऽनुसन्धान सम्भावना।

१३. नव्येषु केषां गणना तत्रापि नव्य-नव्यतर-नव्यतमादिस्वरूप-निर्धारण सम्भावना।

१४. पाणिनीयव्याकरणे शब्दसाधुत्वानुरूपप्रक्रियाया निर्वाहः प्राचीनानां नव्यानां समानरूपः भिन्नो वा क्वचिदंशेवासमानता-विषमता वेति सम्भावना।

१५. प्राचीनानां नव्यानां च मतद्वये पाणिनीयव्याकरणे दार्शनिक तत्त्वस्फोटाऽपरपर्याय शब्दब्रह्मविषये मतैक्यं मतभेदो वा ?

१६. शाब्दिकसिद्धान्ते पाणिनीयव्याकरणमनुरुद्ध्य पदमञ्जरी न्यासकार-काशिकादि कर्तृणां पक्षस्थापने समान-प्रक्रिया परस्परं प्रवर्तते न वेति शोध सम्भावना।

१७. पाणिनीयव्याकरणस्याध्ययने काशिकादि ग्रन्था उपयोगिनः ? वैयाकरण सिद्धान्तकौमुदी वा ? उपयोगिनीति शोधसम्भा-वना।

१८. भट्टोजिदीक्षित-हरदत्त-माधव-कैयटादि व्याख्यानं सामञ्जस्य-मुपस्थापयति न वा ? इति शोधसम्भावनायाः प्रमाणयुक्तिपूर्वकं गवेषणा विषयता।

१९. पणिनीय व्याकरणव्याख्यातृषु भट्टोजिदीक्षित-हरिदीक्षित-नागोजिभट्ट प्रभतीनां को विशेष्यते ? तत्र वैशिष्ट्ये प्रौढ़-मनो-रमा-शब्द रत्न-शब्देन्दुशेखरस्थ स्थलविशेषाणां समालोचनायाः सम्भावना शोधच्छात्राणां कृते।

२०. भगवतः पतञ्जलेर्भाष्यकारस्यानुगमनं नागेशेन विहितं विशेषतः ? कैयटो वा भट्टोजिदीक्षितो वा ? विहितवान्।

२१. कौण्डभट्टो, वैयाकरणभूषणसारादिकारो नागेशश्च पाणिनीय-व्याकरणमेवाधारीकृत्य वैयाकरणभूषणेवैयाकरण लघूमञ्जूषायां सिद्धान्तं समानतया विहितवन्तो विशेषतो वा ? उतवा भाष्यकाराभिमत सिद्धान्तमनुसृत्य विहितवन्तो ।

२२. दार्शनिकपक्षेऽपि वाक्यपदीयकारस्य भर्तृहरेः वैयाकरण मञ्जूषाकारस्य भूषणकारस्य च शब्दकौस्तुभकारस्य भट्टोजि-दीक्षितस्य च वैमत्यमैकमत्यम्वा ?

२३. शब्दकौस्तुभे प्रक्रियाविशेषः प्रदर्शितो वाक्यपदीयकारस्य महाभाष्यस्य चानुरूपतां भजति नवेति विमर्शः ।

२४. धात्वर्थं विचारे, प्रत्यार्थविचारे, विभक्त्यर्थ निर्णये, कृदर्थं समासार्थं निर्णये च को विशिष्यते ?

२५. परिभाषेन्दुशेखरस्या प्रकाशित टीकानां समीक्षणं सम्पाद-नञ्च ।

२६. शब्देन्दुशेखरस्य प्रशस्तटीकानां समीक्षा ।

२७. प्रौढ़मनोरमायाः शब्दरत्नस्य च प्रकाशिताप्रकाशित टीकानां सम्पादनं समीक्षणञ्च ।

२८. महाभाष्य नवाह्निकस्य प्रदीपोद्योतटीकयोस्तुलनात्मकम-ध्ययनम् ।

२९. महाभाष्यस्य न्यास पदमञ्जर्या सह समीक्षात्मकमध्ययनम् ।

३०. अष्टाध्याय्याः प्रतिपादं न्यासपदमञ्जर्य्या सहभट्टोजिदीक्षित-कृतवैयाकरणसिद्धान्तकौमुद्याः परिशीलनञ्च पृथक् पृथक् शोधकार्येत्वेन ।

३१. व्याकरणसुधानिधेर्व्याख्या ग्रन्थस्यापि प्राङ्नव्यव्याकरणेन सह तुलनात्मकमध्ययनम् ।

३२. पाणिनीय शिक्षायाः कीदृशः प्रभावः शाब्दिकसिद्धान्ते ?

## व्याकरणेऽनुसन्धान समस्याः

१. पाणिनीयव्याकरणे संज्ञा-परिभाषा-विधि-नियम-अतिदेशोधिकार सूत्रवत् पूर्वोक्तेषु व्याकरणेषु कस्य व्याकरणस्य सूत्र प्रणयनमिति कथं ज्ञातव्यम् ? पाणिनीयैः सूत्रैः सह कथञ्चित्पूर्वंतोऽशतो वा सामञ्जस्यमसामञ्जस्यम्वेतिविमर्शविधिः कथं निर्धारणीय इति महती समस्या ।

२. लक्ष्यभूतेषु काव्येषु विभिन्नेषु कस्मिन् केवलं पाणिनीय प्रक्रियानुरूपा एव प्रयुक्ताः प्रयोगास्तत्प्रकाशनपूर्वकं विमर्शितव्या एवेति विशिष्टानुसन्धानसमस्या ।

३. कस्मिन् कस्मिन् काव्ये अपाणिनीयाः प्रयोगा इतिसम्यगनुसन्धेयाः ।

४. तत्तत्काव्येषु प्रयुक्ताः पाणिनीयप्रक्रियानुरूपाः प्रयोगाः प्रक्रियाविरुद्धाश्च कथं पर्यालोचिता भट्टोजिदीक्षितप्रभृतिभिः ।

५. पुराणेषु कतिपयेषु कथमपाणिनीयाः प्रयोगा विमर्शितव्याः सर्वांशतश्च नैव शक्याः विमर्शा इत्यत्र कः सरलः साधुपन्था इत्यपि समस्या पर्यवेक्षणीया ।

६. शब्दसाधुत्वान्वाख्यायकस्य पाणिनीयव्याकरणस्य सम्यक्तया प्रौढ पठन-पाठन प्राचीन प्रणाल्यां कथं संरक्षणम् ? कथं प्राचीनायाः पद्धतेर्ह्रासपथादवस्थानं पुनः कथं शक्यङ्कर्तुं सामर्थ्याधिगम इति विशिष्टानुसन्धानसमस्या ।

७. भगवतो महाभाष्यकारस्य पाणिनीयव्याकरणस्य प्रचारप्रसारविधौ संरक्षण-सम्वर्धनविधौ च कः सुकरः समयसापेक्ष्य साध्यः सत्प्रयासः सुगमः पन्था अपि ।

८. महाभाष्ये धर्मनीतेरर्थनीतेर्लोकाभ्युदयकारि गूढोविचारः कथमधिगन्तव्य इति विमर्शितव्य समस्या ।

९. पाणिनीयव्याकरणे प्रायो बहुशश्शिष्टशब्दप्रयोगः प्रामुख्येन पाणिनिविषये कृतस्तर्हि पाणिनेश्शिष्टत्वं किमितिकथमिति तदीयाष्टाध्याय्याः प्रणयनप्रयुक्तम् ? अन्यत्रापि तद् विषये कथमुक्तप्रयोगः कृतः सम्यग् विचारणीयो विषयो येन पाणिनिमुनिप्रणीत सूत्रानुसारि प्रक्रिया प्रवर्तकानां शिष्टत्वं सिद्धयेत् ।

१०. पाणिनीयव्याकरणस्य विशेष्यसामान्यभेदेन साधुत्वद्वैविध्यं सर्वव्याकरणापेक्षया सारल्येनाल्पकालेन च निस्सन्देह ज्ञानप्रयोजकं कथम्मन्तव्यम् सर्वशास्त्रज्ञानसाधनेषु प्रथमसाधनत्वेन च कथमुपयादनन्तत्र का युक्तिः ? किं प्रमाणञ्चेति समस्याऽनुसन्धेया ।

११. अन्य दर्शनापेक्षया पाणिनीयव्याकरणदर्शनस्यैव वैशिष्ट्यं शाब्दिकैः कथमुपपादितम् ?

१२. लोकेऽर्थं प्राधान्यमादाय न्यायवैशेषिकयोः प्रवृत्तिः ज्ञान प्राधान्येनान्यदर्शनानां प्रवृत्तिः पाणिनीयव्याकरणस्य तु शब्दार्थप्राधान्येन ज्ञानप्राधान्येन सर्वतो भावेनैव प्रवृत्तिरित्यत्रशब्दशास्त्रे व्याकरणे का प्रक्रिया ? को विधिः ? किं विनिगमकम् ?

१३. व्याकरणदर्शनं किं मूलभूत तत्त्वमितिविषये व्याकरणसिद्धान्तव्यापकत्वे प्रतिपादनशैली वेदानुप्राणिता कथमवधारणीया ।

१४. सर्ववेदपारिषद्यं व्याकरणस्य सर्वविद्यापारिषद्यञ्च तस्य वहुत्र प्रोक्तं तदध्ययनमनायासेनैव कथं सम्पादनीयमिति समस्या ।

१५. स्फोटस्मर्ता यदि स्फोटायन एव तर्हि ततः पूर्वं स्फोटसिद्धान्त आसीत् न वा ? यदि नासीत्तर्हि व्याकरणस्य वेदाङ्गत्वप्रतिपादनाभावे वेदानां षडङ्गत्वानापत्तिः कथं परिहरणीया ? अथवा ततः पूर्वमपि स्फोटसिद्धान्त आसीत्तर्हि तदुपपादने किं बीजम् ? कथञ्चावधारणीयं शोधच्छात्रैः ?

१६. पाणिनीयव्याकरणसिद्धान्तानुसारं ज्ञानस्य शब्दरूपेण कथं

परिणामः ? इत्येतद् विषये वेदेषु पुराणेषु च गवेषणा कथं प्रवर्तेत् ? तद् विषये वाक्यपदीयकारेणापि किं बीजभूतं तत्त्वं-प्रतिपादितम् ?

१७. तैत्तिरीयप्रातिशाख्यभाष्यमते परिणामत्वेन वर्णविभागः स्वर-वर्णमात्र विषयः कथं परिशीलनीयः ?

१८. तैत्तिरीयप्रातिशाख्यानुसारं वर्णोत्पत्तिप्रक्रियायां सूत्रकारवार्तिककारभाष्यकारादीनां सम्मतिश्शब्दशास्त्रे व्यक्ता न वेति कथं विवेचनीयतां भजतु ?

१९. पश्यन्त्यामेव वाचि शक्तिशक्तिमतोश्चर्चा शाब्दिकसिद्धान्तानुरूपा कथं पर्यालोचनीया ?

२०. वेदस्य यथा स्वतः प्रामाण्यं तथा शब्दविद्यायाः स्वतः प्रामाण्यसिद्धौ त्रियुतिविहितः कः प्रयासः ?

२१. शाब्दप्रमाणविषयसम्पदि व्याकरणस्य कीदृशी भूमिका ?

२२. शब्द साधुत्वज्ञानपूर्वकं योगाभ्यासेनाभ्युदयो भगवता भाष्यकारेण महाभाष्ये योगसूत्र सामञ्जस्येन कथं प्रतिपादितः ?

२३. व्याकरणाध्ययनात् पूर्वं शिक्षा कल्पसूत्रनिरुक्तादीनामध्ययनेन कथं प्रवृत्तिः शोधच्छात्राणामावश्यकी ?

२४. व्याकरणस्याद्यावधि कश्चन प्रामाणिक प्रक्रियाबद्धः सर्वथा-परिपूर्णं शब्दकोषो नास्ति तदर्थम्महानायासः कथं विधातव्यः ? तत्र साधुत्वविधिश्च सम्यक् कथं प्रस्तोतव्यो येन सकललक्ष्य-लक्षणभूतेषु व्याकरणसिद्धान्तेषु सुरुचिरनुकूलासमेषां स्यात् ।

२५. वाक्यस्वरूपनिर्धारणे वाक्यपदीयकारस्य महाभाष्यकारस्य दीक्षितस्य च कीदृश आयासः ? कोह्यत्र विशिष्यते, तत्र हेला-राजस्य च कीदृशः सहयोगः ? समग्रूपेण शोधच्छात्रैरेतत्सवं समीक्षणीयम् ।

२६. शब्दब्रह्मसकाशादेव जगतः प्रक्रिया एतद्विषये महाभाष्य-कारादीनां भर्तृहरेर्वाक्यपदीयकारस्य भाष्यानुगामिनो नागेश च तन्निरूपणविधिर्विशिष्यते न वेति ? शोधच्छात्रैः कथं सम्यगालोडनीयः ?

२७. दाक्षिणात्य-औदिच्यविद्वद्भिः पाणिनीयव्याकरणानुसारं शास्त्रीया लौकिकाश्च शब्दाः कथं प्रयुक्ताः ? को विशेषः ? कथन्निश्चेतव्यम् ? तत्र विशेषाविशेषः कथं ज्ञातव्यश्शोध-च्छात्रैः।

२८. संजातेषु बहुविधशोधकार्येषु पाणिनीयव्याकरणेषु कश्चन-विलक्षणश्शोधकार्यंक्रम ऊहापोहात्मकः कथं विशेषरूपेणोपयोगि-तया ज्ञापनीयः ?

२९. समासशक्तिविषये प्राङ्नव्यमतसमीक्षा सुविस्तृता कथं-विधेया ?

३०. वृत्तिविषये प्राचीन-नवीनमतवैशिष्ट्यं वैलक्ष्यणञ्च कथमुप-पादनीयम् ?

३१. विभक्त्यर्थविषये प्राचीन–नवीनमतमाश्रित्य सामान्यविशेषयो-रविशेषस्य च व्याख्यानस्य पाणिनीयव्याकरणानुसारमेव प्रति-पादनं कथं विधेयम् ?

एवमेवान्येऽपि विमर्शितव्या विषयाः सन्ति पाणिनीयव्याकरणे। एतावदुक्त दिशाऽनुसन्धानपदार्थो द्वितीयसम्यगालोचित एव ।

निखिले संस्कृतवाङ्मये महामुनिप्रणोतं पाणिनीयव्याकरणं को न जानाति ? तत्रोपयुज्यमानानां प्रत्यक्षानुमानादिप्रमाणानां लक्षणस्य भेदस्य बाध्यबाधकभावादेश्च समीक्षा तुशोधच्छात्रै दीर्घ-प्रयासेन विधेयाऽवशिष्यत एव । यथा न्यायदर्शने प्रत्यक्षानुमानोपमान शब्दाख्यानि प्रमाणानि चत्वारि स्वीकृतानि सन्ति अन्यथा प्रमेयभूत-द्रव्यादोनां-प्रमितिः कथं स्यात् ? तथैवात्र व्याकरणशास्त्रेऽपि प्रकृति-प्रत्यय-पद-वाक्य-तदर्थतत्सम्बन्धपदसाधुत्वादीनां प्रमीतये यानि

प्रमाणानि सूत्रकृदादिभिः समादृतानि तानि च कियन्ति लक्षणोदाहरणपुरस्सरं तत्संवादि विसम्वादिवा युक्तायुक्तविचारपूर्वकं सर्वमत्रसमीक्षा विषयः।

इदं व्याकरणं वस्तुतः सनातनमेव स्मृतिपथं सम्यगानीतं पाणिनिमुनिनापि, तद् यथा—ब्रह्मा वृहस्पतये प्रोवाच, वृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजऋषिभ्यः ऋषयो ब्राह्मणेभ्यः तं खल्विममक्षरसमाम्नायमित्याचक्षते इति ऋक्तन्त्रोक्त्या परिज्ञायते यत् व्याकरणशास्त्रस्य प्रथमाचार्यो ब्रह्मा, आसीत् द्वितीयो वृहस्पतिः एवं क्रमशः-पञ्चकोटौ महर्षयोऽभुवन् ततः सत्वरं गच्छति कालेगार्ग्य-शाकल्य सेनक शाकटायन-स्फोटायन प्रभृतीनां महावैयाकरणानां परम्परावसाने महर्षिःपाणिनिः स्वीय विशिष्ट महत्तपश्चर्यया भगवन्तं महेश्वरमाराध्य प्रसाद्य चाक्षर समाम्नायं मन्त्रमिवाप्यशिथिलप्रायं व्याकरणशास्त्रं अष्टाध्यायी सूत्रनिर्माणेनोज्जीवयामास । तदेवं व्याकरणं वार्तिकनिर्माणेन कतिपयेष्टका संयोजनेनराजभवनमिव-परिष्कृतवान कात्यायनमुनिः। तदन्तरमेव महाभाष्यात्मकपरिखारचनया गभीरपदार्थविवेचनात्मकमगाधजलपूरणेन तस्य सुस्थिरत्वमजेयत्वं-सामान्यजनाप्ताप्तपारावारं समपादयत् पतञ्जलिर्महामुनिः, तदेवमुनित्रयप्रथितव्याकरणसम्प्रदायः भर्तृहरि-कैयट-हरदत्त-वामन-जयादित्य रामचन्द्र भट्टोजीदीक्षित-कौण्डभट्ट-नागोजिभट्ट प्रभृति शाब्दिक शिरोमणिभिः सनाथीकृतोऽद्यावधि अविच्छेदेन महता प्रयासेन प्रचलन्नस्ति महत्पुण्यं वृद्धिरादैच इतिस्मरत आचार्यस्य शिष्टत्वं प्रामाणिकत्वं च सुतराम् । वेदो हि विश्वस्य सनातनसर्वश्रेष्ठं साहित्यं तद् रक्षणार्थं व्याकरणाध्ययनतीवावश्यकम् तदैव मानवजीवनं अन्यथा वृथा भारभूतमेव ।

वाग्धिब्रह्मा वाग्वैब्रह्म, इत्यादिषु श्रुतिषु सरस्वत्यपरपर्याया वाचो ब्रह्मत्वमास्थितम् । महाभारतस्य शान्तिपर्वणि—सम्यगुपपादितं व्याकरणोपयोगिता विषये यथा—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
वेद शब्देभ्य एवादौ निर्मिमीते स ईश्वरः ॥

नामधेयानि चर्षोणां या श्च वेदेषु सृष्टयः।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरं चयत्।
शब्द ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

× × ×

घवलनलिननिष्ठं क्षीरगौरं कराग्रै-
जंयवलयसरोजैः पुस्तकाभीष्टदाने।
दधतममलवस्त्राकल्पज्वालाभिरामं
तुरगवदन विष्णुन्नौमि दैत्यारिजिष्णुम् ॥
निखिलनिगमवेद्यं वेदशास्त्रप्रकाश-
मखिल जगदुपाधिन्निर्मलन्निष्कलङ्कम्।
अनुपमसुरारैर्वासुदेवस्यतेजो
वितरतु तुरगास्यं मङ्गलं श्रीमुखन्नः ॥

**प्रसंगतः**

प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तते इति सूक्त्यैव प्रमाणीकृतं यत् पुरश्चर्यापाठक्रमेऽवश्यमेव केनचित् प्रयोजनेन भवितव्यता प्रथिता-जुलाई मासस्य दशमदिनाङ्कत एवैष कार्मक्रमो विधिवत्प्रचलति तत्र नैके विद्वान्सो नैकविधविषयेऽनुसन्धातॄणामवश्यमभिनवं-नवङ्कश्चन पन्थानमबोधितवन्त इति। अत्रैका विचिकित्सास्वाभाविकी सञ्जायते यत् समुपस्थितानां शोधकर्मतत्पराणां छात्रणां विभिन्नाश्शोधविषयाः सन्ति, तेषु कश्चन साहित्यविषयक किमपि-तत्त्वं विचारयति कश्चनालङ्कारविषयकतत्त्वम् कश्च लक्षणादिग्रन्थ-टीकादि विषयक समीक्षणादिकं विषयमनुसन्धत्ते, कश्चन महाभारते राजनीतिं, कश्चन तत्रैव मोक्षविमर्शम्, कश्चनान्यदर्शनविषये कश्चन स्तोत्र ग्रन्थविषये कश्चन ज्योतिषशास्त्रे कश्चनापरशास्त्र-विषयकमनुसन्धानमाधत्ते। इत्थं प्रतिच्छात्रं शोध विषयोभिन्नः— प्रत्यहं नैकविषये व्याख्यानं भवति, परमुक्तशोधच्छात्राणां शोध-सम्बन्धिव्याख्यानं साक्षात्प्रवर्तते न वा? तत्तदनुसन्धानकर्तॄणां शोधविषयेण सह का संगतिः?

अनुसंधातारः पुरश्चर्या क्रमानुसारि विभिन्नविषयंकानुसन्धेय विषयक व्याख्यानेन कथंकारं कियदुपकृता भवन्तीत्यादि जिज्ञासा-समुदयः स्वाभाविक एव। एतद् विषये समासत इदं वक्तुं शक्यते यत् पुरश्चर्यापाठक्रमेणावश्यं केषाञ्चित्साक्षादनुसन्धानविषये लाभः केषाञ्चिच्च परम्परया। परमिदमपि सत्यं यदनेन कार्यंक्रमेणावश्यं बहूनां विभिन्नशास्त्रीयक्षेत्रेषु व्यापकानुसन्धानदृष्टिः अनुसन्धान-कर्मणि व्यापृतानां प्रक्रियाविधिसु सुसंस्कारः सत्प्रेरणा यथाविध यथाशास्त्रं सम्यगालोचनादि पद्धतेः प्रक्रियायाः, लेखनविधेः, समीक्षण-विधेः, प्राचीन-नवीनप्रणाल्या परिपाटचा चानुसन्धानप्रक्रिया विमर्शसामर्थ्यंलाभः स्यादेव।

कोऽपि वा भवतु विषयोऽनुसन्धेयश्शोधच्छात्राणाम् अनुसन्धानन्तु तदेवानुसन्धानं यत्राभिनवप्रतिभाप्रकर्षगम्यो विषयो दृष्टि-पथमवतरेत्। यस्य मूल्यं सहसा स्वयमनुसन्धातापि निर्धारयितुन्न पारयेत्। अस्माकमयं शब्दराशिः साहित्यभण्डारपदवाच्यः सर्वा-तिशायी ज्ञान विज्ञान समवधान पाटव पदवीमारूढः प्रायो देशे विदे-शेष्वपि प्रसिद्धिमवाप्तोऽद्यापि प्राचीनातिप्राचीनोऽभिनवाधिशास्त्र-ज्ञान प्रवर्तको दर्शनपदाभिभूषितः सम्पूर्णविश्वस्य गौरवाय वेद भगवान्।

तस्यैव भगवतो वेदस्यायन्निखिलोऽपि प्रपञ्चोजगदात्मनाऽव भासते सुतराम्। तदेव जगत् कियत् किं स्वरूपम् तज्ज्ञानं कथं भवेत् जगतोऽभिलाष एव सर्वमुत वा जगदेवाभिलाषभूतं भगवतो वेदस्य ? वेद पुरुषस्य वा कस्याश्चिदीश्वरादि विभूतेः स्वयमीश्वरस्य वेति ? सर्व-मेतद्धिविभिन्नैवेदांगैः व्याकरणादिभिः षट्शास्त्रैः पुराणेतिहासादिभि-श्चयाथातथ्येनानुसन्धान चर्याचर्चा विषयीकृत एव पदार्थः पूर्णतः प्राचीनकालेऽधुनांऽशतोविमर्शपथमानीतोऽनुसन्धातॄणामनुसन्धेय विषयो यथाबुद्धियथाशक्यं यथाकालमेव प्रवर्तमानोदिवसमेनं धन्यङ्करोति।

मामकीनो विषयो व्याकरणेऽनुसन्धान सम्भावनाः समस्याश्चेति-तत्र प्रथमन्तावत् किं व्याकरणम् ? तदनुसन्धानविषयीकृतम् ? इन्द्र-

चान्द्र-शाकटायनापिशालिकाशकृत्स्नादि रूपाणि अष्टविधव्याकरणानि ? तान्येव उतवा पाणिनीयानि ? कथमुक्तानि व्याकरणानि चान्द्रेन्द्रशाकटायन प्रभृतीनि न विषयीकृतानि कथं पाणिनीयमेव व्याकरणमत्रविमर्ष्टुम् प्रवर्ते ? इति विविधा विचारणाः प्रवर्तन्त एव ।

पाणिनीय व्याकरणतः पूर्वमपि व्याकरणग्रन्था तदीयाः सिद्धान्ता-नात्र संशयः, प्रतिव्याकरणं प्रक्रियाभेदोऽपि नापलपितुं शक्यः विभिन्न व्याकरणागम विभागविभञ्जन प्रसङ्गात् । कुत्रकीदृशीलघुतरा लघुतमा वा साधुत्व प्रक्रिया ? गौरवमयी सरला कठिना अल्पकालसाध्या दीर्घ-काल साध्यावेति सर्वोऽपि विषयोऽनुसन्धेयतामर्हति । प्रतिव्याकरणं किं किं प्रातिशाख्यम् ? इत्यपि विमर्शितव्यमेव । किमपि वा भवतु व्याकरणं तदध्ययनात्पूर्वं शिक्षाः कल्पः निरुक्ताद्यध्ययनमपि महदा-वश्यकम् । यतश्शिक्षाविधि वर्णपदोच्चारणविषयकः परम साधन-भूतः । एवमेव केषाञ्चिन्मतं यत् पुरा खलु संस्कारोत्तरं व्याकरणम् धीयतेस्म ततः शास्त्रान्तराणि, माहभाष्येऽपि प्रोक्तं यत् इदानीं खलु व्याकरणमनधीत्यापि कथञ्चिद् वेदानधीत्य भणन्ति वेदान्नो वैदिकाः शब्दा सिद्धा लोकाच्चलौकिकाः अनर्थकं व्याकरणमिति । एतत्सर्वं भाष्ये सुपरिक्षितं भाष्यकारेणसिद्धान्ततो यत् सर्वोऽपि-लोकोऽभ्युदयं कामयते, अभ्युदयश्च व्याकरणाध्ययनमन्तरा न शक्य तस्मात् शास्त्रान्तराध्ययनतः पूर्वं सर्वैरपि व्याकरणमेवाध्येतव्यम् । तच्च व्याकरणं पाणिनीयमेव यतस्तस्यैववेदाङ्गत्वम्, तस्याक्षरस-माम्नायमूलकत्वात् ।

यदि पाणिनीयव्याकरणस्यैव वेदाङ्गत्वन्तर्हि पाणिनेः पूर्वं वेदानां पञ्चांगत्वापत्तिः न षडङ्गत्वसिद्धि कथमपिवक्तुं शक्येत् । एतद् विषयेऽनुसन्धातारः सम्यक्तयाऽनुसन्धानं कुर्वन्तु येन ज्ञातुं शक्येत पाणिनेः पूर्वमपि वेदानां षडङ्गत्वसिद्धिर्न विरुद्धयेत् । तत्र कः साधी-यान् पन्था येन पाणिनीय व्याकरणस्यैव वेदाङ्गत्वप्रतिपादनमपि न विरुद्धयेत ततः पूर्वमपि व्याकरणान्तराणामपि वेदाङ्गत्वप्रतिपादन-मपि साक्षात्परम्परया वा सिद्धयेदिति महाननुसन्धानस्य प्रमुखो विषयः ।

पाणिनीयव्याकरणस्य कथमाधिक्येन महत्ता प्रकाशनं सर्वव्याकरणापेक्षयाऽत्रापि शोधछात्रैर्ध्यानं सावधानतयादेयमेव। भट्टोजिदीक्षितो नागोजिभट्टपादः भर्तृहरिः कैयटादिप्रभृतयोहि कथं पणिनीय व्याकरणमेव प्रसंशितवन्तः ? तत्र तेषां का वाचो युक्तिः ? तदीयविरचितेषु ग्रन्थेषु सम्यगध्ययनमन्तरा न समाधानमवाप्तुं शक्यम्। पणिनीयसूत्रेषु सज्ञा परिभाषा विधिनियम अतिदेशाधिकारप्रभृतयः षड्विध विभागाः, सन्ति अन्येषु व्याकरणेषु सन्ति न वा ? प्रक्रिया सौष्ठवं पाणिनीयमतिशेते कथमन्यव्याकरणाऽपेक्षया तत्र किंवैशिष्ट्यं वैलक्षणम्वेति सर्वं शोधकार्यंपरायणैश्छात्रैर्विचारणीयम्।

पाणिनीयव्याकरणस्योपादेयता प्रतिपादकं वचनं प्रथमं वर्णसमाम्नाय मूलकत्वमेव, तदनुरोधि नागोजिभट्टोक्तिः कैयटादि प्रभृतीनाञ्चोक्तयः भाष्याकारानुरोधिन्यः सुतरां किमपि वैशिष्ट्यं संसूचयंति।

पाणिनेरष्टाध्यायी निर्माणकार्यं व्याकरणसूत्रप्रणयनपद्धतिः प्रक्रिया परिकल्पना तपःसाध्या सत्या पूर्ववैयाकरणसिद्धान्तस्मृतिरपि पाणिनेरष्टाध्याय्यामुपलभ्यत एव। क्वचिच्छाकटायनं स्मरति क्वचित्स्फोटायनमपिस्मरति क्वचिदन्यान्नपिऋषीन् स्मृतिपथमानयति विशिष्टाभिः संज्ञाभिः। यथा त्रिप्रभृतिषु शाकटायनस्य अवङ्-स्फोटायनस्य, दार्धादाचार्याणाम् बहुना बहुषु सुत्रेषु संज्ञा परिभाषा विधिनियमातिदेशाधिकार सूत्रेष्वनेकत्र भूयांसि वचनानि सौत्रप्रयोगरूपाणि समुपलभ्यन्ते सर्वमेतद् व्याकरणानुसन्धातॄणांकृतेऽनुसन्धेयविषयभूतानि विमर्ष्टव्यानि।

पाणिनीयव्याकरणे नैके व्याख्यातारः नैकमत्यं तेषु प्रक्रियायां दार्शनिक परिप्रेक्ष्येऽपि च वैमत्यम्। तत्र तत्र प्राचीन प्राचीनतर प्राचीनतम व्याख्यातारः। नव्या नव्यानुयायिनश्चानेकेव्याख्यातारः सन्ति सर्वत्र विशेषाविशेषः बुद्धि प्रतिभा कलापः पारमार्थिकः काल्पनिकश्च, व्याकरणानुसन्धानसम्भावनाविषयस्य सुदूरक्षेत्र व्यापकत्वात्सर्वमिहवक्तुं समुपस्थापयितुन्नशक्यम्। कतिपया एव सम्भावनाः स्मृतिपथमानीयन्ते यथोक्तमेव सर्वं किञ्चिदिह ततोऽपि विलक्षणम् प्रतिपाद्यते।

पाणिनीयव्याकरणे प्रमाणसमीक्षापि विलक्षणासाश्रयितुं शक्या व्याकरणशास्त्रं द्विधाविभक्तं प्रक्रियादर्शनञ्चेति प्रोक्तमेव प्रक्रिया-विषये बहुभिराचार्यैर्बहुधा प्रक्रियांशो विमृष्टस्तत्रत्य विमर्शन प्रक्रियाणां तुलनात्मकमध्ययनमपि शोधच्छात्राणांकृते महत्त्वाधायकम्। व्याकरणस्य दर्शनांशस्तु महाभाष्यकारः वाक्यपदीयकारः, कोण्ड-भट्टो भूषणसारकारः लघुमञ्जूषाकारः नागोजिभट्टप्रभृतयोऽनेके सन्ति। तत्राणि प्रायाः प्रमेयांश एव विमृष्टः प्रमाणानि तु पूर्णतोनैव विमृष्टानि सुस्पष्टानि क्वचित् तत्र विषयेऽपि शोधच्छात्राणां शोधकार्यं भवितुमर्हति।

भाष्येऽप्युक्तमेव शब्दप्रमाणकाव्यम् इति वचनेन शब्द प्रामाण्यं प्रतिपादनाय प्रवृत्तिः भगवतोभाष्यकारस्य कीदृशी कथं विमृष्ट-मेतत्सर्वंशोधच्छात्रैरवश्यमेव विमर्शितव्यमेवावशिष्यते।

**प्रत्यक्ष-प्रमाणविषये—व्याकरणे**

१. महाभाष्यसम्मतं प्रमाणसामान्यलक्षणम्।

२. तद्विषये पाणिनेरेपि सम्मतिः।

३. अष्टाध्यायी सूत्रेषु प्रामाण्यविमर्शः तत्र पूर्वं पक्षः।

४. तत्रोत्तरपक्षश्च।

५. विधिसूत्रेषु प्रामाण्यम्।

६. संज्ञापरिभाषाधिकारादिसूत्रेषु प्रामाण्यम्।

७. तत्रापि प्रमात्वस्य स्वतोग्राह्यत्वं परतो वा ?

८. शाब्दिकमते स्वतोग्राह्यत्वे किं विनिगमकम् ?

९. तत्र नागेशभट्टस्य कीदृशी सम्मतिः ?

१०. तेषां परस्परं सामान्यविशेषभावः कीदृशः ? विशेषाविशेषो वा कथं साध्यताम् ?

११. शब्दप्रत्यक्षे शाब्दिकमतम्।

१२. प्रत्यक्षविषये शब्दशास्त्रीयः कश्चन विशेषः।

**अनुमानविषये**

१. शब्दशास्त्राभिमतमनुमानस्यलक्षणान्तरम् ।

२. अनुमितेर्लक्षणानि ।

३. अनुमितेरभिलापप्रकारः ।

४. पक्षस्वरूपविमर्शः ।

५. शब्दशास्त्रे पक्षताया निष्कृष्टं स्वरूपम् ।

६. महाभाष्ये पक्षतास्वरूपम् ।

७. भूतिकृदादिसम्मत पक्षतास्वरूपम् ।

८. भाष्योद्योत सम्मतं तर्कोदाहरणम् ।

९. शब्दशास्त्रे ऊहपदेन तर्को व्यवह्रियते ।

१०. हेत्वाभासादिविषयेऽपि वाक्यपदोये विमर्शः भाष्ये चापि ।

**शब्दप्रमाणविमर्शे**

१. शब्दप्रमाणविमर्शः ।

२. शब्दप्रमाणे विसंवादः तद् विमर्शश्च ।

३ शब्दप्रमाणे व्यापारविमर्शः ।

४. प्राच्यवैयाकरणमतेन तद् विमर्शः ।

५. नव्यवैयाकरणमतेन विमर्शः ।

६. तद् विषये महाभाष्योक्तं मतान्तरम् ।

७. शाब्दिकनये वृत्तिविमर्शः अन्यैस्सम्मतवृत्तीनां विमर्शश्च ।

**उपमानप्रमाणसमीक्ष**

१. महाभाष्यकारमतेन ।

२. भर्तृहरिमतेन ।

× × × ×

बुद्धि योऽष्टगुणां ददाति, सदयं भक्ताय सक्तात्मने
तत्प्राप्त्या चिदचिद्विभाग सहितं विश्वं समुद्भासते ।
योऽन्तःस्थो वहिरेत्य योगकलया तत्त्वान्तरङ्गत्रयं
दत्वापूतमनस्कतां वितनुतां नारायणः सोऽचिरात् ॥

निखिलविश्वस्य सनातनं सर्वविधकल्याणसाधकं च साहित्यं मन्त्रब्राह्मणात्मको वेद एव, व्याकरणन्तस्याङ्गतया प्रशस्तं विराजते, तथाहि गोपथब्राह्मणे प्रोक्तम्—'षडङ्गविदस्तत्तथा धीमते' इत्युक्त्या ब्राह्मणेन निष्कारणोधर्मः षड़ङ्गो वेदोऽध्येयो ज्ञेयश्चेति, भगवतो-महाभाष्यकारस्य सदुक्त्या वेदस्य षट्संख्यकान्यङ्गानि सन्तीति-ज्ञायते । तानि च शिक्षा, कल्पः निरुक्तम्, छन्दः, ज्योतिषम् व्याक रणञ्चेति प्रतिष्ठितानि । इतोऽप्यधिकं वाक्यं भाष्यकारस्य तदव-धारणीयं सर्वैरपि शास्त्ररसिकैर्यत् षट्ष्वङ्गेषु व्याकरणस्याङ्गान्त-रापेक्षया प्राधान्यमिति प्रधानञ्च षट्ष्वङ्षुव्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति 'इति' यथा शरीरस्य रक्षार्थमङ्गानां-महत्यावश्यकता तथैव वेदानां स्वरूपस्य तदर्थस्य चापगमाय शिक्षाद्यङ्गानामस्ति महत्प्रयोजनं तर्हि मुखस्थानीयस्य व्याकरणस्यो-पादेयता आवश्यकता कीयतीति सर्वथा विशिष्टा विलक्षणावेति न विसंवादः ।

वस्तुतो लौकिकश्शास्त्रीयश्च निखिलोऽपि व्यवहारश्शब्दाधीन एव, स च शब्दः साधुरेव सदर्थं प्रयोजकः, एवंविधविचिकित्सायां किमिदं व्याकरणम् ? किञ्च तस्य दर्शनत्वम् ? यथोक्तं हि साधुरेव शब्दः सदर्थप्रयोजकः, शब्दसाधुत्वविषयाश्रुतिरेषा व्याकरणं पदाभि-हितामहिता विज्ञैः । अपरञ्च तस्य दर्शनत्वे प्रतिपादिते सति प्रयोज-नन्तदध्ययनस्य फलीभूतं भवत्येवेति । पाणिनीयव्याकरणे सकल-दर्शनानां तदीय सिद्धान्तानामूहापोहात्मक अनुसन्धानं शाश्वतमेवेत्य-वधारणीयं भवति ।

अस्तु एतावता व्याकरणस्योपादेयता तदध्ययनस्य च समेषां शास्त्रज्ञानां शास्त्राध्ययनप्रवृत्तिशीलानां सकलशास्त्रविषयकानुसन्धा-तृणां परमावश्यकता पाणिनीय व्याकरणानुरोधि साधुत्वप्रक्रियाज्ञानं

दर्शनभूमितया व्याकरणस्य सर्वविद्यापारिषद्यं सर्ववेदपारिषद्य-ञ्चेति कथमितिविषये प्रभूतानुसन्धानसामग्री समवहिता विद्यते नात्र संशयः।

अत इदं वक्तुं शक्यं यत् साधुशब्दबोधक शास्त्रत्वं शब्दगतसाधुत्व-बोधक शास्त्रत्वम्वा व्याकरणस्य सामान्यलक्षणं प्रवृत्तं पर्यवसित-ञ्चेति। ततोऽन्यत्सर्वमसाधु शब्दज्ञानं प्रकृति प्रत्ययादि ज्ञानं परि-चायक कोटावेव प्रविष्टं न लक्षणशरीरे निविष्टं मन्यते। तथाहि—व्याक्रियन्ते=व्युत्पाद्यन्तेऽसाधु शब्देभ्यः साधुशब्दाः पृथक् कृत्य ज्ञायन्ते येन तद् व्याकरणमिति करण व्युत्पत्त्या असाधुशब्दावधिक साधुशब्द-कर्मक पृथक् कृतिपूर्वक साधुशब्दविषयक ज्ञानकरणं व्याकरण-मित्यर्थो योगशक्त्या लभ्यते। यथा गावो-गोणी-गोता इत्यादिभ्योऽ साधुशब्देभ्यो गो इति साधुशब्दस्य पृथक् कृत्य बोधनम्। साधुत्व ज्ञान विषया सैषा व्याकरणस्मृतिरिति वाक्यपदीयकारोऽभिभाषते। इत्थं सकलशब्दप्रकृतिभूत धातुपाठज्ञानं तत्तत्साधुत्वपूर्वकं सर्वं साधुशब्द ज्ञानमुपपद्यते। व्याकरणस्य स्वरूप परिचयानन्तरं दर्शनत्वं विमर्शपथमारोहत्येव। तत्र दृश्यते आत्मतत्त्वं विचार्यते येन तद्दर्शन-मिति निर्वचनेनात्मतत्त्व विचारकशास्त्रत्वं दर्शनलक्षणमित्येव सामा-न्यतयाऽन्यदर्शनेष्वपि प्रथितं विद्यते, भारतीय समग्र दर्शनानामेष स्वभावो यत् सर्वेषां जीवानांकृते कल्याणमार्गं दर्शयेत् स च मार्गं आत्मतत्त्वविवेचनात्मक एव। अत्र व्याकरणस्यापि परमं प्रयोजन-मात्मतत्त्वविवेचनमेव शब्द ब्रह्मापरपर्याय स्फोटात्मना।

तथा च श्रुतिः 'सर्वं खल्विदं ब्रह्म' 'अयमात्मा ब्रह्म' इत्याद्याः श्रुतयः ब्रह्मसूत्राणि च दर्शनपदेन व्यवह्रियन्ते। एतद् विषये व्याकरणं पश्चात् पदं न भवति यतश्चास्तीदमपि आत्मतत्त्वविवेचनम्, उक्तञ्च—

> दृष्ट्वारूपे व्याकरोत् सत्यानृते प्रजापतिः।
> अश्रद्धानृते दधीच्छ्रद्धां सत्त्वे प्रजापतिः॥ इति।

प्रजापतिः शब्दोपादनकसृष्टिविधाता वैयाकरणः, संमिलिते सत्यानृते पृथक् कृत्य परमार्थभूते वस्तुनि श्रद्धामसत्येऽन्नात्मनि

अश्रद्धां प्रत्यतिष्ठिपत् इत्यर्थिकयाऽनयाश्रुत्या व्याकरणस्य दर्शनत्वं प्रतिपादितमेव ।

एवं च नामरूपे व्याकरणापि 'इति श्रुतिरपि संश्लिष्टयोः शब्दार्थयोः पृथक् कृतिं साधुशब्दात्मिकां बोधयन्तीं व्याकरणस्य सत्याऽसत्यविवेचनलक्षणं दर्शनत्वं सुस्पष्टीकृतवती । यथा—प्रकृति-प्रत्ययौ-असत्यौ तदपेक्षया पदानि सत्यानि, ततोऽपि वाक्यानि, पश्यन्त्यादिकंञ्च 'सर्वं जगदसत्यम् सर्वापेक्षया पराख्यं वाग्ब्रह्म, सत्यमित्येव निगूढं तात्पर्यम् । वाग्वै ब्रह्म, वाग्धिब्रह्म, ते मृत्युमति वर्तन्ते ये वैवाचमुपासते' इत्याद्याश्रुतयोऽपि वाचोव्याकृतिरूपोपासनया व्याकरणदर्शनत्वं सम्यक् प्रतिपादयन्ति ।

एतत्सर्वमनुसंधातृणांमनुसन्धेय विषयः । व्याकरणं न केवलं व्याकरणाध्ययनशोलानां कृतेऽनुसन्धेय विषयः किन्तु समेषांकृतेऽपि । सम्प्रति व्याकरणमतिक्लिष्टं कठिनम्वेति कृत्वा नोपेक्षणीयम् । व्याकरणस्य वेदार्थप्रतिपादयत्केनेतरशास्त्रार्थप्रतिपादनपरत्वात्-सर्वथा तदध्ययनाध्यापनानुसन्धानस्य महत्यावश्यकता वरीवर्ति । विशेषतऽद्य यादृशी संस्कृतज्ञानां शास्त्राध्ययनाध्यापनानुसन्धान-शोलानां दशा दरोदृश्यते सावश्यमेव दयनीया चिन्तनीया चेति । तत्र कारणमिदमेव यत् केचनैव विरलाः संस्कारसम्पन्ना भाग्यवशा-देव व्याकरणमधीत्य शास्त्रान्तरेषु विज्ञाः ।

प्राचीना या प्रणाली व्याकरणाध्ययनस्य समीचोना आसोत् तदद्य विलुप्ताप्रायप्रतिभाति, अतस्तद् रक्षणं यथाशक्यमादरेण कर्तव्यबुद्ध्या विधेयमेव, अन्यथा कालान्तरे सामान्य प्रक्रिया प्रतिभापि स्वप्नायिता स्यात् । ये च व्याकरणाध्ययनेरतास्तेषान्तु प्रथममिदं कर्तव्यं विशेषत-यत्तेऽवश्यमस्य पाणिनीय व्याकरणस्य प्रक्रिया ज्ञानसम्पादनपुरस्सरं मुख्य प्रयोजनान्तं यावदुपासनीयमिदं तत्त्वं नोपेक्षाविषयतां नयन्तु ।

अद्य जागरणमेतद् विषये परमावश्यकं यत् पाणिनीयव्याकरणस्यैव कथं वेदाङ्गत्वम् ? पाणिनोयप्रक्रियानुसारं प्रयोगा लक्ष्यग्रन्थेषु कृता सन्ति न वा ? यदि न कृता तर्हि कथन्तत्र तत्रानुसन्धात्मना संस्कारः तत्रत्य प्रयोगाणाम् । बहुधा यथा भट्टोजिदीक्षितपादा विभिन्न काव्य-

प्रयोगाणां वैयाकरणसिद्धान्तकौमुद्यां विचारं कृतवन्तः तत्र केषाञ्चिद प्रामाण्यं केषाञ्चिदप्रामाण्यं प्रामादिकं वा तत्तद् वाक्य घटक प्रयोगं प्रदर्शितवन्तः। एवमेवलौकिकं प्रयोगा विहिता विभिन्नैश्शास्त्रज्ञैस्तत्तच्छास्त्रेषुसमुचिताः पाणिनीयनियमप्रक्रियानुरूपा के प्रयोगा न सन्ति ? कथञ्च चैतेषां पाणिनीयत्वं सर्वमनुसन्धेय विषयतामर्हन्ति। पुराणेष्वपि महाभारतादिष्वपि चापाणिनीयाः प्रयोगाः पाणिनीयाप्रक्रियानुसारमनुसन्धेया एव। लोकव्यवहारेऽपि शास्त्रव्यवहारेऽपिच व्याकरणसाधुत्वानुरूपा एव साधवश्शब्दाः प्रयुक्ता स्युरिति सत्प्रयासरतैर्भाव्यमेव।

पाणिनीयव्याकरणेऽन्यतः ततः पूर्ववर्ति चान्द्रेन्द्रशाकटायनप्रभृति व्याकरणापेक्षया किं वैशिष्ट्यं वैलक्षण्यञ्चेतिसर्वथाऽनुसन्धेय विषयताऽनुसन्धातॄणांकृते सम्यगालोचना विषयः। अथ च पाणिनीयाष्टध्याय्या यावन्ति सूत्राणि तावतां प्राङ् नव्यवैयाकरणटीकाकारैर्व्याख्यासम्यक्कृता न वेति ? व्याख्यातृषु भट्टोजिदीक्षितप्रभृतिषु प्राचीनेषु कैयटादिषु नागेशप्रभृतिषु नव्येषु च को विशिष्यते ? तथा च संज्ञासूत्राणि यानि यानि परिभाषासूत्राणि विधिसूत्राणि नियमसूत्राणि अतिदेशसूत्राणि अधिकारसूत्राणि च पाणिनेः पूर्वं वैयाकरणसूत्रेषु सामञ्जस्यमसामञ्जस्यं वा भजन्तीति सम्यगालोचनाविषयोऽनुसन्धित्सुनांकृतेऽद्यापि। यद्यपि नैकविधक्षेत्रेषु विभिन्नैर्विद्वद्भिरनुसानकार्याणि कृतान्येव तथापि सम्प्रत्यपि प्रक्रियाविषयाः सन्त्यनुसन्धातुमपृष्टा अनुसन्धेयतामर्हन्ति।

कोऽपिविषयोऽनुसन्धात्रागृह्यतां परमोपादेयतया तत्रावश्यमेव व्याकरणस्मृतिरुपकारकतया तत्रानुसन्धानसाधनीभूतासती शास्त्रान्तरविषयकानुसंधाने सर्वतो भावेनोपयोगितां पुष्णाति येनानुसन्धात्रा गृह्यमाणोऽनुसन्धेयविषयो याथातथ्येन प्रकाशितस्सन्नैहिकामुष्मिकफलकतया परमोत्साहोऽध्ययनशीलानां कृते परमपदार्थंपदवीं नयति।

इदं विष्णुर्विचक्रमेत्रेधा निदधे पदमित्यादि वेदमन्त्रः, यथाधूलिमये प्रदेशे निहितं पदं—पदचिह्नं प्रष्टुं शक्यते तथैव दिविअन्तरिक्षे पृथिव्याञ्च क्रमेण सूर्यविद्युदग्निरूपाणि तस्य विष्णोः

पदं दृश्यते, तद् व्याकरणमागम्य पश्यन्ति परमं पदम् । अयं हि व्याकरणात्मा पुरुषः पुरुषसूक्तेन संस्तूयते । तत्रहि तस्य चतुष्पादत्वेन वर्णनं लभ्यते, तथा चान्यदपि वेद-वचनं प्रमाणमत्र, पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि 'इत्यादिना अमृतायां दिवि अस्य त्रयः पादाः सन्ति, मृतायांदिवितु तस्यैक एक पादस्त्रिधानिहित इति मन्त्रार्थः । महादेवो मर्त्यान् आविवेश इत्युक्त्या-मरणधर्मामनुष्यास्तान् आविवेश, तथा च परायां वाचि शब्दार्थौ अत्यन्तं संलिष्टौ स्तः, परातो वहिस्फुरणे तावेव शब्दार्थौ पार्थक्येन दृष्टिगोचरौ भवतो द्वयोः श्रेण्योः । एका च शुद्धा शब्दश्रेणिः, अपराचार्थश्रेणिः तत्रशब्दश्रेण्याँ प्रथमा पश्यन्तीवाक् द्वितीया मध्यमा तृतीया च वैखरी, अर्थश्रेण्याँ प्रथमाः, प्रतिभा, द्वितीया बुद्धिः तृतीया तु मनोरूपा, तेनायं विष्णूर्नाम व्याकरणात्मा पुरुषो दिवि सूर्यरूपेण, अन्तरिक्षे वरुणरूपेण, विद्युदात्मना पृथिव्यामग्निरूपेण चकास्ति ।

एवमेवापरोऽपि वेदमन्त्रश्चित्रं देवानामुद्गादनीकमिति तमेवार्थं स्फोरयति तथाहि—चिता परया शक्त्या गायत इति चित्रम् देवानामनीकं समूहः उद्गात् तत्रापि दिवि मित्रस्य चक्षुः आख्यापकम् अन्तरिक्षे वरुणस्य आरव्यापकम्—पृथिव्यामग्नेरारव्यापकम्, अनया-रीत्या जगतो गमनशीलस्य तस्थुषः स्थावरस्य चात्मा सूर्यो द्यावापृथिवी अन्तरिक्षञ्च आपाः व्याप्नोत् । वस्तुतस्तु परमात्मा तत्सदृशाः केचनजीवाः वा साक्षित्वेन बोधव्याः यतोहि ते साक्षात्पश्यन्ति नत्विन्द्रियरूपमाध्यमेन ।

'शुङ्गेन मूलमन्विच्छ सौम्य' इत्ययं मन्त्रः संसारावस्थायाः स्थूलानि वस्तुनि दृष्ट्वा सूक्ष्माणि अन्वेषणीयानि समुपदिशति, तामेव रीतिमवलम्ब्य उद्वयमिति मन्त्रः प्रवर्तते, तेन हि मन्त्रेणाभ्यासक्रियया तमो दर्शनान्तरं शब्दव्यापारे तेजसश्च साक्षात्कारे सम्पन्ने तदनन्तरमुत्तरे देवेदृष्टे तदुपरिदिव्ये सूर्येऽवलोकिते उत्तमं ज्योतिः प्रत्यक्षीक्रियते अयमेवार्थः तमसो मा ज्योतिर्गमय इति मन्त्रेणाप्यनुद्यते, परमं महान्तं गुरुं साधनम्बाप्राप्य योगमार्गेण चक्रभेदनमन्तरापि शब्दात्मनो ब्रह्मणोर्विष्णोः साक्षात्कारः सुकरः सरलोऽल्पबुद्धि साध्यश्च ।

वेदम् विदन्त्यनेन प्रत्यक्षाद्यविषयमुपायमितिवेदः। उक्तञ्च—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥

अयमाशयो यत् श्रौतस्मार्त सकलकर्मप्रतिपादक मन्त्रब्राह्मणरूपं वेदमुद्भराम उद्धृतवन्तः कर्मानुष्ठानार्थमुच्चारितवन्तः स्म। कर्म प्रयोगार्थं स्वमुखादुच्चारिता वर्णरूपा मन्त्रास्तथैव यदि निःसरेयुस्तर्हि उत्तरकाले मन्त्राभावेन कर्मानुष्ठान भवेत् तेन पुनः पूर्वोक्त एव वेदोद्धारणापादानस्थाने वेदनिधानमुक्तम् दृश्यते वस्तु याथात्म्यमनेनेति दर्शनम् वस्तुतस्तु याथात्म्यस्य नेत्रेणापि दर्शनात् तदपिदर्शनमेव। किन्तु लोचनं द्विविधम् एकं नेत्र पदव्यवहायमपरं सुहृत् शास्त्रमेव।

वस्तुतत्त्वविषयेऽस्ति विवादो दार्शनिकानाम् तेषु केचन भौतिकेषु वस्तुषु तत्त्व जिज्ञासवो वैज्ञानिकाः 'अपरे अयमात्मा द्रष्टव्यः' इति श्रुतिमनुरुद्धयात्माऽनात्मविषयेषु नीरक्षीरवदेकीभूतेषु वस्तुषु आत्मानात्मा विवेचका शास्त्रज्ञाः तद्येन भवति विचारप्रकाशकं शास्त्रम् दर्शनशास्त्रम् इति। प्रमाणन्तु अज्ञातज्ञापकं भवति नत्वकृतकारकम्। ज्ञानकर्मवन्न पुरुष यत्नाधीनम् कर्मकरणेऽकरणे वा पुरुषः स्वतन्त्रः। ज्ञानन्तुप्रमाणप्रमेय सन्निधाने पुरुष प्रयत्नानवेक्षयापिगन्धादीनां भवत्येव। अतोदर्शनं प्रमाणपरतन्त्रमिति विचारकाः। प्रत्यक्षमनुमानमागमश्चेति मुख्यतया प्रमाणं त्रिविधं शाब्दिकमते, तत्र प्रत्यक्षमनुमानञ्चागमानुसार्येव प्रमाणिकम् प्रत्यक्षाभासानुमानभासयोरपि अनुभवरूपेणोपस्थानात् यथा यानं चलन्नपि स्थिरम् पृथ्वी स्थिरापि चलन्तीव प्रतीयते, यथाह कालिदासः—

शैलानामवरोहतीव शिखरा–
दुन्मज्जतां मेदिनीति।

यद्यपि भारतीयदर्शनेषु वैदिकानाम् सांख्ययोगन्यायवैशेषिकमीमांसावेदान्तानाम्, अवैदिकानां चार्वाकजैन-योगाचारमाध्यमिकवैभाषिक सौत्रान्तिकानाम् च विचारा द्वादशदर्शनेषु विभक्ताः सन्ति तथापि भारतीयविचारणां सर्वत्रावान्तरोद्देश्यप्राप्तिपूर्वकं मुख्यो-

द्देश्य सिद्धिरेव मुख्यं प्रवृत्तिकारणमामनन्ति येन वेदवेदांगधर्मशास्त्र पुराणागमानामपि दर्शनत्वं स्वीकुर्वन्ति विचारकाः। अतः सर्वेऽप्यनुसन्धातारोभवन्तो दार्शनिका एव सन्तीति न सन्देहलेशः।

भारतीयदर्शनेषु वेदवेदाङ्गेषु पुराणेतिहासधर्माशास्त्र प्रभृतिष्वपि च गवेषणाकर्तारो भवन्तोऽनुसन्धातार एव मन्यन्ते, तस्मादिह यःकोऽपि,वा विषयोऽनुसन्धानस्य भवतांसर्वोऽपि सश्रमयत्नसाध्यः फलप्रदश्चापि लोकव्यवहारे शास्त्रव्यवहारेऽपि, व्याकरणदर्शनस्य षट्सु दर्शनेषु गणना नास्ति यद्यपि सर्वदर्शनसंग्रहे माधवाचार्येण सर्वदर्शनसिद्धान्तसंग्रहे भगवताशंकराचार्येण च व्याकरण दर्शनस्य प्रतिपादनं कृतमेव। तच्चदर्शनं महाभाष्यकारेण यथावसरं निरूपितमेव चन्द्राचार्यादिभिर्बहुशाखात्वं नीतम् तदेवाचार्य वसुरात शिष्येण भर्तृहरिणा वाक्यपदीये संग्रहीतं भाति। तेन मानाधीनामेव सिद्धिः मानसिद्धिश्च लक्षणात्। मानंमेयञ्च किमित विचारणायां मुख्यंमेयं शब्दब्रह्मैव तदेव शब्दरूपं ज्योतिः जगतः कारणम्।



---

# रप्रत्याहारविषयकविमर्शः

प्रत्याहारसाधना शब्दागमस्य शब्दान्वाख्यानपरस्य महत्तमाख्याति-रतीवोपगितां विभर्तीति न संशयः। प्रत्याहारमन्तरा विशेषतः पाणि-नीयव्याकरणमष्टाध्यायीति न बोधगम्यम्भवितुमर्हतीति समेषां राद्धान्तः। प्रायशः सूत्राण्याधिक्येन प्रत्याहारघटकानि साक्षात्परम्मरये-त्यस्ति तथ्यं शब्दशास्त्रे। प्रत्याहाराणां सिद्धिस्तु पाणिनीयसूत्रेण 'आदिरन्त्येन सहेता' इत्यनेन क्रियत एव। तत्र च वर्णसमाम्नाय एव संज्ञित्वेनोद्देश्यतया बीजभूतो मूलरूपः प्राशस्त्यं भजति। वर्ण-समाम्नायश्च वेदानां वेद इति शाब्दिकैः सुप्रथित एव। तन्मूलककतया पाणिनीयव्याकरणस्यैव वेदाङ्गत्वमित्यपि नागोजिभट्टप्रभृतिभि-राचार्यप्रवरैः समाम्नातम्।

वर्णक्रमस्य वर्णसमाम्नायस्य प्रत्याहारे सम्यगुपयोगादेवादिर-न्त्येनसहेतेत्यनेक वाक्यतया वर्णसमाम्नायस्यापि संज्ञासूत्रत्वमपि संकीर्तितम्। तथा च सर्वं प्रत्याहारोपयोगिभूतस्याक्षरसमाम्नायस्य वर्णराशे विधिसूत्रत्वमपि प्रथितं वैयाकरणैः अत्वावच्छिन्नेऽकारःसाधुतां प्रतिपद्यते। अवदादत्वावच्छिन्नोऽर्थोबोधव्य इत्येवमेवेत्वावच्छिन्न इकारः साधु इत्थं सर्वे वर्णसाधुत्वान्वाख्यानपरत्वेन विधित्वेनापि स्मृतिपटलं समारोहन्ति विपश्चिताम्।

एवंविधाः प्रत्याहाराः सर्वे प्रथमं वर्णसमाम्नायस्थ प्रत्येकं-वर्णानां विधित्वेनार्थवत्वं परिवीक्ष्यैव संज्ञित्वेनोद्देश्यतां ख्यापयन्त आत्मनामचादि संज्ञां भजन्तश्शब्दानुशासनमन्वर्थं संज्ञाञ्चानुशास-यन्तो व्याकरणागमस्य प्रक्रियापथां दार्शनिकपक्षपथञ्चानुमोदयन्तो हृद्या बोध्या जायन्ते।







अजादि संज्ञाचापि आदिरन्त्येन सहेतेति सूत्रेण वर्णसमाम्नायस्यैव संज्ञित्वं सामान्यतया प्रवर्तते परन्तेनाक्षर समाम्नाय बहिर्भूतपाणिनीयव्याकरणे 'इकोयणचि' प्रभृतिषु सामञ्जस्य लाभायमहामुनेस्तात्पर्यमनुरुद्ध्य तात्पर्यानुपपत्तिरेवलक्षणायां बीजं भवतीति ज्ञायैव आदिरन्त्येनेत्यत्रान्त्यपदेनान्त्येत्सदृशः आदिपदेनासदृशोऽर्थो लक्ष्यते तदैव सर्वत्र सुसामञ्जस्य प्रतिपद्यते ।

तस्मादेव स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षित वर्णनिष्ठान्तता निरूपकस्य, एवं स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षित वर्णनिष्ठादिता निरूपकस्य घटकानां संज्ञाज्ञेयेति प्रतिपादितम्भवति । यथा इकोयणचीत्यत्र स्वपदेन सूत्रघटकमच् पदम् प्रोक्त लक्षणस्थस्वघटकइत्यत्र स्वपद ग्राह्याच् पदे स्वघटकत्वेनच् पदम् अर्थात् इकोयणचि सूत्रघटकाच् घटकचकारानुयोगिक सादृश्यं किम् ? ऐ औच् इति सूत्र घटक चकारप्रतियोगिक सादृश्यमित्युत्तरम् एवं स्वघटकः—अच् घटकोऽकारस्तदनुयोगिक सादृश्यं किमिति ? उइउणिति सूत्र घटकाकारप्रतियोगिकसादृश्यमितिफलितम्भवतीतिवत्सर्वत्रोहनीयम्भवति ।

तथासति सर्वत्र सामञ्जस्यं प्रतिष्ठते तेनाचादि प्रत्याहारवद् रप्रत्याहारोऽपि केषाञ्चित्प्राचीनानां शाब्दिकानां मते परमावश्यकः प्रतिभाति क्वचिदनन्तेनापि प्रत्याहार इति भाष्यवचनात् । तेन लण्सूत्रेऽकारश्चेति वचनं सुसंगच्छते शब्दशास्त्रे, तत्र हि कैयटमतेनतुल्यास्य प्रयत्नमितिसूत्रे ऋलृवर्णयोः सावर्ण्यस्वीकारे तवल्कारइत्यादौ रपत्वमाशंक्य उरण्रपरसूत्रेलपरत्वं वक्ष्यामीति भाष्यवार्तिककाराभ्यामुक्तं लपरत्वं वक्ष्यामीत्यस्य रप्रत्याहाररूपेण व्याख्यास्यामीति सदर्थमुक्त्वा लण् सूत्र घटकाकारस्यानुनासिकत्वेनेत्सञ्ज्ञां विधाय रप्रत्याहारं साधयामास कैयटाचार्यः ।

परमेतद्धि नागोजिभट्टपादेभ्यो न रोचते । तथाहि लण् सूत्रस्थाकाकारस्यानुनासिकतयासिद्ध रप्रत्याहारेणैव रेफलकारोभयग्रहणे सिद्धे 'अतोल्रेति' सूत्रे पाणिनेर्लंकारोच्चारणं व्यर्थं स्यात् ।

न चात्रैवं वक्तुं शक्यते यत् तत्सूत्रेलकारोच्चारणस्य रप्रत्याहारनित्यत्व ज्ञापकतया रदाभ्यामित्यादौ च न रप्रत्याहारग्रहणमिति फलितमिति वाच्यम् । एवमपि इकोयणचीत्यादौ चाप्यर्थमात्रालाघवानुरोधेन यप्रत्याहारणैव व्यवहारसम्भवे तत्रणकारोच्चारण वैयर्थापत्तेः । न च मकारोच्चारणमकारेणसह रप्रत्याहार एव भवतीति ज्ञापनार्थं तेन 'ङर्यः' 'योऽचि' इत्यादौ नय प्रत्याहार इति फलितमिति वाच्यम्, अनुबन्धानामच्प्रत्याहारे ग्रह्णाभावे 'आचारादप्रधानत्वाल्लोपश्चवलवत्तर इति भाष्योक्त तृतीय हेतोरव्यापकत्वापत्तेः ।

न च हेतोरव्यापकत्वं गुणा व्यापकत्वे हि हेतुर्व्यभिचारी स्यादेवञ्चाव्यापकत्वाभिधानस्य दोषत्व प्रतिपादनं न समीचीनमितिवाच्यम् हेतोरव्यापकत्वापत्तिरित्यस्य पक्षतावच्छेदकाव्यापकताऽऽपत्तिरित्यर्थात् । तथा च हेतोः पक्षतावच्छेदकाऽव्यापकत्वेभागासिद्ध्या भाष्यसंगतिस्स्यादित्याशयात् ।

---

